एतादृशैः खलु स्फुरद्वाग्ब्रह्मभिः सुकविभिः समतीतेन संख्यातिगेन गणरात्रेण भारतं वर्षमिदं देव्या भारत्या विलासभवनमिव, जगन्नागरिकताया नाडिन्धमं स्थलमिव च विभाति । यशश्शरीरेण जीवद्भिः कविप्रकाण्डैरेतादृशैः सुकृतिभिरेव संसृतावधुनापि सुबहवोऽस्मदादयो मनुष्यधर्माणो व्यपगतमोहा व्यपदेशार्हवैदुष्याश्च सन्ति विलसन्तः । 'ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः । यैर्निबद्धानि काव्यानि' इति हि नामामनन्त्यभियुक्ताः ।

असंस्तुतपूर्वकथावस्तुसंघटनपूर्वकं रूपकस्यास्य विरचने कविरानन्दरायमखी किमर्थम् आत्मना व्यवसितवानिति विचारपूर्वकविषयनिरूपणसरणौ वयमस्मन्मतिं सुदूरं व्यापारयामासिम । तथा बहुधा विमृश्य चान्ततो निर्णयकोटिरेषास्माभिरासादिता । तन्निर्णयानुरोधेन कविनोद्दिष्टं नाटकस्यास्य ग्रथनहेतुमपि भूमिकाया उपक्रमेऽत्र संक्षिप्योपपादयामः । विदितचरमेवेदं साहितीसरणिसंचरणसमुत्तेजितमतीनां भावुकमणीनाम्, यत् श्रव्यकाव्यकीर्तितैः कथावस्तुभिः प्रेक्षकाणां चक्षुस्सन्तर्पणमपि चिकीर्षुभिः कालिदासभवभूतिप्रभृतिभिः प्राक्तनैः कविभिः श्रृंगारवीराद्यात्मकैः सामान्यजनानुभाव्यै रसैराप्लुतानि नाटकाख्यानि दृश्यकाव्यानि च प्रागसृज्यन्त । विषयं तमेव स्पष्टतरमभिदध्महे—ते हि महाकवयः पौराणिकानि ऐतिहासिकानि मूलैरपरापरैरुपलब्धानि च कथावस्तूनि समवलंब्य दृश्यकाव्यानि स्वकीयानि निरमिमत । गच्छता च कालेन मेधाविशेषविवर्धितकल्पनाचातुर्यैः साहित्यघण्टापथसन्ततकृतगतागतैः वेदान्तसिद्धान्तसारास्वादविशुद्धान्तःकरणैः श्रीकृष्णमिश्र-श्रीवेङ्कटनाथादिभिः अश्रुतपूर्वाणि अमानुषव्यक्तिमयानि मानवानां सद्गुणदुर्गुणात्मकानि पात्राणि परिकल्प्य, साहित्यवेदान्तविषयसंवलितानि सरसशान्तरससंप्लुतानि प्रबोधचन्द्रोदय-

सङ्कल्पसूर्योदयादीनि[1] नाटकानि नागरिकाणां हृदयावर्जकानि प्रणीतानि। नैतानि नाटकानि याः काश्चन कथाः पुराणादिषु प्रसिद्धाः समनुरुध्य व्यरचिषत; किंतु सर्वथा काल्पनिकानि, मानुषगुणाहितपात्रप्रस्तुतकथा-वस्तुसंघटितानि च भवन्ति। अतः प्रबोधचन्द्रोदयादीनि रूपकाणि स्वरूपतः सुतरामभिनवानि, नाटकान्तरेभ्यो विलक्षणानि चेति विदन्ति विमर्शकाः। जीवानन्दनमपि स्वरूपतस्तदनुरूपं किमप्यभिनवं रूपकम्। किञ्च, अस्य नाटकस्य निर्माणे हेत्वन्तरमप्यास्ते, यदत्र विवृणुमः। अत्र निर्दिष्टपूर्वयोः नाटकयोः सुस्पष्टतया यद्यपि प्रथमम् अद्वैततत्त्वप्रतिपादन-परम्, द्वितीयं च विशिष्टाद्वैतसारसर्वकषं भवति, तथापि कृतिद्वयमप्येतत् विष्णुभक्तिमेव विशिष्टपात्रेष्वन्यतमां परिकल्प्य, निगमान्तगुरुरिव कृष्ण-मिश्रश्च विष्णोरेव परत्वं प्रकाशयति[2]। अयं कविरानन्दरायमखी तु

[1] अत्र आदिशब्देन कविनानेनैव विरचितं विद्यापरिणयाख्यं नाटकम्, रत्नखेट-श्रीनिवासदीक्षितप्रणीतं **भावनापुरुषोत्तमं** नाम नाटकं च गृह्येते। विद्यापरिणयप्रस्ताव-नायां 'कृष्णमिश्रप्रभृतिभिरल प्रबोधचंद्रोदयम्, सङ्कल्पसूर्योदयम्, भावनापुरुषोत्तमम् इति न्यबन्धि नाम बहुधा प्राचीनैः' इति कविरेष एव स्मरति नाटकान्तरविषयम्।

[2] **प्रबोधचन्द्रोदये**—"शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरावज्ञाते" (६-२२) इति, "असौ त्वदन्यो न सनातनः पुमान् भवान्न देवात् पुरुषोत्तमात् परः" (६-२५) इति, "मोहान्धकारमवधूय विकल्पनिद्रामुन्मथ्य कोऽप्यजनि बोधतुषाररश्मिः। श्रद्धाविवेकमतिशान्तियमादिकेन विश्वात्मकः स्फुरति विष्णुरहं स एषः" (६-३०) इति, "सर्वथा कृतकृत्योऽस्मि भगवत्या विष्णुभक्तेः प्रसादात्। सोऽहमिदानीम्" (६-अङ्कावसाने) इति च श्रीकृष्णमिश्रः पारम्यं विष्णोः सुव्यक्तं प्रतिपादयति बहुषु स्थलेषु। अथ **सङ्कल्पसूर्योदये** च—"मेयं विष्णुर्वेदवादाश्च मानम्" (१-८५) इति, "सत्यं सत्यं च सत्यं पुनरिति कथयन् सादरं वेदवादी पाराशर्यः प्रमाणं यदि क इह परः केशवादाविरस्ति" (१-९०) इति, "पुरा वेधःस्तम्बावधिपुरुषसृष्टिस्थितिमति स्थिरा भक्तिः सूते विपदुपरतिं पुंसि परमे" (१-८५) इति, "परः पद्माकान्तः प्रणिपतनमस्मिन् हिततमम्" (१-९४) इत्येवमादिभिः श्रीनिगमान्तगुरुरपि विष्णुमेव परतत्त्वं विशिनष्टि। दृश्यतां च प्रबोधचन्द्रोदयस्य प्रथमाङ्कः सङ्कल्पसूर्योदयस्य च दशमाङ्कः यत्र हि विष्णुभक्तिः प्रधानपात्रत्वेन प्रविश्य, परमपुरुषस्य स्वरूपम्, मुमुक्षूणां भगवति श्रियःपतौ प्रतिपत्त्या आवश्यकतां च प्रकटयति।

परममाहेश्वरः। एष च विष्णुपारम्ये विसंवादमात्मनः प्रचिकटयिषुः स्वप्रणीते विद्यापरिणयनाटके प्रथमाङ्क एव प्रथमपात्रत्वेन परमेश्वरीपराधीनवृत्तिं शिवभक्तिं प्रवेशयित्वा शिवपारम्यसमर्थनाय व्यवस्यति स्म। एवं पारमेश्वरवैशिष्ट्यगुम्भनपुरस्सरं स्वाभीष्टमद्वैतवेदान्ततत्त्वमायोज्य नवीनं नाटकमेकं विबुधजनानां पुरतो विनियोज्यमिति मनस्यभिसन्धाय विद्यापरिणयमेष कविः प्रणिनायेति तद्ग्रन्थोपलब्धाभिरुपपत्तिभिरवगच्छामः[1]।

अथ विचक्षणमतिरेष कविर्विलक्षणसंविधानक्रमविशिष्टस्य शिष्टसहृदयजनावर्जकस्वरूपस्य नाटकान्तरस्य निर्माणमाचकाङ्क्ष। तत्र चायुर्वेदशास्त्रपरस्याश्रुतचरस्य कव्यन्तरैरचिन्तितपूर्वस्य वस्तुनः संघटनेन वस्तुतः स्वात्मानमन्यादृशं कविं कृतार्थमन्यं च विशदयितुमनाः प्रशस्तमिदं जीवानन्दनं नाम नाटकं रचयामास ; येन च उत्पश्यामः, न केवलं संस्कृतसाहित्यकला, नापि केवलं वेदान्तसिद्धान्तरहस्यम्, अपि तु आत्रेयादिभिरादिमैराचार्यैः प्रवर्तितमायुर्वेदशास्त्रं च नूनमभिनवां कामपि प्रशस्तिं मध्येपण्डितलोकं प्रत्यपद्यत। महानेष कविः श्रीमहाविष्णोः परदेवतात्वप्रतिष्ठापकं सकलविद्वज्जनमहितमहावेदान्तिद्वयप्रणीतं निर्दिष्टपूर्वं नाटकद्वयमिव शिवाद्वैतविद्योतके विद्यापरिणयजीवानन्दनाभिधे द्वे रूपके प्रणीय, नैजं परममाहेश्वरत्वं सर्वजनविदित-

[1] दृश्यतां विद्यापरिणये प्रथमाङ्कस्यारम्भ एव प्रस्तावनानन्तरं 'ततः प्रविशति शिवभक्तिः' इत्यादिकम्। किंच 'श्रुतिस्मृतीतिहासागमतन्त्रादिसिद्धनानाविधसांबशिवचरणपरिचरणतदनुसंधाननिरन्तरितनिखिलवासरस्य ..... शरभमहाराजमन्त्रिशिखामणेरस्य' इति विद्यापरिणयप्रस्तावनावाक्यं कवेरस्य वीरशैवत्वप्रतिपादकेषु तत्प्रयुक्तेषु वचनेष्वन्यतमम्। अधो निर्दिष्टं कवेरस्य पद्यमपि परममाहेश्वरत्वमस्योपष्टम्भयति—

कोणे यस्य जगन्त्यमूनि जलधेर्डिण्डीरजालोपमं
जन्मस्थेमलयान् भजन्ति सहरिब्रह्मादिमृग्योऽपि सन्।
लोकस्यानुजिघृक्षया धृतवपुः शक्त्या स्वयानन्यया
स श्लिष्टो जगदम्बया पशुपतिः कुर्वीत वो मङ्गलम्॥

(वि. परि. ७-२०)

मन्वर्थयितुं चाचकाङ्क्षेत्यभिप्रेमः । वस्तुतत्त्वमिदं प्रस्तुतनाटकस्यामूलादाचाग्रात् सावहिति सकृदवलोकनतः साधु संख्यावद्भिरवधार्येत[1] । रूपकस्यास्य निर्माणे कविरयं यद्यपि प्राधान्येन प्रबोधचन्द्रोदयं सङ्कल्पसूर्योदयं च, विश्वसिमः, आदर्शत्वेन स्वयं समाददे, तथापि तयोर्नाटकयोः नाटके चास्मिन् संघटितानां पात्राणां स्वरूपेषु परिशील्यमानेषु, ताभ्यां प्राक्तननाटकाभ्यां जीवानन्दनमिदम्, जानीमः, किंचिदिव भिद्यत इति । स चैष भेदः । तनुभृतां सदसत्प्रकारान् गुणान् पात्रीकृत्य, अपवर्गम् आहोस्वित् मुक्तिमेवाग्रिममन्तिमं च फलमभिसन्धाय कृष्णमिश्रनिगमान्तगुरुभ्यां प्रणीतमासीत्तन्नाटकद्वयम्; सुलघु निगमान्ततत्त्वावबोधनाय च तद्वयं प्रवृत्तम् । इदं जीवानन्दनं तु मानवानां मानसिकैः सदसद्गुणैः सह रोगानीकान् एकत्र, भेषजवर्गान् अपरत्र च पात्रत्वेन प्रकल्प्य, शरीरारोग्यसाधकं त्रैवर्गिकं धर्ममेव फलमपश्चिमं विनिश्चित्य विरचितमास्ते । किं च पुरुषगुणेषु प्रशस्तो विषयविमर्शनविचक्षणो विवेकस्तयोः कथानायकः । अस्मिंस्तु नाटके शरीरधारकः साक्षाज्जीव एव कथानायकपदमधिरोपितः । अपि च पूर्वयोस्तयोर्नाटकयोः पुरुषस्यापवर्गसिद्धये विष्णुभक्तिरेव प्रभविष्णुरिति प्रत्यपादि; अत्र तु सर्वथा शिवेतरक्षतिः निःश्रेयसावाप्तिश्च शिवभक्त्यैव सिध्यतीति निर्धार्यते ।

परमेश्वरस्य पारम्यप्रदर्शनमात्रेण पारं मनोरथस्यासादितमिति कविरानन्दरायमखी नैवामंस्त । आयुर्वेदशास्त्रस्य तलस्पृगेष कविः स्वकीयेन

[1] दृष्टान्तार्थं दृश्यतामधो निर्दिष्टो जीवानन्दनस्थो विषयः—

विधिहरिविषमेक्षणात्मकः सन् सृजति बिभर्ति निहन्ति यो जगन्ति ।
तदहममलमेकमेव सच्चित्सुखवपुषं परमेश्वरं नतोऽस्मि ॥ (७-२०)

जीवानन्दनस्यान्तिमपद्यस्यान्तिमः पादश्च परमशैवत्वं कवेः प्रदर्शयति । यथा—'भूयादस्य कवेश्चिरायुररुजो भक्तिश्च शैवी दृढा' इति । शिवपारम्यस्य शिवभक्त्याश्च प्रकटनपराणि सन्त्येवंविधानि बहून्यपराणि च वाक्यानि जीवानन्दने ।

वैदग्ध्येन वैद्यशास्त्रस्य सारभूतानंशान् सरसधिषणेभ्यो भिषग्भ्यस्तदितरेभ्यश्चाभिनवया रीत्या स्वयमुपजिहीर्षुः सुनिपुणमायुर्वैदिकं रूपकमिदं जग्रन्थ ; येन किल "न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः । नासौ योगो न तद्ज्ञानं नाटके यन्न दृश्यते" इति सुप्रथितं सुभाषितं परामृशद्भिः परार्ध्यमतिभिः वैद्यविद्यापि हृद्या रङ्गस्थलप्रदर्शनार्हा सहृदयचक्षुस्संतर्पणसमुचितेति च परिगण्येत । एष च उत्प्रेक्षामहे, कवेरभिसन्धिः, यदुत वैद्यशास्त्रस्य तत्त्वानामेवं नाटकरूपेण प्रेक्षकेभ्यः पाठकेभ्यश्च प्रतिपादनेन भावुकानामनभ्यस्तवैद्यतन्त्राणाम् अपरेषामपि परिष्कृतमतीनामेतस्मिन्नाटक इव नानाविधामयाभिभूतजनानुकूल्यनिर्वहणक्षमेषु वैद्यशास्त्रसंबन्धिषु विषयेषु च यादृच्छिकी प्रवृत्तिरानुषङ्गिकी चाभिरुचिः संपद्येतेति । सुबहूनि पौराणिकानि, नैकविधान्यैतिहासिकानि, भूयांसि च नूतनकथासंघटितानि, कतिपयानि च वेदान्तार्थसमुद्धाटकानि नाटकानि प्रचारे सन्तीति समालोच्य, तथा बहुभिः पूर्वैः क्षुण्णचरं विषयमशेषमप्यवपीडितसारमित्यनादृत्य सर्वातिशायि कथावस्तुना, अन्यादृशं रसेन, अभिनवं च विषयतत्त्वेन यत् स्यात् तादृशं विलक्षणं नाटकं विचिकीर्षुः कृती कविरेष सर्वात्मना स्वकपोलकल्पितां वैद्यशास्त्रतत्त्वोन्मेषपरां कृतिमिमां स्वात्मना प्रणिनायेति प्रतीयते । शास्त्रान्तरेभ्योऽपि वैद्यशास्त्रमेव मानवानामेकान्तहितावहमिति विमृश्य, साहित्यरसास्वादस्निग्धमनसो मनीषिणश्च सर्वे तत्त्वान्यायुर्वैदिकानि स्वयमास्वाद्य तदुपजनितं फलमपि निकाममनुभवन्तु नामेति विदितवैद्यशास्त्रप्रयोजनस्य दुस्स्थितजनपक्षपातिनः कवेरस्य करुणोत्तेजिता चित्तवृत्तिरेव, अनुमिमीमहे, पर्यणमदेतन्नाटकात्मनेति ।

किञ्चिदिवाथ प्रासंगिकतया कोणान्तरे दृष्टिं प्रवर्तयामः । रसलोहधातुप्रभृतिभिः साधितानां चिरस्थायिनां कृच्छ्रसाध्यामयापनोदनक्षमाणां

महार्घाणामौषधविशेषाणां तंजापुरराजभवनं निधिस्थानमावहदिति शतद्वयवत्सरेभ्यः प्रागेव प्रथितमासीत्। तादृशैः प्रशस्तौषधैः संघटितः कश्चिदौषधालयः, विद्याभिवृद्धौ बद्धश्रद्धयोः सहाजिशरभोजिमहाराजयोः प्रोत्साहनेन साहाय्येन च संपादितैः सुबहुभिरुत्तमैर्वैद्यग्रन्थैः संपन्नो धन्वन्तरिमहाल् इति प्रथितो ग्रन्थालयश्चैको विश्वस्मिन्नपि लोके विश्रुतेन सरस्वतीमहाल्कोशागारेण समं स्थापितो व्यलसदिति च ब्रुवते बहवः। इदमप्यभिधीयते, यत् तंजापुरराजभवनमन्तरा तादृशवैद्यशाखायाः प्रतिष्ठापनप्रवर्तनादीनाम् उपक्रमोपबृंहणयोरपि महतीं धुरामानन्दरायमखी धर्माधिकारी भूत्वा स्वसहचरैरनुचरैश्च साकं स्वयमवहदिति। सप्तदश्यां क्रैस्तवशताब्द्यां शाहभूपतौ शरभोजिमहाराजे च शासति तंजापुरराज्यं कृत्यविदेष कविः स्वयममात्यो धर्माधिकारी च भूत्वा सुबहूनामातुराणाम्, दौर्गत्याभिभूतानाम्, पण्डितप्रकाण्डानां च विविधैः प्रकारैरसकृदुपाकरोदिति च शृणुमः।

माहाराष्ट्रा राजानः स्वविक्रमेण तंजापुरराष्ट्रमाक्रम्य स्वायत्तीकृत्य च तत्, षट्सप्तत्यधिकषट्छतोत्तरसहस्रतमात् क्रैस्तवाब्दादारभ्य (१६७६) किञ्चिदूनं शरदां शतद्वयं यावत् अनुस्यूतेनाशिषन्। तस्मिंश्च चिरदीर्घे माहाराष्ट्रीये प्रजानामाशंसनीये शासनकाले प्रवर्तमाने न केवलं तद्राज्यं वीतोपप्लवं सद्धर्मानपेतं संपदा समृद्धं सुखेन निर्वृतं चाभूत्, परं तु विद्यापक्षपतिनः सुतरां भूष्णवश्च ते भूपतयः परश्शतान् विपश्चिदपश्चिमान् कविश्रेष्ठानपि पुपुषुः, पुरस्कारैरपि नैकविधैः प्रोत्साहयामासुः। पूर्वं नायकवंशजा राजानः—शवप्पः, अच्युतप्पः, रघुनाथः, विजयराघव इत्येते पञ्चत्रिंशदधिकपञ्चशतोत्तरसाहस्रात् (१५३५) क्रैस्तवाब्दादारभ्य, त्रिसप्तत्यधिकषट्छतोत्तरसहस्रतमं (१६७३) वत्सरं यावत् (प्रायश्चत्वारिंशदधिकं शरदां शतम्) राज्यस्यास्य समभवन् शासितारः। अथ माहाराष्ट्रैर्नृपति-

भिराक्रान्तेऽस्मिन् राष्ट्रे, संपत्समृद्धिः विद्याभिवृद्धिश्च राजगृह इव समन्ततोऽपि राज्येऽस्मिन् पूर्वतोऽपि पुपोष पुष्कलताम्। तंजापुरराष्ट्रे प्रभुरेकाजिः प्रथमः, सहाजिः, शरभोजिः प्रथमः, तुकाजिः प्रथमः, एकाजिर्द्वितीयः (य एव भावासाहब् इति च विश्रुतः), प्रतापसिह्मः, तुकाजिर्द्वितीयः, अमरसिह्मः, शरभोजिर्द्वितीयः, शिवाजिः इत्येते दश महाराष्ट्राधिपतयो हायनानि किञ्चिदुच्चावचानि अशीत्यधिकानि शतसंख्याकानि (१६५६-१८५५) अविच्छिन्नतया राज्यधुरामवहन्, प्रजानां श्रेयश्च प्राज्यमापादयन्। एतेषु च शासकेषु सहाजिः, प्रथमद्वितीयौ शरभोजिमहाराजौ, तुकाजिः, एकोजिर्द्वितीय इति पञ्चाप्येते न केवलं विदुषो विश्वतोमुखैरुपकारैरतर्पयन्, परं तु स्वयमपि राजकवय इति विबुधगोष्ठीषु च विश्रुता व्यराजन्। राज्ञामेतेषां बहून्यपदानान्तराणि इतोऽपि विशदतयास्मदीयायाम् आङ्गलभूमिकायां सन्ति प्रपञ्चितानि, यत्र च पाठकमहाशयैराधीयेतावधानमिति वयमाशास्महे।

अथ कवेरस्यात्मीयमितिवृत्तं कियता विवृणुमः। अयमानन्दरायमखी जीवानन्दनकर्ता पावनं यज्वनामन्ववायं स्वजन्मना पुनरभ्यर्हिततरमकार्षीत्[1]। स्वयमप्येष यायजूकः। नाटकस्यास्य प्रस्तावनायां 'येनाकारि सहस्रदक्षिणमखः' इति खलु स एव स्वस्येज्याशीलत्वमात्मना प्रख्यापयति। स एष साहित्यकलकण्ठसौहित्यापादकः प्रमदवनदेशः, विविधानां शास्त्रतत्त्वसारस्रोतसां सरस्वान्, कविताकुसुमलताया आश्रयो महामहीरुहः, ज्ञानविज्ञानमुक्ताविद्रुमाणां प्ररोहभूमिरिति च तत्काले तस्य यशो जनपदे समन्ततो व्यानशे। एवं समधिगतनैकविधतन्त्रप्रावीण्येन तेन

[1] 'नानापूर्वमहाक्रतुप्रणयनैरध्यात्मसंदर्शनैः' इत्यादिभिः स्वपूर्वजानां यज्वत्वं विद्यापरिणयेऽपि विशदीकृतमास्ते।

साम्राज्यनिर्वहणसामर्थ्यमपि साधु संपादितमासीत् । एतादृशं च योग्यतावैशिष्ट्यम् एकतः स्वार्जितस्य सार्वपथीनज्ञानस्य बलेन च, अन्यतः स्वपितृपितामहादिपरम्परानुसृतसाचिव्यानुभवसंधुक्षितमतिप्राभवेन च, ज्ञायते, सोपपत्तिकमानन्दरायमखिनमाससादेति ; येन च, जानीमहे, शरभोजिसहाजिमहाराजाभ्यां सविस्रम्भमस्मा अमात्यपदमुपाह्रियत । अयमध्वरी कालेऽदसीये कुत्राप्यश्रुतदृष्टपूर्वमध्वानमात्मनश्चारित्रकं कमप्याललम्बे । सा चैषा चारित्रपद्धतिः । कविरयं स्वयं वैदिकः कर्मठः सन्नपि, विप्रो भूत्वापि, वीराणामभवदग्रणीः[1] । अतश्च स्वत एव सति समये रणाङ्गणेऽपि सांयुगीनो भूत्वा, स्वयमभ्यमित्रीणः सन् साहभूपतिप्रभृतीनां साहाय्यमपि व्यधाद्बहुधा । विषयानिमानेवास्मदीयेन पद्येनैकेन प्रदर्शयामः—

साहित्येऽपि सुकाव्यलेखनविधौ वेदान्तशास्त्रैऽप्यसौ
यज्ञानां विधिवद्विधानविषये श्रुत्यर्थनिर्वर्णने ।
आयुर्वेदकलाविमर्शसरणौ धर्माधिकारे महा-
मात्यस्यापि पदे स्वतन्त्रगतिमान् युद्धेऽप्यभूद्वीर्यवान् ॥

एवंविधैरात्मनि संचितैर्गुणैः स्वकीयाय राज्ञे, तदधिष्ठिताय राष्ट्राय, तदाश्रिताय पण्डितमण्डलाय च स विशेषज्ञो विविधैः प्रकारैरभवदुपकारपरः । नित्यं मृत्युंजयसेवानिरतेनानेनानन्दरायमखिना एकाजीमहाराजमन्त्रिवरो नृसिंहरायमखी सत्पुत्रवान् बभूव । गङ्गाधरमखिनश्चायं पौत्रः । भारद्वाजान्ववायश्चात्मनो जन्मना समलङ्कृतः । अस्य जाया नाम्ना जयन्ती नाम । आत्मजश्चास्य नृसिंहरायः । विद्वज्जनमध्ये विश्रुतप्रभावस्य रामभद्रदीक्षितस्य

[1] 'दीनजनाधीनदयो विहरति **समरे च विक्रमार्क** इव' (p. 8) इति, 'यद्दीनेषु दयां करोति **समरे शौर्यं** यदालम्बते' (p. 10) इति च नाटकस्यास्य प्रस्तावनायामयमेव कविर्विषयमिमं विशदयति ।

समकालिको भगवन्तरायनामा विपश्चित् कवेरस्य पितृव्यः । त्र्यम्बकरायज्वा नाम कविप्रकाण्डश्चास्य कनिष्ठो भ्राता । जीवानन्दनमिव विद्यापरिणयाख्यं शैवाद्वैतप्रकटनपरं नाटकान्तरमपि प्रणिनायेति प्रागेवाचक्ष्महि । आश्वलायनसूत्रवृत्तिं नाम ग्रन्थमप्यसौ जग्रन्थ । १७२५ क्रैस्तवशके मधुराधिपतेर्नायकनृपतेः, पुदुकोटाराष्ट्रीयतोण्डमान्प्रभोश्च समवेतं सैनिकद्वितयमपि युगपत् अस्यैवाभिक्रमप्रख्यापितविक्रमस्यायोधननैपुण्येन युधि पराजितमभूत् । सहाजिराजस्य (शाहभूपतेः) राज्यशासनकाले जीवानन्दनमिदमानन्दरायमखी प्रणिनायेति प्रतीयते । अस्यात्मजेन नृसिंहरायेण त्रिपुरविजयचम्पूकाव्यम्,[1] पितृव्येण भगवन्तरायेण राघवाभ्युदयं नाम नाटकं च व्यरचिषाताम् । अतश्चेदं सुस्पष्टमवगम्यते, यत् नैष केवलमानन्दरायमखी, अपि तु तस्य पूर्वजाः पितृपितामहादयः, तदानन्तरिका आत्मजादयश्च कृतमतयः पण्डिताः कवयश्च भूत्वा भारद्वाजकुलपरम्परामेव तदात्वे भारतीसंचरणसमुचितां पदवीं विधाय विशिष्य भासयामासुः ।

हायनानां शतद्वय्याः पूर्वं क्षिप्रप्रवहणयोग्यानां यानानामभावात्, मार्गाणामपरिष्कृतत्वाच्च दवीयसि निविष्टेभ्यो नगरजनपदादिभ्यो गमनागमनक्रिया जनानाम्, जानीमो नैवासीत सुलभा । जनपदाज्जनपदं सत्स्वप्येवं प्रतिहतप्रसरेषु जनेषु, आनन्दरायमखी तदनुचराः पण्डिताश्चापरे सोत्सुकं दक्षिणतः सुदूरमुत्तरापथे यात्रामारचय्य, न केवलं भागीरथीतीर्थोदकस्नानपूता बभुवुः, किंतु वारणसीप्रभृतिविद्यास्थानेभ्यो बहुमूल्यान् संख्यातिगान् ग्रन्थानपि संपाद्यानीय च तंजापुरराजभवनस्थं ग्रन्थालयमपूर्वकोशसंचयैः सुतरामाढ्यमप्यकुर्वन् । अस्य च जीवितकालः क्रैस्तवशकेऽष्टादशशताब्द्याः पूर्वभाग इति सम्यगवगतमेव । अष्टादशशताब्द्या अवसाने

[1] दृश्यतामस्य कोशस्य ५२ पुटः ; यत्र चम्पूकाव्यादस्मादुद्धृतं पद्यमेकं काव्यस्य तस्य दर्शनाकाङ्क्षां च सर्वेषां समुत्पापयेत् ।

सहाजिपुरमधिवसन् कुट्टिकविनाम्ना प्रथितो रामस्वामीनामा विद्वद्धौरेयः स्वकीये महिषशतकाख्ये मनोहरेऽन्यापदेशकाव्ये कवेरानन्दशयमखिनः पञ्चत्वं सविषादं स्मरति[1]। प्रथमतुकाजिमहाराजे राज्यं शासति, तदाधिपत्यस्यान्तिमे काले कविरेष कालधर्ममवापेति च निर्धार्यते।

अद्यास्य नाटकस्याभिनवमुद्रणप्रकाशनप्रयासः कुतोऽस्माभिराहृत इति कैश्चिद्विषयजिज्ञासाकुतूहलिभिर्नूनमनुयुज्येत। अद्धा प्रश्नस्तु सुकरः श्रद्धालूनाम्। न केवलमुत्तरदानमत्र नैव सुशकम्; अपि तु सुदीर्घप्रवचनेन यथावत् समाधानं चायमर्हति। अत्र प्रत्युत्तरप्रतिपादनप्रकार एव नाटकस्यास्य संस्करणप्रयोजनमाविष्करणफलमपि युगपत् प्रकाशयेत्।

साहित्यसंपत्संवलितं वैद्यशास्त्रतत्त्वसमुद्भासकमन्यादृशस्वरूपमिदं नाटकं साहित्यकलायां वैद्यशास्त्रे च यथावदाहितश्रमैः आनुभविकपरिचयपरिष्कृतधिषणैः तलस्पृगुपलब्धिमद्भिः वैद्यविद्वद्भिरेव यथावदवबोद्धुं पार्यते। ग्रन्थस्यास्य रसवत्ता च तादृशैरेव सहृदयैः काममभिनन्द्येत। पञ्चत्रिंशद्वत्सरेभ्यः पूर्वं जीवानन्दननाटकमिदं १८९१ क्रैस्तवाब्दे निर्णयसागरमुद्रालयमुद्रितं सकौतुकं यदृच्छयाहमध्यगच्छम्; यदा च मद्रपुरायुर्वेदकलाशालायाम् (मदरास् यस्. के. पि. डि. आयुर्वेदकलाशालेति तादात्विकं नाम) वैद्यशास्त्राभ्यसनस्यावसानसीमामप्यहमासम् आरोहन्। अपूर्वकथावस्तुसंघटितं रससंस्थुलं रूपकमिदं वस्तुतो मनो मे तदा बलवदावर्जयति स्म। तथापि निर्णयसागरीयकोशे तस्मिन् मुहुरामूलादा चावसनात् अवलोकिताः सुबहवो मुद्रणदोषा अन्येऽप्यपभ्रंशास्तद्ग्रन्थगुणानामशेषाणा-

[1] एकाजिप्रभुचन्द्रभानुशहजीन्द्रानन्दरायादयो
विद्वांसः प्रभवो गताः श्रितसुधीसंदोहजीवातवः।
विद्यायां विषबुद्धयो हि वृषलाः सभ्यास्त्विदानींतनाः
किं कुर्वेऽम्ब कृषे व्रजामि शरणं त्वामेव विश्वावनीम्॥ (महिषशतके.)

मप्यनुभवादस्मान् न्यवारयन्, विकलिताशानप्यातन्वन्। अथ चातिपतति कियति काले, मत्प्रियसुहृदां घण्टाशतबिरुदाङ्कितानाम् (अद्य देवभूयं गतानाम्) आत्मकूरुश्रीनिवासाचार्यमहाभागानां सविधात् आन्ध्रलिपिमुद्रितं नाटकस्यास्य पुस्तकान्तरं दैवादुपलब्धम्; यच्च नातिदुष्टमिति दृष्टम्। तत्तु निर्णयसागरकोशादपि वर्षदशकात् प्रागेव महीशूरपुरे मुद्रितम्[1]। एतत्कोशावलोकनानन्तरं नाटकेऽस्मिन् सुबहुषु विषयेषु नः संदेहनिर्णयः संजातः। अस्य कोशस्य च साहाय्येन जीवानन्दनविमर्शकर्मण्युद्युक्ता वयं निर्णयसागरकोशेऽस्मदायत्ते नैकेषां दोषाणां शोधनम्, विषयाणां विपर्यस्तरूपाणां सुबहूनां परिष्करणं च विधाय, तस्मिन् काले चान्ततः पद्यमेकमपि प्रत्यभिज्ञानार्थं तस्मिन् पुस्तके व्यलिखाम। तदेतत् अस्मदीयाङ्गलभूमिकायां दृश्यताम्[2]। एवं सविमर्शं संशोधितः स कोश एव सपरिष्कारमामूलात् पुनरस्माभिरेव प्रतिलिपिमारोपितः; य एव च सांप्रतमेतत्पुस्तकात्मना मुद्रणस्य मूलमभवत्; येनैव च नन्दिनीव्याख्याया विरचने महदस्माकमानुकूल्यमपि संजातम्। अभिरूपभूयिष्ठस्य रूपकस्यास्य हृदयङ्गमा अकृत्रिमा गुणा एकत्र, निर्णयसागरमुद्रालयकोशे समवलोकिताः संख्यातीता अपभ्रंशा अपरत्र च साधुपरिष्कृतस्य नाटकस्यास्यैवम् अभिनवमुद्रणेऽप्याविष्करणे च प्रधानं कारणद्वयमभूदिति निवेदयामः।

अस्य रूपकस्य स्वरूपं गुणान् प्रयोजनानि च पूर्वमेव प्रादर्शयाम प्रदर्शयिष्यामश्चाग्रे विशिष्य। निर्णयसागरमुद्रालयमुद्रणेन कथमस्य गुणा अभिभूता इति संप्रति निरूपयामः। तन्मुद्रालयात् बहिरागतस्य जीवानन्दनस्य दुर्गाप्रसादः काशीनाथपाण्डुरङ्गपरब इत्येतौ द्वौ पण्डितौ संपादकौ अभूताम्।

[1] आन्ध्रलिपिमयमिदं पुस्तकं बालेन्दुपुरवासिनः रामस्वाम्याचार्याख्यवैद्यस्यान्तेवासिना मुद्दुल् व्यासाचार्येण महीशूरपुरे सद्विद्यामन्दिरमुद्राशालायां १८८१ वत्सरे मुद्रितम्।

[2] अस्मदीयायाम् आङ्गलभूमिकायां १३ पुटोऽधस्तात् टिप्पणी च दृश्यताम्।

साहित्ये चायुर्वेदे च तयोः परिचितिं परिमिततमामेव तस्य मुद्रितरीतिः, परिष्कारप्रकारश्च प्रकाशयतः। द्वित्रशास्त्रार्थानाम् अन्योन्यगुम्भनचमत्कारोपजनितगुणविशेषैः समन्वितस्य अनितरसाधारणस्यास्य नाटकस्य यथावत् संस्करणमुद्रणयोरक्षमाविमौ पण्डितौ न केवलमामूलात् समन्ततो दोषैरापूरितमिमं ग्रन्थमतनिषाताम्, किंतु सादिनमात्मनः पृष्ठात् पातयित्वा तन्निखनाय गर्तखननोद्यतस्य धूर्तघोटकस्य दुर्विनीतिक्रममनुरुन्धन्तौ रूपकेऽस्मिन् दोषारोपणमपि निश्शङ्कं तावतन्वताम्। "जीवानन्दने नास्ति कवित्वचमत्कारः" इति हि नाम गुणहीनत्वमत्रारोप्य तावात्मनोरविमृश्यलेखकत्वमेव सुतरामाविरकुर्वाताम्[1]। अनुपपन्नमनयोः संपादकयोः तदेतद्दूषणवचनम् अस्माकमतितरां विस्मयं व्यथामप्युदपादयत्। ग्रन्थशोधनपद्धतौ वा, विमर्शपूर्वकं विषयाणां गुणदोषनिर्णयमार्गे वा पण्डिताविमौ नैवात्मीयां स्वतन्त्रां मतिं प्रवर्तयितुमपि क्षमाविति सोपपत्तिकमनन्तरमवगतमस्माभिः। कीत्नामा पाश्चात्यपण्डितश्च संस्कृतनाटकान्यधिकृत्यात्मना विरचिते पुस्तके (आङ्गलभाषामये) क्वचित् आपातमतिसुलभं "जीवानन्दनं न काव्यवैशिष्ट्यं किमप्यावहति" इत्यविचारितमेव नाटकमिदं मुधैवाधरयति[2]। कीत्नाम्नोऽस्यार्वाचीनस्य पण्डितस्य च दुर्गाप्रसादकाशीनाथयोः वचनमेव स्वयं प्रमाणमभवत्। 'गतानुगतिको लोको न लोकः पारमार्थिकः' इति कथमेष मृषा भवितुमर्हत्याभाणकः।

अस्मिन् नाटके सामान्यतः शान्तिरस एवास्त्याद्दतः। रूपकगुणपोषणाय तेषु तेषु संदर्भेषु यथोचितमपरेऽपि सन्त्यष्टावपि रसा समायो-

[1] दृश्यतां निर्णयसागरमुद्रितस्य जीवानन्दनस्यान्तिमपुटेऽधस्तात् मुद्रिता टिप्पणी। १८९१, १९३३ वत्सरयोः मुद्रिते पुस्तकद्वयेऽपि वाक्यमिदमपरिवर्तितमेव (समानं) दृश्यते।

[2] दृश्यतां The Sanskrit Dramas नाम कीत्महाशयस्य पुस्तकम्। (Keith p. 253.)

जिताः । अतो नवरसभरितमिदं नाटकं गुणैरनवमं सर्वप्रकारैरिति विमर्श-पूर्वकम् आङ्गलभूमिकायां विषयो विपुलतया विचारितः । तत्रोपपादितान् विषयान् अवलोकयन्तः कृतधियो नाटकस्यास्योच्चैर्गुणान्, निर्णयसागर-कोशसंस्कारकयोः पण्डितयोर्दूषणवचनस्यार्थहीनत्वं च युगपदवधारयेयुः । विदग्धमतिरेष कविः कृतिं नाटकरूपामिमां तत्तत्स्थानानुगुण्येन स्वायोजितैः सहृदयहृदयावर्जकैः शृङ्गारादिनवरसाख्यैः गुणोज्ज्वलैर्नवमणिभिः साहित्य-वैद्य-वेदान्तार्थात्मकहेमसूत्रत्रयसंयोजनगुंभितैः स्वयमापादचूडं भूयसा भूषयति स्मेति, तथा ग्रथितमिमं ग्रन्थाख्यं रत्नहारं वाग्देव्याः कण्ठाभरणतामापादि-तवानिति च सुमतयः सोल्लेखं साधु परिशील्य, यत्सत्यम्, रसमस्य रूपकस्यास्वाद्य माद्येरन् । नाटकमिदं न केवलमर्थतो न वा केवलं रसतो नापि केवलं वर्णनानैपुण्यतः परं तु हृद्याभिः पद्यशैलीभिः, सुभगललिताभि-र्वाक्यरचनाभिः, अपरैश्च ग्रन्थसन्दर्भैः प्रशस्तत्वेन परिगणितेभ्यो रूपकान्त-रेभ्यो गुणतः कलयापि नैव हीयते । विदितवेदितव्यानामिदमेव महते खेदाय स्यात्, यदुत, तत्तत्प्रकरणानुरोधेन कैशिक्यारभटीभारतीसात्त्वती-नाम्नीर्वृत्तीरुपयुज्य संदृब्धानां पद्यानां हृद्यत्वमनादृत्य, तत्तत्पात्रस्य स्वा-भाविकमनोधर्माननुरुध्य प्रयुक्तानां क्वचित् सरससरलानां क्वचित् प्रौढानां क्वचिद्दीर्घसमासविशिष्टानां च विविधानां वाक्यशैलीनां गुणधर्मानवगणय्य, कथावस्तुनो यथार्थतः पौर्वापर्यसंघटनसंबन्धान् सम्यगविचार्य, स्थलेषु बहुषु शब्दार्थान् वाक्यार्थानपि यथावदनवधार्य च याथाकथाचत्वधिया सरसमिदं नाटकं विरसमिति विलिख्य, तौ संपादकौ अत्र दोषमाकल्पयामासतुः । तयोः पण्डितयोः ग्रन्थशोधनविषयेऽनवधानेन वा, अवज्ञया वा, अदक्षतया वा निर्णयसागरग्रन्थे समुपनतान् अपभ्रंशान् बहुविधान् यदि वयमिह न समुद्घाटयेम, तर्हि तत्कोशपाठकानां बहूनामापातचक्षुषां मनस्सु ताभ्यामुप-

कल्पितपूर्वा नाटकस्यास्यास्पृहणीया गुणहीनत्वरूपा दुर्वासना दोषबुद्धिश्च नैव परिमृज्येत; न वास्मदीयं ग्रन्थस्यास्य परिष्करणायाहृतं परमदुर्भरं क्लेशमपि सर्वेऽप्यवगन्तुमभिनन्दितुं वा प्रभवेयुः।

प्राथमिको नान्दीश्लोक एव प्रथममवलोक्यतां नाम। एष च 'लक्ष्मीकैरवबन्धुकल्पकतरून् लब्ध्वाथ लब्धेप्सिते' इति निर्णयसागरकोशे मुद्रित आस्ते। सामान्यव्युत्पन्नानामपि अत्र विद्यमाना वाक्यस्यासंगतता सम्यगवगमार्हा। लक्ष्म्याः चन्द्रस्य कल्पकतरोश्च लाभेनैव ईप्सितार्थलाभः संजात इति, अनन्तरमपि देवदानवगणः श्रमेण महता पुनरपि दुग्धाब्धिममथ्नादिति च वाक्यस्यास्यार्थः। लक्ष्मीकैरवबन्धुकल्पकतरूणां प्राप्त्यैव यदीप्सितार्थलाभः संजातः, तर्हि तदनन्तरमपि को वा सचेताः पुनः समुद्रमथनात्मकमदभ्रं श्रममात्मना निरर्थकमङ्गीकुर्यात्। एतत्पाठानुरोधेन 'अथ' इति शब्दः, 'लब्धेप्सिते' इति शब्दश्च निरर्थकताम् उतापार्थतां विना न कमपि सुगममर्थमिहावबोधयतः। समुद्रमथनसमुद्यतानां सुरासुराणां सुधायाः समधिगमादृते नैव समीहितान्तरमासीत्। अमृतार्थमेव मथितत्वात् क्षीराब्धिमथनमेव बहुत्रामृतमथनमित्यपि व्यवह्रियते। अतो देवदानवानाम् अमृतलाभादृते न केनचिदप्यन्येन वस्तुना मनोरथपूर्तिरिति सुव्यक्ते वस्तुतत्त्वे, लक्ष्म्याद्यधिगमात् लब्धेप्क्षितत्वमिति वचनं स्थूलदृष्टयोऽप्यसंगतमिति ब्रुवीरन्। अतः 'लक्ष्मीकैरवबन्धुकल्पकतरून् लब्ध्वाथ लब्धेप्सिते' इति निर्णयसागरकोशस्थः पाठः सुतरामसंगतः। 'लक्ष्मीकैरवबन्धुकल्पकतरून् लब्ध्वाप्यलब्धेप्सिते' इति कोशेऽस्मिन् प्रदत्तः पाठ एव परिष्कृतः संगतश्च[1]। तत्कोशसंपादकयोः ग्रन्थशोधने परमानवधानताया अवज्ञतायाश्च सुस्पष्टद्योतकं दृष्टान्तान्तरमपि दृश्यतामिहोद्धृतम्। 'दृश्यतां

[1] मूलं व्याख्यानं च १, २ पुटयोः पठ्यताम् अस्मित् पुस्तके।

निर्णयसागरमुद्रितं कोशद्वयमपि[1]। तस्मिन् १४शे पुटे (द्वितीयमुद्रिते १७शे पुटे) जीवेन राज्ञा परमेश्वरस्य प्रभावातिशयेषु प्रस्तुतेषु, परमेश्वरी च, तस्या माहात्म्योपन्यसनपूर्वकं तेन प्रशंस्यते। अस्मिन् प्रकरणे 'एवमनिर्धारणीयनानास्वरूपा भगवतीपरमेतत्। परंतु भगवतो दयारूपैवेयम्' इति वचनपङ्क्तिरास्ते मुद्रिता। अत्र 'भगवतीपरमेतत्' इत्यस्य कोऽर्थः। यद्यत्र वस्तुत एवार्थबोधो न जायते, तदानीं कुतो नाम 'दयारूपैवेयम्' इति वाक्ये, 'सा खलु परमेश्वरी बहुविधदेवताशक्तिरूपावयवा' (पु. १५) इत्यादिषु अपरेषु च पूर्वोत्तरवाक्येषु विषयार्थपरामर्शनाय सावहिति सकृदपि न ताभ्यां दृष्टिः संचारिता। पूर्वोत्तरवाक्यानां पठनेन विषयसमन्वयः संपद्यत इति कुतश्च तत्त्वार्थावबोधने वा नैव मतिर्व्यापरिता। 'भगवतीपरमेतत्' इत्यपपाठस्य स्थाने 'भगवती परमेश्वरी' इति सुसंगतेन पदद्वयेन खलु भवितव्यम्; य एव हि नाम 'एवमनिर्धारणीयनानास्वरूपा भगवती परमेश्वरी' इति कविमुखोद्गतेनैवानन्तरिके वाक्ये विद्यमानेन 'भगवती परमेश्वरी' इति पदद्वयेन समञ्जसीक्रियमाणः सुसंगतमर्थं बोधयति। एते च एवंविधा अपरे च बहुसंख्याकाः प्रामादिका असंगताश्च निर्णयसागरकोशे दृश्यमाना दोषोत्करा अपपाठाश्च परिष्कृतैरेतत्कोशमुद्रितैः पाठैः सह संस्करणतारतम्यनिरूपणपट्टिकायाम् (Comparative Statement) अस्माभिः सज्जीकृतायां भूमिकानुबन्धत्वेन आयोजितायां सुव्यक्तमुद्धृत्य सन्ति निवेशिताः; यदवलोकनेन सकृत्, निर्णयसागरीयकोशः कियद्दोषभूयिष्ठ इति, तावद्दोषसंशोधनाय कियान् वा क्लेशः समभवदादृतोऽस्माभिरिति च गुणदोषविचारविचक्षणाः पाठकमहाशया एव यत्सत्यं ज्ञास्यन्ति।

[1] प्रथममुद्रणम् १८९१, द्वितीयं मुदणम् १९३३.

अपूर्वकथावस्तुसंघटितस्य वैद्यवेदान्तसाहित्याख्यशास्त्रीयविषयत्रय-शाखासंवेल्लितस्य बहुभिरपरिचितपूर्वस्य रूपकस्यैतस्य शोधनेन संस्करणेन पुनर्लेखनेन मुद्रणेन च केवलं न वयमाश्नुमहि कार्त्स्न्येन मानसीं तृप्तिम् । किंच विविधैः प्रकारैर्विलक्षणरूपस्यास्य रूपकस्य मूलग्रन्थपठनेन केवलं वैद्यास्तदितरे च गुणानस्य नाटकस्य प्रभवेयुरवगन्तुमिति च विचारितम-स्माभिः । आलोचितं च, यत् ते च ग्रन्थेऽस्मिन् स्थलेष्वनेकेषु दृश्यमानानां शास्त्रतत्त्वानां साहित्यगुणानां च याथातथ्यावगमे बुद्धिक्लेशमसहमाना नेम-मशेषतः पठितुमप्युद्युञ्जेरन्निति । एवं ग्रन्थस्यास्य गुणवैशिष्ट्यम्, एतत्पठि-तॄणामस्मिन् प्रवेशनैष्ठुर्यं च सुदूरमालोच्य, एतस्य मुद्रणकार्यारम्भसमकाल एव समुचितस्य व्याख्यानस्य लेखनमप्यावश्यकमिति निर्धार्य, तदपि विरचय्य पर्यपूरयाम । तामेनां नाम्ना नन्दिनीं नाम व्याख्यां यथावत् परिष्कृतेन मूलग्रन्थेन साकं सम्यक् मुद्रयित्वा, सहृदयजनसात्कर्तुमभिलषन्तः, तादृश-व्याख्यानसमलङ्कृतस्य नाटकस्याविष्करणकर्मणा महता कालेन मनसि स्थितं मनोरथं सप्रमोदं सांप्रतं पूरयामः ।

नाटकानां व्याख्यानानि श्रव्यकाव्यव्याख्यानेभ्योऽपि स्वरूपतः प्रायेण भिन्नप्रकाराणि सन्ति । नाटकव्याख्यातरः सर्वेऽपि सामान्यतः तत्र तत्र क्लिष्टानामेव शब्दानामर्थविवरणम् , वाक्यविशेषाणां विशेषार्थविमर्शम् , नाटकसंबन्धिनां नानाविधानां लक्षणादीनां तत्तत्सन्दर्भेषु प्रमाणनिर्देशपूर्वकं निरूपणम् इत्येतदादीनि प्रदर्शयन्तीति प्रसिद्धमिदं संस्कृतसाहित्यप्रपञ्चे । न हि ते प्रतिपदार्थविवरणे प्रायेण स्वलेखिनीः प्रवर्तयन्तीति च सर्वे वयमवैमः । नाटकग्रन्थानां पठने ये श्रद्धामावहन्ति, ये च तदर्थं समुद्युञ्जते, तैः सांस्कृत्यां वाण्यां बहुधा व्युत्पन्नैरेव भाव्यमिति, अत एव पदशो वाक्यतश्चार्थनिरूपण-पूर्वकं विस्तरेण व्याख्याया उपपादनं तेषां नातीवावश्यकमिति च मत्वा, नाटक-व्याख्यातारः प्रायेण तथा विदधति । विलक्षणविषयसंघटितस्यास्य नाटकस्य

व्याख्यानलेखनप्रवृत्तानामस्माकं कार्यधुरा तु काममभवदन्यादृशी । निर्दिष्ट-पूर्वमेवास्माभिः, यत्किल सन्ति सुबहवस्तादृशा वैद्याः ये हि संस्कृतभाषायां साहित्यग्रामगमनिकायां चानुपलब्धपर्याप्तमतिप्रवृत्तयः; सन्ति चापरे परश्शताः संशितसंस्कृतवाङ्मयानुभावाः ये हि नामापरिचितवैद्यशास्त्रपारिभाषिकसंप्रदायाः; तेषामुभयेषामपि नाटकेऽस्मिन् नातिक्लेशेन प्रवृत्तिं प्रतीक्षमाणाः सविस्तरं तादृशीं व्याख्यां वयं प्राणैष्म, यया निर्दिष्टपूर्वयोः द्विविधपाठकवर्गयोरपि नाटकेऽस्मिन् युगपदभिरुचिः स्यात् संधुक्षिता । अतः पद्यानामशेषाणामपि, गद्यानां वाक्यानामपि भूयसा—ऋते सुतरां परिमितसंख्याकेभ्यः पदेभ्यो वाक्येभ्यश्च—पठितॄणामानुकूल्यमभिप्रेत्य, वयं प्रतिपदार्थविवृतिरूपां व्याख्यामतनिष्महि । न केवलं प्रतिपदार्थप्रदर्शनमेव कृतम् , अपि तु तत्र तत्र विषयाणां विशेषार्थविवरणे, तत्तत्सन्दर्भानुरोधेन ग्रन्थान्तरेभ्यः संगतानां प्रमाणानामुदाहरणपूर्वकं प्रदर्शने च निस्तन्द्रमेव यावच्छक्ति मतिरस्मदीया सर्वत्र व्यापारिता ।

विषयमिममेव सुव्यक्तमभिदध्महे—प्रौढानां प्रथितयशसां च प्राचां कवीनां हृदयङ्गमा वाक्परिपाटीः, रसपरिपोषेणाभिज्ञजनाभिनन्दनीयान् विश्रुतविपश्चितामपरेषामाशयविशेषांश्च कथमेष विदग्धः कविः स्वयमनुरुणद्धि सचमत्कारमिति तत्र तत्र प्रमाणोद्धरणपूर्वकं व्याख्यायां प्रपञ्चितमस्माभिः । अथ चैष विमर्शरूपेण कृतो विषयसंग्रहः । नाटकस्थाः सर्वेऽपि विषयाः पूर्वोत्तरानुपूर्वीपठनपूर्वकं सावापोद्वापं विमृश्य परिष्कृताः । निर्दिष्टपूर्वात् आन्ध्रलिपिकोशात् समुचिता उपपन्नाश्च पाठक्रमादयोऽत्रोपात्ता उपयुक्ताश्च । निर्णयसागरमुद्रालयमुद्रणेन नाटके व्याप्तं दोषबहुलत्वं नीरसत्वादिरूपं वैकल्यं चामूलाग्रतः प्रायो विमृष्टम् । यावच्छक्त्यधिगताः पाठभेदाश्च व्याख्यायां तत्र तत्र निरूपिताः । आयुर्वैदिकाः पारिभाषिका विषयाश्चा-

शेषतः सविस्तरं विवृताः। सामान्यव्युत्पत्तिमतामपि मूलग्रन्थनिरूपिता विषया यथा सुस्पष्टमवगतार्था भवेयुः तथा सर्वाण्यपि पद्यानि गद्यादीनि च व्याख्यया विशदीकृतानि। एवं सपरिष्कारं सुमहता क्लेशेनास्माभिः संस्कृत्य संपादितोऽयं ग्रन्थः, वीततन्द्रमशेषविषयविवरणानि विधाय प्रणीतेयं नन्दिनीव्याख्या च, विश्वसिमः, सहृदयानां भावुकमणीनां प्रकल्पेत हृदयावर्जनायेति। अस्य नाटकस्य कथाभागमप्यत्र संक्षिप्य पाठकेभ्य उपहरामः।

**प्रथमाङ्के**—जीवस्य मन्त्री विज्ञानशर्मा धारणां नाम स्त्रीपरिजनं प्रणिधित्वेन शत्रोर्यक्ष्मणः प्रवृत्तिं ज्ञातुं जीवराजाज्ञया प्रहिणोति। सा च नाम्ना गार्गीति स्वां तापसीत्वेन विडम्बयन्ती, शत्रुकटकं प्रविश्य, निभृतं रिपुवृत्तान्तमधिगत्य, प्रतिनिवृत्ता स्वात्मना ज्ञातं वृत्तान्तं मन्त्रिणे निवेदयति। प्राज्ञः सचिवश्च प्रबलजडतीक्ष्णप्रकृतीनां प्रकुपितानां वातपित्तकफानाम्, मानसिकदोषाणां कामादीनां च साहाय्यमधिगतवता राजयक्ष्मणा देहाख्यपुरस्य समुपनमत् प्रातिकूल्यं परिजिहीर्षुः स्वयं राज्ञः सविधं प्रयाति। रसगन्धकादिप्रयोगेणैव राजयक्ष्मा अभिभवनीय इति, तादृशौषधानां सिद्धिः प्राप्तिश्च शिवयोरुपासनयैव प्रकल्पेतेति च मन्त्री समालोच्य, राज्ञे स्वनिर्णयं निवेदयति। जीवराजश्च तथैव साम्बशिवोपासनायै पुण्डरीकपुरं प्रविशति। **द्वितीयाङ्के**—स्वस्मिन् किमपि अनिष्टं चेष्टितुं जीवः प्रयतत इति चारमुखादवगतवता यक्ष्मणा प्रहितस्तस्य चेटः कासस्तु यक्ष्मणो युवराजं पाण्डुं दिदृक्षुर्गच्छन्, मध्येमार्गं स्वजायां छर्दिं यदृच्छया पश्यति। तयोश्च नर्मसल्लापः प्रवेशके प्रवर्तते। अथ राजयक्ष्ममन्त्री पाण्डुः स्वशत्रोर्जीवस्य सकाशात् संकटः समुपनमेदिति श्रुत्वा, तत्प्रतीकाराय जीवराजविजयाय च समुचितानुपायान् स्वसेनानीभिः संनिपातप्रभृतिभिः, सैनिकैः कुष्ठोन्मादादिभिश्च साकं समालोचयति। कर्णमूलो नाम पाण्डोश्चारः स्वावगतं जीवस्य समाधिनिष्ठास्वरूपं रहसि पाण्डवे ज्ञापयति। पाण्डुश्च ततो जीवमन्त्रिणोः ज्ञानविज्ञानशर्मणोर्वैमनस्यमुपकल्प्य, जीवराजस्य प्रकृतिमण्डले संक्षोभमप्युत्पाद्य, जीवस्य सङ्कटोत्पादनायोपायांश्चिन्तयति। कासगलगण्डादयश्च तादृशोपजापकल्पनासु पाण्डुमनुसरन्ति। जीवराजपुरमभिव्याप्य तज्जयाय स्वान् रोगानीकान् पाण्डुश्चोदयति। **तृतीयाङ्के**—यक्ष्मणः प्रणिधिः

हृद्रोगो नाम गदो जीवराजपुरे रात्रौ संचरन् विचारनाम्ना नागरिकेणाधिकारपुरुषेण किङ्करेण चादसीयेन गृहीत्वा बध्यते। एतेषां च शुद्धविष्कम्भे सरसो हास्यबहुलश्च व्याहारः पारस्परिकः प्रवर्तते। स च विचारनामा नागरिको विज्ञानशर्मणा नगरगुप्त्यै नियोजितः पुरुषः। पाण्डुप्रेरिता विविधा रोगरूपा योधा जीवपुरस्यावस्कन्दनायोद्युञ्जते। एतस्मिन्नन्तरे जीवराजो लिप्सितं फलमुपलभ्य, प्रतीक्षितस्वागमनैः पौरैरलङ्कृतं पुरं प्रविशति। अत्र परमेश्वरप्रसादलब्धानां रसगन्धकादीनां प्रभावो विशिष्य वर्ण्यते। जीवराजश्च स्वानुष्ठितं शिवोपासनाप्रकारं निर्वर्णयति। निदिध्यासनेन साक्षात्कृतस्य परमेश्वरस्य स्वरूपमपि विशदीकरोति। परमेश्वराज्ञया चोषधीशो जीवाय दिव्या ओषधी रसादिसंस्काराय प्रयच्छति। मन्त्री च रसादींस्तान् शत्रुनिषूदनक्षमतया ओषधीभिः सह संयोजयति। **चतुर्थाङ्के**—यक्ष्मपक्षीयैरमित्रैः जीवराजस्योपरि कूटरचनया कृतं व्यतिक्रमं मन्त्री विज्ञानशर्मा श्रुत्वा, तं राज्ञे निवेदयतीति वृत्तं विदूषकस्योदरंभरेर्मुखेन कविः प्रकटयति। अत्रानवधानतया विदूषकस्य महानसप्रवेशः, आनुषङ्गिकतया तस्य दृष्टिगोचरं गतेषु विविधेषु भक्ष्यपेयादिषु समुत्पद्यमानमुत्कटलालसत्वम्, महानसे पौरोगवस्य विलक्षणस्थितिः इत्येवमादयो रसिकजनहासहेतवो वर्णनक्रमाः साधु कविना सन्ति संयोजिताः। ततो मध्यन्दिनवर्णनम्, राज्ञे सामन्तभूपैरुपायनोपहरणम्, जीवराजकृतशिवभक्तिस्मरणम्, श्रद्धास्मृतिप्रभृतिभी राज्ञः संलपनम्, जीवाय परमानन्ददानविषये शिवभक्तिकृतं प्रतिश्रववचनम्, मध्याह्नस्नानपूजाद्यनन्तरं देव्या बुद्ध्या सह राज्ञ आरामगमनम्, उद्यानस्य सर्वर्तुसमवायजनितसुषमाविशेषवर्णनम् इत्येते विषयाः पाठकान् कामम् आवर्जयेयुः। परमेश्वरप्रसादात् ऋतुषट्कस्य युगपदाविर्भूतस्य वैद्यशास्त्रानुरोधेन च वर्णनमिह साधु कविना निष्पादितम्। राज्ञो देव्या सह दोलाधिरोहणम्, सायंसन्ध्येत्यादयश्च सम्यगुपवर्ण्यन्ते। **पञ्चमाङ्के**—जीवराजः पशुपतिध्याननिष्ठायामास्ते। तद्ध्यानस्यान्तरायं कर्तुं पाण्डुः कामादीन् प्रणिधीन् जीवपुरं प्रति प्रहिणोति। तादृशचारेष्वन्यतमो मत्सरो जीवराजसेवकैर्गृहीतः परिभूतश्च विमुच्यते। स मत्सरो दुर्भरवैलक्ष्यखिन्नः प्रतिनिवर्तमानो मार्गमध्ये कुष्ठं यक्ष्मणः किङ्करमपरमप्यवलोकयति। अमीषां त्रयाणामपि तदा निर्वर्तमानः समागमसहलपनादिव्यतिकरः सरसो हास्यरसकन्दलितश्च भवति।

जीवराजानुचरैः विचारादिभिः स्वस्य समुपनतं पराभवपरिभवादिकं मत्सरः कुष्ठादिभ्योऽभिदधाति । विचार्येमं परिभवं किंकर्तव्यमतःपरमिति पाण्डुकुष्ठावालोचयतः । ततः पाण्डुश्च जीवराजमपथ्येषु संधुक्षयितुम् अपथ्यतां नियोजयति । अथ राजयक्ष्मा पाण्डुमत्सराभ्यां विजने प्रासादे स्थित्वा मत्सरेणोपह्वरे प्रोक्तं स्वपरिपन्थिवृत्तं तत्कृतं परिभवं च शृणोति। जीवेन स्वपुरे यक्ष्मादिशत्रुनिबर्हणाय सज्जीकृतं यन्त्रशस्त्रादिसकलोपकरणविशिष्टं साधनं सर्वमपि मत्सरो निर्वर्णयति । यक्ष्मा च स्वनिषूदनाय विज्ञानशर्मविहितान् उद्यमानाकर्ण्य, स्वयमपि क्रोधसंधुक्षितः स्वशत्रुनिरसनाय विदधाति परिकरबन्धम् । षष्ठाङ्के—राजयक्ष्ममन्त्रिणा पाण्डुना नियुक्तै रोगानीकैः जीवराजस्य पुरमवस्कन्द्यते । पक्षद्वयेऽपि संमिलितै रोगात्मकैः औषधात्मकैश्च वीरभटैः निर्वर्त्यमानस्य तुमुलस्यायोधनस्य प्रेक्षणकुतूहलिनौ कर्मकालौ (तयोरधिदैवते) नभसि निभृतं स्थित्वा युद्धस्वरूपं वर्णयतः । एतन्मध्ये आपवर्गिकसचिवो ज्ञानशर्मा जीवराजमुपसृत्य त्रैवर्गिककृत्येभ्यो निवर्त्य जीवमपवर्गश्रेयस्साधनायोपांशु संधुक्षयति । अतः संसृतौ भौतिके देहे च तात्कालिकी विरक्तिर्जीवस्य जायते । अथ विज्ञानशर्मा राज्ञः सविधमागत्य, तस्याञ्जसा समुपनतं गुणवैपरीत्यमवलोकयति । तमेनं ज्ञानशर्मकृतं गुणविवर्तमवगत्य, विज्ञानशर्मा स्वपक्षस्यावश्यंभाविनीं जयश्रियं राज्ञे सम्यगवबोध्य, तं बहुभिरुपायैः प्रकृतिमानयति। एतदन्तरा पाण्डुप्रेरितेन भस्मकरोगेण जीवराजोऽभिभूयते । राज्ञस्तदिदमवस्थान्तरम् औदरिको विदूषकः स्वोदरपोषणायोपयोक्तुमुद्युङ्क्ते । विदिततद्व्यतिकरो विज्ञानशर्मा तु राजानं प्रासादोपरि नीत्वा, तस्य मनोवृत्तिं वैरिकृतपुराभियोगव्यतिकरे विनिवर्त्य बहुबुभुक्षां विस्मारयति। जीवपक्षराजयक्ष्मपक्षयोरत्युग्रो विग्रहक्रमः कालकर्मभ्यां वर्ण्यते। अतिप्रबलैः वसन्तकुसुमाकराद्यौषधात्मकैः सेनानीभिः बलवन्तो व्याधिरूपा योधा रणाङ्गणे निपात्यन्ते । विषण्णहृदयो राजयक्ष्मा पुनरपि मत्सरोपजापेन जीवपुरमभियोक्तुम्, कूटयुद्धं कर्तुमपि निश्चित्य, विषूचिमत्सराभ्यां सह निष्क्रामति । सप्तमाङ्के—अन्ततः केषुचनावशिष्टेषु च रोगेषु भेषजान्तरैरभिहतेषु, जीवराजश्चन्द्रशेखरस्यासाधारणानुग्रहबलेन सकुटुम्बं राजयक्ष्माणमप्यभिहन्ति । ततः साक्षात् परमेश्वरः परमेश्वर्या समेतः प्रमथगणपरिवृतो जीवराजस्य सान्निध्यं दत्वा, तस्मै योगशक्तिमुपदिश्य, जीवन्मुक्तिपर्यन्तानि श्रेयांसि चानुगृह्णाति ।

एवं सर्वानिष्टप्रदानां रोगादिरूपदुष्टानां निग्रहं विधाय, इष्टस्य शिष्टस्य च जीवस्य शाश्वतमानन्दं शाङ्करी भक्तिरुपपादयति । **एष पुनः कथावस्तुनः सारसङ्ग्रहः**—

जीवात्मा नाटकेऽस्मिन् भवति नरपतिर्नायकश्चास्य पत्नी
बुद्धिर्विज्ञानशर्मा भवति सुसचिवः पत्तनं मर्त्यदेहः ।
श्रद्धा भक्तिश्च शैवी स्मृतिरपि सततं धारणा सत्त्वयुक्ता
प्राध्वं राजानमन्वेत्यथ भयमुपयात्यस्य यक्ष्माख्यशत्रोः ॥

यक्ष्माणं तं विषूची स्वयमनुविदधे गेहिनी यस्य पाण्डु-
र्मन्त्री तद्यौवराज्येऽप्यधिकृतपुरुषः सज्वरश्चातिसारः ।
ग्रन्थ्युन्मादप्रमेहप्रभृतिगदगणाश्चापरे यक्ष्मपक्षे
स्थित्वा जीवस्य राज्ञः पुरमनवरतं क्लेशयन्ति प्रसह्य ॥

विज्ञानमन्त्रिबलतः शिवयोश्च भक्त्या
योगैश्च जीवनृपतिः समवाप्य सिद्धिम् ।
सिद्धौषधानि च तयोर्दययाधिगत्य
निर्धूतवैरिनिवहः सुखमश्नुतेऽन्ते ॥

अथ ग्रन्थस्यास्य मुद्रणाविष्करणयोः प्रवृत्तिप्रस्तावेन भूमिकामिमामुपसंहरामः । नाटकमूलग्रन्थस्यास्य नानाप्रकारेण संस्करणकर्मणि सति विर्वर्तिते, विमर्शपूर्वकं व्याख्यानेऽपि विस्तरतो विलिख्य परिसमापिते, कथमेष ग्रन्थः सहृदयानां चक्षुर्गोचरो भुवि भविष्यतीति कदाचित् वयं स्म भवामः शङ्काकुलमानसाः । आर्जितप्रज्ञानाम्, अथाप्याशाभङ्गविधुराणां विदुषां दौर्मनस्यं 'जीर्णमङ्गे सुभाषितम्' इति यथावत् नीतिज्ञो भर्तृहरिः साधु समाख्यापयदिति स्मरन् निर्वेदममि पूर्वं सकृदाश्नुमहि । गच्छता गणरात्रेण ग्लास्नुभिः मर्त्यधर्मभिरस्माभिः सह ग्रन्थोऽयं कथितपूर्वाभाणकानुरोधेन किमु नामाभावतामुपलभेतेति च सुदूरं चिन्तापथमारूढा चित्तवृत्तिरस्माकम् । अथैकदा नः सुहृद्भिः वैद्यरत्नैः श्रीनिवासमूर्तिमहाशयैः अडयार्ग्रन्थालयाधि-

कृतैः सह विद्याविषयकसंकथायां संप्रवृत्तायां प्रासंगिकतया जीवानन्दननाटक-संबन्धिनी वार्तापि स्थानमुपलेभे। स एवाभवच्छुभंयुः समयः, यदास्य नाटक-स्यास्मच्छोधितस्य नन्दिनीव्याख्यासहितस्य अडयार् पुस्तकालयद्वारा मुद्रण-माविष्करणं चावाभ्यामभवन्निर्णीतम्। दिनैः कतिपयैरेवच ततो मुद्रणमस्या-रब्धम्। बहोश्चिरात्, जगन्महासमरसमारम्भात् प्रागेवोपक्रान्तेऽप्यस्मिन् मुद्रणकर्मणि, कालेन द्राघीयसा, कथमप्यामन्दमन्द्रया गजगमनिकया ग्रन्थ-स्यास्य मुद्रणक्रिया कथंचित् स्वकीयाया अवसानसीमां संप्रति समासीदति-स्म; वयमपि सुदीर्घमिदानीमुच्छ्वसिमः। अस्य बहुतिथस्य कालातिपातस्य नास्मदीयात्र दीर्घसूत्रता, न वा मुद्रालयस्य कर्मनिर्वर्तने मन्थरता मना-गप्यपराध्यति; परं तु पदे पदे मुद्रणालये तथा अडयार् पुस्तककोशा-गारे च समुपचितो ग्रन्थाविष्करणक्रियाकलाप एव कालविलम्बस्य प्रधानं कारणमासीदिति वयमिदानीमावेदयामः। स्वसामाजिकग्रन्थालयसंबन्धिनम् आत्मनोऽधिकारं यथाविध्युपयुज्य, संस्कृतसारस्वताभिवृद्धौ आविष्कृता-दरातिशयाय अस्मत्सुहृदे वैद्यरत्न-श्रीनिवासमूर्तिमहाभागाय शिशिरशिशिरेण मनसा वयमात्मानं धारयामः। अस्मदीयैः व्याख्यानादिभिः सुतरां स्वरूपतो गुणतश्चोपबृंहितस्यास्य नाटकस्य महतः, ग्रन्थान्तराणामीदृशानामपि मनोहरमुद्रणकर्मणा गैर्वाण्या वाण्याः प्रचारविषये प्रशस्तां सेवामाचरद्भ्यो वसन्तमुद्रायन्त्रालयकार्यनिर्वाहकेभ्यश्च सन्त्वस्माकमिमे धन्यवादाः।

विविधैरभिनवैः परिष्कारविशेषैः समन्वितोऽयं नाटकग्रन्थः सुतरा-मपूर्ववस्तुघटितकथांशेन, अनवद्यया पद्यगद्यादिशैल्या, सरसया वर्णनपरिपा-ट्या, वैद्यशास्त्रतत्त्वानां विवरणप्रकारेण, विविधवेदान्तार्थरहस्यबोधनविधानेन, काव्योज्जीवकशृङ्गारादिनानारसोपबृंहणेन च, मन्महे, मध्यस्थदृशाम् अधु-नातनानाम् उन्मिषत्प्रतिभाशालिनां मनीषिणाम् अभिनन्दनाय प्रकल्पेतेति।

एवं सकलगुणसंपन्नमिमं विधित्सुभिर्ग्रन्थमादृतेऽप्यस्माभिर्महति समुद्यमे, मनुष्यधर्मणां सहजेन कादाचित्केन प्रमादेन यदि कतिचन स्खलनदोषाः—येषां च धूर्वहत्वमस्मदायत्तम्—दोषज्ञदृष्टिगोचरा भवन्ति, तर्हि ते विमर्शक्रियाश्रद्धालुभिः संख्यावद्भिः प्रेमार्द्रहृदयैरस्मभ्यमावेदनीया इति निवेदयामः ।

आर्यगृहम्, मे. दुरैस्वामि अय्यंगार् ।
वेपेरि—मदरास्

## ॥ भूमिकानुबन्धः ॥

### । व्याख्यातृकृतशोधनानि पाठभेदाश्च ।

अत्र अतिलघीयांसः पाठभेदादयो नोद्धृताः ।

कुण्डलीकरणानामन्तरा दत्ताः संख्याङ्काः तत्तद्ग्रन्थस्य पृष्ठाङ्कान् पङ्क्त्यङ्कांश्च क्रमेण सूचयन्ति । * अनेन चिह्नेन तारकिताः पङ्क्तयो विशिष्य ग्रन्थे सावहिति पठनीयाः ।

| **निर्णयसागरकोशपाठाः । †** | **एतत्कोशपाठाः ।** |
|---|---|
| | **प्रथमाङ्के** |
| *लब्ध्वाथ लब्धेप्सिते (१-५) | लब्ध्वाप्यलब्धेप्सिते (१-४) |
| तनुभृतां (१-१०) | तनुभृता (३-२) |
| दिगन्ते (१-२१) | दिगन्तान् (६-१) |
| नाटकमिति । (२-१०) | नाटकम् । (७-६) |
| *त्वं न जानासि (३-१) | तत्त्वं न जानासि (११-४) |
| *पद्मसंभृतकर (३-१४) | पद्मसंभवकर (१३-५) |
| *भूमिपरिग्रहाय (३-२४) | भूमिकापरिग्रहाय (१५-१) |
| प्रौढामात्यनिरुक्त (५-१७) | प्रौढामात्यनियुक्त (२१-२) |
| दुर्जयो युष्माभिः । (९-१२) | दुर्जयो यक्ष्मा युष्माभिः । (३३-१) |
| *रसं प्रतिपन्नधैर्या । (९-१८) | न संप्रतिपन्नधैर्या । (३३-७) |
| *अज्ञानशर्मा (११-१२) | ज्ञानशर्मा (४०-१) |

† Here the book Jīvānandanam, 1891 edition (Kāvyamala Series) of Nirnaya Sāgar Press is referred. Their 2nd edition of 1933 also carries the same inaccurate readings etc.

| | |
|---|---|
| *जाग्रतिः फलकर्मैव । (?) (११-१३) | जाग्रति मयि स निष्फलकर्मैव । (४०-२) |
| *यमुनाभ्रान्तबाह्वन्तर (१३-२३) | यमुनाभ्रातृबाह्वन्तर (४८-२) |
| *मन्दरमन्थानदण्डैः (१४-४) | मन्दरमन्थानदण्डेन (४९-२) |
| *नानास्वरूपा भगवती परमेतत्।(१४-२२) | नानास्वरूपा भगवती परमेश्वरी । (५२-६) |
| उपासनीयावेतौ । (१५-२७) | उपासनीया एते । (५९-४) |

## द्वितीयाङ्के

| | |
|---|---|
| विभ्रममूल्यमनुपयुज्य मां (१७-२०) | विभ्रममूल्यमनुयुञ्जाना (६९-१) |
| *संधास्येत्यवतीं (?) तु (२०-१४) | संधास्ये भवतीं तु (७९-३) |
| *हिक्का: सुखीकृत्य (२१-१, २) | हिक्का सुखीकृत्य (७९-४, ५) |
| *मद्बुद्धयैव (२१-६) | मद्बुद्ध्यैव (८०-५) |
| *दारुणमाननबिम्बं (२१-२१) | दारुणमाननविवरं (८२-७) |
| (**गलगण्डो निष्क्रम्य** (२१-२५) | **गलगण्ड:**—तथा।(इति निष्क्रम्य . . . . .) (८३-३) |
| अर्शोभेदाः षडतिधृतय: (२२-२५) | अर्शोभेदा: षडतिगतय: (८७-३) |
| प्रणम्य प्राञ्जलयस्तिष्ठन्ति । (२३-३) | प्रणम्योत्थाय प्राञ्जलयस्तिष्ठन्ति । (८८-३) |
| सर्वे सैनिकास्तिष्ठन्तु । (२३-१०) | कुमार, सर्वे सैनिकास्तिष्ठन्तु । (८९-६) |
| *घनसरण्यतीतं द्रुम (२३-१९) | घनसरण्यतीतद्रुम (९२-३) |
| *गन्तुं शयितुमशितुं यातुं (२४-१) | गन्तुं शयितुमशितुं पातुं (९३-५) |
| तत्क्रियतामस्मदुक्तिश्रवणादर:। (२४-४) | तत् कर्तव्ये किञ्चिदस्मद्वचांसि कर्णयोरतिथी-कर्तुमर्हति भवान् । (९४-२) |
| संप्रस्तावात्परिणतिं (२४-७) | प्रस्तावाख्यां परिणतिं (९५-२) |
| न यावत्स हित: (२४-१३) | न यावत् सहित: (९६-३) |
| *कुष्ठेष्वेक:—(स्वगतम् ।) (२५-१४) | कुष्ठेष्वेक:—स्वामिन्, (१०१-६) |
| *तव गमनागमनं च । (२६-१७) | तव गमनमागमनं च । (१०६-४) |
| *प्रान्त(?) स्तदादीयतां (२७-९) | प्रातस्तदा दीयतां (१०९-५) |
| *शोषण इव तस्य (?) तव किं (२८-४) | शोषणे वा तस्य किं न (११३-४) |
| हितकारिराज्ञः (२८-२३) | हितकारि राज्ञ: (११७-५) |
| *एवमेवम् । (३०-४) | एवमिव । (१२३-६) |
| *यदि सत्यं गदोऽसि (३०-२०) | यदि सत्यं गदसि (१२५-५) |

## तृतीयाङ्के

| | |
|---|---|
| नागरिकेण संयमितः । (३०-२६) | नागरिकेण झटिति गृहीत्वा बध्वा च विकृष्टोऽस्मि । (१२७-१) |
| *तैरन्नाद्युपपाद्य धूर्जटिमुखान् देवान्निवेद्यातिथीन्संतर्प्याश्नत एव याति दिवसः शेषः कुतः संचरः । (३१-७, ८) | तैरन्नान्युपपाद्य पञ्च च महायज्ञान् विधायाश्नति श्रीकण्ठाय निवेद्य मय्यतिथये दत्वा च गच्छत्यहः । (१२७-११, १२) |
| नौंकारः पुवते (३१-१४) | नौंकारः पवते (१२९-२) |
| भक्ताः पञ्चजनाः (३१-१७) | भुक्ता पञ्चजनाः (१२९-५) |
| ‘सर्वमिदं राजकार्यं त्वया कस्मैचिदपि न कथनीयम्’ इति (३२-१५) | ‘श्रुतमिहत्यं राजकार्यं कस्मैचिदपि न कथय’ इति (१३२-२) |
| *दलद्दशमितो रागमर्कक्रमेण । (३२-२४) | दलद्दशमितो रागमर्कः करेण । (१३२-११) |
| व्यापृते मया (३४-१३) | व्यापृतेन मया (१४१-१) |
| *लोचने चाधिचत्वा (३५-१) | लोचने षट् च रोगाः (१४३-५) |
| (सामर्षं सावहित्थं चाकाशे) (३५-६) | (सामर्षं सावहित्थं चाकाशे लक्ष्यं बध्वा) (१४४-२) |
| धौरेयस्खलितानि (३५-११) | धौरेये स्खलितानि (१४५-३) |
| *समद्युत (?) प्राणनिरोधेन (३७-१) | अस्मत्कृतप्राणनिरोधेन (१५३-१) |
| समाराधितयोः (३७-२) | समाधिना समाराधितयोः (१५३-२) |
| नीरोगीकरणसमर्थान् (३७-९) | देहस्य नीरोगीकरणसमर्थान् (१५५-१) |
| *वक्त्रेन्दो रुचिरेण नाभितिलक(३७-१७) | वक्त्रेन्दौ रुचिरैणनाभितिलक (१५६-६) |
| *द्विजहंसापाय (३८-२०) | द्विजहिंसापाप (१६३-१) |
| *प्रियरतीनां युवतीनामनभिमतानां पुंसां जरामुपरुध्य . . . भवति। (३९-३,४) | प्रियरतीनां युवतीनाम् अनभिमतां जरामुपरुध्य . . . क्रियते । (१६५-१, २) |
| ततस्तेन दीयमानान् (४०-११) | ततस्तेन साम्बशिवेन दीयमानान् (१७०-१) |
| अतः सर्वास्ताः (४०-१७) | अतः स्वामिन्, सर्वास्ताः (१७१-१) |
| संनिहितः । अतः । (४०-१८) | सन्निहितः । अतः श्रीपरमेश्वर, (१७१-२) |
| *ततश्च भगवदाज्ञया तेन सोमेन सर्वास्ता मह्यं दत्ताः । (इति मन्त्रिहस्तेऽर्पयति ।) (४०-२१) | ततः स च महौषधीशः परमेश्वराज्ञया सर्वा एता दिव्या ओषधीर्दत्तवान् । यदर्थं प्रेषितोऽहं भवता तदेतान् रसगन्धकान् ओषधीभिः सह गृहाण । (इति मन्त्रिहस्तेऽर्पयति ।) (१७२-१, २, ३) |

## चतुर्थाङ्के

| | |
|---|---|
| *स्नातव्यं जपितव्यं वसितव्यं नमसितव्य-मत्तव्यम्। अ..... मनुकूलं दैवत-मत्र क्रमेण मया॥ (४५-२२, २३) | स्नातव्यं वसितव्यं जपितव्यं नमसितव्यमत्तव्यम्। अण्स्वंशुकमनुकूलं दैवतमत्रं क्रमेण मया॥ (१८९-२, ३) |
| आसन्नां..... वारण (४६-१४) | आसन्नां निबिरीसवारण (१९१-३) |
| आणवेदु महाराओ। (४८-१९) | आणवेदु महाराओ। अहं पस्स एव्व चिट्ठम्मि। (१९६-१२) |
| तटिल्लताविन्यासं (४९-११) | तटिल्लताविभ्रमं (१९९-२) |
| *भजती चेलाञ्चलेन (४९-१४) | मृजती चेलाञ्चलेन (१९९-५) |
| *स्नातुं च भोक्तुमशितुं (५०-५) | स्नातुं च भक्तमशितुं (२०१-४) |
| *शालिनस्तृप्तिः। (५०-८) | शाखिनस्तृप्तिः। (२०२-२) |
| न तु यथा (५१-४) | ननु यथा (२०५-४) |
| संदर्भ्य गुणान् (५१-१५) | संदर्श्य गुणान् (२०७-१) |
| भवतु। अतस्तस्मिन् (५१-१७) | भवतु। स खलु परमेश्वरस्यैवांशः। अतस्तस्मिन् (२०८-१) |
| *ता एहि तं जेव्व अणुग्गहीदुम् (५२-१,२) | ता एहि तं जेव्व अणुग्गहीदुम्। (इति मार्गमुपदिशति।) इदो इदो भअवदी। (२१०-१) |
| **राजा**—अहो अमृतासारमयः (५२-३) | **राजा**—(श्रुत्वा) अहो, अमृतासारमयः (२१०-४) |
| *प्रवहन्ती तु इति पद्यस्यानन्तरं 'इयत्कृतम् केन' इति पद्यम् अस्मिन् कोशे नास्ति। (५२-१९) | प्रवहन्ती तु इति पद्यस्यानन्तरम् 'इयत्कृतं केन' इति (श्लो. २३) पद्यम् अत्र विद्यमानं पठ्यताम्। (२१३-१, २) |
| *नीरुजमुरु सुस्थं (५२-२३) | नीरुजपुरसुस्थं (२१४-४) |
| ***भक्तिः**—तथा भवतु।(इति निष्क्रान्ता।) (५३-६) | **भक्तिश्रद्धे**—विजयी भव।(इति निष्क्रान्ते।) (२१६-२) |
| भूमौ साधु वितत्य (५३-१७) | पृथ्वायामि वितत्य (२१७-१०) |
| घृतपक्वफाणितमथापूपैः (५३-१८) | घृतपक्वफाणितमयापूपैः (२१७-३) |
| देवानभ्यर्च्य भक्तया (५४-५) | देवानभ्यर्च्य भुक्त्वा (२१८-१०) |
| सौरभ्योच्छ्रायलभ्य (५४-१५) | सौरभ्याघ्राणलभ्य (२२०-६) |

| | |
|---|---|
| *सुदृशोऽल्पवीर्याः । वीर्यं प्रसन्नं (५५-२२, ५६-१) | तरुणाल्पवीर्याः । वार्यप्रसन्नं (२२७-६, ७) |
| *स्नेहाद्विदग्धात् (५६-१३) | स्नेहाद्विदिग्धात् (२३१-२) |
| नक्तमहह (५७-७) | नक्तमहनि (२३७-१) |
| **राजा**—वयस्य, (५८-१) | **राजा**—(विहस्य) वयस्य, (२४०-४) |
| *धरणीए विअ मह घरणीए अनक्खराए वाआए वि मह अत्थबोधो होइ। [धरण्या इव मम गृहिण्या अनक्षराया वाचाया अपि ममार्थबोधो भवति।] (५८-१५, १६, २६, २७) | वाणरीए विअ मह घरिणीए वि अणक्खरा एव्व वाआ। ताए वि मह अत्थबोहो होइ। [वानर्या इव मम गृहिण्या अपि अनक्षरैव वाक्। तस्या अपि ममार्थबोधो भवति।] (२४२-२, ३, ४, ५) |
| अहमप्यन्तःपुरमेव गच्छामि। (५९-१४) | अहमप्यन्तःपुरमेव गच्छामि। दौवारिक पुरतो मार्गमादर्शय। (२४४-३) |

### पञ्चमाङ्कः

| | |
|---|---|
| *द्वावपि पुरुषौ (६०-१४) | द्वाविव पुरुषौ (२५१-१) |
| *माशब्दकीयमवस्था (६१-५) | अशाब्दिकीयमवस्था (२५४-३) |
| गङ्गाचन्द्रादिपरिकरं विना (६१-१२) | यत इदानीं गङ्गाचन्द्रादिपरिकरं विनापि (२५५-२) |
| (प्रकाशम्।) तस्यैवेयं दशा (६२-२) | (प्रकाशम्) सखे, तस्यैवेयं दशा (२५७-३) |
| कथं गृहीता भवता कापालिकतापिशाचिका। (६२-५) | कथं गृहीतवती भवन्तमपि कापालिकतापिशाची। (२५७-६) |
| कथं तद्दुर्दशा परम्। (६२-१०) | कथं ते दुर्दशापदम्। (२५८-४) |
| *आस्थानाय स्वहस्तदानमिदम्। (६२-२७) | उत्थानाय स्वहस्तदानमिदम्। (२६०-८) |
| *सखे, तवाप्यकथनीयं नाम किमस्ति। श्रूयताम्। विज्ञानप्रहितेन.. (६३-२) | सखे, तवाप्यकथनीयं नाम किमस्ति। श्रूयताम्। **कुष्ठः**—कथय कथय। **मत्सरः**—विज्ञानप्रहितेन... (२६१-२,४) |
| दृढया भक्त्या प्रसादात्स्थितम्। (६३-६) | दृढया भक्त्याऽऽप्रसादात् स्थितम्। (२६१-८) |

| | |
|---|---|
| भवान्यदेव (६३-१७) | भवान् यदेव (२६३-७) |
| *तप्स्यमानस्तप: (६५-७) | तप्स्यमानं तप: (२६९-३) |
| आर्य कटकसीमनि देव: प्राप्त इति (६६-१५) | आर्य, इयमपथ्यता । कटकसीमनि देव: प्राप्त इति (२७४-१) |

*† निर्णयसागरकोशे ६७-पुटात् प्रभृति यावत्पञ्चमाङ्कपर्यवसानं (पुट ७०) राजयक्ष्मा इति पदं **राजा** इति व्यपदिष्टेन आधिकारिकनाम्ना स्थूलाक्षरै: अविचारितमेव मुद्रितमास्ते । नाटकेषु नियमेन कथानायकभूतो नृप एव राजनाम्ना व्यपदिश्यते । अस्मिन्नाटके जीवराज एव सर्वत्र राजपदवाच्यः † । **राजयक्ष्मा**—इति निर्देश: समुचित: । दृश्यताम् एष कोशः । (२७५-२९२ पुटाः ।)

| | |
|---|---|
| *श्रुतं कुष्ठमुखात्पुरवृत्तं तं विशेषत: श्रोतुमिच्छामि । (६७-११) | श्रुतः कुष्ठमुखादेव । विशेषत: श्रोतुमिच्छामि । (२७७-१) |
| **मत्सर:**—संनद्धैः पुररक्षणे (६७-१४) | **मत्सर:**—श्रूयताम् । संनद्धैः पुररक्षणे (२७७-४) |
| *तत्तद्देशगतैश्च यन्त्रनिचयै: (६७-१६) | तत्तद्देशगतैश्च यन्त्रनिचयै: (२७७-६) |
| *तानि यन्त्राणि कीदृशानीति सप्रकारम् (६७-२०) | तानि यन्त्राणि कीदृशानीति च सकलमपि सप्रकारं (२७८-७) |
| *समानाख्यो गुल्फे, (६७-२५) | समानाख्यो गुल्मे (२७८-७) |
| *एकान्येकमुखान्यपि (६८-२२) | एकानेकमुखान्यपि (२८४-४) |
| कः कोऽत्र भो:, शस्त्रम् । (७०-६) | क: कोऽत्र भो: । शस्त्रं शस्त्रम् । (२९१-१) |
| ***पाण्डुः**—ननु संनिहितमेव शस्त्रम् । तथापि किंचिद्विज्ञापयामि । अस्त्येवायमन्तिम: प्रकार: । अपि तु (७०-८, ९) | **पाण्डुः**—ननु संनिहितमेव शस्त्रम् । तथापि देव, किञ्चिद्विज्ञापयामि । **राजयक्ष्मा**—श्रोतव्यं तर्हि । **पाण्डुः**—अस्त्येवायमन्तिम: प्रकार: । अपि तु, (२९१-२, ३, ४) |
| **राजा**—भवतु तथा । अस्त्येवैतदनन्तरकर्तव्यम् । (७०-१४) | **राजयक्ष्मा**—भवतु तथा । अस्त्येवैतदनन्तरकर्तव्यं विस्फूर्जितम् । (२९२-३) |

† दृश्यतां पारिपार्श्वकवाक्यं प्रस्तावनायाम्—'कथानायकस्य जीवस्य' इति तत्र ग्रन्थकर्तुः प्रयोगो विद्यते । P. १५. तथा सर्वत्र जीव एव राजेति ग्रन्थे व्यवह्रियते ।

षष्ठाङ्के

| | |
|---|---|
| प्रतियुधा (७०-२३) | प्रतियुध्य (२९३-३) |
| सरसतत्प्रतिभटजातं (७०-२३, २४) | सरसं तत्प्रतिभटजातं (२९३-४) |
| *त्वामज्ञातमनुग्रहाय (७१-१) | त्वामाज्ञातमनुग्रहाय (२९५-१) |
| भवत्तनूभृत्त्वयने (७१-१८) | भवत्तनू ऋत्वयने (२९९-४) |
| ज्ञानशर्मणोपजाप: (७२-१) | ज्ञानशर्मण उपजाप: (३०२-५) |
| आयान्तमवलोक्य (७२-७) | तमायान्तमवलोक्य (३०३-१) |
| निर्मर्यादमुपैत्यमानिव (७२-१३) | निर्मर्यादमुदेत्यमानिव (३०४-२) |
| वचोऽप्रियमपि स्वेष्टं (७२-२५) | वचोऽप्रियमपि स्पष्टं (३०६-३) |
| *त्वग्रोमकूपं (७३-१३) | त्वग्रोमरूपं (३०८-४) |
| *न नः परमिह (७४-४) | नेतःपरमिह (३१२-४) |
| *पत्रनिचय (७४-१९) | यन्त्रनिचय (३१४-२) |
| कुटिलैः प्रवृत्त्या (७४-२६) | कुटिलैः प्रकृत्या (३१५-४) |
| निजवशंवदसेवकेन (७५-१) | निजवशंवदसैनिकेन (३१६-१) |
| समञ्जसयुक्तिकं वचोऽब्रवीत् । (७५-६) | विज्ञानशर्मा समञ्जसयुक्तिकं वचनमुदीरयामास । (३१७-२,३) |
| जानातु भगवान् (७५-१४) | जानातु स भवान् (३१९-२) |
| इयतापि कालेन पुरस्य स्वायत्तत्वे (७५-१७) | नियतेऽपि कालेन पुरस्य स्वायत्तत्वे (३१९-५) |
| समरयत्नकृतत्वर: (७६-१२) | समरचत्वरकृतत्वर: (३२३-४) |
| यदेवं देवस्य मनसो व्याकुलीभाव: (७६-१६) | य एवं देवस्य मनसो व्याकुलीभाव: (३२४-२) |
| *'मोक्षे धीः' इत्यस्य (श्लो. २९) अनन्तरं 'श्रुतिश्च भवति ....' इति वाक्यं नात्र विद्यते । (७६-२२) | श्रुतिश्च भवति—"दूरमेते विपरीते विषूची अविद्या या च विद्येति विज्ञाता" इति । (३२५-१,२) |
| चेद्दुग्धाम्बुधि: (७७-२४) | मे दुग्धाम्बुधिः (३३०-३) |
| वत्स, श्रुतं भवता । (७८-६) | वत्स, श्रुतं भवता राज्ञो विदूषकस्य वचनम् । (३३२-२) |
| **राजा**—वयस्य, (७८-१२) | **राजा**—(विहस्य) वयस्य, (३३३-१) |

| | |
|---|---|
| *औपाधिकी राज्ञो बुभुक्षा । (७९-१) | औपाधिकी राज्ञो बहुबुभुक्षा । (३३३-९) |
| अलमिदम् । अन्यदप्यचिन्तनीयं बुद्धिविलसितमिति (७९-१७) | अत्यल्पमिदम् । अन्यदप्यचिन्तनीयं त्वद्विलसितमिति (३३६-२) |
| *विदूषको ब्रवीति । (८१-२१) | विदूषको बिभेति । (३४४-६) |
| *स्वेद्यानि सप्त च (८३-१८) | खेयानि सप्त च (३५१-७) |
| परिखात्वेन निरूपिताः । (८५-१) | सप्त धातवः परिखात्वेन निरूपिताः । (३५५-३) |
| *यतन्तु नाम । (८५-५) | यतन्तां नाम । (३५६-४) |
| *श्लेष्मप्रभृतीन्त्रक्तपुत्रान् (८५-१९) | श्लेष्मप्रभृतीन् सपुत्रान् (३५८-९) |
| *अमृतगुग्गुलुच (तृ ?)णपञ्चकादयः (८५-२१) | अमृतागुग्गुलुलवणपञ्चकादयः (३५९-२) |
| *अप्यस्मत्कुलपक्षपातिनि पथा कामोपभोग (८७-५) | अप्यस्मत्कुलपक्षपातिनि यथाकामोपभोग (३६५-४) |
| *मन्दाग्निवातकफपित्ताः—(८७-१७) | मन्दाग्निवातपित्तकफाः—(३६७-६) |
| दास्या विलसितं (८८-१८) | दास्या दुर्विलसितं (३७१-१) |
| जृम्भयति सप्तिविघूर्णं (८९-२४) | जृम्भयति दृष्टिविघूर्णं (३७५-४) |
| *संपदं एसो अत्ताणं वि ण जाणादि राजकज्जं कुदो उण । उम्मादं वा उवजावं वा सत्तुकिदम् । [सांप्रतमेष आत्मानमपि न जानाति राजकार्यं कुतःपुनरुन्मादं वा उपजापं वा शत्रुकृतम् ।] (९३-१, २, २५, २६) | संपदं एसो—[सांप्रतमेषः]— अत्ताणं वि ण जाणाइ राजकज्जं कुदो उण । उम्मादो उवजावो वा एदस्सिं सत्तुहिं किदो ॥ [आत्मानमपि न जानाति राजकार्यं कुतः पुनः । उन्माद उपजापो वा एतस्मिन् शत्रुभिः कृतः ॥] (३९२-१, २, ४, ५) |
| तत्क्षमां भूमिमेव (९४-३) | समरक्षमां भूमिमेव (३९८-१) |
| *प्रबलमभिमान्यारुचिम् । (९४-१८) | प्रबलमभिमान्याणवम् । (४०२-४) |
| *घनारवमन्दहासम् । (९५-१२) | घनारवमट्टहासम् । (४०८-२) |
| *'कर्तुमुचितमिति प्रतिभाति' इति वाक्यस्य (१९ पङ्क्तिः) अनन्तरं यक्ष्ममत्सरयोः उक्तिप्रत्युक्तिरूपं सुतरां प्रधानं वाक्यद्वयं कोशेऽस्मिन् नास्ति । (९७-१९) | कर्तुमुचितमिति प्रतिभाति । यक्ष्मा—कथमिव । मत्सरः—(कर्णे) एवमिव । (४१७-२, ३, ४) |

## सप्तमाङ्के

| | |
|---|---|
| निखिलामयजननकरं निजपातं (९८-१३) | निखिलामयजननकरं निजघान (४२०-३) |
| *गुडूच्यादिपञ्चभद्रकषायं निकषा यन्नवं (?) तमवलोक्य (९८-१४) | गुडूच्यादिपञ्चभद्रकषायौ निकषा यत्नवन्तावलोक्य (४२१-१) |
| समरजनैरपि (९९-१२) | समस्तजनैरपि (४३२-२) |
| *मन्त्री—'भक्ताय भवते कदापि मया दर्शयिष्यते साम्बः' इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या । इति कदाचित्कथान्तरे देवेनैव मां प्रति प्रागुक्तम् । (९९-२६, २७) | मन्त्री—'भक्ताय मया कदाचिद्भवते दर्शिष्यते साम्बः । इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या ॥' इति कदाचित् कथान्तरे देवेनैव मां प्रति प्रागुक्तम् । (४३५-३, ४ ; ४३६-१) |
| भगवद्दर्शनार्थं (१००-१, २) | भगवतः परमेश्वरस्य दर्शनार्थं (४३६-२) |
| *भक्तवत्सला (१००-६) | भक्तवत्सलता (४३७-१) |
| *घोषन्मृदङ्गः (१००-१९) | घुष्यन्मृदङ्गः (४४०-३) |
| *निखिलक्षत्रियकुलजिघृक्षवे (१०१-२, ३) | निखिलक्षत्रियकुलजिघांसवे (४४२-२, ३) |
| भुवमुत्तरन्त्याः (१०१-६) | भुवमवतरन्त्याः (४४३-३) |
| *विभ्रम्याकाशगङ्गा विधिभुवनभुवः (१०१-११) | विभ्रश्यन्त्यभ्रगङ्गा विबुधजनभुवः (४४४-४) |
| नीललोहितेन विसृष्टः (१०१-१४) | भगवता विष्टपगुरुणा शिपिविष्टेन सृष्टः (४४५-२) |
| प्रहारश्छिन्नग्रीव (१०१-२?) | प्रहारच्छिन्नग्रीव (४४८-२, ३) |
| कार्यार्थमुर्व्यादिभिः (१०२-१) | कार्यैर्यमुर्व्यादिभिः (४५०-१) |
| पुरस्तत् (१०२-२४) | पुरस्तात् (४५५-४) |
| *तदहम् (१०३-३) | तमहम् (४५६-२) |
| *(इति प्रणमति ।) (१०३-४) | (इति मन्त्रिणा सह प्रणमति ।) (४५६-३) |
| देव्यैवमनुगृहीतोऽसि (१०५-१४) | देव्यैवानुगृहीतोऽसि (४७०-३) |
| अनुगृहीतैवेयम् (१०५-१८) | अनुगृहीता एव वयम् (४७१-१) |
| य एवमालम्बनामनुभवति (१०५-२४) | यत एवं सालम्बनामनुभवति (४७२-२) |
| निर्बीजयोगसंज्ञमसंप्रज्ञात (१०५-२५) | निर्बीजयोगसंज्ञं संप्रज्ञात (४७२-३) |
| मुनिः सोऽन्यस्यापि (१०६-१३, १४) | मुनिस्तोमस्यापि (४७४-७, ८) |

| | |
|---|---|
| *कालो जनान्ध्येन (१०७-१) | कल्ये जनान्ध्येन (४७६-७) |
| तावकैरेष (१०७-२२) | तावकैरेव (४८०-२) |
| *फलं वाञ्छानुरूपं महीं (१०८-७) | फलत्विच्छानुरूपं मही (४८२-२) |

---

तत्त्वार्थानवधूय कार्यविषये स्वैराहते कैश्चन
स्वैरालक्ष्यधियं विधाय च कृतं प्रागस्य दुर्मुद्रणम् ।
ग्रन्थं संप्रति संभृतं गुरुगुणैः क्लेशेन कोशान् निरी-
क्ष्यैनं शोधितमादरेण रसिकाः पश्यन्तु तुष्यन्तु च ॥

मे. दुरैस्वामि अय्यङ्गार्.

श्रीः

# जीवानन्दनम्

सव्याख्यानम्

## प्रथमोऽङ्कः

---

लक्ष्मीकैरवबन्धुकल्पकतरून् लब्ध्वाप्यलब्धेप्सिते
भूयो मथ्नति देवदानवगणे दुग्धाब्धिमृद्धश्रमे ।
तस्यानन्दथुना समं समुदयन् कुम्भं सुधापूरितं
बिभ्राणः स्वकरे करोतु भवतां भद्राणि धन्वन्तरिः ॥ १ ॥

---

### व्याख्या—नन्दिनी

मध्येमरुद्वृधाद्वीपं लोकातङ्कनिवृत्तये ।
धन्वन्तरिं पुरस्कृत्य स्थितं रङ्गेशमाश्रये ॥

मेलपाक्काभिजनस्य मेध्यचरितोत्तंसस्य विद्वन्मणेः
श्रीमन्नैध्रुववीरराघवगुरोश्छात्रेण पुत्रेण च ।
जीवानन्दननाटकस्य सरसा व्याख्या दुरैस्वामिना
साहित्यागदतन्त्रयो रसविदा निर्मीयते नन्दिनी ॥

नाटकेषु नान्दीति प्रथमतः प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहेण निर्वहणं अभिकाङ्क्षन्तः प्राक्तनाः कवयः सर्वेऽपि प्रकरणमेकं अभिष्टुतेष्टदेवतारूपं प्रणीय, तदनन्तरमेव रूपकस्याभिप्रेतार्थस्य निरूपणायोपक्रमेरन्। क्रममेनं अनुरुध्य, प्रस्तावनात्वेन प्रसिद्धस्य पूर्वाङ्गाख्यस्य प्रकरणस्य प्रधानाङ्गभूतां श्लोकद्वयेनाष्टपदात्मिकां तामेव नान्दीं तत्रभवान् प्रौढः कविः आनन्दरायाध्वरी प्रस्तौति।

**लक्ष्मीति**। धन्वन्तरिः भवतां भद्राणि-श्रेयांसि करोतु। तस्य भगवतो धन्वन्तरेः प्रादुर्भावविभवप्रकारं परिशिष्टः प्रतिपादयति पद्यभागः। लक्ष्मीः, कैरवबन्धुः-चन्द्रः, कल्पकतरुः तान् लब्ध्वापि-तत्तादृशान् ईप्सितार्थवितरणविचक्षणान् विलक्षणप्रभावान् पदार्थविशेषान् प्राप्यापि, अलब्धं-अप्राप्तं ईप्सितं-अमृताख्यं अभिमतफलं येन तस्मिन्, (लब्ध्वाथ लब्धेप्सिते इत्यसाधुः पाठः) देवाश्च दानवाश्च देवदानवाः तेषां गणे-समूहे, भूयः-पुनरपि, ऋद्धः-अभिवृद्धः श्रमः यस्य तस्मिन्; सङ्कल्पितार्थस्य समधिगमे व्यग्रचित्ततया कथंचिदगणितसुदुर्भरक्लेशं यथा तथेति भावः। दुग्धाब्धिं-क्षीरसागरम्, मथ्नति सति, तस्य-देवदानवगणस्य, आनन्दथुना समं- आनन्देन सह, (स्यादानन्दथुरानन्दः इत्यमरः) (आनन्दधुरा इति पाठे, आनन्दस्य धूः-भरः तया, निर्भरोज्जृम्भदानन्देन साकमित्यर्थः) सुधापूरितं-अमृतेन पूर्णम्, कुम्भम्, स्वकरे-आत्मनो हस्ते, बिभ्राणः-वहन्नेव, समुदयन्-आविर्भवन्, धन्वन्तरिः इत्यनेनान्वयः। क्षीराब्धिमथनावसरे प्रादुर्भूतस्य नारायणांशभूतस्य भगवतो धन्वन्तरेः ऐतिहासिकी कथा त्वेवं श्रूयते—"नारायणांशो भगवान् स्वयं धन्वन्तरिर्महान्। पुरा समुद्रमथने समुत्तस्थौ महोदधेः। सर्ववेदेषु निष्णातो वैद्यतन्त्रविशारदः" इति ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ५१ अध्याये। काशीराजवंशे दिवोदासापरनाम्ना जातो धन्वन्तरिः अपर इति संभावयामः। स एव सुश्रुतादिभ्यः शल्यतन्त्रमुपादिशत्। चिकित्सातन्त्रं अष्टधा च स एव व्यभजदिति आचक्षते प्राञ्चः। सूच्यार्थान् आनन्तरिकस्य पद्यस्य व्याख्यावसरे विवृणुमः॥ १॥

अपि च ।

प्राग्जन्मीयतपःफलं तनुभृता प्राप्येत मानुष्यकं
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना ।
तत्प्राप्तेरपि साधनं प्रथमतो देहो रुजावर्जित-
स्तेनारोग्यमभीप्सितं दिशतु वो देवः पशूनां पतिः ॥ २ ॥

---

प्राग्जन्मीयेति । आरोग्यस्य परिपालनमेव मनुजानां ऐहिकामुष्मिकयोः श्रेयसोः असाधारणं साधनं मन्वानो महामखी कविस्तदेवाशासानः स्वयमीशानं अभ्यर्थयति पद्येनानेन । ('तनुभृतां' इति पाठो न साधीयान्) तनुभृता-प्राणिना, प्राग्जन्मीयस्य-पूर्वजन्मसंबन्धिनः, तपसः-कृच्छ्रचान्द्रायणादिव्रतरूपस्य सुकृतस्य, फलं-परिपाकरूपम्, मानुष्यकं-मनुष्यत्वम्, प्राप्येत । तत्-मानुषं जन्म च, प्राप्तवता प्राणिना, त्रयाणां-धर्मार्थकामाख्यानां वर्गः तत्समाहारः-त्रिवर्गम्, तद्विना, अन्यत् किं प्राप्तुं उचितम्; भवेदिति शेषः । मानवजन्मनः प्राप्तिस्तदैव माननीया स्यात्, यदा वर्गत्रयसाधनाय सर्वथा तदुपयुज्यते जन्मेति भावः । रुजावर्जितः-रोगरहितः, देहः । तत्प्राप्तेः-तस्य त्रिवर्गस्य प्राप्तेरपि, प्रथमतः साधनं-प्रधानोपकरणं भवतीत्यर्थः । तेन-हेतुना, देवः-महादेवाख्यः, पशूनां-अशेषाणामपि स्थावरजङ्गमात्मकानां भावानाम्, पतिः-नियन्ता परमेश्वरः । ("ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः । तेषां पतिर्महादेवः स्मृतः पशुपतिः श्रुतौ" इति निरुक्तिः ।) अभीप्सितं-त्रिवर्गसाधनोपकरणभूतदेह-धारणस्यासाधारणोपायत्वेन सर्वैः अभिलषितम्, आरोग्यं-निरामयत्वम्, वः-युष्माकम्, दिशतु-वितरतु ॥ २ ॥

अस्मिन् नाटके ग्रन्थस्य नामानुगुण्येन नायको जीवः, बुद्धिः तत्पत्नी, विज्ञानशर्मा त्रिवर्गसाधकमन्त्री, ज्ञानशर्मा अपवर्गसाधकमन्त्री, धारणा-स्मृति-भक्ति-श्रद्धाप्रभृतय आत्मगुणाश्च विदूषकादिभिः सह तत्परिवाराः । जीवस्य

प्रतिपन्थिपक्षे यक्ष्मा प्रतिनायकः, विषूची तत्पत्नी, पाण्डुः युवराजः प्रधानामात्यश्च । कासः, तत्पत्नी छर्दिः, कर्णमूलः, कुष्ठः, गलगण्डः, उन्मादः इत्यनेके रोगाः पक्षे यक्ष्मणः परिवारत्वेन परिगण्यन्ते । कामक्रोधादयश्च प्रत्यर्थिपक्षमिमं केचन सन्त्यात्मगुणाः पात्रत्वेन समाश्रिताः । अत्र च पात्राणां सङ्घटनविषये प्रबोधचन्द्रोदय-सङ्कल्पसूर्योदयादिरूपकाणां संविधानक्रमं असौ अनुरुणद्धि कविः । त्रिवर्गसाधनोपकरणभूतस्य देहस्य नीरोगतानिष्पादनाय रससिद्धिसम्पादनमेव मुख्योद्देशः कथानायकादीनाम् । जीवादीनां अभीप्सितार्थस्याभिहनने प्रत्यर्थिसार्थस्य यक्ष्मपुरस्सरस्य भवत्यभिनिवेशः । एवं नायकप्रतिनायकवर्गयोरुभयोरपि देहमेकं अधितिष्ठतोः, तमेव लक्ष्यीकृत्य भवत्येकामिषप्रभवः परस्पराभियोगः । इह प्रथमे पद्ये देवगणशब्देन जीवस्तत्सम्बन्धी च परिवारः, दानवगणशब्देन यक्ष्मा तदनुबन्धी च परपक्षपरिवारः पृथक् परामृश्येते । उभाभ्यामपि जीवयक्ष्मवर्गाभ्यां देहस्य संक्षोभ्यमाणो विषयः सूच्यते दुग्धाब्धिमथनप्रस्तावेन । देवदानवगणाभ्यां मथ्यमानः क्षीराब्धिश्च महान्तं देह इव क्षोभमनुभवति स्म । विद्यमाने परस्पराभिभवार्थे समुद्यमे, जीव-यक्ष्मपक्षयोरपि सुरासुरवर्गयोरिव ऋद्धश्रमत्वं नियमेन संभाव्यमेव । लक्ष्मीकैरवबन्धुकल्पकतरुशब्दैः लक्ष्मीविलास-चन्द्रोदय-कल्पौषधादयः सूच्यन्ते, यैः यक्ष्मपरिवारभूतस्यामयवर्गस्याभिभवः संपत्स्यते । यक्ष्मादिव्याधिनिवहनिषूदनशीलस्य रससिद्धिसम्पादनस्य, तद्द्वारा देहस्य नीरोगतानिष्पत्तिरूपमनोरथसमधिगमजन्यसंमोदातिशयस्य च सूचनं 'सुधापूरितं कुम्भं-आनन्दथुना समं' इत्यादिभिः शब्दैः संपद्यते । अस्मिन् ग्रन्थे प्रकरणानुरोधेन तत्र तत्र विविधानि कायचिकित्सितानि शल्यचिकित्सितानि च प्रस्तूयन्ते । तथैव रसस्य विशेषतः, रसोपरसलोहधातुसम्बन्धिनां यौगिकानां औषधानां सामान्यतश्च सममेव प्रयोगाः, तादृशरससिद्धिलाभाय सभक्त्यतिशयं जीवकृताः उपासनाविधयश्च विद्यन्ते वर्णिताः । अनयोः पूर्वतनो विषयः (काय-शल्यचिकित्सात्मकः) भगवद्धन्वन्तर्युपज्ञ इति तं च प्रथमेन पद्येन, रससम्बन्धिनो विषयस्य च देवः स्वयं उमापतिः उपदेशक आसादिति च विषयतत्त्वं उत्तरत्राभिहितं द्वितीयेन पद्येन च क्रमशः सूचयति कविः ।

(नान्द्यन्ते)

**सूत्रधारः**—मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, एषोऽस्मि ।

**सूत्रधारः**—

रीतिः सुखपदन्यासा शारदीया विजृम्भते ।
पूर्णचन्द्रोदयश्चायं निहन्ति ध्वान्तमामयम् ॥ ३ ॥

**नान्दीति**—यो नाटकस्य मुखे सूत्रधारेण, तिरस्करिण्याः पश्चाद्भागे विद्यमानैः कुशीलवैर्वा मङ्गलस्याशासनरूपः प्रस्तूयते विषयः स नान्दीत्यभिधीयते । तस्याश्च विवरणप्रमाणं यथा—"आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति कीर्तिता ॥" इति । **पारिपार्श्वक** इति नाटकस्य पूर्वाङ्गकर्मसु व्यापृतेष्वेको नटः पारिपार्श्वकः, यं सूत्रधारो मारिष इत्यामन्त्रयति । "सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह । काव्यार्थसूचनालापं स भवेत् पारिपार्श्वकः" इति भरतः । भाव-मान्य । एषोऽस्मि-इह सज्जोऽस्मीत्यर्थः ।

**रीतिरिति**—शारदीया-शरत्कालसम्बन्धिनी, रीतिः स्वभावः, सुखेन पदानां न्यासः-भूतले चङ्क्रमणमिति यावत्, यस्यां सा, तादृशी विजृम्भते-शरत्कालशोभा विवर्धत इत्यर्थः । (रीतिः खलु पदन्यासादिति न समीचीनः पाठः) अयं-मेघैरनाच्छादितः सन् अद्य विद्यमानः, पूर्णचन्द्रस्योदयश्च, आमयं-आमयवत् लोकमभिभवन्तम्, ध्वान्तं-अन्धकारम्, निहन्ति-सम्यगपोहयति । अर्थान्तरस्य ध्वनिरप्येवं परामृश्यते । शारदीया रीतिः-ग्रन्थस्यास्य वाग्विलासवैखरी, सुखपदन्यासा-सुललितपदप्रयोगभूयिष्ठा सती, विजृम्भते-प्रौढगुणालङ्कृता विराजते इति । तादृशवाग्विलासविकसितज्ञानोदयेन मानसश्च मोहान्धकारः पठितॄणां प्रणश्यतीति च विषयः श्लोकस्य द्वितीयार्धेन ध्वन्यते । अथ विज्ञानशर्ममन्त्रिप्रयुक्तैः सुखोदर्कैः उपायैः, तदुपायोपलब्धपूर्णचन्द्रोदयादिभिः भैषज्यैश्च यक्ष्मरूपस्य महामयस्यान्ततः समुच्छेदपरः काव्यार्थश्च श्लोकेनानेन

अपि च ।

क्रममाणेषु दिगन्तान् जलधरजालेषु शङ्खधवलेषु ।
शान्तिमुपयाति सहसा कालुष्यदशा भृशं पयसाम् ॥ ४ ॥

**पारिपार्श्वकः**—अतः किमाचरितव्यम् ।

**सूत्रधारः**—शृणु तावत् । अत्र तञ्जापुरे पौरजानपदा देशान्तरादागताश्च बृहदीश्वररथोत्सवदिदृक्षया सङ्घीभूताः ।

---

सूचितः । (पूर्णचन्द्रोदयश्चास्यां इति पाठे, अस्यां-शारदीयायां रीत्यामित्यर्थः । न त्वेष सरसः पाठः) ॥ ३ ॥

क्रममाणेष्विति—शङ्खधवलेषु-शरत्कालस्वभावतः शङ्खवत् पाण्डुरेषु, जलधरजालेषु-मेघपङ्क्तिषु, दिगन्तान् क्रममाणेषु-दिशां कोणेषु क्वचित् अतिपतत्सु सत्सु, वीतमेघावरणत्वात् वियत्पथे वैमल्यं सत्यधिगत इति यावत्, पयसां-अपाम्, कालुष्यदशा-कलुषत्वम्, सहसा-झटिति, भृशं शान्तिमुपयाति-सुतरां नैर्मल्यं प्राप्नोति । (कालुष्यं दश दिशां भृशं नूनमिति पाठे, अपेतजल-भारत्वात् अम्बुदेषु आशामुखान्यधिगम्य क्वचिन्निर्लीनेषु दशापि दिशः कालुष्य-मपनीय स्वच्छाः संवृत्ता इत्यर्थः ।) प्रधानामात्यं पाण्डुं पुरस्कृत्य पुरुषाधिष्ठा-नभूते शरीरे महान्तं क्षोभं आचरितवतां यक्ष्मप्रभृतीनां प्रतिपन्थिसार्थानां क्वचित् पलायने ततः क्षोभप्रशमने च समुपनते, विशेषतो झटिति वीतरोगत्वं मन-श्शान्तिश्च पुरुषस्य संघटत इत्यर्थश्च सूच्यते ॥ ४ ॥

एतावता च रङ्गस्य प्रसादनम्, प्रस्तुतस्य कस्यचन ऋतोर्वर्णनम्, तदन्तरापतितैरर्थैः प्रकृतप्रबन्धार्थस्य सूचनमिति च नाटकस्य प्रस्तावनाङ्गभूताः केचनानेन विषया वर्णिताः । तथा च "रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थ-सूचकैः । ऋतुं कञ्चिदुपादद्यात् भारतीं वृत्तिमाश्रयन् ॥" इति ।

अत इति । अतः-शरत्कालः साधु समुपनत इत्यनेन हेतुना, किमा-चरितव्यं इति पृच्छति पारिपार्श्वकः । अथवा एवं रङ्गप्रसादनादिपूर्वरङ्गकार्याणां अनन्तरं किं कर्तव्यमिति वा ।

शृण्विति—पौराः-पुरनिवासिनः प्रादेशिकाः, जानपदाः-जनपदे-तञ्जा-

सरसकवितानाम्नो हेम्नः कषोपलतां गताः
विहरणभुवः षड्दर्शिन्या विवेकधनाकराः ।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नाट्येनैतानुपासितुमीहते ॥ ९ ॥

**पारिपार्श्वकः**—(सशिरःकम्पम्) कं पुनः प्रबन्धमवलम्ब्य ।

**सूत्रधारः**—नन्वस्ति मम वशे जीवानन्दनं नाम नवीनं नाटकम् ।

---

पुरप्रान्ते निवासिनः, तञ्जापुरात् दवीयस्सु अपरेषु देशेषु निवसन्तश्च जनाः । तञ्जापुरनगरस्थे देवालये प्रतिष्ठितस्य परमेश्वरस्य बृहदीश्वर इति प्रथितं नाम ।

**सरसेति**— सरसा-हृदयङ्गमा या कविता-काव्यम्, तन्नाम-तदाख्यं यस्य तस्य, हेम्नः-स्वर्णस्य, कषोपलतां-गुणागुणनिरूपणोपयोगिवर्षणशिलात्वम्, गताः-प्राप्ताः । ("तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः । हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा" इतिवत् ।) षण्णां दर्शनानां समाहारः-षड्दर्शिनी तस्याः, विहरणभुवः-क्रीडनस्थलसदृशाः, (न्यायवैशेषिकसाङ्ख्ययोगमीमांसावेदान्ताभिधानि शास्त्राणि षड्दर्शनानि ।) निस्संशयावगतनिखिलशास्त्रार्था इत्यर्थः । विवेक एव धनं-अमूल्यं द्रव्यम्, तस्य आकराः-निधयः । सदसद्व्यक्तिहेतव इति यावत् । तपोलभ्याः-पूर्वोक्तप्रकारेण गुणप्रकरस्याकरत्वात् सुकृतसंपादनीयसंदर्शनाः, इमे-पुरस्तात् संनिहिताः, सभ्याः-सभासदः, मम कौतुकं-औत्सुक्यम्, विदधति-उपजनयन्ति । तत्-तस्माद्धेतोः, इह-अस्मिन् सन्दर्भे, हृदयं-मम मनः, एतान्-अत्र समुपस्थितान् सदस्यान्, नाट्येन-नाटकप्रयोगेण, उपासितुं-प्रीणयितुम्, ईहते-अभिलषति । अनेन पद्येन, गुरुदेवेत्यारभ्य भर्तुं लालयितुमित्यन्तेन वक्ष्यमाणैः आनन्तरिकैश्च पद्यादिभिः प्ररोचनाख्यं नाटकाङ्गं प्रस्तूयते । "प्रेक्षकाद्युन्मुखीकारः प्रस्तुतार्थप्रशंसया । प्ररोचना स्यात्" इति, "कविकाव्यनटादीनां प्रशंसा च प्ररोचना" इति च तल्लक्षणम् ॥

**जीवानन्दनमिति** । त्रिवर्गस्य चापवर्गस्य च साधनसामग्र्याः सरसनाटकरूपेण प्रतिपाद्यमानत्वात्, प्रत्यगात्मनो जीवस्य तदिदं आनन्दजनकं नाटकम् । अतोऽभिधीयते जीवानन्दनमिति । जीवनन्दनमिति च काचित्को

**पारिपार्श्वकः**—कस्तस्य प्रबन्धस्य कविः ।

**सूत्रधारः**—विद्वत्कविकल्पतरुः आनन्दरायमखी । स एष इह—

गुरुदेवद्विजभक्तो नैमित्तिकनित्यकाम्यकर्मपरः ।
दीनजनाधीनदयो विहरति समरे च विक्रमार्क इव ॥ ६ ॥

---

व्यवहारः । परं तु ग्रन्थस्यावसाने "परमानन्दघनोऽस्मि नित्यतृप्तः" इति कविनैव जीवविशेषणत्वेन निर्दिष्टः 'आनन्दघन' इति शब्दः जीवानन्दनम् इति नामैव कविकल्पितमिति सूचयति । आनन्दशब्दवाच्यं कवेर्नाम च तदेव द्रढयति ।

विद्वदिति । विद्वत्कविकल्पतरुः-सर्वतोमुखेन वैदुष्येण काव्यरचनाचातुर्येण च संपन्न इत्यर्थः । अथवा कवेरस्य राज्याधिकृतत्वात्, काङ्क्षितार्थप्रदानेन विदुषां कवीनामपि काममादरणशील एष इति च समञ्जसोऽर्थः ।

**गुर्विति** । सः-तथा विद्वत्कविकल्पतरुत्वेन प्रथितः । एषः-अस्य प्रबन्धस्य रचयिता आनन्दरायमखी । गुरुदेवद्विजभक्तः-आचार्यदेवताब्राह्मणेषु विहितभक्तिः । नैमित्तिक-नित्य-काम्यकर्मपरः । कर्माणि तावत् नित्यानि, नैमित्तिकानि, काम्यानि चेति स्मृतिविहितानि त्रिविधानि । तत्र स्नानसन्ध्यावन्दनाग्निहोत्रब्रह्मयज्ञादीनि प्रत्यहं निर्वर्तनीयानि नित्यकर्माणि । पुत्रजन्मोपनयनविवाहादिनिमित्तकम्, श्राद्धादिकमन्यच्च नैमित्तिकं कर्म । काम्यं नाम-"यत्किञ्चित् फलमुद्दिश्य यज्ञदानजपादिकम् । क्रियते कायिकं यच्च तत् काम्यं परिकीर्त्यते ।" एवंविधेषु त्रिविधेष्वपि स्मार्तेषु कर्मसु निरतः । दीनजनानां-दौर्गत्याभिभूतानां प्रजानाम्, अधीना-आयत्ता, दया यस्य सः, अनाथानां आतुराणां चानुकम्पीति यावत । (निस्स्वस्तु दुर्गतो दीन इत्यमरः) न केवलमेष कर्मठः, नापि केवलं आर्तजनविषये विशिष्य दयार्द्रहृदयः, परं तु समरे-रणाङ्गणे च, विक्रमार्कः-निरङ्कुशपराक्रमप्रतिपन्नयथार्थनामा सुप्रथित उज्जयिनीपतिरिव, विहरति-अवाप्ताखिलाभीष्टत्वात निर्जितनिखिलबाह्यान्तर्वैरित्वाच्च सुखमास्त इत्यर्थः । पराक्रमप्रकटनपरेऽर्थे तु, सति युद्धे सावहेलं सङ्ग्रामकार्याणि संपादयतीति वाच्यम् ॥ ६ ॥

अपि च ।

य: स्नातोऽजनि दिव्यसिन्धुसलिले यश्चात्मविद्याश्रितो
येनाकारि सहस्रदक्षिणमखो यः सद्भिराश्रीयते ।
सोऽयं त्र्यम्बकराययज्वतिलको विद्वत्कवीनां प्रभोः
यत्तातस्य नृसिह्मरायमखिनस्तुल्यप्रभावोऽनुजः ॥ ७ ॥

---

य: स्नात इति । यः-त्र्यम्बकरायः । दिव्यसिन्धुः-गङ्गा, तस्याः सलिले-तीर्थोदके । स्नातोऽजनि-स्नातवान् । प्राक्तने काले प्रजविनां प्रवहणानामसम्भवात्, वनगिरिभूयिष्ठानां मार्गाणां च सुदुर्गमत्वात्, दक्षिणापथात् अतिदवीयसि स्थितां गङ्गां प्रति प्रस्थानं न सर्वेषां बहुधा सुसाधमासीत् । अतः सुदुर्लभं सुरनदीस्नानरूपं सुकृतमलभतेति प्रशंस्यते । यश्च आत्मविद्याश्रितः-अध्यात्मशास्त्राध्ययनप्रवचनेषु निरतः । (स्वात्मविद्याश्रित इति पाठे साध्व्यां आत्मविद्यायां अधिगतश्रद्ध इत्यर्थः ।) येन च सहस्रं-सहस्रसङ्ख्याकानि स्वर्णानि दक्षिणा यस्मिन् स सहस्रदक्षिणः, स चासौ मखः-यज्ञः, अकारि । यः सद्भिः-विद्वद्भिः, (विद्वान् विपश्चिद्दोषज्ञः सन् सुधीः इत्यमरः ।) साधुभिश्च । आश्रीयते-सेव्यते । सः-तादृक्प्रभावविशिष्टः । अयं-अद्य प्रस्तूयमानः । यज्वनां-यथाविधिनिर्वर्तितक्रतूनाम्, (यज्वा तु विधिनेष्टवान् इत्यमरः ।) तिलकः-वरिष्ठः । त्र्यम्बकरायाख्यो यज्वतिलकः । विद्वांसश्च कवयश्च तेषां प्रभोः-धुरीणस्य । अथवा विद्वत्कवीनाम्, प्रभोः आस्थानाधिकारिणः । नृसिह्मरायमखिनः-तदाख्यया विख्यातस्य । यस्य-आनन्दरायमखिनः, तातस्य-पितुः, आनन्दरायजनकस्येति यावत् । तुल्यप्रभावः अनुजः-तत्समानमहिमा कनीयान् भ्राता । अभूदिति शेषः । प्रकृतप्रबन्धनिर्मातुः आनन्दरायमखिनः पिता प्रथितः प्राज्ञप्रकाण्डो नृसिह्मरायाध्वरी । तस्य च गुणैस्तादृशैर्गरिष्ठः कनिष्ठो भ्राता त्र्यम्बकरायमखी नामासीत् । प्रस्तुतस्य कवेः तत्पितृपितृव्यादीनां च विपश्चिदपश्चिमत्वम्, विहितविविधाध्वरधूर्वहत्वम्, राज्याधिकारसमज्यादिनिर्वहणनिरतत्वं च कुलक्रमागतमिति निर्वर्णयन्, ग्रन्थस्यास्य विशिष्य वक्तृवैलक्षण्यं कविः सूत्रधारमुखेन सूचयति ॥ ७ ॥

**पारिपार्श्वकः**—(सबहुमानम्) आः, ज्ञायत एवायम्। किं त्वस्य सर्वलोकविदिता अप्येते गुणाः प्रबन्धनिर्वाहधूर्वहत्वमवबोधयितुं नेशते। यतः—

आराध्नोति यदेष भक्तिभरितो देवान् द्विजातीन् गुरून्
यच्च श्रद्दधदातनोति समये नित्यादिकर्मत्रिकम्।
यद्दीनेषु दयां करोति समरे शौर्यं यदालम्बते
तत् सर्वं नरसिंह्मयज्वसुतताला्भस्य लीलायितम्॥ ८॥

---

आ इति स्मरणद्योतकं अव्ययम्। ज्ञायत एवायम्-विदितचर एव कविरेषः। (ज्ञात एवेत्यपि पाठान्तरम्।) प्रबन्धनिर्वाहधूर्वहत्वं-ग्रन्थरचनाक्षमत्वम्। नेशते-न प्रभवन्ति। ग्रन्थनिर्माणनैपुण्यविषये संभवतः संशयस्य हेतुं पद्येनानन्तरिकेण विशदयति।

**आराध्नोतीति**। एषः-आनन्दरायमखी। भक्तिभरितः सन् देवान् ब्राह्मणान् गुरूनपि यत् आराध्नोति पूजयति। नित्यादिकर्मत्रिकं-पूर्वनिर्दिष्टं नित्यं नैमित्तिकं काम्यं च त्रिविधं कर्म। श्रद्दधत्-आहितश्रद्धः सन्। समये-यथोचिते काले। यच्च आतनोति-अनुतिष्ठति। दीनेषु अकिञ्चनेषु यत् दयां करोति। समरे-युद्धे। शौर्यं आलम्बते इति यत्। तत् सर्वं-अभिहितं अखिलमपि गुणजातम्। नरसिंह्मयज्वनः-नृसिंह्मरायमखिनः, सुतताला्भस्य-पुत्रत्वरूपविशिष्टफलस्य। लीलायितं-विचेष्टितम्। आनन्दरायमखिनि अवलोक्यमाना अखिलाश्चैते गुणा विभवाश्च नृसिंह्मरायाध्वरिणः कथंचिदस्मिन् आत्मजत्वसंबन्धात् संक्रान्ताः, न तु स्वात्मनः समुद्यमबलेन प्रावीण्यप्राशस्त्येन वा जाता इति भावः। (एतत्पितुः नृसिंह्मरायाध्वरिणस्तु असाधारणः प्रभावो विद्यापरिणये एवमस्ति वर्णितः—

"नानापूर्वमहाक्रतुप्रणयनैरध्यात्मसंमर्शनैः
कर्मब्रह्मपथप्रचारसविता षड्दर्शनीवल्लभः।
तातो यस्य किलैकराजवसुधाधौरन्धरीगीष्पतिः
क्षोणीपालकिरीटलालितपदः ख्यातो नृसिंह्माध्वरी॥"

इदं तु श्रोतव्यम् ।

आनन्दरायमखिनो वाल्मीकेरिव योगिनः ।
इतरापेक्षणात् सारः स्वतः सारस्वतोदयः ॥ ९ ॥

**सूत्रधारः**—(विहस्य) मारिष, तत्त्वं न जानासि यत एवं ब्रवीषि । शृणु तावत् ।

---

तत्रैव तदनुजश्च प्रशंसित एवम्—

"यस्य तातानुजन्मापि यशःपावितदिङ्मुखः ।
त्रिवर्गफलसम्पन्नस्त्र्यम्बकामात्यदीक्षितः ॥"

इति ॥) ॥ ८ ॥

**आनन्दरायेति** । आनन्दरायमखिनः-कवेरस्य । योगिनः-निदिध्यासननिष्ठायां बद्धश्रद्धस्य । वाल्मीकेरिव । इतरापेक्षणात्-पुरुषान्तरसंबन्धसद्भावादिति यावत् । सारस्वतोदयः-वाक्प्रवृत्तिः । स्वतः-यदृच्छयेति भावः । सारः-रसवान् । अभूदिति शेषः । (प्राक् प्राचेतसः कस्यचन शापस्य वशंगतः संतप्तहृदयश्चिराय महत्तपस्तेपे । ततः प्रसन्नचेताः परमेष्ठी स्वयमागत्य शापापनयोपायस्य उपदेशपूर्वकं रामायणरूपसारस्वतोदयस्य च तं अधिकारित्वेनानुगृहीतवानिति ऐतिहासिकी कथा । तथा च स्कान्दे पातालखण्डे अयोध्यामाहात्म्यनिरूपणप्रकरणे—"शापोक्त्या हृदि सन्तप्तं प्राचेतसमकल्मषम् । प्रोवाच वचनं ब्रह्मा समागत्य सुसत्कृतः । न विषीद स वै रामो मृगयां चर्तुमागतः । तस्य संवर्णनेनैव सुश्लोक्यस्त्वं भविष्यसि ॥" इति । ब्रह्मणः साहाय्यात् वाल्मीकिरिव, पितुः साहाय्यात् आनन्दरायमखी च कवितायां प्रवृत्तो न तु स्वकार्ययैव शक्त्या इति तात्पर्यम् ।) वेदकविर्नाम कोऽपि महाविद्वान् आनन्दरायमखिनो ग्रन्थरचनायां साहाय्यं सुमहदाचरितवान् इति च श्रूयते । तमेव वृत्तान्तं 'इतरापेक्षणात् सारः' इति वाक्यं सूचयतीति च वक्तुं शक्यते । कवेः सामर्थ्यस्य स्थूणानिखनन्यायेन सर्वथा दृढीकरणार्थं एष च पूर्वपक्षप्रकारः ॥ ९ ॥

**विहस्येति** । विहसनं इह पारिपार्श्वकोक्त्यां अनादरसूचकम् । तत्त्वं-

आबाल्यादपि पोषितोऽजनि मया प्रेम्णा तथा लालित-
स्तेनासौ सरसामुपैतु कवितामानन्दरायाध्वरी ।
इत्येकक्षितिपालवंशजलधेर्देव्या गिरां जातया
श्रीशाहावनिनायकाकृतिभृता नूनं प्रसादः कृतः ॥ १० ॥

अत एव—

कवीनां पूर्वेषां कथमपि च चित्तैरवहितैः
गृहीता या नासीत् सरसकवितासारपदवी ।

---

याथार्थ्यम् । न जानासि । (त्वं न जानासि इति पाठे, तत्त्वमिति कर्म अध्याहार्यम् ।) शृणु तावत्-भूतार्थं अभिधीयमानं आकर्णयेत्यर्थः ।

**आबाल्यादिति** । आबाल्यादपि-अपि शैशवात् प्रभृति । आनन्दरायः, मया-शाहभूपतिरूपया शारदादेव्येति यावत् । पोषितोऽजनि अभिवर्धितोऽभूत् । प्रेम्णा तथैव लालितः । तेन हेतुना । असौ-आनन्दरायाध्वरी । सरसां-सहृदयास्वादनीयाम् । कवितां उपैतु-काव्यरचनानैपुण्यं आसादयतु । इति काङ्क्षिण्या । एक इति वंशनाम । एकाख्यः क्षितिपालवंशः-राजवंशः, स एव जलधिः तस्मात् । जातया-समुत्पन्नया । श्रीशाहावनिनायकाकृतिभृता-श्रीमतः शहाजिनाम्नो भूपतेः स्वरूपं धृतवत्या । गिरां देव्या-सरस्वत्या । प्रसादः कृतः-अनुगृहीतः । नूनं-निश्चये । (द्वित्राः शहाजिनामधारिणो माहाराष्ट्रा नृपतयः तञ्जापुरराज्यं अशासन्निति ज्ञायते । तेषु प्राथमिकस्य शाहभूपतेः (शहाजि) सोऽयं आनन्दरायमखी स्वयमासीत् सचिव इत्यवगम्यते । स च महीपतिः महान् पण्डितः सुतरां पण्डितजनपक्षपाती चासीत् । आनन्दरायमखिनि चात एवाहितानवधिकादरातिशयश्चासीदिति प्रसिद्धिः ।) वाग्देवीप्रसादप्रतिपन्नवाग्विभवः स एष कविः स्वयं काव्यरचनासमर्थ आसीदिति फलितोऽर्थः ॥ १० ॥

**कवीनामिति** । अतएव-समधिगतसरस्वतीप्रसादतयैव । या । कवितायाः सारः कवितासारः, सरसश्चासौ कवितासारश्च सरसकवितासारः, तस्य पदवी-

असौ तामाक्रामन् हरति नरसिह्माध्वरिकुल-
प्रदीपः सूरीणां श्रवणयुगजाड्यान्धतमसम् ॥ ११ ॥

**पारिपार्श्वकः**— श्रीशाहराज इति नाम दधत्याः सरस्वत्याः कियान् आनन्दरायमखिनि दयाविशेषः । यतः—

पुष्यत्कौतुकपद्मसंभवकरद्वन्द्वाङ्गुलीवेल्लन-
द्राङ्निष्पीडितचन्द्रमण्डलगलत्पीयूषधारासखैः ।
वाग्गुम्भैर्बलवैरिधारितशचीधम्मिल्लमल्लीसर-
स्फारामोदमदापहैश्च कवयत्यानन्दरायाध्वरी ॥ १२ ॥

---

शैली । पूर्वेषां प्राक्तनानां कवीनाम् । अवहितैः-अनन्यविषयैरपि । चित्तैः । कथंचिदपि । गृहीता-अवधारिता । नासीत् । तां-तादृशीं सरसकविताशैलीम् । नरसिह्माध्वरिकुलप्रदीपः-नृसिह्मरायमखिनो वंशस्य प्रदीप इव प्रद्योतकः । असौ आनन्दरायमखी । आक्रामन्-प्रावीण्येन बलात् स्वायत्तीकुर्वन् । सूरीणां-विदुषाम् । श्रवणयुगस्य जाड्यं-मान्द्यम्, तदेवान्धतमसं-सहृदयास्वादनीयरसभरितायाः कवितायाः श्रवणासम्भवसंभावितवैरस्यातिरेकमिति यावत् । हरति-अपोहति । प्रदीपः स्वकीयया कान्त्या गाढं तम इव नृसिह्मरायाध्वरिकुलप्रदीपः कविरानन्दरायमखी च, न केवलं पैतृकेन प्रभावेण, किन्तु स्वसरस्वत्यापि मनीषिजनश्रवणपुटानुभूतं जाड्यरूपं गाढमन्धकारं अपोहयति स्मेति भावः ॥ ११ ॥

वाग्देव्याः प्रसादविशेषेण तथा कवेरस्य समुपनतं वाग्वैखरीविलसितमेव वर्णयति पुनः **पुष्यदिति** । आनन्दरायाध्वरी वाग्गुम्भैः कवयति-कविताप्रबन्धं रचयति । कीदृशैः वाग्गुम्भैः । पुष्यत्-विवर्धमानम्, कौतुकं-औत्सुक्यं यस्य तस्य पद्मसंभवस्य-ब्रह्मणः, करद्वन्द्वाङ्गुलीनां-हस्तद्वयस्थिताङ्गुलीनाम्, वेल्लनेन-दृढाकुञ्चनेन, द्राक् निष्पीडितात्-सत्वरमवमर्दितात्, चन्द्रमण्डलात्, गलन्त्याः-निस्सरन्त्याः, पीयूषधारायाः, सखिभिः-अमृतासारसमानगुणैः । 'राजाहस्सखिभ्यष्टच्'

युक्तमुक्तं च भावेन 'शाहभूपतिरूपेण गिरां देवी जाता' इति। कथमन्यथा अनन्यसाधारणमस्य प्रागल्भ्यम्। तदिदानीं इदमुत्प्रेक्ष्यते—

भर्तुं लालयितुं भुवि प्रथयितुं विद्वज्जनानाश्रितान्
श्रीशाहक्षितिपात्मना क्षितिगतां मत्वा गिरां देवताम्।
आसिञ्चन्नसकृत् कमण्डलुजलैरङ्गानि पर्याकुलो
धाता वाहनहंसपक्षपवनैस्तापं किलापोहति ॥ १३ ॥

---

इति सखिशब्दस्य समासे अकारान्तत्वम्। (चन्द्रमण्डले सुधा विद्यत इति, अत एव सुधांशुरिति चन्द्रस्य नामेति कवयः पौराणिकाश्च कथयन्ति।) (पद्म-संभृतकरद्वन्द्वेति पाठो न साधुः।) तथा बलवैरिणा-इन्द्रेण, धारितस्य-दृढ-गृहीतस्य, शचीधम्मिल्लमल्लीसरस्य-इन्द्राणीकेशपाशसंयतमल्लीस्रजः, यः स्फारा-मोदः-अतिबहुलपरिमलः, तस्य मदापहैः-गर्वनिर्वासकैश्च वाग्गुम्भैरित्यनेनान्वयः। मधुरार्थगुम्भनेन सुधाधारानिष्यन्दसदृशी, रसभरितसरलशब्दसंग्रथनसंपत्त्या संफु-ल्लमल्लीकुसुमपरिमलसहचरी च कवेरस्य वाग्झरी बाह्यान्तस्स्फुरद्रसेति विषयतत्त्वं विशेषणद्वयमपि विशदयति ॥ १२ ॥

वाग्देवी शाहमहीपतिरूपेण वसुधामधिगतेति सूत्रधारेणोपक्षिप्तं उत्प्रेक्षण-मेव पारिपार्श्वकः सोपपत्तिकं उपपादयति **भर्तुमिति**। भुवि। आश्रितान्-सभ-क्त्युन्मेषं आत्मानं उपासनया सेवितान्। विद्वज्जनान् भर्तुं-जीविकाप्रदानादिना धर्तुम्। लालयितुं-योग्यतासामर्थ्यादिषु यथोचितां आसक्तिमाविष्कृत्य उपच्छन्द-यितुम्। प्रथयितुं-विष्वक् प्रसिद्धिं विस्तारयितुं च। सर्वथा विद्वत्परिपालनमभिलष्यैं-वेति भावः। श्रीशाहक्षितिपात्मना-श्रीशाहराजरूपेण। गिरां देवतां-सरस्वतीम्। क्षितिगतां-भूलोकं अभिप्रपन्नाम्। मत्वा-समालोच्य। पर्याकुलः-सुतरां विह्वली-भूतमनाः। धाता-ब्रह्मा। कमण्डलुजलैः-कलशस्थितैः शीतलैः सलिलैः। अङ्गानि-विरहसन्तापविधुराणि शिरःप्रभृतीन्यङ्गानि। असकृत्-अनुक्षणम्। आसिञ्चन्-अभितः सेकैः शीतलीकुर्वन्। वाहनहंसस्य-स्वयानभूतस्य राजहंसस्य,

**सूत्रधारः**—तन्नियोजय भूमिकापरिग्रहाय अस्मद्वर्ग्यं शैलूषगणम् ।

**पारिपार्श्वकः**—बाढम् । किन्तु सन्ति कथानायकस्य जीवस्य परिजना विज्ञानशर्मप्रभृतयः । प्रतिनायकस्य च यक्ष्मणः परिजनाः पाण्डु-श्वासकासज्वरगुल्मातिसारप्रभृतयः । तेषां यद्यपि भूमिकाग्रहणपटवो नटवटवः पुण्डरीककलहंसककेयूरकमयूरकसारङ्गकतरङ्गकप्रभृतयः संनह्यन्ति ; तथापि प्रयोगस्य बहुत्वेन दुरवगाहतया कथमभीप्सितार्थ-सिद्धिर्भविष्यतीति विचारेण व्याकृष्यत इव मे हृदयम् ।

**सूत्रधारः**—यत्किञ्चिदेतत् । महतामेषां सामाजिकानामनुग्रह एवास्माकम-भीप्सितमर्थं समग्रयिष्यति । यतः—

---

पक्षपवनैः-विधूयमानगरुद्भयां समुत्थितैः वातैः । तापं-प्रियावियोगजं संतापम् । अपोहति-उपशमयति । किलेति संभावनायाम् । विद्यया, विद्वज्जनपरिपालनसम्भा-वनादिषु विहितविश्वासातिशयेन च विलक्षणक्ष्मापतित्वेन विराजन्नासीत् शाहभूपतिरिति अभिहितमासीत् ॥ १३ ॥

**तन्नियोजयेति** । तत्-वक्तृवैलक्षण्यस्य निर्धारितत्वहेतोरित्यर्थः । वर्गे भवं वर्ग्यम् , अस्माकं वर्ग्यं-अस्मद्गोष्ठीसंबन्धिनम् । शैलूषगणं-नटजनसमुदायम् । (गण-शब्दः पुलिङ्गः ।) भूमिकापरिग्रहाय-तत्तत्पात्रोचितवेषधारणाय । नियोजय-आज्ञा पय । बाढं-अङ्गीकारे । कथानायकस्य जीवस्य-जीवात्मनः । (जीवराजस्येति पाठा-न्तरम् ।) पुण्डरीक-केयूरकादीनि कुशीलववर्गस्थितनटानां नामानि । संनह्यन्ति-सन्ति संनद्धाः । प्रयोगस्य-अभिनयैः संदर्शनीयस्य विषयस्य । अभीप्सितार्थसिद्धिः-जीवबुद्धिविज्ञानादिकान् एकत्र, यक्ष्मविषूचीपाण्डुप्रभृतीन् परत्र च, सदसत्प्रकारान् अपरान् आत्मगुणांश्च पात्रत्वेनोपपाद्य, कथासंविधानस्य कथंचिद्विचित्रतया घटितत्वात् , प्रबन्धस्यास्य तादृशस्य प्राज्ञजनरञ्जकत्वेन प्रयोगनिष्पादनमेव नटानां अभीप्सितार्थः, तस्य सिद्धिः-निष्पत्तिः ॥

जाड्यं भिनत्ति जनयत्यधिकं पटुत्वं
सार्वज्ञमावहति संमदमातनोति ।
विद्वेषिवर्गविजयाय धृतिं विधत्ते
किं किं करोति न महद्भजनं जनस्य ॥ १४ ॥

**पारिपार्श्वकः**—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटवटुरभिनयविद्यायां महदनुग्रहात् त्वयैव विजेष्यत इति ।

**सूत्रधारः**—विकटो नाम नटवटुर्मया सह स्पर्धत इति अतत्त्वविदो वचनम् । शृणु तावत् ।

अभिनयविद्याविषये दुरहङ्काराकुलीकृतो विकटः ।
स नटवटुर्मां वाञ्छत्यभिभवितुं जीवमिव यक्ष्मा ॥ १५ ॥

---

**जाड्यमिति** । जाड्यं-मनसो मत्याश्च मान्द्यम् । भिनत्ति-परिहरति । अधिकं पटुत्वं-ऊर्जस्वित्वम् । जनयति । सर्वज्ञस्य भावः सार्वज्ञं-सर्वतोमुखज्ञानवत्वम् । आवहति-आपादयति । संमदं-हर्षम् । (हर्षः प्रमोदामोदसंमदाः इत्यमरः ।) आतनोति-वितरतीति यावत् । विद्वेषिवर्गस्य-शत्रुवर्गस्य, विजयाय । धृतिं-धैर्मम् । विधत्ते । अतः महतां-सत्त्वगुणभूयिष्ठानां सहृदयानाम्, भजनं-सेवनम् । जनस्य किं किं न करोति । अभीप्सितार्थस्याशेषस्यापि वितरणदक्षं पक्षपातानभिज्ञाभिज्ञपरिषदि अस्मत्प्रबन्धप्रयोगविधानमिति भावः । महेश्वरभजनात् तदनुग्रहेण यक्ष्मादिवैरिवर्गविजयपूर्वकस्य आत्मज्ञानजीवन्मुक्तिरूपयोरानन्दयोः प्राप्तिरूपस्य फलस्य च सूचनं कृतमनेन ॥ १४ ॥

**एवंचेति** अनेन वाक्येन महादेवानुग्रहात् परिपन्थिभूतस्य यक्ष्मणो जीवकृतो विजयश्च विशिष्य सूच्यते । **विकट इति** । यक्ष्मा च विकटैर्लक्षणैर्विशिष्टः खलु ।

**अभिनयेति** । अभिनयविद्यायाः-नाट्यशास्त्रस्य, विषये-परिचयात्मकेऽर्थे ।

(नेपथ्ये)

अरे रे शैलूषापसद, 'अभिभवितुं जीवमिव यक्ष्मा' इति किमसम्भावितमर्थं दृष्टान्तयसि ।

मयि जीवति जीवस्य स्वामिनो मन्त्रिणि प्रिये ।
दुर्बलो यक्ष्महतकः कथं वाभिबुभूषति ॥ १६ ॥

**सूत्रधारः**—(आकर्ण्य ।) मारिष, जीवराजमन्त्रिणो विज्ञानशर्मणो भूमिका-

---

दुरहङ्कारेण-दुष्टजनसहजेन गर्वेण "गर्वोऽभिमानोऽहङ्कारः" इत्यमरः । आकुलीकृतः-अभिभूतः । दुर्भरेणाहम्भावेनाभिभूतविवेकतया विह्वलीभूतचेता इत्यर्थः । विकटः-तन्नामा । स नटवटुः-बालिशो नटः । शैलूषवराक इति अवहेलनगर्भितं विशेषणम् । माम् । यक्ष्मा-राजयक्ष्माख्यो रोगराट् । जीवं-नाटकस्यास्य नायकमिव । अभिभवितुं-निग्रहीतुम् । वाञ्छति-अभिलषति । इहेदं नाटकीयफलस्य यक्ष्मणोऽपजयपूर्वकस्य जीवविजयस्य सूचितत्वात् विद्रकं नाम नाटकाङ्गम् । "नाटकीयफले हेतुभूतस्याध्यक्षकीर्तनम् । आफलोदयमुत्साहावसानाभ्यां हि विद्रकम्" इति भरतः ॥ १५ ॥

नेपथ्य इति । नेपथ्ये-यवनिकायाः पश्चाद्भागे । कुशीलवानां वेषस्य भूमिकापरिग्रहस्थलस्य च नेपथ्यमिति नाम । शैलूषापसद-निहीनकुशीलव । असम्भावितं-अनुपपन्नम् । अर्थं-विषयम् ।

मयीति । स्वामिनः-राज्ञः । जीवस्य । प्रिये मन्त्रिणि-हितैषिणि सचिवे । मयि जीवति सति । दुर्बलः-हीनसत्त्वः । यक्ष्महतकः-दुरात्मा राजयक्ष्मा । कथं वा, अभिबुभूषति-अभिभवितुं व्यवस्यति । अभिभवितुं इच्छतीत्यर्थे इच्छायां सन् । स न कथंचिदपि जीवाभिभवे प्रभवतीति भावः । अनेन प्रवर्तकाख्यं नाटकाङ्गं प्रस्तुतं भवति । "प्रवृत्तकालमाश्रित्य प्रस्तावो यो विधीयते । तदाश्रयस्य पात्रस्य प्रवेशेन प्रवर्तकम्" इति भरतः । एष कथोद्घात इति चाभिधीयते ।

मादाय मम कनीयान् कलहंसको रङ्गभुवमवतरति । तदावामध्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

## प्रस्तावना ।

(ततः प्रविशति जीवमन्त्री विज्ञानशर्मा ।)

**विज्ञानशर्मा**—(' अरे रे शैलूषापसद ' इत्यादि पठित्वा, विचिन्त्य ।) सर्वथा राजसमीपं गत्वा तदनुज्ञया यक्ष्मणः प्रवृत्तिमुपलब्धुं चारान् प्रेषयामि ।

---

" सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा । गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते " इति च भरतः ॥ १६ ॥

प्रस्तावनेति । सूत्रधारादिभिः नाटकप्रवर्तकैः कथावस्तु यत्र प्रस्तूयते सा प्रस्तावना । आमुखमिति प्रस्तावनाया नामान्तरम् । एवमस्ति प्रस्तावनायाः प्रतिपादितं लक्षणम्—" सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्वक एव वा । आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥ " इति ।

जीवमन्त्रीति । (जीवराजस्य मन्त्रीति पाठान्तरम् ।) विज्ञानशर्मा-शिल्पादिरूपकलासु, अन्येषु त्रिवर्गसाधनोचितेषु च शास्त्रेषु या बुद्धिः तत् विज्ञानम् । मोक्षविषयिकी या मतिः तत् ज्ञानम् । " मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः " इत्यमरः । ततः प्रविशतीत्यत्र मुखसन्ध्याख्यस्य प्राथमिकस्य नाटकाङ्गस्योपक्रमादारभ्य प्रतिमुख-गर्भ-विमर्शाख्यान् सन्धीन् यावत् राज्ञो जीवस्य त्रैवर्गिककृत्यवर्गसाधनोपायानां उपदेष्टा प्रधानामात्यो विज्ञानशर्मा । ततश्च निर्वहणाख्यस्य नाटकोपसंहाराङ्गस्य प्रस्तावे मुक्तिसाधकमन्त्री ज्ञानशर्मा च प्रबन्धेऽस्मिन् कविना प्रकरणानुरोधेन प्रस्तूयते । राजसमीपं-राज्ञो जीवस्य समीपम् । प्रवृत्तिं गमनागमनबलाबलादिरूपं वृत्तान्तम् । धारणां-चित्तस्यैकाग्रप्रवृत्तिम् । धारणाख्यः सात्त्विको

अथवा 'तत्प्रवृत्त्युपलम्भाय प्रेषय धारणाम्' इति मयोक्तो राजा तथा कुर्यात् । (श्रुतिमभिनीय ।)

दिक्षूदञ्चति ताम्रचूडरसितं यद्ध्रस्वदीर्घप्लुत-
प्रायोवर्णनिभं ब्रवीति तदिदं व्युष्टा निशाभूदिति ।
स्त्रीणां निर्गमनं विहृत्य पतिभिर्ब्रूते विनैवाक्षरैः
क्रीडावेश्मकवाटिकाविघटनक्रेङ्कारपारम्परी ॥ १७ ॥

---

गुणश्च जीवपरिजनेष्वन्यतमपात्रत्वेनास्ति परिकल्पितः । "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः" इति वसिष्ठः ।

दिक्ष्विति । ह्रस्वश्च दीर्घश्च प्लुतश्च तत्प्रायो वर्णाः-स्वराक्षराणि ते ह्रस्वदीर्घप्लुतवर्णाः, तेषां निभं-सदृशम् । "स्वरव्यञ्जनयोवर्णः" इति वर्णपदस्योभयत्र साम्यम् । ताम्रचूडस्य-कुक्कुटस्य, रसितं-एकद्वित्रिमात्रात्मकतया (कु१ कू२ कू३ इति) क्रमेण दीर्घीभवत् कूजनम् । दिक्षु । उदञ्चति-उच्चैः प्रसरतीति यत् । तत् तादृशम् । इदं कुक्कुटकूजनोदञ्चनम् । निशा-रात्रिः । व्युष्टा-प्रभाता । अभूदिति । ब्रवीति-व्यक्तमभिदधाति । कुक्कुटानां अभितः कूजनध्वनेराकर्णनेन प्रभातप्राया विभावरीति विभाव्यत इति भावः । तथा क्रीडार्थं वेश्मानि क्रीडावेश्मानि-क्रीडागृहाणि, तेषां कवाटिकानां विघटनानि-उद्घाटनानि, तेषां क्रेङ्काराः-कवाटार्गलकीलकादीनां अन्योन्यसंघर्षणसमुद्भवत्संरावाः, तेषां पारम्परी-सन्ततिः । पतिभिः-दयितैः सह । विहृत्य-क्रीडित्वा । स्त्रीणाम् । निर्गमनं-क्रीडागृहेभ्यो बहिरागमनम् । विनैवाक्षरैः-वचनादृतेऽपि । ब्रूते-स्पष्टं कथयतीत्यर्थः । कवाटिकाक्रेङ्कारपारम्परी स्त्रीणां क्रीडागृहेभ्यो निर्गमनं ब्रूत इत्यन्वयः । त्रियामाया अवसाने, शर्वर्याः चतुर्थे यामे वा कुक्कुटाः प्रकृत्यैव प्रबुध्य कूजन्तीति शास्त्रमनुभवश्च ; अत एव त्रियामान्ते घुष्यति इति-"यामघोष" इत्यपि कुक्कुटस्य नाम । कुक्कुटकूजने सत्याकर्णिते सत्यः कुलस्त्रियः सौशील्यसंरक्षणपराः शयनगृहादुत्थाय निर्गच्छन्तीति च संप्रदायः । हेतुद्वयेनानेन वीतरजस्तमसां सात्त्विकानां

तदिदानीं देव्या प्रसन्नया बुद्ध्या सह राजा प्रतिबुध्य निवसेत्। तदुपसर्पामि। (इति पुरो दृष्टिक्षेपमभिनयन्।)

चञ्चत्खेटकृपाणकञ्चुकशिरस्त्राकल्पदृप्यद्भटा
सादिव्यञ्जितवक्रमण्डलगतित्वङ्गत्तुरङ्गव्रजा।
गण्डद्वन्द्वगलन्मदाम्बुमुखरीभूतद्विरेफद्विपा
दृष्ट्योर्मे कुतुकाय राजभवनद्वारोपकण्ठस्थली॥ १८॥

---

सुषुप्तेः प्रबोधस्य समुचितो ब्राह्मो मुहूर्तः संप्राप्त इति ज्ञापितमासीत्। "रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते।" धर्मार्थयोः स्वास्थ्यस्य च रक्षणाय स एव समीचीनः समयः। "ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयन्" इति मनुः। "ब्राह्मे मुहूर्त उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः" इति वैद्यकं च॥ १७॥

देव्येति। जीवराजस्य देवी-महिषी बुद्धिः तया। प्रसन्नया-प्रबुद्धया। विद्यापरिणये कविरयं जीवराजस्य विद्यां नायिकामकल्पयत्। तथा चित्तशर्मा तत्र नर्मसचिवः।

जीवस्य काल्पनिकं मानुषत्वं राजभावं च संभाव्य, तदानुगुण्येन सार्वभौमसाजात्यवैभवं वर्णयति चञ्चदिति। चञ्चन्तः-तरलाः, खेटः-वनयष्टिरूपं आयुधम्, चर्मफलकमिति केचित्; कृपाणः-खड्गः, कञ्चुकः, शिरस्त्रं-शिरोवेष्टनम्, त एवाकल्पाः-वेषाः, चञ्चन्तः खेटाद्याकल्पाः येषां ते; ते च ते दृप्यन्तश्च आकल्पदृप्यन्तः, दृप्यन्तः-शौर्यधैर्यबलादिभिः धृष्टाः, भटाः-योधाः यस्यां सा। परिगृहीतपरिच्छदप्रहरणा उद्धता राजभटाः सर्वदा सज्जाः सन्निहिताश्चेति भावः। सादिभिः-अश्वारोहैः पुरुषैः, व्यञ्जिताः-सूचनाभिः निर्दिष्टाः, याः वक्र-मण्डलगतयः-कुटिल-वर्तुलाकारा विविधा गतिविशेषाः, ताभिः त्वङ्गन्तः-चटुलपदविन्यासपूर्वकं भ्रमन्तः ये तुरङ्गाः तेषां व्रजः यस्यां सा। गण्डद्वन्द्वेषु-कपोलयुगलेषु, गलत्-निस्सरत्, यत् मदाम्बु तेन मुखरीभूताः-मदसलिलास्वादोत्तेजितत्वात् मुहुः रीङ्कारमाचरन्तः, द्विरेफाः-भ्रमराः, तैः उपलक्षिताः द्विपाः-गजाः यस्यां सा। तत्तादृशी राजभवनद्वारस्य

अपि च ।

प्रौढामात्यनियुक्तमन्त्रपदवीविस्रम्भसञ्चारिणो
राज्ञो दुस्सहतेजसो निशमने यद्वद्धृतिं द्वेषिणः ।
प्रासादप्रतिहारवेदिषु तथा स्नेहाङ्कपात्रस्थिताः
प्रत्यूषोपगमे प्रदीपमुकुलाः कान्तिं त्यजन्त्यञ्जसा ॥ १९ ॥

---

उपकण्ठस्थली-आसन्नभूमिः । मे दृष्ट्योः कौतुकाय-कौतूहलाय । भवतीति शेषः । उद्धतैः परिगृहीतायुधैर्योधैः, विचित्रगत्या वल्गद्भिः वाजिवर्गैः, मदोत्कटैः मतङ्गजैश्च मण्डितस्य राजभवनप्रातिहारिकप्राङ्गणस्य प्रभावः प्रसभं अवलोकयितॄणां प्रमोदं विस्मयं चोपजनयतीति भावः ॥ १८ ॥

राज्ञो नैजं पराक्रमं प्रभावं च प्रतिपादयति **प्रौढामात्येति** । प्रौढामात्येन-प्रधानसचिवेन, नियुक्ता-सन्दिष्टा (निरुक्तेति पाठो न साधीयान् ।) या मन्त्र-पदवी-गुप्तराजतन्त्रप्रयोगोपायः, तया विस्रम्भसञ्चारिणः-विश्वासपूर्वकप्रवृत्तिमतः । दुस्सहतेजसः-अतिपरुषपराक्रमदुर्दान्तस्य । जीवात्मपक्षे स्वयं ज्योतिषा भास-मानत्वात् दुस्सहदर्शनस्येत्यप्यर्थः । राज्ञः-जीवराजस्य । निशमने-आकर्णने दर्शने वा । 'आकर्णने निशमनं दर्शनेऽपि' इति मेदिनी । द्वेषिणः-शत्रवः । धृतिं-धैर्यम् । यद्वत् त्यजन्ति । तथा प्रासादस्य-हर्म्यस्य, प्रतिहारवेदिषु-बाह्याङ्गणवितर्दिकासु । स्नेहाः अङ्केषु येषां तानि स्नेहाङ्कानि-अन्तस्तैलानि, पात्राणि-दीपभाजनानि, तेषु स्थिताः-संलग्नाः । प्रदीपमुकुलाः-आकारतः कमल-कोशवद्दृश्यमाना महादीपशिखाः । प्रत्यूषस्य-प्रभातस्य, उपगमे, सान्निध्ये, सवितुरुदय इति यावत् । कान्तिं अञ्जसा-झटिति त्यजन्ति । स्वयं दुर्विषहतेजः-प्रभावदुर्ललितस्य, विशेषतश्च विज्ञानशर्माख्यनिपुणामात्यनिर्दिष्ट-निराबाधनीति-पथावलम्बननिश्शङ्कप्रवृत्तिमतो जीवराजस्य श्रवणमात्रेण वैरिणो वीतविक्रमा भवन्तीति, तदानीं दिवाकरोदयसान्निध्यात् दीनदशामापन्नानां दीपानां समुपनतं हीनतेजस्त्वं तस्यानुपमं तत्कालोचितं उपमानमिति च निरूप्य विषयः कविना निपुणमुपपादितः ॥ १९ ॥

(पुरो विलोक्य)

का पुनरियं तपश्चरणजनितप्रभुत्वगौरवेव, मामभिवर्तते ।

गाढोन्नद्धजटाकलापकपिलश्रीधूतबालातपा
बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।
भिक्षापात्रमयूरपिञ्छचयभृत्पाणिद्वया मेऽधुना
काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ॥ २० ॥

(निपुणं निरूप्य)

अस्यामक्षिभ्रुवं नासा रदपङ्क्ती रदच्छदः ।
चुबुकं मन्दहासश्च धारणायामिवेक्ष्यते ॥ २१ ॥

---

केति । का पुनरियं स्यात्, या तपश्चरणेन जनितं प्रभुत्वगौरवं-आधिकारिकप्राशस्त्यं यस्याः सेव । मां अभिवर्तते-मदभिमुखं अभियाति ।

**गाढोन्नद्धेति** । गाढं-दृढं यथा तथा, उन्नद्धः-उन्नमय्य निबद्धः, यो जटाकलापः-जटासंहतिः, तस्य कपिलश्रिया-पिङ्गलवर्णशोभया, धूतः-तिरस्कृतः, बालातपः यया सा । भसितस्य-विभूत्याः, अनुलेपेन-उद्धूलनेन, धवला-पाण्डुरा, छाया-कान्तिः यस्यास्ताम् । अतएव पावनीं-परिशुद्धाम् । तनुं बिभ्राणा । भिक्षापात्रं मयूरपिञ्छानां चयं च बिभर्तीति भिक्षापात्रमयूरपिञ्छचयभृत् पाणिद्वयं यस्याः सा। एकस्मिन् करे भिक्षाभाण्डं अपरस्मिन् मयूरपिञ्छस्तोमं च दधतीत्यर्थः । काषायाम्बरधारिणी इयं तापसी । मे स्वान्ते-मम मनसि । अधुना धृतिं कलयति । आर्यवेषाया अस्यास्तापस्या दर्शनेन भविष्यति भद्रमिति वदतीव स्वयं समुन्मिषति धैर्यमिति भावः ॥ २० ॥

**अस्यामिति** । अस्यां-तापस्याम् । अक्षिणी च भ्रुवौ च तासां समाहारः अक्षिभ्रुवम् । अचतुरेत्यादिना समासान्तेऽच्; प्राण्यङ्गत्वादेकवद्भावश्च । नासा । रदानां-दन्तानां पङ्क्तिः रदपङ्क्तिः । दन्तानां पङ्क्तिद्वयस्य विद्यमानत्वात् रद-

(ततः प्रविशति तापसीवेषा धारणा ।)

**धारणा ।** अहं खु पच्चत्थिराआभिसेणणसंणाहं कस्स वि पुरिसस्स मुहादो सुदवन्तेण रण्णा 'इमं उत्तन्तं पुरं पविसिअ जाणीहि'त्ति पेसिदह्मि । मए वि तावसीवेसाए तह जाणिअ रण्णो समीवे समागमीअदि । (अग्रतो दत्तदृष्टिः, स्वगतम् ।) एसो विण्णाणसम्मा अमच्चो आअच्छदि । होदु । वेसेण पदारेमि णम् । जज्जवि सव्वस्सिं वि कज्जे इमस्स अणुमदिं विणा राआ ण पवट्टइ तह वि जं मह संसओ वट्टइ ता एअकस्स पआसो ण भवे । (इति परिक्रामति ।)

[अहं खलु प्रत्यर्थिराजाभिषेणनसंनाहं कस्यापि पुरुषस्य मुखाच्छ्रुतवता राज्ञा 'इमं वृत्तान्तं पुरं प्रविश्य जानीहि' इति प्रेषितास्मि । मयापि तापसीवेषया तथा ज्ञात्वा राज्ञः समीपे समागम्यते । एष विज्ञानशर्मा अमात्य आगच्छति । भवतु । वेषेण प्रतारयाम्येनम् । यद्यपि सर्वस्मिन्नपि कार्येऽस्यानुमतिं विना राजा न प्रवर्तते तथापि यन्मम संशयो वर्तते तदेककस्य प्रकाशो न भवेत् ।]

---

पङ्क्ती इति द्विवचनान्तत्वमपि संपद्यते । रदच्छदः-अधरः । चुबुकं-हनुः । (चिबुकमिति विपुलो व्यवहारः ।) मन्दहासः-ललितं स्मितं च । धारणायां-परिचितपूर्वायां जीवस्य परिजनभूतायां स्त्रियामिव । ईक्ष्यते-परिदृश्यते । अस्यास्तापस्या मुखलक्षणानीङ्गितानि च विलक्षणानि तान्येव धारणायाः परिचितचरायाः संवदन्तीवेति भावः ॥ २१ ॥

**धारणेति** ।—धारणा नाम मनस एकाग्रता । "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि । धारणा प्रोच्यते सद्भिः योगशास्त्रविशारदैः ॥" इति वसिष्ठः । "ध्येये चित्तस्य स्थिरबन्धनम् धारणा" इति हेमचन्द्रः । अहं खु रण्णा पेसिदह्मि (अहं खलु राज्ञा प्रेषितास्मि) इत्यन्वयः । प्रत्यर्थी चासौ राजा च प्रत्यर्थिराजः-शत्रुनृपतिः, तस्य अभिषेणनसंनाहं-समराय सज्जीकृतया सेनया सहाभियोगरूपं समुद्यमम् । "यत्सेनयाभिगमनमरौ तदभिषेणनम्" इत्यमरः । कस्यापि पुरुषस्य मुखाच्छ्रुतवतेति

**मन्त्री**—(दृष्ट्वा स्वगतम्) इयं तापसी राजप्रहिता प्रच्छन्ना किं धारणा भवेत्। भवतु, पृच्छामि। (प्रकाशम्) अये तापसि, का त्वम्। कुत आगच्छसि।

**धारणा**—(स्वगतम्) इमस्स पडिवअणं भासन्तरेण भणेमि। अण्णहा कहं वि जाणिस्सदि इअं सेति।

[अस्य प्रतिवचनं भाषान्तरेण भणामि। अन्यथा कथमपि ज्ञास्यति इयं सेति।]

(प्रकाशम्) अहं खलु गार्गी यक्ष्मणो राज्ञो वयस्या, देव्या गृहिण्याः स्नेहसर्वस्वभाजनं तदन्तःपुरादेवागच्छामि।

**मन्त्री**—(स्वगतम्) भवेदेवेयं धारणा। तापसीवेषेण रिपुप्रवृत्तिमुपलभ्यागतवती। अयं स्वनामानुगुणं अभिज्ञो वा न वेति मां परीक्षितुं संस्कृतभाषया वेषानुगुणं अपलपते। प्रतिपक्षकुले च पक्षपातमात्मनः

---

अनेन सामान्यां किंवदन्तीमपि नैष लघुतरं मत्वा तिष्ठत्यनवहित इति व्यज्यते। **पुरमिति**। नगरस्यान्तः सर्वतो गत्वा भूतार्थं अवधारयेति राजाज्ञा। पुरमिति जीवराजस्य निवासभूतनगरात्मकं देहमपि निर्दिश्यते। "तनुस्तनूः संहननं शरीरं कलेबरं क्षेत्रवपुःपुराणि" इति राजनिघण्टुः। शरीरस्य बाह्याभ्यन्तराः सर्वेऽपि भागाः कथंचिदपि यक्ष्मप्रभृतिभी रिपुभिः न यथाभिभूताः स्युः तथा सावहिति समुद्युक्ताया धारणाया द्वारा पुरनिरीक्षणे जीवराजो जागरूकस्तिष्ठतीति वाच्यार्थो व्यङ्ग्यार्थश्च। तापसीवेषधारणं परेभ्यः स्वात्मनो गोपनार्थम्। एककस्य-कस्यचिदपि। संशयालुरहमिति न कोऽपि विदांकरोतु इति भावः। **भासन्तरेणेति**। प्राकृतेन व्यवहरन्त्या धारणायाः संस्कृतं भाषान्तरं भवति। **गार्गीति** अलीकनाम। वयस्या-सखी। सर्वं च तत् स्वं च सर्वस्वम्, स्नेह एव सर्वस्वम्, तस्य भाजनं-असाधारणप्रीतिपात्रम्। **रिपुप्रवृत्तिमिति**। रिपुप्रवृत्तिम्-शत्रूणां वृत्तान्तम्। स्वनामानुगुणं-विज्ञानशर्मेति नाम्नोऽनु-

सूचयति । भवतु । अहमपि अजानन्निव अनुनयन् पृच्छाम्येनाम् । (प्रकाशम्) अये तापसि,

निखिलं जगतश्चरितं विज्ञातं ते समाधिनैव भवेत् ।
तन्मे महाप्रभावा भाग्येनासादिता भवती ॥ २२ ॥

धारणा—(स्वगतम्) मं तावसिं एव्व जाणिअ मह मुहादो पच्चत्थिराअप्पउत्तिं सुणिदुं अणुणअप्पआरो एसो । होदु । अहं वि अजाणन्तीव पुच्छामि । [मां तापसीमेव ज्ञात्वा मम मुखात् प्रत्यर्थिराजप्रवृत्तिं श्रोतुं अनुनयप्रकार एषः । भवतु । अहमप्यजानतीव पृच्छामि ।] (प्रकाशम्) कस्त्वम् । क्व गच्छसि । सूनृतेन ते वचनेन साधुर्भवानिति पृच्छामि ।

मन्त्री—(स्वगतम्) इयमात्मानं गोपयति । अहमपि तथैवोत्तरयामि । (प्रकाशम्) कार्यविशेषेऽधिकृतं जानीहि । येनैवमधिकृतस्तन्निकटे गच्छामि ।

---

रूपं यथा तथा । संस्कृतभाषयेति । अपलपते-वस्तुतत्त्वं निगूहते । "अपलापस्तु निह्नवः" इत्यमरः । (भाषान्तरं वेषानुगुणमवलम्बत इति पाठान्तरम् ।)

निखिलमिति । समाधिना-ध्यानकर्मणैव । "मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति तल्लक्षणम् । जगतो निखिलं चरितम्-अशेषश्च वृत्तान्तः । ते-तव । विज्ञातं भवेत् । तत्-तस्मात् । महाप्रभावा भवती मे भाग्येन आसादिता-प्राप्ता । धारणायाश्च तादृशी शक्तिः स्वतस्सिद्धेति भावगर्भितमिदं विशेषणम् ॥ २२ ॥

सूनृतेनेति । सूनृतेन-प्रियेण । कार्यविशेष इति । कार्यविशेषे-विशिष्टे राजकार्ये । अधिकृतं-अधिकारित्वेन नियुक्तम् । मामिति शेषः ।

**धारणा**—(स्वगतम्) एसा विपक्खजणपक्खवादिणित्ति गोपणप्पआरो एसो। [एषा विपक्षजनपक्षपातिनीति गोपनप्रकार एषः।] (प्रकाशम्) केनाधिकृतोऽसि।

**मन्त्री**—भगवति, त्वमेव जानासि। यतः प्रणिधानेन योगिनः सकलमपि प्रत्यक्षयन्ति।

**धारणा**—(स्वगतम्) कहं एदं आपडिदम्। होदु। जोइणो विअ आसिअं करिअ अमच्चं वञ्चेमि। (इति ध्यानारूढा तिष्ठति।)

[कथमेतदापतितम्। भवतु। योगिन इवासिकां कृत्वा अमात्यं वञ्चयामि।]

**मन्त्री**—(स्वगतम्) एषा खलु—

कृत्वा स्वस्तिकमासनं करयुगं विन्यस्य जानुद्वये
नासाग्रार्पिततारका नतमृजूकृत्यावलग्नं दृढम्।
निश्वासोच्छ्वसितोपरोधघटितस्तैमित्यपीनस्तनी
चित्ते मे कृतसंयमेव कुरुते धूर्ता महत् कौतुकम्॥ २३॥

---

यत इति। प्रणिधानेन-ध्यानेन। प्रत्यक्षयन्ति-प्रत्यक्षं कुर्वन्ति।

जोइणो विअ इति स्वयं धारणया मन्त्रिणापि छद्मयोगिनीत्वं अस्या ज्ञातत्वात् योगिन इवेति इवशब्दः प्रयुक्तः। आसिकां-उपवेशम्।

कृत्वेति। स्वस्तिकं-तन्नाम्ना प्रसिद्धम्। आसनम्। योगिनः निदिध्यासनावसरे निषीदन्ति पञ्चसु पद्म-स्वस्तिक-भद्र-वज्र-वीराख्येषु आसनेषु अन्यतममाश्रित्य। तेषु स्वस्तिकमत्र गृहीतम्। तल्लक्षणं तु—"जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे। ऋजुकायो विशेद्योगी स्वस्तिकं तत् प्रकीर्त्यते॥" इति तन्त्रसारे। कृत्वा-स्वस्तिकासनेन स्थित्वेत्यर्थः। करयोः युगम् जानुद्वये विन्यस्य। नासाया अग्रं नासाग्रं तस्मिन् अर्पिते तारके यया सा; नासिकाग्रमेव पश्यन्ती। नतं-आभुग्नम्। अवलग्नं-मध्यप्रदेशम्। दृढं-बलवद्यथा तथा। ऋजूकृत्य-सम्यगुन्नमय्य। स्थित्वेति शेषः। निश्वासः-बहिर्विसृज्यमानो रेचकश्वासः,

(प्रकाशम्) परिनिष्ठितं योगाभासनं भवत्याः ।

**धारणा**—(ध्यानाद्विरम्य सस्मितम्) जीवस्य राज्ञो मन्त्री विज्ञानशर्मा भवान् ।

**मन्त्री**—महाप्रभावा योगसिद्धिमती भवती । तथाहि—

बुद्धया महत्या कृतसाहचर्या देवे निजे दर्शितभूरिभक्तिः ।
परप्रवृत्तिं विदती महिम्ना साधारणा त्वं त्वहिते हिते च ॥ २४ ॥

---

उच्छ्वसितं-पूरणाख्य अन्तराचूषमाणः श्वासः, तयोः उपरोधेन-अवष्टम्भेन, घटितं-आपादितं यत् स्तैमित्यं-स्तब्धत्वम्, तेन पीने-बृंहिते स्तने यस्याः सा । धूर्ता-वञ्चनशीला धारणा । कृत्रिमध्यानकर्मणि प्रवृत्ता योगाभासं प्रकटयतीति भावः । कृतसंयमेव-यथावद्विहितसमाधिरिव । मे चित्ते-मम मनसि । महत् कौतुकं-विशिष्य विनोदम् । कुरुते-उपजनयति ॥ २३ ॥

**परिनिष्ठितमिति** । योगस्य-विषयान्तरेभ्यश्चित्तवृत्तिनिरोधपूर्वकस्य ध्यानस्य, आभासनं-आसमन्तात् प्रकटनम् । योगाचरणवत् कृतकप्रकटनमिति च आन्तरोऽर्थः । परिनिष्ठितं-सम्यक् संपादितम् । कृतकध्यानकृतविषयविशेषप्रकटनप्रवृत्तत्वात् सस्मितत्वम् । **महाप्रभावेति** अन्तर्विडम्बनपूर्वकं क्रियमाणा कपटप्रशंसा ।

**बुद्धयेति** । महत्या-प्रबलया । बुद्धया । कृतसाहचर्या-विहितसाहाय्या । धारणायाः सर्वदा विषयाणां सविमर्शं ग्रहणार्थं बुद्धिं पुरस्कृत्यैव प्रवृत्तेः सहजत्वात् । अन्यत्र महादेव्या जीवपत्न्या बुद्धया च । निजे देवे-स्वाभीष्टे देवताविशेषे । अन्यत्र स्वकीये राजनि । दर्शितभूरिभक्तिः आविष्कृतासाधारणभक्तिः । महिम्ना-तपःप्रभावेण । परस्य-ईश्वरस्य, प्रवृत्तिं-विषयम्, स्वरूपमिति यावत् । अन्यत्र परप्रवृत्तिं-प्रतिपन्थिनां वृत्तान्तम् । विदती-अवगतवती । त्वम् । हिते-मित्रवर्गे । अहिते-शत्रुवर्गे च । साधारणा-समानप्रवृत्तिमती । योगिन्याः पक्षपाताभावात् । तु खल्वर्थे । सा इति, धारणा इति च पदविभागेन 'त्वं सा-तथा प्रसिद्धा

**धारणा**—(स्वगतम्) किं जाणिदम्हि अमच्चेण जहत्थणामधेएण जं तावसीवण्णणव्वाजेण अहं जेव्व वण्णिदा । होदु । एव्वं भणामि ।

[किं ज्ञातास्म्यमात्येन यथार्थनामधेयेन यत्तापसीवर्णनव्याजेनाहमेव वर्णिता । भवतु । एवं भणामि ।] (प्रकाशम्) महान् खलु योगप्रभावः ।

**मन्त्री**—भगवति, तव न किञ्चित् प्राणिनामन्तर्गतमविदितमस्ति । अतस्त्वां प्रार्थये, कथमस्माकं राजनि यक्ष्मा मन्यते । योगिन्यास्तव दुःखितेषु कथमेषां दुःखविमुक्तिः स्यादिति चित्तपरिकर्मविशेषः करुणा भवत्येव । योगाङ्गेषु यमेषु वाङ्मनसयोः यथार्थत्वरूपः

---

धारणा खलु' इत्यपि भूतार्थो व्यञ्जितः । ' प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा . . . " इति गीतोक्तं तत्त्वं बुद्धिसहकृताया धारणाया विषये व्यपदिश्यते कविना ॥ २४ ॥

महानिति । महान् खलु योगप्रभाव इति सोल्लुण्ठनं वचनम् ।

भगवतीति । अन्तर्गतं-मनसि स्थितम् । कथं मन्यते कीदृशमनोभावविशिष्टो भवतीति पृच्छ्यते । एषां-दुःखितानाम् । चित्तपरिकर्माणि-मनःप्रसाधनानि, तेषां विशेषः । तादृशविशेषगुणत्वेन करुणा परिगण्यते । मैत्री करुणा मुदिता उपेक्षा इत्याख्येषु मनसः संस्कारोपकरणभूतेषु चतुर्षु गुणेषु करुणा भवत्यन्यतमो गुणः । योगे संनिविष्टमनसां सत्त्वगुणभूयिष्ठानां दुःखितजनदुर्दशापनोदनविषये निर्धूतनिजपरभेदं निर्विशेषं कारुण्यं निर्गलं स्वतः समुद्भवतीति वाक्यस्यास्य फलितो भावः । भवत्येव इत्यत्र एवकारः कारुण्यप्रवृत्तेः अवश्यंभावित्वं आविष्करोति । योगाङ्गेषु-योगस्यावयवभूतेषु । यमेषु-शरीरसाधनापेक्षेषु नित्येषु दशसु कर्मसु । "शरीरसाधनापेक्षं नित्यं यत् कर्म तद्यमः" इत्यमरः । वाक् च मनश्च वाङ्मनसे ; अचतुरेत्यादिना अच्प्रत्ययान्तो निपातः । तयोः । यथार्थत्वरूपः-तथ्यात्मकः । मनसि वचसि च विषयाभिन्नत्वमिति यावत् । सत्यं नाम मनसि स्थितस्य विषयस्य किञ्चिदप्यविपर्यासेन वाचा व्यवहरणमेव । दश यमास्तावत्—

सत्यं नाम द्वितीयो यमोऽपि तथा । अत इदं निर्विशङ्कं प्रार्थनापूर्वं पृष्टासि ।

**धारणा**—(स्वगतम्) जक्खराजपक्खवादविसेसे वि जोइणीए पुच्छिदस्य जहत्थुत्तरं अभणिअ असक्कं ठादुं त्ति मण्णइ अमच्चो ।

[यक्ष्मराजपक्षपातविशेषेऽपि योगिन्या पृष्टस्य यथार्थोत्तरमभणित्वा न शक्यं स्थातुमिति मन्यतेऽमात्यः ।] (प्रकाशम् ।) किमन्यत् । पुरात् निष्क्रमयितव्यो-ऽयमिति मन्यते ।

**मन्त्री**—कथमेतदेतस्य संघटते । सामादिषु चतुर्षूपायेषु एकैकस्यापि प्रयोगेण सुसाधो हि रिपुमनोरथभङ्गः ।

**धारणा**—नन्विमं दुष्करं पश्यामि ।

---

"अहिंसा सत्यमस्तेयं ब्रह्मचर्यं क्षमा धृतिः । दयार्जवं मिताहारः शौचं चैते यमा दश" इति हठप्रदीपिका । मनःप्रसाधनेषु यथा करुणाया द्वितीयत्वम्, तथा यमेषु सत्यस्यापि द्वितीयत्वमिति, योगिनां दुःखितेषु यथा करुणायाः प्रवृत्तिर्नैसर्गिकी, तथैव वाङ्मनसयोरभिन्नप्रवृत्तिरूपं सत्यमपि नैसर्गिकं अवश्यादरणीयं च भवतीति अर्थपुष्टिं 'द्वितीयो यमोऽपि तथा' इति वाक्यमिदं विशिनष्टि । योगिनां दयार्द्रहृदयत्वम्, मनसि वचसि चाभिन्नप्रवृत्तिमत्वं च विवृण्वन् मन्त्री स्वसमीहितार्थं तन्मुखाज्जिगृहीषुः योगिनीं निपुणमेवं उपरुणद्धि । अतः-एवं विदित-विषयतत्त्वत्वादित्यर्थः । निर्विशङ्कं-वीतभयं यथातथा । **पुरादिति** । पुरात्-नगरात्, शरीरादिति च । अयं-जीवराजः । **कथमेतदि** । एतत्-पुरात् निष्क्रमण-कार्यम् । एतस्य-यक्ष्मणः । सामादिषु-सामदानभेददण्डाख्येषु । एकैकस्यापि प्रयोगेण । सामोपायो यदि प्रथमं प्रयुक्तो न सिध्यति ततो दानोपायः, यदि स च न फलति ततो भेदः, स च न चेत् सिध्यति जागर्त्येवान्ततश्चान्तिम उपाय इति व्यक्तोऽर्थः । अतो जीवस्य पुरादपनयनं दुर्घटमिति यावत् ।

**नन्विति** । इमं-रिपुमनोरथभङ्गम् । दुष्करं-न सुसाधम् पश्यामि ।

यक्ष्मणि विभौ प्रयोगं घटयन्ति न सामभेददानानि ।
दण्डः प्रभवेन्नु कथं प्रबलतरे रिपुजने स्वस्मात् ॥ २९ ॥

**मन्त्री**——यथार्थमाह भवती । किंत्विदं पक्षपातवचनम् । केनेममस्मत्प्रबलतरं मन्यसे ।

**धारणा**——(स्वगतम्) एसो अत्तकेरअस्स पहुणो अमच्चो । ता पहुजणविषअणीए मन्तविचारसिद्धीए परपक्खबलट्ठिदिं एदस्स जेव्व कहइस्सम् ।

[एष आत्मीयस्य प्रभोरमात्यः । तत् प्रभुजनविषयिण्या मन्त्रविचारसिद्धेः परपक्षबलस्थितिमेतस्यैव कथयिष्यामि ।] (प्रकाशम्) सर्वरोगराजो यक्ष्मा निष्प्रती-

---

स्वाशयस्य हेतुमाह यक्ष्मणीति । यक्ष्मणि विभौ-सर्वात्मना कार्यनिर्वहणक्षमे सति; आनन्तरिकस्यानुवादस्य हेतुभूतोऽयं विभुशब्दः । सामभेददानानीति त्रयश्चोपायाः । प्रयोगं न घटयन्ति-न कार्यनिष्पादनक्षमाणीत्यर्थः । स्वस्मात्-जीवराजस्य पक्षात् । रिपुजने-शत्रुपक्षीयपरिवारे । प्रबलतरे-अधिगतबलाधिक्ये सति । दण्डः-युद्धादिभिः शत्रुदमनोपायः । कथं नु प्रभवेत्-केन प्रकारेण शक्येत । न कथंचिदपीति भावः । हीनबले समबले वा रिपौ दण्डनीत्याः प्रयोगः प्रसज्येत; न तु विशिष्य रिपुपक्षे बलवत्तरे कृतमतयस्तां नीतिमाद्रियन्त इति भावः ॥२५॥

यथार्थमिति । समर्थे बलवत्तरे च प्रतिपन्थिनि उपायाः सामादयश्चत्वारोऽपि न प्रयोगमर्हन्तीति यदुक्तं राजनीतितत्त्वं तदखिलं तथ्यमेव । किन्तु इदं-'प्रबलतरे रिपुजने' इति भवत्या यदभिहितम् । तत् पक्षपातवचनं-रिपुजनाहितप्रीतिवशात् प्रोक्तं वचः; न त्वेषा तटस्थोक्तिरिति यावत् । एसो इति । आत्मीयस्य-स्वकीयस्य (धारणासंबन्धिनः) । प्रभोः जीवराजस्य । प्रभुजनाः-राजामात्यादयः, तेषां विषयः प्रभुजनविषयः, सोऽस्या अस्तीति प्रभुजनविषयिणी, तस्याः । मन्त्रविचारः-राजनीतिसंबन्धिनां गुप्तार्थानां विमर्शः, तस्य सिद्धेः-फलनिष्पत्तेः । (प्रभुजन-

कार इति सर्वजनविदितमेतत् । शृणु तावत् । परीवारा एतस्य रोग-विशेषा भीमरूपा बहवः । तथाहि---

ज्वरपाण्डुप्रमेहार्शश्शूलगुल्मभगन्दराः ।
कासश्वासावतीसारसन्निपाताश्मरीव्रणाः ॥ २६ ॥

---

विषयिण्यै मन्त्रविचारसिध्यै इति चतुर्थ्यन्तं पाठान्तरमपि दृश्यते ।) परपक्ष-बलस्थितिं-शत्रुभूतयक्ष्मवर्गबलप्रकारम् । एतस्यैव-राज्ञः सविधे निवेदनादपि राजसचिवस्य धुरि कथनमपि समीचीनमेवेति एवकारस्यार्थः । एष एवाशयः 'राज्ञो निवेदनादपि तव पुरतः कार्यनिवेदनमभ्यर्हितम्' इति स्पष्टीकरिष्यते पश्चात् । सर्वरोगाणां राजा सर्वरोगराजः । "इति व्याधिसमूहस्य रोगराजस्य" इति बहुव्याधिपरीतत्वं रोगराजत्वं च चरकादिभिरस्य व्यक्तमभिहितम् । "सर्वरोगाग्रजो बली" इति प्रबलत्वं निष्प्रतीकारत्वं च यक्ष्मणः प्रसिद्धमायुर्वेदे ।

समुद्भूते राजयक्ष्मणि तस्य प्रबलस्य परिपन्थिनः परिवारत्वेन प्रादुर्भवन्तो भीमरूपा बहवो रोगा एव नामतो निर्दिश्यन्ते ज्वरेति । "प्रतिश्यायं ज्वरं कास-मङ्गमर्दं शिरोरुजम् । श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् । करोति चांस-सन्तापमेकादशमिहाङ्गहृत्" इति यद्यपि विद्यते व्याधिभिरेकादशभिरभिव्याप्तत्वं यक्ष्मणः प्रोक्तम्, तथापि रोगाणां राजेति, व्याधिसमूहरूप इति च चरकादिभि-र्व्यवह्रियमाण एष व्याधिव्यूहाधिराजो यक्ष्मा लक्षणात्मकैरेकादशभिरामयैः समन्वित इति, अस्य परिवारत्वेन परिगण्यमानाः सर्वेऽप्यपरे रोगाः प्रायः प्रादुर्भवन्त्युपद्रव-त्वेनेति च मन्तव्यम् । अत एवात्र रूपपर्यायत्वेन परिगृहीतेषु आमयेष्वेकादशसु अनन्तर्भूताः बहुमेह-शूनोदर-शूनमुष्क-पाण्डुदेहादयो विकाराः "कृच्छ्रेण बहु मेहन्तं यक्ष्मा हन्तीह मानवम्", "शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत्", "पाण्डुदेहो यथापूर्वं क्षीयन्ते चास्य धातवः" इत्यादिभिर्वचनैः प्रतिपादिताः प्रदृश्यन्ते रुग्विनिश्चयादिषु ग्रन्थेषु; अत इह ज्वरपाण्डुप्रमेहार्शःप्रभृतीनां अपरेषां बहूनां रोगाणां राजयक्ष्मपरिवारत्वेन परिगणनं नैव स्यादनुपपन्नम् ॥ २६ ॥

किं च ।

रोगा मूर्ध्नि शतं चतुर्नवतिरेवाक्ष्णोस्तथा नासिकां
प्रत्यष्टादश कर्णयोरपि तथा वक्त्रे चतुस्सप्ततिः ।
पञ्चैवं हृदि किंच सन्ति बहवः सर्वेऽप्यमी दुस्तराः
प्राप्तौ कल्ककषायलेह्यवटकप्रायौषधानामपि ॥ २७ ॥

---

किंच बहवोऽप्यपरे रोगा विशेषतश्चोर्ध्वजत्रुगता राजयक्ष्माणं नियमेनानुबध्नन्तीत्याचष्टे **रोगा** इति । मूर्ध्नि शतं रोगाः-शिरोगता रोगाः शतसङ्ख्याकाः । एकादशैव शिरोरोगा इति प्रायः सर्वेऽपि ग्रन्थकाराः । अतः शतं शिरोरोगा इत्यस्य प्रमाणं मृग्यम् । अक्ष्णोः-नेत्रयोः । चतुर्नवती रोगाः । वाग्भटश्च तथैवाचष्टे । किन्तु षट्सप्ततिरेव नेत्रामया इति सुश्रुतमाधवकरौ । नासिकां प्रति-नासिकामाश्रित्य । अष्टादश व्याधयः । एकत्रिंशन्नासिकारोगा इति सुश्रुतः । माधवनिदाने त्वष्टादशैव । तथा कर्णयोरपि-अष्टादश रोगाः । माधवकरस्तु एकविंशतिं कर्णरोगान् पठति । वक्त्रे-मुखे । चतुस्सप्ततिः । पञ्चषष्टिर्मुखरोगा इति माधवकरः । वाग्भटस्तु पञ्चसप्ततिसङ्ख्याकान् मुखरोगानाह । नेत्र-नासिका-कर्ण-मुखाश्रितानां रोगाणां सङ्ख्याविषये कवेरस्य च शार्ङ्गधरस्य च मतं समानं दृश्यते । हृदि-हृदयावयवे । पञ्च रोगाः । अत्र नैव क्वचिद्विसंवादः । न केवलमेतावन्त एव, किंच सन्ति बहवो रोगा अपरेऽपि, ये रोगराजमनुधावन्ति । अमी सर्वेऽपि व्याधयः । कल्कः-खल्वादिसाहाय्येन सजलं अजलं वा पिष्टं द्रव्यम्; कषायाः-स्वरस-कल्क-क्वाथ-हिम-फाण्टभेदेन पञ्चविधा औषधपाकाः; लेह्यं-अवलेहनयोग्यं औषधम्; वटकः-मोदको गुटिका वा; तत्प्रायाणि यानि औषधानि तेषाम् । प्राप्तावपि-अधिगमेऽपि (प्राप्ता इति प्रथमान्तः पाठो न सुगमः ।) दुस्तराः-दुस्साध्याः । भवन्ति । बहुकल्पैर्बहुगुणैरपि साधारणौषधिवर्गपरिकल्पितैरौषधैः यत्नेन चिकित्स्यमानोऽपि बहुरोगपरीतो यक्ष्मा दुर्जय इति भावः । रसादिधातुवर्गस्य लोहवर्गस्य च संबन्धिनां औषधानां इहानिर्देशस्य कारणं, तादृशौषधैरेव रोगराजविजयः साध्येतेति परस्तात् प्रतिपादनमेवेति पाठकैरवधेयम् ॥२७॥

तस्माद्दुर्जयो यक्ष्मा युष्माभिः ।

**मन्त्री**—(स्वगतम्) इयं किल भीत्या निसर्गकातरा प्रबलपरबलप्रवेशहृदया मदीयप्रभावमजानती स्वबुद्ध्यनुरूपं किमपि प्रलपति । भवतु । किमनया वृथासंवादकदर्थनया । प्रस्तुतकार्यसाधनार्थमिमां तावत् अन्तरयामि ।

(प्रकाशम्, सोपहासम्)

आलोक्य शात्रवबलं बहु धारणे त्वं
भीतासि संप्रति नसंप्रतिपन्नधैर्या ।
जीवस्य जीवितसमे मयि सत्यमात्ये
भूयात् कथं बत विरोधिशिरोधिरोहः ॥ २८ ॥

---

**तस्मादिति** । (तस्माद्दुर्जयो युष्माभिरिति पाठे यक्ष्मेत्यध्याहार्यः ।) **इयमिति** । प्रबलानां परबलानां प्रवेशो हृदये यस्याः सा ; बलवतां शत्रूणां शक्तिमेव मनसा चिन्तयन्तीत्यर्थः । स्वबुद्ध्यनुरूपं-स्वकीयालोचनानुगुण्येन । अन्तरयामि-कपटसल्लापस्यान्तरायं आचरामि । इतःपरं स्वात्मनिगूहनादिकं निवार्य सुस्पष्टसंभाषणाय यतिष्ये इत्यर्थः ।

**सोपहासमिति** । वैरिबलवैशिष्ट्यविषयेऽवहेलनप्रदर्शनपरमिदम् ।

**आलोक्येति** । धारणे-परिचितचरेयं व्यक्तिरिति प्रबोधनाय संबोधनमिदम् । संप्रति त्वम् । बहु-अनल्पम् । शात्रवबलं-शत्रुसैन्यम् । आलोक्य । नसंप्रतिपन्नधैर्या-विशिष्य वीतधैर्या सती ; अत्र नञो न लोपः । भीतासि । बहुधा रणे-युद्धे ; युद्धाय सज्जीक्रियमाणमिति यावत् । शात्रवबलं विलोक्य त्वं भीतासि इत्यपि आपाततोऽपरोऽर्थः । (रसं प्रतिपन्नधैर्येति अपभ्रंशः पाठः।) जीवस्य-जीवराजस्य । जीवितसमे-प्राणैः समाने । अमात्ये मयि सति-जीवति सति । विरोधिनः-शत्रोः, शिरोधेः-कन्धरस्य, रोहः-वृद्धिः इति विरोधिशिरोधिरोहः । विरोधिशिरसः अधिरोहः-उन्नमनमिति च समुचितैव व्युत्पत्तिः । कथं भूयात् ।

**धारणा**—(विहस्य) कधं जाणिदह्मि अमच्चेण । ता कहेमि विस्सद्धं जहत्थं सुणादु अमच्चो । अहं खु देईए बुद्धीए सहअरी रण्णा जीवेण तावसीवेसं करिअ रत्तिम्मि पुरं पविसिअ जक्खराअस्स विआरणीओ ववसाओ त्ति पेसिदह्मि । तह ज्जेव्व विचारिअ अज्जं पदारिदुं पच्छण्णे व ठिदह्मि ।

[कथं ज्ञातास्म्यमात्येन । तत् कथयामि विस्रब्धं यथार्थं शृणोत्वमात्यः । अहं खलु देव्या बुद्धेः सहचरी, राज्ञा जीवेन तापसीवेषं कृत्वा रात्रौ पुरं प्रविश्य यक्ष्मराजस्य विचारणीयो व्यवसाय इति प्रेषितास्मि । तथैव विचार्य आर्यं प्रतारयितुं प्रच्छन्नेव स्थितास्मि ।]

**मन्त्री** । युज्यत एतत् । अतो राजसमीपमेव गच्छावः ।

**धारणा**—तुमं जेव्व गदुअ इमं वुत्तन्तं भणाहि । रण्णो णिवेदणादो वि

---

सकलराजतन्त्रस्वतन्त्रधिषणे सचिवोत्तमे सति जीवति मयि, कथंचिदपि कन्धरोन्नमनायापि कोऽपि न प्रभवेत् प्रतिपक्ष इति यावत् । बतेति विस्मये । विदितमत्प्रभावा भवत्यपि भीतेति विस्मयास्पदमिदमिति भावः ॥ २८ ॥

विहस्येति । एतावता च कृतकयोगिनीवेषेण कुतोऽयं व्यवहार इति विषयस्य व्यक्तीभावजनितविस्मयप्रकटनाय विहसनम् । विस्रब्धं-विशङ्कं यथा तथा । यथार्थं-तथ्यम् । इतःपरं न किमपि गोपनीयमस्ति, भूतार्थमेव ब्रूयां श्रूयतामित्याह । सहचरी-सखी । व्यवसायः-उद्यमः । आर्यं-भवन्तमित्यर्थः ; आर्य इति सज्जनवाचकश्शब्दः । प्रतारयितुं-वेषान्तरकृतविडम्बनेन मोहयितुम् । तथा प्रच्छन्नरूपस्य प्रकटनमपि प्रकृतकार्यनिर्वहणाय समुचितमेवेति युज्यत इत्यनेन मन्त्री स्वाभिनन्दनं तत्र प्रकटयति ।

तुममिति । इमं वृत्तान्तं-'पुरान्निष्क्रामयितव्योऽयम्' इत्यादिभिः प्रागभिहिता शत्रुपक्षीयां प्रवृत्तिम् । अभ्यर्हितं-प्रशंसार्हम्, अनेन समुचितमित्यर्थः ।

तुह पुरदो कज्जणिवेदणं अब्भहिदम् । अहं उण दुज्जणसंसग्गकिदं कलुसं पक्खालेदुं महाणदिं ण्हादुं गच्छेमि । (इति निष्क्रान्ता ।)

[त्वमेव गत्वा इमं वृत्तान्तं भण । राज्ञो निवेदनादपि तत्र पुरतः कार्यनिवेदनमभ्यर्हितम् । अहं पुनः दुर्जनसंसर्गकृतं कलुषं प्रक्षालयितुं महानदीं स्नातुं गच्छामि ।]

**मन्त्री**—(सविचारम्) यद्यपि कुटिलप्रकृतयः स्वामिनि निबद्धदृढभक्तयो दुर्जया एव परसैनिकास्तथापि किमसाध्यं बुद्धिविभवस्य । यतः—

दुर्जाते सुमहत्यपि क्षितिपतेः शालीनतां संत्यजन्
शत्रून् जेतुमथेप्सितं घटयितुं शक्नोत्युपायेन यः ।
प्रायो मन्त्रिपदं महोन्नतमतिः प्राप्तुं स एवार्हति
स्वोत्सेकी न तु पण्डितो भुवि जनो वाचा वदन् पौरुषम् ॥२९॥

---

दुर्जनसंसर्गकृतं कलुषं-पापभूयिष्ठजनसंयोगोपनतं दोषम् । प्रक्षालयितुं-सम्यक् शोधयितुम् । कासश्वासछर्दिकुष्ठप्रभृतीनां कश्मलभूयिष्ठानां संसर्गतः सङ्क्रान्तं जुगुप्सावहं दोषमसहमाना, तत्प्रक्षालनविषये कालविलम्बमक्षमन्ती, दैववशात् मध्येमार्गं समागतवते मन्त्रिणे निखिलमपि निवेद्य वृत्तान्तं सत्वरं जिगमिषति धारणा जलावगाहायेति भावः ।

**सविचारमिति** । सविमर्शमित्यर्थः । कुटिला-विकृता प्रकृतिः-स्वभावः येषां ते । स्वामिनि-प्रभौ यक्ष्मणि । निबद्धा-सम्यगाहिता दृढा भक्तिः यैस्ते । सत्यप्याजानसिद्धे विरोधिवरूथिनीनां अनार्जवे, स्वामिनि विनिहितनिरवधिकभक्तिभरत्वात् तद्दुर्जयत्वमिह संभाव्यत इति भावः । तथापि मतिमहिम्ना महदपि कार्यं स्वात्मना साधु साध्येतेति निरूपयति पद्येनानन्तरिकेण ।

**दुर्जात इति** । यः-पण्डितः । क्षितिपतेः-राज्ञः । सुमहति दुर्जाते-अतिप्रबले कष्टे सत्यपि समुपनते । शालीतां-अधाष्ट्र्यम्, मान्द्यमिति यावत् । "स्यादधृष्टे तु शालीनः" इत्यमरः । संत्यजन्-विसृजन्; प्रौरुषमवलम्ब-

अत इदानीम्—

संचिन्तयामि कञ्चन सम्प्रति समयोचितं जयोपायम् ।
येनास्माकं श्रेयो भविता सहसा पराजयो द्विषताम् ॥ ३० ॥

(इति ध्यानं नाटयति ।) आः, चिन्तितोऽयं अबाधितोपायः । तथा हि—

---

न्नित्यर्थः । उपायेन-गूढमन्त्रबलेन, सामदानभेददानेष्वन्यतमेन राजतन्त्रेण वा । शत्रून् जेतुम् । अनन्तरं ईप्सितं-अभीष्टार्थम् । घटयितुं-निर्वोढुं च । शक्नोति । शत्रुनिषूदनपूर्वकं सङ्कल्पितार्थस्य संपादनक्षमो य इति भावः । सः-तादृशः । महोन्नत-मतिः-अतिप्रौढप्रज्ञावानेव । प्रायः मन्त्रिपदं-अमात्यस्य स्थानम् । प्राप्तुं अर्हति । स्वोत्सेकी-आत्मनि गर्वभूयिष्ठः । पण्डितः-अभिज्ञंमन्यः । वाचा पौरुषं वदन्-स्वयमेव स्वपराक्रमं प्रशंसन् । जनः-पुरुषस्तु । भुवि न मन्त्रिपदमर्हति । अपेत-पौरुषोऽहंभावी विकत्थनपरो वाचाटश्च न राज्यतन्त्रनिर्वहणाय प्रभवेदिति भावः । अधो निर्दिश्यमानां मुद्राराक्षसीयां चाणक्यस्य वाक्यशैलीं पद्यमिदं ज्ञापयति—

"अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात् फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥" ॥ २९ ॥

संचिन्तयामीति । शत्रून् जेतुं स्वपक्षस्य श्रेयः साधयितुं च, एवं कार्यद्वय-मेकदैव संपादयितुम्, 'किमसाध्यं बुद्धिविभवस्य' इति पूर्वोक्तं दृढनिश्चयं मनसि कृत्वा, प्रतीक्षितप्रयोजनद्वयवितरणदक्षमुपायमेव निपुणं मन्त्रयति मन्त्रीति पद्यमिदं प्रतिपादयति ॥ ३० ॥

आः इति स्मरणार्थे । अबाधितश्चासौ उपायश्च अबाधितोपायः, निराटङ्को गूढनयः । निराबाधो वैरिविध्वंसनोपायो निर्णीत इत्यर्थः ।

प्रथन्ते यास्तिस्रः प्रबलजडतीक्ष्णाः प्रकृतयो
वशीकारे तासां जगति सदुपायाः परममी ।
क्रमात् स्नेहास्ते ते कुशलमतिभिः सद्भिरुदिता-
स्तथा तीक्ष्णोपाया नियतमुपचाराश्च मधुराः ॥ २१ ॥

---

निराबाधं गूढनीतिप्रकारमेव प्रतिपादयति **प्रथन्त इति** । प्रबलजडतीक्ष्णाः-क्रमेण महाशक्तिसंपन्नाः मन्दस्वभावाः क्रूरगुणविशिष्टाश्च । याः तिस्रः प्रकृतयः-त्रिविधाः शत्रुसंबन्धिन्यः प्रजाः । प्रथन्ते-प्रसिद्धाः सन्ति । तासां वशीकारे-स्वायत्तीकरणे । जगति । सदुपायाः परममी-वक्ष्यमाणा एव फलावहा उपायाः । तानेव विशिनष्टयुत्तरार्धेन । ते ते स्नेहाः-मैत्रीप्रदर्शनपूर्वकं प्रयुज्यमानाः सामोपायाः । प्रबलानां वशीकरणार्थैते सदुपायाः । तथा तीक्ष्णोपायाः-त्रासजनका निशिता दण्डनीतयः । अनेन जडप्रकृतयो वशीकर्तुं शक्यन्ते । मधुरा उपचाराश्च-दानादयो हृदयङ्गमा आवर्जनोपायाश्च । अनेन च क्रूरप्रकृतयो वश्या भवन्ति । एवं रीत्या कुशलमतिभिः-नीतिप्रयोगनिपुणधिषणैः । सद्भिः-विदितवेदितव्यैर्महद्भिः । नियतम् । सदुपायाः क्रमादुदिताः-प्रबलस्य स्नेहः, जडस्य तीक्ष्णः, तीक्ष्णस्य मधुर इति च यथाक्रमं उत्तमाः सनिर्णयं सन्त्यभिहिता उपायाः । इत्येष सामान्योऽर्थः । वैद्यशास्त्रानुरोधेन यास्तिस्रः प्रथन्ते प्रकृतयः ता वातकफपित्ताख्याः । ताश्च क्रमेण गुणतः प्रबल-जड-तीक्ष्णा भवन्ति । "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः । वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्" इति प्रमाणमनुरुध्य वातस्य दोषान्तरापेक्षया विशिष्टबलयुक्तत्वं विदितमेव वैद्यविदुषाम् । तेषां दोषाणां त्रयाणामपि शमनाय घृततैलवसामज्जाख्याः परश्शतधा पक्का अपक्वाश्च ते ते स्नेहाः, कटूष्णगुणभूयिष्ठा विविधास्तीक्ष्णा भेषजप्रयोगाः, मधुरशीतवीर्यादियुक्ता औषधादिप्रयोगाश्च क्रमशो नियमेन परिष्टैः परमसूक्ष्मार्थपारंगतैः भिषक्तन्त्र-प्रवर्तकैः साधु सन्ति निर्धारिताः । "वातस्योपक्रमः स्नेहः" इति, "श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम्" इति, "पित्तस्य सर्पिषः पानं स्वादुशीतै-

तस्मात् प्रबलजडतीक्ष्णप्रकृतीनां वातपित्तकफानां मध्ये प्रबलो यो वातः स तु बहुविधस्नेहविशेषप्रयोगेण वशीकार्यः । तदनुगतस्य पित्तस्य मधुरोपचारेणैव सुकरो वशीकारः । उभयविरुद्धो जडो यः कफः तत्रेतरोपायस्य अप्रसरात् तीक्ष्णप्रयोगेणैव स वशमानेतव्यः । एवं च तत्तत्समुचितैरुपायैः सर्वामयनिदानेषु वातादिषु स्वाधीनेषु तज्जनितानामितरेषामुन्मेष एव दूरतोऽपास्तः । किंच——

---

विरेचनम्" इति च वात-कफ-पित्तानां स्नेह-तीक्ष्ण-मधुरोपचाराः क्रमशः सुतरामुपशमनोपाया इति वाग्भटादिभिरस्त्युपपादितम् । एवं लौकिकव्यवहाररीत्या वैद्यतन्त्रमार्गानुरोधेन च वैरिविध्वंसनाय व्याधिनिषूदनाय च क्रमशो निराबाधा ये प्रशस्ता उपायास्ते सम्यगालोच्य निर्णीता इति पूर्ववाक्योक्तमर्थं कविः पद्येनानेन साधु समर्थितवान् ॥ ३१ ॥

प्रथन्त इति पूर्वपद्येनाभिहितमेव विषयं प्रपञ्चयति तस्मादित्यादिभिर्वाक्यैः । बहुविधस्नेहविशेषप्रयोगेण-घृततैलादिभिः पानाभ्यञ्जनसेकवस्तिप्रभृत्यात्मना क्रियमाणेन विविधेन चिकित्साविशेषेण । तदनुगतस्य-स्वतन्त्रप्रवृत्तिमन्तं तं वायुमनुधावतः । उभयविरुद्धः-स्वभावतो वातात् पित्तादपि विरुद्धः; न हि वातवत् बलवान् न वा पित्तवत् तीक्ष्ण इत्यर्थः । इतरोपायस्य-अन्यतरोपायस्य; स्निग्धोपचारस्य मधुरोपचारस्यवेति यावत् । अप्रसरात्-प्रवृत्त्यभावात् । तादृशाभ्यां उपचाराभ्यां न श्लेष्मा वशमभ्युपैति, परं तु प्रकुप्येत् । सर्वामयनिदानेषु-समस्तरोगहेतुभूतेषु । वातादिषु-वात-पित्त-कफेषु । तज्जनितानां-तैर्वातादिभिरुत्पादितानाम् । इतरेषां-कासश्वासज्वरादीनां अशेषाणामपि व्याधीनाम् । उन्मेषः-आविष्कार एव । दूरतोऽपास्तः-तेषां समुत्पत्तिकथापि न संभवेदित्यर्थः । मूलच्छेदे सति तरुलतादीनामाविर्भाव एव न प्रसज्यते; तद्वत् वैषम्यमापन्नानां वातादीनां आदावेव विहिते प्रशमे तन्मूला व्याधयश्च विहता एवेति तात्पर्यम् । "तत्र प्रकृतयस्तिस्रो वातपित्तकफात्मकाः । तत्र यः प्रबलो वातः स तु स्नेहैर्वशीकृतः ॥ तदनुगतं

सर्वस्मिन् विषये निरङ्कुशतया यद्दुर्निरोधं मनः
प्रायो वायुरिव प्रकृष्टबलवत् सर्वात्मना चञ्चलम् ।
तत् कामादिभिरुद्धतैरुपहतं संप्रेरितैर्यक्ष्मणा
तत्सौहार्दमुपेत्य यद्यपि पुनर्नः प्रातिकूल्यं चरेत् ॥ ३२ ॥

अतस्तदपि महाधिकारेण वशीकृत्य महति व्यापरे विनियोज्य

---

यत् पित्तं मधुरमयैस्तद्विजेयमुपचारैः । पङ्गुर्यस्तत्र कफस्तीक्ष्णोपायैर्वशं स चानीतः ॥" इति द्वितीयाङ्के वक्ष्यमाणेन विषयेण सम्यगेत एवार्थाः स्पष्टीभविष्यन्ति ।

**सर्वस्मिन्निति** । सर्वस्मिन् विषये-ज्ञानेन्द्रियपञ्चकमपि यत्र यत्र प्रवर्तते तत्र सर्वत्रापि विषये । निरङ्कुशतया-निराबाधप्रवृत्तिमत्त्वात् । दुर्निरोधं-निग्रहाक्षमम् । यत् मनः-अन्तःकरणम् । प्रायो वायुरिव-वातस्य गुणैः सदृश एव भूत्वा । अत एव प्रकृष्टबलवत् । सर्वात्मना-सर्वप्रकारेण । तद्वच्चञ्चलं च । तत्-उक्तरीत्या अशेषेष्वपि विषयेष्वप्रतिहतप्रवृत्तिमत् प्रकृत्यैव बलवदतिचञ्चलं मनः । यक्ष्मणा संप्रेरितैः । उद्धतैः-दौश्शील्यतो धृष्टैः । कामादिभिः-कामक्रोधमदमात्सर्यादिभिः । उपहतं-अभिभूतं सत् । तत्सौहार्दं-तैः कामादिभिः सह सौहार्दं-मैत्रीम् । उपेत्य-प्राप्य । नः प्रातिकूल्यं-विरोधम् । यद्यपि चरेत्-विदध्यात् । अतः कारणादिति अनन्तरवाक्येनान्वयः । वातादिदोषाणां व्याधिवल्लधिनीप्रधानाधारभूतानां स्नेहादिभिः सदुपायैः सत्यपि साध्ये वशीकरणे, वातस्येव चञ्चलस्य बलवत्तरस्य महदुपबलसंधुक्षितस्य मनसो दुर्दमस्य वशीकरणं तु दुस्साधं स्यात् । व्याधीनां निर्वर्तनविषये वातस्येव, आधीनां समुत्पादने मनसः सुतरां वीर्यं अनिवार्यमिति, अतोऽत्र किं विधेयमिति च विमृशति विज्ञानशर्मा ॥ ३२ ॥

**अत इति** । अस्माद्धेतोः । तत्-मनोऽपि । महाधिकारेण-विषयनिवारणनिपुणानां विचित्रप्रभावाणां विवेकादीनां बलवता नियोगेन । महति व्यापारे-यमनियमनिदिध्यासनादिबाह्येन्द्रियनिग्रहकर्मणि । विनियोज्य-बलवत् प्रेरयित्वा ।

तैरपि दुर्भेदं करिष्यामि । यद्यपि मद्विरोधिचेष्टो ज्ञानशर्मा मदसंनिधाने राज्ञ उपजापेन कार्यभेदमेव जनयेत् तथापि जाग्रति मयि स निष्फलकर्मैव ।

सर्वानर्थनिदाने यक्ष्मणि तस्मिन् समूलमेव मया ।
उन्मूलिते ततो नः कर्तव्यं नावशिष्यते किञ्चित् ॥ ३२ ॥

तथा कर्तुमेव तावत् राजनिकटमेव गच्छामि । (इति कतिचित् पदानि गत्वा पुरो विलोक्य ।) इदं तद्राजभवनम् । यावत् प्रविशामि । कः कोऽत्र भोः ।

---

तैः-कामादिभिरपि । मद्विरोधिचेष्टः-मदभीष्टप्रतिकूलप्रवृत्तिमान् । ज्ञानशर्मा-मोक्षसाधको जीवमन्त्री । (अज्ञानशर्मेत्यसाधुः पाठः ।) मदसन्निधाने-राजसविधात् मयि क्वचिदपगते । उपजापेन-मित्रभेदोपायेन । कार्यभेदं-प्रतिरूपं प्रयत्नम्; जीवस्यान्यथाप्रवृत्तिरूपं कार्यमेवेति भावः । यद्यपि जनयेत् । तथापि जाग्रति-मयि जागरूके सति । स निष्फलकर्मैव । मत्पुरतो ज्ञानशर्मा नूनमकिञ्चित्कर इति यावत् । अयमत्र भावः । विज्ञानशर्मा जीवं त्रिवर्गे प्रवर्तयति । ज्ञानशर्मा नाम प्रथमः सचिवः प्रेरयति तमपवर्गप्रवृत्तौ । (मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः इत्यमरः ।) यमनियमाद्यनुष्ठाने सति यथाविधि प्रसक्ते, ज्ञानशर्मणः परिचये च तदनुषङ्गतो बलात् समुपनते, स्वस्यावलम्बकं त्रिवर्गमेव तृणीकृत्य केवलमपवर्गोद्युक्तः स्याज्जीवः; तदानीं निश्शेषितेन्धनेन निर्वाणमधिगच्छता पावकेन परित्यक्तो धूमोत्कर इव पश्यत एव नश्येयमिति विह्वलचित्तो विमृशति किंकर्तव्यताविषये विज्ञानशर्मा ।

**सर्वानर्थेति** । सर्वानर्थनिदाने-त्रिवर्गसाधकानां ऐहिकानां श्रेयसां आपवर्गिकस्य निश्श्रेयसस्य च निर्मूलनहेतौ । सर्वेषामपि शारीरमानसिकानां विकाराणां हेतुभूते च । तस्मिन्-प्रबलव्याधिपरिवारपरिवृते तथाविधे । यक्ष्मणि । समूलमेव उन्मूलिते-श्लेष्मप्रधानैः विकृतैः हेतुभूतैः दोषैः सह निरवशेषतया समूलं आच्छिद्य परिहृते । "कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु । क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः" इति कफप्रधाना विकृता दोषा रसवहमार्गनिरोधना-

(प्रविश्य)

**प्रतीहारः**—मन्त्रिन्, किमाज्ञापयसि ।

**मन्त्री**—प्राण दौवारिक, संप्राप्तं मां राज्ञे निवेदय ।

**प्राणः**—तथा । (इत्यन्तःपुरं प्रविष्टः ।)

**मन्त्री**—(परितो विलोक्य) इह खलु—

संमृज्य शोधनीभिश्चत्वरवेदीतलेषु रम्येषु ।
रचयन्ति रङ्गवल्लीरन्तःपुरचारिका एताः ॥ ३४ ॥

---

दिद्वारा शोषमुपजनयन्तीति निदाने । अतो विकृतानां कफप्रधानानां दोषाणां निर्दिष्टपूर्वैरुपायैः निरसनेन व्याधिसमूहानुसृतो यक्ष्मा स्वयं क्षीयत इति भावः । वैरिनिषूदनेन शरीराख्ये पुरे निष्कण्टके निष्पन्ने, वैकल्यरहितैः विश्वस्तविहारैः विनयनिभृतैः भृत्यैरिव विचक्षणैरिन्द्रियैः सावहिति जीवस्य नियोगेषु निर्वर्त्यमानेषु विज्ञानशर्मप्रभृतयो निर्वृतात्मानो निभृतं जीवविनोदनपरा भवेयुरिति फलितमर्थं 'ततो नः कर्तव्यं' इत्यादिकमवशिष्टं वाक्यं निरूपयति ॥ ३३ ॥

प्राणेति । प्राणवायोः प्रतीहारत्वं अत्र विवक्ष्यते । तस्य वायोः कण्ठमुखस्थितत्वात्, तन्मूलत्वात् देहधारणस्य च तस्येह द्वारपालकत्वेन व्यवहारः । वाग्वन्नादीनां अन्तर्मार्गदायित्वं च तदधीनं भवति । "वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक् । सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते" इति सुश्रुतः ।

संमृज्येति । एता अन्तःपुरचारिकाः-अन्तःपुरे नियमिताः चेटीजनाः । शोधनीभिः-संमार्जनीभिः । संमृज्य-अवकरादीनां अपनयपूर्वकं संशोध्य । अत एव रम्येषु । चत्वराणि च वेद्यश्च चत्वरवेद्यः-प्राङ्गणवितर्दयः, तासां तलेषु-स्थलेषु । रङ्गवल्लीः-स्थलप्रसाधनचित्राणि । रचयन्ति । अनेन पद्येन आनन्तरिकेण च जीवराजस्य अधिष्ठानभूतं शरीराख्यं सामान्यं हृत्पुण्डरीकाख्यं प्रधानं च पुरं लौकिकन्यायरीत्या वर्णितम् ॥ ३४ ॥

गृह्णन् वेत्रलतां वसत्यवसरापेक्षो जरत्कञ्चुकी
राजा मामवलोकयेदिति समं वत्सेन गौस्तिष्ठति ।
वादित्रध्वनिमण्डलीकृतगरुद्बर्ही नटत्यङ्गणे
देव त्वं विजयीभवेति गुणयन्नास्ते शुकः पञ्जरे ॥ ३९ ॥

---

गृह्णन्निति । जरत्कञ्चुकी-वृद्धः सौविदल्लः । "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते" इति कञ्चुकिलक्षणम् । वेत्रलतां गृह्णन् । अवसरापेक्षः-अन्तःपुरे अवश्यकर्तव्यानां कार्याणां विषये देवीनृपादीनां आज्ञां अनवरतं प्रतीक्षन् सन् । वसति-द्वारि तिष्ठति । गौः-राजगृहाभ्यर्चिता धेनुः । वत्सेन समं-स्वकीयेन तर्णकेन सह । 'मां राजा अवलोकयेत्' इति सोत्कण्ठं नृपागमनं प्रतीक्षमाणा तिष्ठति । राज्ञा स्वहस्तदत्ततृणभक्ष्यकबलादिभिः संतर्पिता राजगृहसंवर्धनलालिता गौः सप्रमोदं प्रभोः प्रेक्षणं प्रतीक्षत इति यावत् । वादित्रस्य-ततादिचतुर्विधवाद्यसमुदायस्य, ध्वनिभिः-तत्स्वनानां आकर्णनेनेत्यर्थः ; मण्डलीकृतः गरुत्-बर्हभारः येन सः । "ततं चैवावनद्धं च घनं सुषिरमेव च । चतुर्विधं तु विज्ञेयं वादित्रं लक्षणान्वितम्" इति भरतः । ततं नाम तन्त्रीततं वीणादिकम । आनद्धं नाम चर्मादिपिनद्धं मुरजादिकम् । घनं नाम कांस्यादिनिर्मितं तालादिकम् । सुषिरं नाम शब्दपूरणोपयोगिभिर्द्वारैराचितं वंशीप्रभृतिकं च । एतत्समुदायस्यैव आतोद्यमिति च नामान्तरम् । तथाविधो बर्ही-गृहमयूरः । अङ्गणे-अन्तःपुरसन्निहिते क्वचिच्चत्वरे । नटति-वादित्रनिनादाकर्णनसंधुक्षितचित्तवृत्तिर्नृत्यति । पञ्जरे विद्यमानः शुकः । 'देव त्वं विजयीभव' इति राजानमुद्दिश्य जयशब्दम् । गुणयन्-पौनःपुन्येन समुच्चारयन् । आस्ते । संचिन्तयामीति श्लोकादारभ्य मुखसन्धेरारम्भकं बीजं नामाङ्गं संघटयन्, तदन्तरा परिषद्रञ्जनार्थं लौकिकीं रीतिमनुरुध्य एवं राजभवनवर्णनादिकमपि कविना प्रस्तुतम् ॥ ३५ ॥

(प्रविश्य)

**दौवारिकः**—(मन्त्रिणं प्रति) स्वामिन्, भवन्तं द्रष्टुं बुद्ध्या देव्या सह भद्रासनमधिवसति राजा ।

**मन्त्री**—

अतिपरिचयेऽपि राज्ञो बिभेमि सहसोपगन्तुमभ्यर्णम् ।
येनाग्नेरिव तेजः स्फुरदस्याराान्निवर्तयति ॥ ३६ ॥

(विचिन्त्य) परपक्षं प्रति प्रतिविचारणाय प्रेषितां धारणां प्रतीक्षमाण इव लक्ष्यते । भवतु तदेतदहं वक्ष्यामि ।

(ततः प्रविशति बुद्ध्या देव्या सह राजा जीवः ।)

**मन्त्री**—(उपसृत्य) विजयतां महाराजः ।

**राजा**—इतो निषीदतु भवान् । (इति मन्त्रिणे आसनं निर्दिशति ।)

**मन्त्री**—(आसने उपविश्य स्वगतम्) एष खलु —

---

अतिपरिचयेति । अतिपरिचये-पर्याप्ते पारस्परिके सत्यपि परिचये । राज्ञोऽभ्यर्णे-अन्तिकम् । सहसोपगन्तुं-नियोगानन्तरमेव यथेष्टमुपसर्तुम । बिभेमि-अननुभूतपूर्व इव सङ्कुचितमनस्को भवामि । येन-हेतुना । अस्य तेजः-आधिकारिकं असाधारणं औज्ज्वल्यम् । जीवोऽपि स्वयं नित्यनिर्मलो निरवधिकप्रभाभासुरश्च स्यात् । अग्नेरिव स्फुरत्-अनुपदं वैद्युतमिव तेजः प्रसरत् सत् । आरात् निवर्तयति-दूरात् वारयति । "आराद्दूरसमीपयोः" इत्यमरः ॥ ३६ ॥

**परपक्षमिति** । प्रतिविचारणाय-विमर्शपूर्वकं वृत्तान्तावगमाय । तदेतत्-यत् धारणया पूर्वमावेदितं तदिति यावत् । एष खल्विति राज्ञस्तादात्विकं अवस्थानप्रकारं निरूपयति ।

गण्डूषोदकशोधितेऽपि वदने ताम्बूलरक्ताधरः
स्नानापोहितचन्दनेऽपि वपुषि प्रोद्दामतत्सौरभः ।
निर्णिक्ते सिचये धृतेऽपि कनकाकल्पेन पीताम्बरः
सोऽयं सत्यपि न प्रमाद्यति सदाचारादतिप्राभवे ॥ ३७ ॥

(प्रकाशम् ।) महाराजेन प्रहिताया धारणाया मुखात् तत्रत्यः सर्ववृत्तान्तो विदित एव । सा पुनर्दुर्जनसंसर्गदोषपरिहाराय नदीं स्नातुं गता । तया च मयि संक्रामितस्तत्रत्यवृत्तान्तः ।

---

गण्डूषेति । वदने-अस्य राज्ञो मुखे । गण्डूषोदकेन-आस्यक्षालनार्थमुपयुक्तेन सलिलेन, शोधिते सत्यपि । ताम्बूलरक्ताधरः-ताम्बूलचर्वणेन रञ्जितः अधरः यस्य सः । ताम्बूलचर्वणशीलानां मुखप्रक्षालनेनाप्यधरदन्तादीनां रागो न सुलघु अपनीयते । वपुषि । सत्यपि स्नानापोहितचन्दने । प्रोद्दामं-सुनिर्भरम्, तस्य-चन्दनस्य, सौरभं-सुगन्धि यस्मिन् सः । निर्णिक्ते-सम्यक् क्षालितत्वात् धवले । सिचये-वस्त्रे । धृतेऽपि-सत्यपि वसाने । कनकाकल्पेन-ध्रियमाणेन हिरण्मयेनाभरणेन । पीतं-गौरवर्णम्, अम्बरं यस्य सः । भास्वराणां स्वर्णाभरणानां छायासंयोगतः शुद्धं धवलं अदसीयं परिधानमपि पीतवर्णविशिष्टवद्भासत इति यावत् । अतिप्राभवे-असाधारणाधिकारिकमहिम्नि । सत्यपि-विद्यमानेऽपि । सोऽयं-तत्तादृशप्रभावसंपन्न एष महाराजः । सदाचारात् । न प्रमाद्यति-नैव स्खलति । अप्रतिहतेन अधिकारप्राबल्येन संयुक्तोऽपि, सामान्याधिकारविशिष्ट इवापरः प्रमत्तः सन् न ह्येष किमप्युच्छृङ्खलं कदाप्याचरेदिति भावः । यद्यपीह जीवात्मा कथानायकस्तथापि लौकिकं व्यवहारमनुरुध्य ताम्बूलरक्ताधरत्वादिकं राज्ञो वर्ण्यत इति मन्तव्यम् ॥ ३७ ॥

**महाराजेनेति** । प्रहितायाः-परपक्षसम्बन्धिनां विषयाणां तत्त्वावगमाय रहसि प्रेषितायाः । तत्रत्यः-शत्रुवर्गसम्बन्धी । संक्रामितः-विसृष्टः । सर्वोऽपि

**राजा**—(सोत्कण्ठम्) कथमिव ।

**देवी**—अहं वि अवहिदह्मि । [अहमप्यवहितास्मि ।]

**मन्त्री**—(स्वगतम्) इयं हि देवी—

किमपि नियमिताग्रैः कुन्तलैः स्निग्धनीलैः
परिलसदपराङ्गा धारयन्ती दुकूलम् ।
धवलमुपरि भर्तुश्चामरं धूयमानं
विरमयति करेण व्यक्तमाकर्णनाय ॥ ३८ ॥

---

वृत्तान्तो मयि निवेशितोऽस्ति धारणयेत्यर्थः । सोत्कण्ठमिति, अहं वि अवहिदह्मि इति च वाक्याभ्यां उभयोरपि राजतत्पत्न्योः शात्रववृत्तान्तानां अवगमविषये विद्यमान औत्सुक्यातिरेकोऽभिव्यज्यते ।

देव्यास्तत्कालोचितामवस्थानरीतिमवलोक्य मन्त्री कौतुकाविष्टमनाः स्वात्मनि स्वभावोक्त्या निर्वर्णयति तां किमपीति । इयं हि देवीति पूर्ववाक्यमत्र संयोजनीयम् । इयं देवी इति कर्त्री । किमपि कथंचित् । नातिदृढमिति यावत् । नियमितानि वेल्लनेन संयतानि अग्राणि येषां तैः । स्नानादिभिः संस्कारानन्तरं केशभाराग्राणां आवेष्टनपूर्वकं ग्रथनं सामान्यमाचरणं कुलस्त्रीसमुदाये; यदेवात्र कविनास्ति वर्णितम् । तथा स्निग्धाः-स्नेहसंपृक्ताश्च ते नीलाश्च तैः । कुन्तलैः-कबरीभारैः । परिलसत्-सौन्दर्यमभिपोषयत्, अपराङ्ग-शरीरस्य पश्चाद्भागः यस्याः सा । दुकूलं-कौशेयम् । धारयन्ती । भर्तुः-अन्तिकस्थितस्य पत्युः । उपरि-शिरस ऊर्ध्वम् । धूयमानं-वीजमानम् । धवलं चामरम् । व्यक्तं-सुस्पष्टं यथा तथा । आकर्णनाय-मन्त्रिणा अभिधीयमानस्य परपक्षवृत्तान्तस्य श्रवणाय । करेण-स्वहस्तेन । विरमयति-निवारयति । विषयविशेषस्याकर्णनासक्ता वनिता वस्त्राञ्चलं कराभ्यां परामृशन्त्यो विषयं निभृतं निशमयेयुरिति विदितमेव बहूनाम् । अत्र चेयं देवी निभृतावस्थितापराङ्गा, दुकूलाञ्चलं अचलत् करेण धारयन्ती,

(प्रकाशम्) श्रोतव्यमिदं धारणावचनम्। यक्ष्महतकः पुरान्निष्क्रामणमेवास्माकमिच्छतीति।

**राजा**—किमत्र प्रतिविधातव्यम्।

**देवी**—(सोद्वेगम्) दाणिं किं कुम्मो। [इदानीं किं कुर्मः।]

**मन्त्री**—देवि मा भैषीः। प्रतिविधानप्रकारोऽपि धारणया विदितः।

**राजा**—कथमिव।

**मन्त्री**—(कर्णे) एवमेवम्।

**राजा**—कथमिदं धारणया निर्धारितम्।

**मन्त्री**—रसगन्धकप्रयोगमन्तरेण सपरिवारोऽहमजय्य इति यक्ष्मराजस्य हृदयं विश्वसनीयया तापसीवेषया धारणया गृहीतम्।

**देवी**—(साश्वासम्) जइ एव्वं ता कहं अह्मेहिं रसगन्धआ संपादणिज्जेत्ति।

[यद्येवं तत् कथमस्माकं रसगन्धकौ संपादनीयौ इति।]

---

श्रुतिपथावरोधमाचरच्चामरं हस्ताग्रेणापनयन्ती वृत्तान्तश्रवणे नितान्तं बद्धश्रद्धा विलोक्यत इति निर्वर्णयति मन्त्री ॥ ३८ ॥

**श्रोतव्यमिति**। धारणावचनं-धारणाया वाक्यम्; धारणासविधादधिगतो वृत्तान्त इत्यर्थः। पुरात्-जीवस्यावासनगरभूतात् शरीरात्। मा भैषीः-न भेतव्यम्। माङि लुङ्; न माङ्योग इति अडागमप्रतिषेधः। धारणया विदितः-धारणया विमृश्य निर्धारित इत्यर्थः। एवमेवं-एतादृश उपायः समुपकल्पित इति निगूढं श्रोत्रान्तिके निवेदितं मन्त्रिणा। **रसगन्धकेति**। अहमिति राजयक्ष्मा निर्दिश्यते। सपरिवारः-कुष्ठकिलासगलगण्डपाण्डुज्वरविषूचीप्रभृतीनां व्याधीनां समूहोऽस्य परिवारः; तत्सहितः। रसगन्धकयोः पृथक् संयुक्तयोर्वा यथायोगं संस्कृतयोः प्रयोगेण रोगसमूहनिरासपूर्वकं देहदृढीकरणात्मकं रसायनविधानमपि

**राजा**—शम्भोर्वीर्यं रसो नाम शर्वाण्या नाम गन्धकः ।
ताभ्यामेव प्रसन्नाभ्यां तौ ग्राह्याविति मे मतिः ॥ ३९ ॥

**देवी**—केण उण उवाएण ताणं पसादो संपादणिज्जो ।
[केन पुनरुपायेन तयोः प्रसादः संपादनीयः ।]

**मन्त्री**—उपासनयैव ।

**राजा**—युक्तमुक्तं भवता । श्रूयते हि पुरा मृकण्डुरुमापतिमुपास्य पुत्रं लेभे । तत्पुत्रोऽपि तदुपासनया मृत्युमुखान्मुक्तो दीर्घमायुरलभतेति ।

---

निष्पद्यत इति विदितमेव भिषजाम् । तथा च वैद्यके—"शुद्धः स्यात् सकलामयैकशमनो यो योगवाहो मृतः सूतः षड्गुणगन्धयुग्गदहरो वेगेन धात्वादिमुक् । वृष्यो मृत्युविनाशनो बलकरः कान्ताजनानन्दनः शार्दूलातुलसत्त्वकृत् क्रमभुजां यक्ष्मापहारी ततः" इति । यक्ष्मणां राजा-यक्ष्मराजः; रोगराट्; राजयक्ष्मेति यावत् । साश्वासं-उपात्तधैर्यं यथा तथेत्यर्थः ।

**शम्भोरिति** । रसः-पारदः । शम्भोः-शिवस्य । वीर्यं-सप्तमः शुक्राख्यो धातुः । गन्धकः-तदाख्यः खनिज उपधातुः । शर्वाण्याः-गौर्याः । वीर्यं-रजो नाम स्त्रीधातुः । तौ-रसगन्धकौ । ताभ्यां-शिवाभ्याम् । प्रसन्नाभ्यामेव । तयोः प्रसादमधिगत्यैवेत्यर्थः । ग्राह्यौ-प्राप्तुं शक्यौ । इति मे मतिः-इत्यहं अभिप्रैमि । "पारदः शिववीर्यं स्यात् दुर्गावीर्यं च गन्धकः" इति रसशास्त्रम् । पार्वतीपरमेश्वरयोः प्रसादेन तद्वीर्यभूतयो रसगन्धकयोः सेवा समुचितेति, तत्सेवया च देहसिद्धिं प्राप्तुं प्रभवति पुरुष इति च रसशास्त्रविदो वदन्ति । यथा रसरत्नसमुच्चये—"दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात्" इति । हरगौरीसृष्टिसंयोगो नाम रसगन्धकयोः संयोग एव ॥ ३९ ॥

**उपासनयेति** । ध्यानार्चनादिसेवाविधिना । मृकण्डुः-भृगुनाम्नो मुनेः पुत्रो महर्षिः । "पुरा कल्पे मुनिश्रेष्ठो मृकण्डुर्नाम विश्रुतः । भृगोः पुत्रो महाभागः सभार्यस्तप्तवांस्तपः ॥ तस्य पुत्रस्तदा जातः शिवस्यानुग्रहाद्वने ॥" इति

**मन्त्री**—सम्यगवगतं महाराजेन । यतः खल्वेषः—

पादाघातत्रुटितयमुनाभ्रातृबाह्वन्तरोद्य-
द्रक्तस्रोतस्समुपशमिताशेषशोकाश्रयाशम् ।
मार्कण्डेयं व्यतनुत यदा सर्वभूतैस्तदादि
स्तुत्यं मृत्युञ्जय इति यशः स्फारमीशः प्रपेदे ॥ ४० ॥

---

पार्वतीपतेरुपासनया मृकण्डोः पुत्रोत्पत्तिविषयः प्रतिपादितोऽस्ति मार्कण्डेयपुराणे रुद्रसर्गाध्याये । तत्पुत्रः-मार्कण्डेयः । तदुपासनया-तस्येश्वरस्योपासनया । उमापतिं प्रति कृतेन उग्रेण तपसा मार्कण्डेयो मृत्युवशमप्राप्य चिरंजीवित्वमवापेति कथा सुप्रसिद्धा । किन्तु नारसिंह्ये पुराणे महाविष्णुं प्रति मार्कण्डेयस्तपस्तप्त्वा दीर्घं जीवितं अभजदिति प्रतिपादितमस्ति । तद्यथा—"मार्कण्डेयो महाभागो बाल्यत्वे च महाद्युतिः । अथ तस्मिन् जातमात्रे आदेशी कश्चिदब्रवीत् । वर्षे हि द्वादशे पूर्णे मृत्युरस्य भविष्यति । श्रुत्वा तन्मातापितरौ दुःखितौ तौ बभूवतुः । तौ दृष्ट्वा दुःखसंपन्नौ मार्कण्डेयो महामतिः । उवाच वचनं तत्र किमर्थं दुःखमीदृशम् । अपनेष्यामि मे मृत्युं तपसा नात्र संशयः । इत्युक्त्वा तौ समाश्वास्य पितरौ वनमभ्यगात् । तत्र विष्णुं प्रतिष्ठाप्य गन्धपुष्पादिभिः क्रमात् । पूजयित्वा हरिं तत्र तपस्तेपे सुदुष्करम् । निराहारो मुनिस्तत्र वर्षमेकमतन्द्रितः । ततो यमालयात्तत्र चागता यमकिङ्कराः । पाशहस्तास्तु तं नेतुं विष्णुदूतैस्तु ते हताः ॥" इति नारसिंह्यपुराणे मार्कण्डेयमृत्युञ्जयाध्याये ॥

परमेश्वरस्य यः किल परेगिरां प्रभावस्तमेव प्रतिपादयति **पादाघातेति** । यतः खल्वेष इति पूर्ववाक्यमत्र योजनीयम् । एष खलु उमापतिरीशः । पादाघातेन त्रुटितं-विदारितम्, यमुनाभ्रातुः-यमस्य, बाह्वन्तरं-वक्षस्स्थलम्, तस्मात् उद्यता-उद्गच्छता, रक्तस्रोतसा-शोणितधारया, समुपशमितः-सम्यक् प्रशमितः, अशेषश्चासौ शोकश्चाशेषशोकः, स एव आश्रयाशः-अग्निः यस्य तम् । मृकण्डोरपत्यं पुमान्-मार्कण्डेयः, तम् । यदा व्यतनुत-यस्मिन् काले कृतवान् ।

राजा—पुरा खलु देवदानवैरमृतार्थिभिर्महोरगयोक्त्रपरिवेष्टितविकृष्यमाण-मन्दरमन्थानदण्डेन मथ्यमाने दुग्धसागरे गरलमुद्भटमुत्थितमसह-मानेषु भुवनेषु विनष्टप्रायेषु पलायनाभिमुखे चतुर्मखे विगलितौजसि विडौजसि भगवानेवैष विषमश्नन् जगदनुचकम्पे । तथाहि—

मेघाक्रान्तदिगन्तदर्शरजनीमूर्छत्तमोमेचकं
तापद्रावितदेवदानवनरं यः कालकूटं गरम् ।
जग्ध्वा जम्बिवव बालकस्त्रिभुवनत्राणं ततानाञ्जसा
तस्य द्राङ्महिमा न वाङ्मनसयोः पन्थानमारोहति ॥ ४१ ॥

---

पादाघातेन पाशहस्तं कृतान्तं पातयित्वा, मृत्युमुखात् मार्कण्डेयस्य प्राणान् पालयित्वा तस्य शोकमसावपास्यदिति यावत् । (त्रुटितयमुनाभ्रान्त इत्यपभ्रंशः पाठः ।) तदादि-तदाप्रभृतीति क्रियाविशेषणम् । सर्वभूतैः-अशेषैरपि लोकैः । मृत्युञ्जयः-जितमृत्युः इति स्तुत्यं-स्तोत्रार्हम् । स्फारं-महत् । यशः प्रपेदे । जगति अन्तकस्य विजयो नामानितरदुस्साधं कर्म । तस्य च कर्मणः सुतरां आर्तस्य भक्तस्य हेतोः साधितत्वात् अनितरसाधारणी ख्यातिरस्य मृत्युञ्जय इति शाश्वती समुत्पन्ना । अत एव महाराजेन शिवं प्रति यदुक्तं तत् सम्यगवगत्यैवा-भिहितमिति मन्त्री पद्येनानेन समर्थितवान् ॥ ४० ॥

पुरेति । महोरगः-वासुकिः, स एव योक्त्रं-बन्धनरज्जुः, तेन परिवेष्टि-तश्चासौ विकृष्यमाणश्च स तथा, मन्दरः तदाख्यः पर्वतः, स एव मन्थानदण्डः, तेन । (दण्डैरिति बहुवचनपाठे देवदानवैरित्यस्य पदमिदं विशेषणं स्यात् ।) उद्भटं-अत्युग्रम् । गरलं-काल-कूटाख्यं महाविषम् । बिडौजसि-इन्द्रे । विगलितौजसि-विहतवीर्ये सति । अनुचकम्पे-अनुकम्पया अनुजग्राह । तथाहीति तदेव समर्थयति ।

मेघाक्रान्तेति । यः-परमेश्वरः । मेघैराक्रान्ताः-कालमेघैः अभिव्याप्ताः, दिगन्ताः यस्यां सा, तथाविधा या दर्शरजनी-अमावास्याया रात्रिः, तस्यां

**मन्त्री**—किमुच्यते महिमेति। श्रूयतां तावत्। त्रिपुरविजयप्रसक्तावसक्त इव स्वयं तदर्थं कतिचित् साधनानि संपाद्य तान्यपि वितथीकृत्य स भगवान् निजमेव महिमानमभिव्यक्तवान्। तथाहि—

---

मूर्छत्-बलवदुपचयमधिगच्छत्, यत् तमः-गाढान्धकारः, तदिव मेचकं-कृष्ण-वर्णम्। तापेन-दुस्सहेन ऊष्मवेगेन, द्राविताः-उद्वेगतो धाविताः, देवदानवनराः येन तम्। तत्तादृशं कालकूटं नाम गरं-अतिकरालं गरलम्। बालकः। जम्बिव-जम्बूफलमिव। जग्ध्वा-उपभुज्य। न केवलं दुर्विषहमहाविषस्य तस्य भक्षणे भूतेशस्यानुद्वेगः, परं तु मधुरफलास्वादने बालकस्येव महती स्पृहा चासीदिति तत्प्रभावातिशयं निरूपयत्युपमानेन। अञ्जसा-विनैव विलम्बम्। अन्यथा भुवनत्रयमपि भस्मतां अध्यगमिष्यत् खलु। त्रिभुवनत्राणं-लोकत्रयसंरक्षणम्। ततान-विशिष्याकरोत्। तस्य-तत्तादृशविचित्रचरित्रसंपन्नस्य महेश्वरस्य। महिमा। वाक् च मनश्च वाङ्मनसे। अचतुरेत्यच्प्रत्ययान्तो निपातः। तयोः पन्थानं-गोचरमित्यर्थः। द्राक् नारोहति-सुलघु नाधिगच्छति। तत्प्रभाववर्णनाय न वा प्रभवति वाक्, मनो वा न मनागपि तन्निर्वर्णने निपुणं भवतीति भावः॥ ४१॥

**किमुच्यत इति**। महिमेति किं सामान्यत उच्यते। अनितरसाधारणः खल्वस्य प्रभाव इति भावः। तत्सम्बन्धिनं वृत्तान्तमेव श्रूयतामित्यादिना विवृणोति। स भगवान्-परमेश्वरः। त्रयाणां पुराणां समाहारः त्रिपुरम्; मयनिर्मितं सौवर्ण-राजत-लौहस्वरूपैः दुर्गैः परिवृतं नगरत्रयम्; तस्य विजयप्रसक्तौ-विजयाभियोगे। असक्तः-स्वयं आसक्तिरहित इव। तदर्थं-तज्जयार्थम्। साधनानि-रथाश्वादीनि समुचितानि उपकरणानि। संपाद्य। तानि वितथीकृत्य च-संविधानानि समग्रं सज्जीकृत्य तान्यन्ततो यथावदनुपयुज्यैवेत्यर्थः। निजं महिमानमेव-स्वकीयं प्रभावमेव। अभिव्यक्तवान्-प्रकटीकृतवान्। तमेव प्रभावातिशयं सदृष्टान्तं समर्थयति तथाहीति।

सूर्याचन्द्रमसौ रथाङ्गयुगलं सूतो विधाता स्वयं
रथ्याश्वा निगमाश्च यस्य रथमारूढेन भूमीमयम् ।
मेरुं धन्वविषक्तवासुकिगुणं कृत्वा शरं चाच्युतं
तिस्रस्तेन पुरः स्मितेन तु परं दग्धाः सुरद्वेषिणाम् ॥ ४२ ॥

---

सूर्येति । यस्य परमेश्वरस्य । सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ । "देवताद्वन्द्वे च" इति सूर्यशब्दस्य आनङा दीर्घत्वम् । रथाङ्गयुगलं-चक्रद्वयम् । अभूतामिति शेषः । विधाता-ब्रह्मा । स्वयं सूतः-सारथिः । अभूत् । निगमाश्च-चत्वारोऽपि वेदाः । रथ्याश्वाः-रथस्य नेतारस्तुरगाः । "रथ्यो वोढा रथस्य यः" इत्यमरः । भूमीमयं-भूम्यात्मकम् । रथं आरूढेन । भूमिमेव रथत्वेन स्वयं समुपकल्प्य तत्र स्थितेनेति यावत् । मेरुं-सुमेरुपर्वतम् । धन्वनि-धनुषि मेरुरूपे, विषक्तः-संबद्धः, वासुकिरेव गुणः-तन्नामा सर्पराज एव मौर्वी यस्मिंस्तम् । अच्युतं-विष्णुम् । शरं-बाणं च । कृत्वा-आकलय्य । कृत्वेति शब्दः मेरुमित्यादिना पूर्वेण, उत्तरेण शरमित्यादिना च काकाक्षिन्यायेन उभयत्रान्वेति । मेरुं कार्मुकत्वेत, वासुकिं तस्य मौर्वीत्वेन, अच्युतं तच्छरत्वेन च प्रकल्प्येत्यर्थः । परंतु-सत्स्वप्येवं सज्जीकृतेषु वैरिनिषूदनसमुचितेषु समरोपकरणेष्विति भावः । तेन-परमेश्वरेण । सुरद्वेषिणां-असुराणाम् । तिस्रः पुरः-त्रीणि नगराणि । स्मितेन-हासेनैव । दग्धाः-भस्मीकृताः । असदृशमहिम्नि अलौकिके सत्यपि सज्जे तावति सेनापरिच्छदे स परमेश्वरः कमलाक्ष-विद्युन्मालि-तारकाक्षाभिधान् परममायाविनस्त्रीनप्यसुरान् तदीयैस्त्रिभिः पुरैः सह हासेनैव नाशयामासेति पौराणिकी कथा। किन्तु श्रीभागवते सप्तमस्कन्धे दशमाध्याये त्रिपुरदहनकथायाः प्रकारोऽन्यथैव पठ्यते । त्रिपुरसम्बन्धिषु प्रत्यर्थियोधेषु शिवशरैः प्रध्वस्तेषु, तत्पुरस्थिते सुधापूरिते कूपे तान् मज्जयित्वा पुनरधिगतासून् प्राप्तासाधारणबलपराक्रमवतश्च कारितवान् मय इति, ते पौनःपुन्येन चानन्तरं ववृधिरेऽसुरा इति, ततश्च भग्नसङ्कल्पं विमनस्कं च स्थितं वृषभध्वजं विलोक्य भगवान्

**राजा**—एवमपरिमितान्याश्चर्यचरितानि देवस्य ।

**देवी**—किं अच्चरिअं । महेसरस्स जह जह जारिसो उपासनं करेदि तह तह तारिसं सो तं तं फलं पावेदि । [किमाश्चर्यम् । महेश्वरस्य यथा यथा यादृश उपासनं करोति तथा तथा तादृशं स तत्तत् फलं प्राप्नोति ।]

**मन्त्री**—एवमेतत् ।

**राजा**—एवमनिर्धारणीयनानास्वरूपा भगवती परमेश्वरी । परं तु भगवतो

---

विष्णुः स्वयं धेनुर्भूत्वा, ब्रह्माणं च वत्सीकृत्य, मोहयित्वा चासुरान् कूपस्थितं पीयूषमशेषमपि पीत्वा, स्वतेजसा गुप्तस्य परमेश्वरस्य त्रिपुरदहनं ईषत्करं अकरोदिति च तत्रावलोक्यते । महाभारते तु सूर्याचन्द्रमसाविति श्लोकेऽस्मित् वर्णितरीत्या सर्वेषामपि युद्धपरिकराणां सज्जीकरणानन्तरं पुराणि त्रिधा पृथक् स्थितानि पाशुपतास्त्रप्रयोगेण पशुपतिरेकीकृतवानिति, ततश्च विष्णुतेजोमयमिषुं धनुष्यारोप्य सासुरगणं त्रिपुरमनाशयदिति च कथावस्तु त्रिभिरध्यायैरस्ति वर्णितम् । (भारते-कर्णपर्वणि २९, २६, २७ अद्ध्याया दृश्यन्ताम् ।) त्रिपुरविजयचम्पूग्रन्थे केवलं त्रिपुरविजयस्य वर्णनमेतन्नाटकानुसारमेव कियता परिदृश्यते । यथा—

"कर्णाभ्यर्णनिविष्टमुष्टिसुदृढव्याकृष्टसर्पेश्वर-
ज्यानम्रामरशैलमौलिनिपतद्दिक्पालपुर्यष्टकम् ।
अव्याद्विश्वमकाण्डसंभ्रमवलत्क्रूरप्रकारानल-
ज्वालान्तःकबलीकृतासुरपुरं घोरं पुरारेः स्मितम् ॥" इति ।

यथाकथंचित् प्रमाणैरेवमादिभिः निटिलनयनेन मदनमिव, पुरत्रयं अट्टहासेनादहदीशान इति विद्यते विश्वविदिता कथा ॥ ४२ ॥

**किं अच्चरिअं इति** । यो यः परमेश्वरं यद्यद्रूपेण यद्यत्फलावाप्तय उपास्ते, तस्य तस्य तत्तद्रूपेणाविर्भूय स तत्तदभिमतफलं अनुगृह्णातीत्यस्य वाक्यस्यार्थः ।

दयारूपैवेयम् । अत एव लोकरक्षणार्था प्रवृत्तिरेतस्याः । श्रूयतां तावत्—

भक्तिप्रह्वमहेन्द्रमुख्यमखभुक्प्रारब्धभूरिस्तव-
प्रादुर्भावितनिर्भरप्रमदया कारुण्यभाजा यया ।
निद्राभङ्गमवापितेन हरिणा दीप्तौजसा घातया-
मासाते मधुकैटभावतिबलौ सा केन वा वर्ण्यते ॥ ४३ ॥

---

**एवमनिर्धारणीयेति** । परमेश्वरस्येयं स्त्री परमेश्वरी । ईश्वरस्य शक्तिरूपा तत्पत्नी शिवा दुर्गेति च व्यवह्रियमाणा । अनिर्धारणीयानि-अनिर्वचनीयानि, नानास्वरूपाणि पार्वतीदुर्गाद्यनेकविधाकृतयो यस्याः सा । परं तु-सत्स्वपि विविधेषु सन्दर्भानुरोधेनास्या रूपभेदेष्वित्यर्थः । इयं-दुर्गाख्या परमेश्वरी । भगवतः शिवस्य । दयारूपैव-मूर्तीभूता कृपैव । परमार्थतः परमेश्वरस्य दयैव नाम दुर्गाद्यात्मना दुरूहेण प्रभावेण परिणता सती सज्जनसंरक्षणार्थं जगति प्रवर्तत इति विशदयति **अतएवेत्यादिभिः** आनन्तरिकैर्विषयैः । (भगवती परमेश्वरी इति स्थाने भगवती परमेतत् इति पाठस्त्वपभ्रंशः । परमेश्वरीति पाठ एव साधुरिति विशदीभविष्यतितरामग्रे ।)

परमेश्वरप्रभावस्य या परा काष्ठा शक्तिः तस्याः, देव्याः (परमेश्वर्याः) दुर्गायाश्च भेदाभावं विभावयन्, तस्य परमेश्वरस्य प्रशंसावसरे तच्छक्तिभूतायाः परमेश्वर्या विशिष्य प्रशंसामेव प्रस्तौति **भक्तिप्रह्वेति** । भक्त्या-परमेश्वरीविषयकभक्त्या, प्रह्वाः-आनतशिरस्काः ये महेन्द्रमुख्या मखभुजः-इन्द्रप्रभृतयो देवाः, तैः य आरब्धः-प्रस्तुतः, भूरिस्तवः-अनल्पस्तुतिः, तेन प्रादुर्भावितः-विशिष्योत्तेजितः, निर्भरः-निरर्गलः, प्रमदः-प्रमोदः यस्यास्तया । अत एव कारुण्यभाजा-देवानां दुस्सहदुर्दशावलोकनेन समुद्भूतानुकम्पया । यया-परमेश्वर्या । निद्राभङ्गं-योगनिद्राया अन्तरायम् । अवापितेन-प्रापितेन । परमेश्वरीकर्तृकयोगनिद्राप्रत्यूहेनेति

यावत् । दीप्तौजसा-वीर्यतेजःप्रभावादिभिः सुतरां ऊर्जस्विना । अकस्मात् निद्रातः प्रबोधनम्, निजनाभीकमलस्थितस्य विधातुरनिष्टोत्पादनाय प्रवृत्तयोरसुरयोः अनुपदमवलोकनमिति हेतुद्वयं युगपदोजसः समुत्तेजकाय भवतीति मन्तव्यम् । हरिणा-श्रीमहाविष्णुना । अतिबलौ-लोकातीतेन दुर्दमेन बलेन समन्विवतौ । मधुकैटभौ-तदाख्यौ असुरौ । घातयामासाते-मारितौ बभूवतुः । हनधातोः कर्मणि णिच् । परमेश्वरी भगवन्तं नारायणं बोधयित्वा तद्धस्तेन मधुकैटभयोर्वधं अकारयदिति भावः । सा-तादृशप्रभावविशिष्टा परमेश्वरी । केन वा वर्ण्यते-केन पुरुषेण तस्या गुणग्रामस्य समग्रतया वर्णनमाचरितुं शक्येतेत्यर्थः । [महाप्रलये जगति निमज्जति महासलिले, शेषतल्पं अधिशयानः कल्पान्ते भगवान् विष्णुरासीद्योगनिद्रामनुभवन् । तदानीं भगवतो नाभिकमलात् सुमहतः समुत्पन्नो विश्वसृष्टिविधानाय विधाता । अत्रान्तरे च भगवतः कर्णयोर्मलात् मधुकैटभाविति महाबलौ महाशरीरौ दुर्दान्तावसुरौ उदभवताम् । तौ अनुपदमेव नाभिकमलनिषण्णं चतुर्मुखं हन्तुं बभूवतुरुद्यतौ । अतिचकितेन चतुर्मुखेन स्तुतः प्रबोधितश्च विष्णुर्योगनिद्रां विहाय समुत्थितः सन्, विश्वातीतवीर्यबलशरीराकृतिविशिष्टाभ्यां ताभ्यां नियुद्धं नैरन्तर्येण कृत्वा चान्ततस्तौ जंघोपरि समुत्थाप्य विभिद्य शिरो व्यापादायामास । इति मार्कण्डेयपुराणादिषु कथितास्ति मधुकैटभयोः संबन्धिनी कथारीतिः । स्थलान्तरीयः कथाप्रकारस्तु—भगवति नारायणे कल्पान्ते योगनिद्रां सत्यनुभवति तत्कर्णविवराभ्यां विनिर्गतं मलं मधुकैटभाख्यासुरद्वयत्वेन पर्यणमत् । तौ च महाशरीरौ असुरौ ब्रह्माणं भगवन्नाभिकमलस्थितं दृष्ट्वा तज्जिघांसया प्रद्रुतौ । तदा चतुर्मुखः सुतरां भीतो भगवन्मायारूपिणीं ईश्वरीं तुष्टाव । सा च स्वशक्तिरूपयोगनिद्रायां गाढावस्थितं केशवं प्राबोधयत् । प्रबुद्धः केशवः कमलयोनिवधोद्यतौ विलोक्यासुरौ, सुचिरायोधनानन्तरं स्वजङ्घयोर्निपात्य तौ निजघान । इति (कालिकापुराणे ६१ अध्यायो दृश्यताम् ।) "एवं स्तुता तदा देवी तामसी तत्र वेधसा । विष्णोः प्रबोधनार्थाय निहन्तुं मधुकैटभौ । नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः । निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः । समुत्थाय ततस्ताभ्यां युयुधे भगवान् हरिः ॥" इति च मार्कण्डेये देवीमाहात्म्ये] ॥ ४३ ॥

मन्त्री—राजन् तथ्यमेवाह भवान् । अस्याः किल भक्तवात्सल्यमनन्य-तुल्यं पश्यामि ।

दूरोद्धूतविषाणकोटिघटनाचूर्णीकृताम्भोधरं
प्रेङ्खत्पादचतुष्टयीखुरपुटप्रक्षुण्णपृथ्वीतलम् ।
कल्पान्ताभ्रकठोरकण्ठनिनदत्रस्तत्रिलोकीजनं
विक्रान्तं महिषासुरं युधि पुरा चिच्छेद शूलेन या ॥ ४४ ॥

---

अस्याः किलेति । शिष्टजनानिष्टमाचरतां दुष्टानां निग्रहार्थं, तद्द्वारा शिष्टानां भक्तजनानां अनुग्रहार्थं च प्रवृत्तिरखिलापि परमेश्वर्या इति प्रपञ्चयति भक्तवात्सल्यमित्यादिभिः । अनितरसाधारणं भक्तजनेषु विहितं वात्सल्यमेव दुष्टजननिषूदनोपायास्तास्ता आकृतीः परिगृहीतुं तामुत्तेजयतीति प्रतिपादयन्त्यानन्तरिका विषयाः ।

दूरोद्धूतेति । या-परमेश्वरी दुर्गानाम्नी । दूरात्-दवीयस्यूर्ध्वं मेघमण्डलं यावदित्यर्थः ; उद्धूतयोः-दर्पोद्रेकेण प्रचलितयोः, विषाणकोट्योः-शृङ्गाग्रयोः, घटनेन-बलादाघट्टनेन, चूर्णीकृताः-शकलीकृताः, अम्भोधराः येन तम् । अनेन असुरस्यास्य महोन्नतदेहत्वमभिहितं भवति । प्रेङ्खन्तः-भृशं धून्वन्तः, पादाः तेषां चतुष्टयी, चतुर्णां समाहार इत्यर्थे चतुश्शब्दात् 'सङ्ख्याया अवयवे तयप्' इति तयप् ; ततो टिड्ढाणञित्यादिना ङीप् । पादचतुष्टय्याः खुरपुटैः प्रक्षुण्णं-क्षोभितं चूर्णीकृतं वा, भूतलं येन तम् । एतेनास्य लोकातीतं उद्धतबलवत्त्वं सूचितम् । कल्पान्ताभ्रस्य-संवर्तमेघस्येव, कठोरः-परुषः, यः कण्ठनिनदः-कण्ठनिर्घोषः, तेन त्रस्तः, त्रिलोकीजनः येन तम् । अनेनास्य पराक्रमो लोकभयावहा प्रवृत्तिश्च प्रत्यपादि । तथा विक्रान्तं-सकलजगत्संक्षोभकर्मणि समुद्युक्तम् । महिषासुरं-तन्नामानं दुर्दमं घोराकारं दानवम् । पुरा । युधि-आयोधने । शूलेन-स्वकीयेन त्रिशूलाख्येनायुधेन । चिच्छेद-व्यापादितवती ।

**देवी**—सा खु परमेसरी बहुविधदेवआसत्तिरूआवअवा पअण्डपरक्कमखण्डिअचण्डमुण्डधुम्मलोअणरत्तबीजप्पहुदिदाणवमण्डला सुणीअदि चण्डिआणामधेएत्ति ।

[सा खलु परमेश्वरी बहुविधदेवताशक्तिरूपावयवा प्रचण्डपराक्रमखण्डितचण्डमुण्डधूम्रलोचनरक्तबीजप्रभृतिदानवमण्डला श्रूयते चण्डिकानामधेयेति ।]

---

आकारेण, आत्मशक्त्या, विक्रमेण च जगत्यनितरावस्कन्दनीयस्य दुर्दान्तस्य दानवस्यारुन्तुदवृत्तेः संहारं भक्तजनपालनैकतानचित्तवृत्तिः एका स्त्री निर्वर्तितवतीति तस्याः प्रभावातिशयप्रकारः केन वा निरवशेषं निर्वर्णयितुं पार्यतेति स्वविस्मयं व्यञ्जयति मन्त्री । [पुरा रम्भासुरो नाम दानवः पुत्रप्राप्तिमाकाङ्क्षन् परमेश्वरं प्रति महत्तपस्तेपे । स च प्रसन्नः सन् वरमस्मै प्रादात् । अस्य चासुरस्य सुषमभूयिष्ठायां त्रिहायण्यां महाबलिष्ठायां महिष्यां समुत्पन्नः सर्वजनभयानकः सुतो महिषासुर इति । सकलभुवनप्रक्षोभाय प्रवृत्तं तमवलोक्य कात्यायनो नाम महर्षिः स्त्रीहस्तेन तस्य हननं स्यादिति शशाप । शिष्टरक्षणदुष्टशिक्षणव्रतनिरता परमेश्वरी कालिकादेवी दुर्दान्तासुरसंहारानुरूपं भीमं रूपं दधाना तं महिषासुरं आहवे शूलेनाहनत् । इति पौराणिकी कथा । (दृश्यतां कालिकापुराणे ९९ तमोऽध्यायः ।) भगवतोऽग्नेः प्रसादात् रम्भासुरो महाशूरं महिषासुरं पुत्रमवापेति च पुराणान्तरम् । (दृश्यतां वामनपुराणस्य १७ अध्यायः ।)] ॥ ४४ ॥

सा खु इति । बहुविधा या देवतानां शक्तयः, तद्रूपा अवयवा यस्याः सा । काली-चण्डिका-पार्वती-दुर्गा-कात्यायनीत्यादिभिः नामविशेषैर्निर्दिश्यमाना विविधा या देवताः, तासां प्रतिनियताभिर्मूर्ताभिः शक्तिभिरस्या अवयवाः सन्त्यभिनिर्वर्तिता इति भावः । तथा च—"देव्या यया ततमिदं जगदात्मशक्त्या निश्शेषदेवगणशक्तिसमूहमूर्त्या" इति मार्कण्डेयपुराणे, ८४-२० । प्रचण्डेन पराक्रमेण खण्डिताः-विशसिताः, चण्ड-मुण्ड-धूम्रलोचन-रक्तबीजप्रभृतयो दानवाः-असुराः, तेषां मण्डलं-यूथं यया सा । चण्डिकेति नामधेयं यस्याः सा ।

राजा—तदपि ज्ञायते । यथा खलु—

शस्त्रच्छिन्नसुरारिसैन्यपिशितग्रासग्रहप्रीतिम-
त्कङ्कक्रोष्टरि सङ्गरे सुरवधूमुक्तप्रसूने स्थितम् ।
देव्या शुम्भनिशुम्भदानववधप्रक्लिन्नचित्तस्तुव-
द्रुद्रेन्द्राग्निकृतान्तनैर्ऋतजलाधीशानिलश्रीदया ॥ ४९ ॥

---

इति खलु । सा परमेश्वरी । श्रूयते-सर्वत्र प्रथितेत्यर्थः । [चण्डः, मुण्डः, धूम्रलोचनः, रक्तबीज इति दानवाश्चत्वारोऽपि शुम्भनिशुम्भाख्ययोः असुराधिपयोः सेनान्यः । कदाचित् भगवत्या हिमालयस्थितायाः परमेश्वर्याः सुषमाविशेषं महिमातिशयादिकं च शुम्भः चण्डस्य मुखाच्छ्रुत्वा, तस्याः सत्वरं बलादानयनाय चण्डादीन् आदिदेश । तेषु च त्रिषु तस्या आक्रमणाय प्रवृत्तेषु, देवी परं संक्रुद्ध्य, स्वललाटतलात् चामुण्डीनाम्नीं स्वांशभूतां करालाकृतिं मूर्तिं उत्पाद्य, तया तान् व्यापादयत् । तेषु तुरीयस्तावत् रक्तादुत्पन्नो रक्तबीज इति व्यवहृतः कालिकया निहतेषु क्रूरतमेषु दानवेष्वन्यतमः । चामुण्ड्याः शस्त्रेण छिद्यमानात् तस्य दैत्यस्य शरीरात् स्रुता रक्तबिन्दवस्तावन्तोऽपि तादृशैरेव बलपराक्रमैर्विशिष्टा असुराः समभवन् । अपूर्वां तदसुरशोणितस्य दैत्यबृन्दत्वेन विस्मयावहां परिणतिरीतिमवलोक्य, अन्ततः शोणितधारास्तच्छरीरान्निस्सरन्तीः समस्ताश्च सुमहद्भयादाय स्ववक्त्रे दीर्घतरतरलजिह्वया पायंपायं अद्भुतरूपस्यासुरस्य शरीरं निश्शेषितशोणितं अपास्तसत्त्वं च विधाय तं प्रमथितवती प्रमथाधिपवल्लभा । इति मार्कण्डेयपुराणे देवीमाहात्म्यप्रकरणस्थितः कथासन्दर्भः ।] **तदपीति** । तत्-तथा सुप्रथितं तस्याः पराक्रमवृत्तमपि । ज्ञायते-विदितचरमेवेति भावः ।

**शस्त्रच्छिन्नेति** । शस्त्रैः छिन्नस्य, सुरारिसैन्यस्य-दैत्यसेनायाः, पिशितानां-मांसानां, ग्रासग्रहे-कबलभक्षणे, प्रीतिमन्तः-स्पृहावन्तः, कङ्काः-लोहपृष्ठाख्यगृध्रजातिपक्षिणः, क्रोष्टारः-शृगालाश्च यस्मिंस्तस्मिन् । अत एव सुरव-

मन्त्री—राजन्, एवं भक्तवत्सलयोरनादिदम्पत्योरुपासनया सम्पादनीया सिद्धिः। किञ्च—

---

धूभिः-देवाङ्गनाभिः, मुक्तानि विसृष्टानि, प्रसूनानि यस्मिन् तस्मिन्। तादृशे सङ्गरे-युद्धे। देव्या-परमेश्वर्या दुर्गया। स्थितं-देववैरिणां सज्जनद्रुहां दुर्दमानां दानवानां निश्शेषतो निषूदनेन समुपनतया जयश्रिया च, ततो हेतोः प्रमुदिताभिः सुरवधूभिः स्वात्मानं परितो विसृष्टया पुष्पवृष्ट्या च शोभमानया मध्येरणाङ्गणं अवस्थितमिति भावः। स्थितमिति भावे क्तः। किंभूतया देव्या। शुम्भनिशुम्भाख्ययोः दानवयोः वधेन-दुर्गाकृतेन, प्रक्लिन्नं-प्रमोदार्द्रम्, चित्तं येषां ते, अत एव स्तुवन्तः-सभक्त्युन्मेषं सप्रहर्षं च स्तुतिमाचरन्तः, रुद्रः, इन्द्रः, अग्निः, कृतान्तः-यमः, नैर्ऋतः, जलाधीशः-वरुणः, अनिलः-वायुः, श्रीदः-कुबेरः यां सा, तया। अष्टभिरपि दिक्पालकैरेतैः स्वानिष्टनिवारणजनितकृतज्ञतानुसन्धानपूर्वकं अभिष्टुतयेति यावत्। [शुम्भो निशुम्भश्चेति हिरण्यकशिपोर्वंशे समुत्पन्नौ प्रह्लादस्य पौत्रौ उदग्रबलदृप्तौ द्वावसुरौ। पुष्कराख्ये पुण्यदेशे चिराय महत्तपस्तप्त्वा ततो ब्रह्मणः प्रसादेन सकलदेवातिरिक्तं बलमवाप्य दुस्सहममराणां इतरेषां च क्लेशमापादयन्तौ अकुतोभयं तौ व्यचरताम्। दुर्दशामिमां देवानां अपरेषां च सतां समुपनतामवलोक्य दुर्विषहरोषाविष्टमानसा दुर्गा स्वयं आयोधने शूलेन तावहनत्। इति पौराणिकी कथा। दृश्यतां वामनपुराणे ५६ अध्यायः।] ॥४९॥

एवमिति। भक्तवत्सलयोः-भक्तजनानां अनिष्टापादकदुष्टजननिग्रहपूर्वकं हार्दानुग्रहपरयोरिति भावः। न केवलं ईश्वरः, किन्तु परमेश्वरी च सर्वदा तादृग्गुणविशिष्टा स्वभर्त्रा सह सकलभक्तजनसंरक्षणैकदीक्षितेति सूचयितुम, एतच्च निर्हेतुकं वात्सल्यं अनादिकालादनुवर्तते तयोरिति निर्देष्टुं च अनादिदम्पत्योरिति सूचितम्। तयोरुपासनया न केवलं सुराः, अपि तु असुराश्च मनोरथसिद्धिं तत्तत्काले यतः प्रापुः, वयमपि ततः स्वाभीष्टां रससिद्धिं यत्सत्यं सम्पादयितुं प्रभवाम इति प्रतिपाद्यते उपासनयेत्यादिभिः।

सामर्थ्यसिध्यै रसगन्धकानां संयोजनार्थं सकलौषधीश्च ।
सम्पादयामोऽथ तदाश्रितस्य सर्वौषधीशस्य विधोः प्रसादात् ॥ ४६ ॥

देवी—कदमं उण देसं पविसिअ उवासणिज्जा एदे । [कतमं पुनर्देशं प्रविश्य उपासनीया एते ।]

---

अनादिदम्पत्योरनुग्रहप्राप्त्या कृतकृत्यता यथा सम्भाव्यते तथा रसौषध्यादीनां वीर्यवतां सम्पादनाय च कस्यचनान्यस्यापि प्रसादेनावश्यं भाव्यमिति किंचेति सामर्थ्येत्यादिभिश्च उच्यते । अथ-उमामहेश्वरयोः अनुग्रहसंपादनानन्तरम् । रसगन्धकानां-रसाश्च गन्धकाश्च रसगन्धकाः । रसेन्द्र-सूत-पारद-मिश्रक-रसाख्याः पञ्च रसाः; अथवा अभ्रक-वैक्रान्तादयोऽष्टौ महारसाः, खटिकाम्लसारशुकपिच्छशुकतुण्डाख्याश्चतुर्विधा गन्धकाश्च रसगन्धकानामिति बहुवचननिर्देशात् सूचिता भवन्ति । तेषां सामर्थ्यसिध्यै-वीर्यसिध्यर्थम् । संयोजनार्थं-तेषां परस्परं सम्यक् योगार्थं च । तदाश्रितस्य-तौ अनादिदम्पती आश्रितौ येन तस्य; शिवयोः शिरोभूषणत्वेन तावाश्रित्य स्थितस्येति यावत् । सर्वासां ओषधीनां ईशस्य । विधोः-चन्द्रस्य । प्रसादात्-अनुग्रहात् । सकलौषधीः-रसादीनां वीर्याभिवर्धनसमर्थाः सर्वाश्चापूर्वा ओषधीः । सम्पादयामः-यत्नेन आसादयामः । सर्वौषधीनां साक्षादधीश्वरत्वेनानुसन्धीयमानस्य चन्द्रमसश्चोपासनया रससिद्धिसम्पादनोद्यमः सर्वथाप्यविकलः कर्तव्य इत्यनेन, यक्ष्मपक्षस्य निश्शेषनिषूदनविषये स्वात्मनो नैरन्तर्येण विद्यमानं औत्सुक्यं ऊर्जस्वित्वं च जीवराजेन तन्मन्त्रिणा च सम्यगेवेवमालोचितं भवति ॥ ४६ ॥

कदममिति । बाह्यान्तरेन्द्रियाणां कथंचिदपि क्षोभमनुत्पादयता च, सुतरां विविक्तेन च, साधुजनैकनिवेशसमुचितेन च खलु सन्निवेशेन भवितव्यमुपास्तये नियतमिष्टदेवतानाम् । अत इयं कतमः स उद्दिष्टो विशिष्टो देश इत्यौत्सुक्येन विचिकित्सा । एते-इश्वरः, परमेश्वरी, ताभ्यां सहोषधीशश्च ।

**मन्त्री**—पुण्डरीकपुरं प्रविश्य ।

**देवी**—कहं तत्थ पवेसो । [कथं तत्र प्रवेशः ।]

**मन्त्री**—देवि,

शक्यं तत् खलु पुण्डरीकनगरं गन्तुं मनोद्वारत-
स्तत्रास्ते शिवभक्तिरित्यनुपमा कापि प्रमोदास्पदम् ।

---

उपासनीयाः-स्तुत्यर्चनप्रणिधानादिभिः सेव्याः । **पुण्डरीकपुरमिति** । अनेन हृत्पुण्डरीकं प्रस्तूयते । देहाख्यस्य पुरस्य मध्ये विद्यमानं परमात्मनोऽधिष्ठानभूतं पुण्डरीकाकारम् आन्तरम् अवयवमेव मन्त्री प्रस्तौति समुचितं स्थलम् अभीष्ट-देवतोपसनायै । तस्यावयवस्य दहराख्यं अन्तरवकाशं विविक्तं वीतकल्मषं ईश्वरस्य निवासभूतं जीवः समाश्रित्य विदध्याद्विधिपूर्वकं उपासनमिति तैत्तरीयोपनिषदप्युपदिशति । यथा "दहं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसँस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम् ।" इति । एवमेव "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन् अन्तरमाकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति दहरोपासनायां छान्दोग्येऽपि । ब्रह्मपुरमिति पुण्डरीकपुरमिति च हृत्पुण्डरीकमेव प्रतिपाद्यते । तच्च "हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्" इति धन्वन्तरिणाभिहितं हृदयकोश एव । "पुण्डरीकप्रतीकाशं हृदयं स्यादधोमुखम्" इति हृदयकोशस्य उपनिषत्सिद्धं पुण्डरीकसदृशत्वं सुप्रसिद्धमिति ।

**शक्यमिति** । हे देवि । तत्-पूर्वोक्तं पुण्डरीकनगरम् । मनोद्वारतः-मनोमार्गेण । "अतीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं भवति" इति चरकादिभिः, "अनिरूप्यमदृश्यं च ज्ञानभेदं मनः स्मृतम्" इति वेदान्तिभिश्च यदन्तः-करणमुच्यते तत् एकाग्रत्वेनाश्रित्य तेन नीयमानेन हृदयाख्यं ब्रह्मपुरम् । गन्तुं-प्रवेष्टुम् । यथा शक्यं-साध्यं भवति । तत्र-हृदयाख्ये पुण्डरीकपुरे । अनुपमा-

दृष्ट्वा तां प्रथमं तथा परिचयस्तस्या विधेयस्त्वया
चत्वारोऽपि भवन्ति ते करतलं प्राप्ताः पुमर्था यथा ॥ ४७ ॥

**राजा**—(सोत्कण्ठम्)

तामद्वैतां स्वरूपेण भक्तिं हृदयरञ्जनीम् ।
स्वीकृत्याहं भविष्यामि प्राप्ताखिलमनोरथः ॥ ४८ ॥

---

अनितरसाधारणप्रभावविशिष्टा । कापि-अनिर्वचनीयस्वरूपशक्तिसमन्विता । शिव-भक्तिरिति-शिवभक्तिनाम्ना विख्यातविभवा । प्रमोदास्पदं-परमानन्दनिधानम् । आस्ते । हृदयं हि भगवति परमेश्वरे भक्तिभरपरवशं सत् सर्वदा तस्मिन्नेव लीनमिति भावः । उक्तं च शैवे ब्रह्माण्डपुराणे च—"स्वराडाख्यस्य देवस्य हृदयाम्भोज-मध्यमे । उमासहायो भगवान् नीलकण्ठस्त्रिलोचनः । यश्च नृत्यत्यसौ नित्यं परमानन्दचिद्घनः" इति । शिवभक्तिरपि नाटकपात्रेष्वन्यतमत्वेनात्र परिगण्यते । तां-शिवभक्तिम् । दृष्ट्वा । प्रथमं-पुण्डरीकपुरप्रवेशानन्तरमेव । तस्याः परिचयः-शिवभक्त्याः सम्बन्धजन्यः स्नेहः । त्वया तथा विधेयः-तेन प्रकारेण कार्यः । कथमिति चेत् । यथा चत्वारोऽपि-धर्मार्थकाममोक्षाख्याः । पुमर्थाः-पुरुषार्थाः । ते-तव । करतलम् । प्राप्ता भवन्ति-यथा त्वया सर्वेऽपि पुरुषार्थाः सर्वथाप्यधि-गताः स्युः । तथेति पूर्वेणान्वयः । एकाग्रचित्ततया विहितः शिवभक्तिपरिचयः सर्वेषामपि पुमर्थानां वितरणदक्ष इति भावः । आमयान् अशेषानप्यपास्य वीतकण्टकं विधाय देहं तद्द्वारा वर्गत्रयमपि निराबाधमिहानुभोक्तुम्, ततो ज्ञानसाहाय्येन परत्र चतुर्थं पुमर्थं अवाप्य ब्रह्मनिर्वाणमधिगन्तुं च खलु महान् जीवस्येह समुद्यमः । अतो हेतोरुपदिश्यते जीवेन स्वदेव्यै बुद्धयै शिवभक्त्यावर्जनाय, तद्द्वारा चतुर्वर्गसंपत्तिसमधिगमाय च सर्वथा कृतावधानया तया भवितव्यमिति ॥ ४७ ॥

**तामिति** । तां-पूर्वोक्तमहिमशालिनीम् । स्वरूपेण-प्रकृत्या; स्वभावत इति यावत् । अद्वैतां-अनुपमाम्; विशेषणमेतदर्थद्योतकमेवास्या अतीते पद्येऽपि 'शिव-

देवी—(सासूयमिव स्वगतम्।) कहं सव्वपुरुसत्थप्पसवित्तआ सेत्ति सुणिअ सुदघणाघणगज्जिदो मोरो व्विअ उक्कण्ठिदो अज्जउत्तो। होदु। ता

---

भक्तिरित्यनुपमा' इत्यस्त्युपपादितम्। हृदयं रञ्जयतीति हृदयरञ्जनी, ताम्; गुणतश्च मनः सुतरामाह्लादयन्तीमित्यर्थः। भक्तिं-परमेश्वरविषयिकीं अनितरसाधारणां प्रीतिम्; शिवभक्तिमिति यावत्। "न हीष्टदैवात् परमस्ति किञ्चित्" इत्येवंरीत्या बुद्धिपूर्विका या प्रीतिपरवशा चित्तवृत्तिः सा भक्तिरिति श्रीविष्णुपुराणे (१-२०-१८१६)। "अथातो भक्तिजिज्ञासा। सा परानुरक्तिरीश्वरे" इति शाण्डिल्यसूत्रं च। अहम्। स्वीकृत्य-स्वायत्तीकृत्य। प्राप्ताखिलमनोरथः—अखिलानामपि पुमर्थानां सिद्ध्या संपन्नाभीष्टः। भविष्यामि। पुण्डरीकपुरमधिष्ठाय निरतिशयप्रभावां हृदयावर्जनशीलां शिवभक्तिमात्मना शरणमधिगत्य, ततः समधिगतपरमेश्वरानुग्रहः सन् नीरोगतां च देहस्य तेन साधयित्वा ततो वर्गत्रयानुभवरूपं ऐहिकं श्रेयश्च, तदनुग्रहापतितकैवल्यप्राप्त्या शाश्वतमामुष्मिकं निश्रेयसानन्दं चाहमनुभविष्यामीति जीवराजस्य निर्व्यलीकं वचनम्। अन्यत्र—रूपतोऽनुपमलावण्यवतीं गुणतश्च मनोहरां मानिनीं भक्तिनाम्नीं अपरां कान्तात्वेन परिगृह्य परां कोटिं प्रमोदस्याहमनुभवेयमिति लाक्षणिकोऽप्यर्थः अभिव्यज्यते; येन किल देवी बुद्धिरसूयान्विता भवति। विषयतत्त्वमिदं वाक्यैरानन्तरिकैर्विशदीभविष्यति। तामद्वैतामित्यनेन श्लोकेन भगवत्साक्षात्कारपूर्वकस्याद्वितीयात्मसाक्षात्कारस्य संपादयित्री ततश्च ब्रह्मानन्दैक हेतुभूता च भवति सा भक्तिरिति कविः स्वाभिमतं अद्वैततत्त्वं च सूचयति। इतःपरं विस्तरिष्यमाणायाः कथाया बीजस्यात्रोपपादित्वात् कथाबीजं नाम मुखसन्धेरङ्गेष्वन्यतमं निर्दिष्टं भवति। "स्वल्पोद्दिष्टः कार्यहेतुर्बीजं विस्तार्यनेकधा" इति तल्लक्षणम्॥ ४८॥

सासूयमिवेति। युवत्यन्तरासक्तमिव नायकं सम्भाव्य सासूयत्वं देव्या निर्वर्ण्यते। सर्वपुरुषार्थप्रसवित्रिका-चतुर्णामपि पुमर्थानां संपादयित्री। सा-शिवभक्तिः। श्रुतम्, घनाघनस्य-वर्षोन्मुखमेघस्य, गर्जितं-स्तनितं येन सः।

मए वि सह गन्तव्वम् । (प्रकाशम्) अज्जउत्त, अहं वि आगमिस्सम् ।

[कथं सर्वपुरुषार्थप्रसवित्रिका सेति श्रुत्वा श्रुतघनाघनगर्जितो मयूर इवोत्कण्ठित आर्यपुत्रः । भवतु । तन्मयापि सह गन्तव्यम् । आर्यपुत्र, अहमप्यागमिष्यामि ।]

**राजा**—(स्वगतम्) कथमनयाप्यागन्तव्यम् । (विचिन्त्य) भवतु । (प्रकाशम्) अयि भद्रे, भक्तिपराधीनं साम्बमुपास्यावामभिलषितमर्थं साधयावः ।

(मन्त्रिणं प्रति)

राज्यं त्वयि समारोप्य योग्ये सर्वाङ्गसंहितम् ।
देव्या सह शिवं साम्बमुपास्तुं यामि तत्पुरम् ॥ ४९ ॥

---

"वर्षुकाब्दे घनाघनः" इत्यमरः । उत्कण्ठितः-अतिस्पृहासक्तचित्तः । मयापि सह गन्त यमित्यस्य हेतुः भर्तुर्मनोवृत्तिविषये संशयालुत्वमेव । उपनिषद्देव्या सह नैरन्तर्येण राज्ञो विवेकस्य संबन्धे समुपनते तत्पत्न्या मतेरपि एवमेव सेर्ष्यत्वादिकं वर्ण्यते प्रबोधचन्द्रोदयेऽपि । यथा—"प्रिये, सेर्ष्यं प्रायेण योषितां भवति हृदयम्" इति । "मानिन्याश्चिरविप्रयोगजनितासूयाकुलाया भवेच्छान्त्यादेरनुकूलनादुपनिषद्देव्या मया सङ्गमः" इत्यादयश्च । अभिलषितार्थस्य साधनविषये भक्तिपराधीनत्वं प्रधानं निदानं भवति । तस्याः सपदि समुदितशङ्कानिवारणार्थम् उभाभ्यामप्यावाभ्यां शिवयोरुपासनाय गन्तव्यमिति तस्यै स्पष्टीकर्तुं साधयाव इति द्विवचनान्तः प्रयोगः ।

**राज्यमिति** । सर्वाङ्गैः-अशेषराज्याङ्गैः, संहितं-संयुक्तम् । "स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते" इति सप्ताङ्गविशिष्टं राज्यमिति कामन्दकीये । तादृशं सम्पन्नं राज्यम् । त्वयि-मन्त्रिणि । कीदृशे, योग्ये-राज्यतन्त्रधुरीणे । समारोप्य-निक्षिप्य; त्वदधीनं कृत्वेति यावत् । देव्या-धर्मपत्न्या सह । साम्बं-उमासमन्वितम् । शिवम् । उपास्तुं-सेवितुम् । तत्-पूर्वनिर्दिष्टं पुण्डरीकाख्यम् । पुरम् । यामि । पुरमिति

**मन्त्री**—यथा रोचते देवस्य ।

(इति निष्क्रान्ताः सर्वे ।)

। इति प्रथमोऽङ्कः ।

---

पूर्वोक्तं पुण्डरीकाख्यं नगरम्, लिङ्गशरीरं वा निर्दिश्यते । सर्वाङ्गसंहितं-करचरणादिबाह्यावयवैः हृद्वस्तिमस्तिष्कादिभिराभ्यन्तरैरवयवैश्च संयुक्तं देहाख्यं जीवराजस्य राज्यं विज्ञानाभिधस्य विचक्षणस्य मन्त्रिणो वशे स्थापयित्वा स्वयं निर्वृतमना एकान्ततो निदिध्यासनाय प्रवर्तते जीव इत्यन्यो गुम्भितोऽर्थश्चात्रानुसन्धेयः ॥ ४९ ॥

**यथेति** । देवस्य-प्रभोः । यथा रोचते तथा क्रियतामिति भावः । **प्रथमोऽङ्क इति** । अङ्कशब्दश्चिह्नवाची । नटैः नायकादीनां तादात्म्यं अङ्क्यत इत्यङ्कः । अङ्कलक्षणं चैवमुक्तम्—"प्रत्यक्षनेतृचरितो बीजबिन्दुसमन्वितः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः । एकाहे वैकरात्रे वा चरित्रं यत्र वर्ण्यते । प्रयुक्तैः पञ्चषैः पात्रैस्तेषामन्ते विनिर्गमः ॥" इति ।

इति वैद्यरत्न पण्डित दुरैस्वाम्यय्यङ्गार्महोदयेन, आयुर्वेदभूषणेन आयुर्वेदाचार्येण मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायां

**प्रथमोऽङ्कः ।**

# द्वितीयोऽङ्कः

(ततः प्रविशति चेटः कासः ।)

कासः—अहं खलु स्वमन्त्रिहतकोपदिष्टं किमपि रहस्यं शृण्वन् जीवो नाम प्रतिराजः स्वस्मिन् किमपि चेष्टितुमन्तर्मुखस्तिष्ठतीति चारमुखादवगतवता संभ्रान्तेन महाराजेन यक्ष्मणा किमयं वृत्तान्तः श्रुतस्त्वया न वेति युवराजं पाण्डुं पृष्ट्वागच्छेति प्रेषितोऽस्मि । अतस्त्वरान्वितो युवराजसमीपं गच्छामि । अहो महाराजस्य युवराजे महती प्रीतिः । यतः—

यद्यद्ज्ञातं स्वयं तत्तद्युवराजोऽपि वेत्ति चेत् ।
तदा राज्याधिकारेऽस्य शक्तिः स्यादिति मन्यते ॥ १ ॥

---

प्रथमाङ्के साङ्गं मुखसन्धिं निरूप्य प्रतिमुखसन्धिं द्वितीयाङ्के प्रदर्शयिष्यन् प्रवेशकं नाम सन्ध्यन्तरालं प्रतिपादयति । बिन्दुप्रयत्नयोः संबन्धः प्रतिमुखसन्धिरिति तस्य संक्षिप्तं लक्षणम् । यदवान्तरकार्येण प्रधानकार्यविच्छेदे स्यादविच्छेदकारणं स बिन्दुः । "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" इति तल्लक्षणम् । "चत्वारोऽपि भवन्ति ते करतलं प्राप्ताः पुमर्थाः" इत्यादिभिः जीवराजस्य मनोरथाधिगमे विद्यमानस्य विस्रम्भातिशयरूपस्य बीजस्य प्रथमाङ्कोपक्षिप्तस्य यक्ष्मप्रभृतिभिः प्रतिपन्थिभिरवगम्यमानत्वेन किञ्चिल्लक्ष्यस्य, "साधि-

तोऽपि स किं कुर्याद्रसः पथ्यक्रमं विना। जिह्वाचापलमुद्भाव्य स एव ध्वंसयिष्यते'' इत्यादिभिः सन्दिग्धावस्थायां समावेशितस्य तस्य दृश्यादृश्यतया च प्रस्तूयमानत्वात् प्रतिमुखसन्धिरेष इति लक्षणसमन्वयः। प्रवेशकलक्षणं पश्चात् प्रतिपाद्यते।

**ततः प्रविशतीति**। कासो नाम— "प्राणो ह्युदानानुगतः प्रदुष्टः संभिन्नकांस्यस्वनतुल्यघोषः। निरेति वक्त्रात् सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः" इति कासस्वरूपम्। यक्ष्मपक्षे निर्दिश्यमानेषु पात्रेषु कासाख्यो रोगश्चान्यतमः। उपेक्षिते कासे स एव कालेन क्षयत्वेन परिणमतीति विचार्य कासो यक्ष्मणश्चेटत्वेन प्रथमं परिकल्पितः। "पञ्च कासाः स्मृताः श्लेष्मवातपित्तक्षतक्षयैः। क्षयायोपेक्षिताः सर्वे" इति निदाने। इह दूतकृत्यं नाम उपसन्धिः। यथोक्तम्—"प्रश्नो दूतश्च लेख्यं च नेपथ्योक्तिस्तथैव च। आकाशभाषणं चेति विज्ञेया उपसन्धयः" इति। कासश्चात्र राजयक्ष्मणो दूतत्वेन प्रविशति। स्वमन्त्रिहतकेन-विज्ञानशर्मणेति यावत्; उपदिष्टम्; स्वशत्रुपक्षीयः स इति कृत्वा साक्रोशं तं हतक इत्यधिक्षिपति। स्वस्मिन्-राजयक्ष्मणि। किमपि-यत्किञ्चिदनिष्टमित्यर्थः। अन्तर्मुखस्तिष्ठति-बाह्यविषयेभ्यः संनिरुद्धसकलेन्द्रियः पुण्डरीकपुराभिमुखं स्थित इत्यर्थः। "निशमयन् प्रापदन्तर्मुखत्वम्।" "पुण्डरीकपुरे मन्त्रिप्रेरितः परमेश्वरम्। आराद्धुं गतवान् राजा मनोद्वारेण तिष्ठति" इत्यादयो वक्ष्यमाणा विषया अमुमेवार्थं स्पष्टीकुर्वन्ति। बहिरङ्गतया किमप्यकुर्वन् सर्वमपि गूढमन्तरङ्गतया प्रतिपक्षनिषूदनोपायं चिन्तयस्तिष्ठतीत्यपि भावः। संभ्रान्तेनभयाकुलितचेतसा। अयं वृत्तान्तः-"स्वस्मिन् किमपि चेष्टितुमन्तर्मुखस्तिष्ठति" इत्यादिप्रकारो वार्ताविषयः। त्वया-पाण्डुनेति यावत्। (त्वरान्वित इति स्थाने त्वरन् इति पाठान्तरम्।) अहो इति प्रीतिविशेषस्याभिनन्दनपरा प्रशंसोक्तिः।

युवराजे यक्ष्मणो विद्यमानं विश्वासं प्रीत्यतिशयं च निरूपयति यद्यदिति। यद्यत्-राज्यतन्त्रनिर्वहणसंबन्धि रहस्यमिति यावत्। स्वयं-आत्मना यक्ष्मराजेनेति यावत्। तत्तत्-तत्तत् सर्वमपि रहस्यम्। युवराजः-युवा चासौ राजा, यूनां वा राजा। सख्यहोराज्ञ इति षः; सोऽपि। वेत्ति चेत्। तदा। अस्य-युवराजस्य। राज्याधिकारे-राज्यनियामककार्ये। शक्तिः-वैचक्षण्यम्। स्यादिति मन्यते-स्वनृप-

(पार्श्वतो विलोक्य) कथमियं छर्दिः । यैषा—

प्रवालमृदुलाधरप्रकरचारुबिम्बप्रभा
हृताहृतविलोचनाञ्जनविशेषदृश्यानना ।
मयूरपदकस्फुरत्कठिनतुङ्गपीनस्तनी
तरङ्गयति कौतुकं तरुणिमश्रिया चेतसि ॥ २ ॥

---

तिरभिप्रैतीति भावः । राज्यस्याभ्युदयम्, भर्तृदारकाख्यस्य युवराजस्य राज्यनिर्वहणधुरन्धरत्वं च समीहमानो राजा राज्यतन्त्रसंबन्धि सकलमपि तत्त्वं रहस्यं च पदे पदे तस्मा उपदिशन् राजकार्येष्वशेषेष्वपि तं बद्धश्रद्धं जागरूकं निपुणधिषणं च कर्तुमुद्युङ्क्त इति सहजमिदं राजतन्त्रकृत्यं लोके । राज्यनिर्वहणकर्मणि राज्ञां अमात्य इव युवराजश्च न केवलं प्रकल्पते महते साहाय्याय परं तु राज्यधुरैव तदानीं भविष्यति च काले यत्सत्यं तदधीना भविष्यति । "युवराजोऽमात्यगणो भुजावेतौ महीभुजः । तावेव नयने कर्णौ दक्षसव्यौ क्रमात् स्मृतौ । तन्द्रां विनाखिलं राजकृत्यं कर्तुं क्षमं सदा । कल्पयेद्युवराजं स्वं धर्मपत्नीसुतं नृपः ॥" इति शुक्रनीतिः ॥ १ ॥

छर्दिरिति । प्रच्छर्दिका वमिरिति च सा व्यवह्रियते । कासे विवर्धमाने छर्दिः स्वयं तमनुधावतीति वयं अनुभवतः पश्यामः । अतश्छर्दिः कासस्य कामिनीत्वेन अत्राभिधीयते ।

छर्दि सामान्यतो लौकिकस्त्रीत्वेन विभाव्य निर्वर्णयति प्रवालमृदुलेति । यैषा-छर्दिः । छर्दिः इकारान्ते सकारान्ते च भवति । छर्दिनाम्नी स्त्री । प्रवालवत्-आम्रादीनां किसलयवत्, मृदुलः अतिसुकुमारः योऽधरः तस्मात्, प्रकीर्यत इति प्रकरा-विकीर्यमाणा ; प्रसर्पमाणेति यावत् । (प्रकरेति स्थाने प्रसरेति प्रकटेति च पाठान्तरद्वयं क्वचिद्दृश्यते ।) चारुबिम्बप्रभा-बिम्बफलस्येव मनोहरकान्तिप्रसरा यस्यां सा । (बिन्दुप्रभेति पाठो न सुगमः ।) हृताहृतं-लुप्तालुप्तम् । यत् विलो-

(स्मरणमभिनीय)

श्लथजलधरजालश्लिष्टशीतांशुबिम्बान्
अभिनवमुकुराविर्भूतमुक्ताकदम्बान् ।
दरतरलितचक्रद्वन्द्वखेलन्मृणालान्
विवशहृदयमस्या विभ्रमानन्वभूवम् ॥ ३ ॥

---

चनाञ्जनं-नेत्रयोरलङ्कारार्थमर्पितमञ्जनम्, तेन विशेषतया दृश्यं-मनोहरतरतयावलोकनीयम्, आननं यस्याः सा। तथा मयूरपदस्येव पदकं-अङ्कनम्; नखाघातचिह्नमित्यर्थः; तेन स्फुरती-मनोहरतया दृश्यमाने, कठिने-दृढे, तुङ्गे-पुरतः समुन्नते, पीने-पीवरे, स्तने यस्याः सा। कामिभिः कामिनीनां स्तनेषु सविलासं विधीयमानानां मयूरपदकादिनखक्षतानां प्रकाराः शब्दमालायां एवं सन्ति सूचिताः। "तथावकेरकेली च नखाघाते तु मण्डनम्। मयूरपदकं व्याघ्रनखकोत्पलपत्रके" इति। आम्रकिसलय-बिम्बफलादिवत् मञ्जुलरक्तवर्णविशिष्टेनाधरपुटेन भासमाना, लोचनार्पिताञ्जनस्य लुप्तालुप्ततया किञ्चित् पूर्वतोऽपि सुषमामधिकतरां उद्वहन्ती, काठिन्यपीनत्वादिस्वाभाविकैस्तारुण्यगुणैः कृत्रिमैर्वल्लभकरकृतैः मनोहरैः मयूरपदकादिभिश्च शृङ्गारचिह्नैः समन्विताभ्यां पयोधराभ्यां च विलसति कामिनीयं छर्दिरिति यावत्। अतः पूर्वोक्तया तरुणिमश्रिया-यौवनवयसः समुचितया समृद्ध्या देहकान्त्येति यावत्। चेतसि। कौतुकं-कौतूहलम्। तरङ्गयति-पौनःपुन्येन वर्धयति। तरुण्या अस्या यौवनसंपत् स्वकीयं चेतः चित्तौत्सुक्यस्योत्तेजनपूर्वकं परवशमातनोतीति भावः ॥ २ ॥

अवलोकितपूर्वा सेयमनुभूतचरा च, न त्वभिनवा कामिनीति साभिज्ञानं पुनर्वर्णयति श्लथजलधरेति। श्लथानां-समन्ततोऽवकीर्णानाम्, जलधराणां-जलपूर्णमेघानाम्। वारिपूर्णानां नीरदानामेव नीलकुन्तलसादृश्यं संभवति। जालेन; श्लिष्टं-अभिव्याप्तं व्यवहितमिति यावत्, शीतांशुबिम्बं-चन्द्रबिम्बं येषु तान्। विरलविरलैर्नीलनीरदच्छदैरितस्ततः ईषदाच्छादितस्येन्दुबिम्बस्य शो-

(सभयम्) तदियं मामवलोकयति चेदिदानीं विभ्रममूल्यमनुयुञ्जाना निरुन्धीत । ततो गमनविघ्नः स्यात् । (इत्युत्तरीयपटेन मस्तकमवगुण्ठयन् कटिं बध्वा त्वरितं गच्छति ।)

---

भायाः, नीलकुन्तलाश्लिष्टस्य तद्वनितामुखमण्डलस्य शोभायाश्च न मात्रयापि विद्यते विसंवाद इति गर्भितोऽर्थः । तथा अभिनवश्चासौ मुकुरश्चाभिनवमुकुरः-अतिस्वच्छ-दर्पणः, तस्मिन् आविर्भूतानि समुद्भूतानि, मुक्ताकदम्बानि-मौक्तिकगुच्छाः येषु तान् । अतिविमले दर्पणतले सम्यगर्पितैः मुक्ताजालकैः सह औपम्यं निर्मले तस्या निटिलतले निर्गतानां परिक्लेशजनितप्रस्वेदबिन्दुसन्ततीनां इह कविना संपादितम् । दरतरलितेन-ईषत्प्रकम्पितेन, चक्रद्वन्द्वेन-चक्रवाकयुग्मेन सह, खेलत्-संक्रीडत्, आलोड्यमानमिति यावत्; मृणालं-बिसकाण्डं येषु तान् । सोत्कण्ठं खेलतश्चक्रवाकमिथुनस्य मध्ये तदुपरि वा प्रेङ्खता पाण्डुरेण मृणालदण्डेन साजात्यं संयोगसमयसंक्षुभितस्य वक्षोजद्वयस्य मध्ये तदुपरि वा विलुठतो विमलस्य मुक्ताहारस्य परिकल्पितमनेन । तादृशान् । अस्याः-छर्द्याः । विभ्रमान्-निधुवनक्रीडाविलासान् । विवशहृदयं-क्रीडाविषयस्य सर्वात्मना स्वायत्तीभूतमानसं यथा तथा । अन्वभूवं-निर्विष्टवानस्मि । कासाख्येन कामुकेन ससंभ्रमं क्रीडाविभ्रमे समुपक्रान्ते छर्दिनाम्न्या युवत्याः केशपाशैः शिथिलैर्वदनमाच्छादितमभितः, तद्धेतुकपरिश्रम-प्रवृत्तैः स्वेदजलबिन्दुभिर्ललाटतटस्समन्तादभिव्याप्तः, रतिसंभ्रमसंक्षुब्धवक्षोज-द्वयस्याभितस्तारो मौक्तिकहारो घूर्णमानश्चासीदित्यभिप्रेतस्य विषयस्य निगरण-पूर्वकं उपमानभूतान् विषयान् इहोपपादयति सचमत्कारं सहृदयः कविः । अतश्चायं रूपकातिशयोक्तिर्नामालङ्कारः । क्षुद्रपात्रस्वभावानुरोधेन निर्वर्णनमसभ्यविषयप्रकट-नात्मकं कृतमिति विभावनीयम् ॥ ३ ॥

**सभयमिति** । अनन्तरं वक्ष्यमाणेन विषयेण भयस्य कारणमभिहितं भवति । तत्-विवशहृदयमस्या विभ्रमाणामनुभूतत्वाद्धेतोः । विभ्रममूल्यं-रतिविलसितस्य समुचितं भरणम् । अनुयुञ्जाना-आपृच्छन्ती । निरुन्धीत-सनिर्बन्धं

(प्रविश्य)

**छर्दिः**—अए सठ, रत्तिम्मि मुत्ताफलं परिपणीकदुअ पुरुसाइदं मए कारविअ दाणिं मं पेक्खअ ओगुण्ठितसीसो बद्धकटी कुदो पलाएसि। (इति कासं हस्ते गृह्णाति।)

[अये शठ, रतौ मुक्ताफलं परिपणीकृत्य पुरुषायितं मया कारयित्वा इदानीं मां प्रेक्ष्यावगुण्ठितशीर्षो बद्धकटिः कुतः पलायसे।]

**कासः**—मुञ्च मुञ्च। (इति हस्तं धुनोति।)

**छर्दिः**—(दृढं हस्तमवलम्ब्य) हदास, मह पडिण्णादं दाऊण गच्छेहि।

[हताश, मम प्रतिज्ञातं दत्वा गच्छ।]

**कासः**—हञ्जे, यावदागत्य दास्यामि।

**छर्दिः**—कुदो आगमिअ। [कुत आगत्य।]

**कासः**—धिङ्मूर्खे, नायमवसरः। पश्चात् कथयिष्यामि।

---

गमनान्निवारयेत्। (विभ्रममूल्यमनुपयुज्य मां निरुन्धीत इत्यसाधुः पाठः।) (मस्तकमवकुण्ठयन् अन्यतो गच्छतीति पाठान्तरम्।) **प्रविश्येति**। अकस्मात् कासस्य पुरतः समागत्य स्थित्वेति भावः। अये शठ-रे विप्रलम्भक। परिपणीकृत्य-देयद्रव्यत्वेन प्रतिज्ञायेत्यर्थः। बद्धकटिः-कृतपरिकरबन्धः सन्; वेगात् धावनोन्मुखः पुरुषो वसनमुपर्याकृष्य दृढं कच्छबन्धनं विदधतीति रीतिरियं लोके। पलायसे-विभ्रममूल्यं प्रतिज्ञातं अप्रदायैव चोरवद्धावसीति यावत्।

**दृढमिति**। परां कोटिमधिगतं स्वातन्त्र्यं अत्युत्कटमौद्धत्यं च स्त्रियाः सूचयति दृढहस्तावलम्बनव्यापार एषः। हताशेति दौर्जन्यज्ञापकपरं अधिक्षेपसूचकं सम्बोधनम्। हञ्जेति चेट्याः चेटीसदृशाया वा स्त्रियः सम्बोधनवाचकः

**छर्दिः**—जइ दाणिं ण कहेसि अहं वि ण मुञ्चेमि । [यदिदानीं न कथयसि अहमपि न मुञ्चामि ।]

**कासः**—तर्हि गृहाण मुक्ताफलस्य प्रतिनिधिमिमामूर्मिकाम् । (इत्यङ्गुलीयकं विमुच्य प्रयच्छति ।)

**छर्दिः**—इदं होदु । कुदो आगमिअ त्ति कहेहि । [इदं भवतु । कुत आगत्येति कथय ।]

**कासः**—किं मम वधमिच्छसि । यतः—

कार्यं राज्ञां मन्त्रिभिर्मन्त्रितं यत्
सर्वेषां तत् सर्वथा गोपनीयम् ।
येऽभिव्यञ्जन्त्येतदुद्यत्प्रमादाः
शीर्षच्छेद्यांस्तन्वते तान्नरेन्द्राः ॥ ४ ॥

---

शब्दः । "हंडे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति" इत्यमरः । यावदागत्य-प्रतिनिवर्तनानन्तरमेवेत्यर्थः; यावदिति अवधिसूचकमव्ययम् । "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः । कुतः-कस्मात् प्रदेशात् । नाय-मवसरः-नैष समुचितः समयः । ऊर्मिकां-अङ्गुलीयकम् । (तर्हि गृहाण; मुक्ताफलस्य प्रतिनिधिरियमूर्मिका भवतु इति पाठान्तरम् ।) इदं भवतु-अङ्गुलीय-कमेतदङ्गीक्रियत इति यावत् । किन्तु न तावता तृप्तिर्मे, परं तु तव गत्वा प्रतिनिवर्तनं कस्मात् प्रदेशादिति ज्ञातुमिच्छामीति निर्बध्नाति कासं कुत आगत्य इत्यनेन । किं मम वधमिच्छसि-त्वदनुयोगस्य यदुत्तरं दीयते तत् मत्प्राणघातायैव प्रसज्येतेत्यर्थः ।

कुतस्तद्वधकारणं भवतीत्येतदेव विशदयति कार्यमिति । मन्त्रिभिः । यत् मन्त्रितं-सुदीर्घमालोच्य रहसि निर्णीतम् । राज्ञां कार्यं-राजकीयं गूढं कर्म । तत् ।

छर्दिः—जह तह वा होदु । एदं दाव कहेहि । [यथा तथा वा भवतु । इदं तावत् कथय ।]

कासः—(स्वगतम्) अहो दास्याः स्नेहपरिपाको यः परमनर्थाय संपद्यते । तथाहि ।

स्त्रियः स्वार्थपराः प्रायः परदुःखं न जानते ।
अपृष्टव्यं यदप्राक्षीत् गृहिणी केकयाधिपम् ॥ ९ ॥

---

सर्वथा-सर्वप्रकारेणापि । सर्वेषां-अशेषाणामपि; प्रियतमसुहृदां वा सर्वविस्रम्भपात्रस्य वा कलत्रस्यापीति यावत् । गोपनीयं-यथा किञ्चिदपि भेदोपजापादिभिर्न रहस्यभङ्गः स्यात् तथा रक्षणीयमिति यावत् । ये-पुमांसः । उद्यत्प्रमादाः-अनवधानताविष्टचित्ताः । एतत्-गूढं राजकार्यम् । अभिव्यञ्जन्ति-प्रकाशयन्ति । तान् । शीर्षच्छेद्यान्-शिरश्छेदार्हान् । नरेन्द्राः-राजानः । तन्वते-विदधति । कथञ्चित् प्रमादवशात् संभवतो मन्त्रभेदस्यापि शिरश्छेदो दण्ड इत्युक्ते, किमुत स्वेच्छया कृतस्येति सूचयत्युद्यत्प्रमाद इति प्रयोगः ॥ ४ ॥

अहो इति विस्मये । स्नेहपरिपाकः-प्रणयस्य पचेलिमं फलम् । परं अनर्थाय-अतिमहतेऽनिष्टाय । जघन्यजनपरिचयो जीवितसंशयावधिकां विपदं आपादयतीति भावः ।

पूर्ववाक्योक्तमेव भावं सदृष्टान्तं दृढयति स्त्रिय इत्यनेन । स्त्रियः । प्रायः । स्वार्थपराः-आत्माभिलाषपूरणैकपरायणाः । अत एव परदुःखम । न जानते-नैव परामृशन्ति । यदिति हेत्वर्थे । गृहिणी गृहस्वामिनी, धर्मपत्नीत्यर्थः; न तु छर्दिरिव या काचिद्दासी । तथाविधापि, केकयाधिपं-केकयराज्यस्य राजानम्; कैकेय्याः पितरमिति यावत् । अपृष्टव्यं-प्रष्टुमनर्हं विषयम् । अप्राक्षीत्-सनिर्बन्धमपृच्छत् । स्वार्थपरायणाः स्त्रियो गृहिणीशब्दार्हा अपि स्वात्मभिरनुयुज्यमानस्य

(प्रकाशम्) राजकौलीनमेतदिति न कथयामि । मुञ्च मुञ्च । (इति त्वरयति ।)

**छर्दिः**—मा भयाहि तुमं । जं मञ्जूसा खलु अहं राजकज्जाणं । अदो ण प्पआसेमि । [मा बिभेहि त्वम् । यत् मञ्जूषा खल्वहं राजकार्याणाम् । अतो न प्रकाशयामि ।]

**कासः**—(विहस्य) छर्दिका खलु त्वं प्रकृत्या । तत् कुतो न प्रकाशयसि ।

**छर्दिः**—(विहस्य) भसणसीलस्स कुक्कुरस्स विअ तुह जाआ खु अहम् । होदु । एदं कहेहि पत्थुदम् । [भषणशीलस्य कुक्कुरस्येव तव जाया खल्वहम् । भवतु । एतत् कथय प्रस्तुतम् ।]

---

विषयस्य परेषां सार्थरूपं अनर्थरूपं वा परिणाममकिञ्चित्करं मन्वानाः स्वेच्छानुरोधं पुरुषान् निर्बध्नन्तीति प्रायः प्रकृतिसिद्ध एव स्वभावस्तासामिति भावः । [पुरा खलु वरप्रसादादवगतसकलप्राणिभाषणतया पर्यङ्कपर्यन्तपरिसरत्पिपीलिकालापे कृतहासं कैकेय्याः पितरं हसनकारणं पृष्ट्वा, तद्विवरणं स्वभर्तुर्मरणकारणं भवेदिति विदित्वापि भूयो निर्बन्धात् कुपितेन केकयाधिपेन तद्गृहिणी कैकेय्या जननी सुतरामवज्ञातेति रामायणकथा । अयोध्याकाण्डे पञ्चत्रिंशे सर्गे ।] ॥ ९ ॥

**राजकौलीनमिति** राजगृहकृत्यमित्यर्थः । राजगृहे मन्त्रभेदं मया क्रियमाणं यः कोऽपि सुलघु जानीयात्, राजा च स्वयं चारमुखेन वा ज्ञास्यति । अतो महाननर्थः संभवेत् । इति विचिन्त्य न कथयामि । अथवा, राजकौलीनं-राजद्रोहरूपं निन्दनम् । मन्त्रभेदनं राजनिन्दाकारणं स्यादिति भावः । **मञ्जूषेति** । राजकार्याणां मञ्जूषा-राजकृत्याख्यानां अनर्घवस्तूनां पेटिकेव गोप्यस्थलीयमिति यावत् । **छर्दिकेति** । छर्दिस्तावत् प्रकृत्या सर्वमपि अन्तस्स्थितं बहिर्वामयति; अतो विषयमान्तरमप्रकटयन्त्या कथं त्वया स्थातुं शक्येतेति पृच्छति **कासः** ।

**कासः**—(स्वगतम्) इयं राजकार्यकथननिर्बन्धान्न मुञ्चति माम्। का गतिः। (प्रकाशम्) हञ्जे, कथयामि, शृणु तावत्।

**छर्दिः**—ओहिदम्हि। [अवहितास्मि।]

**कासः**—मया कटकप्रवेशः कर्तव्यो युवराजस्य पाण्डोर्दर्शनाय।

**छर्दिः**—ता किं विचारीअदि। अम्हकेरभडक्कन्ते सुगमो सत्तुणो पुरे मग्गो तुज्झ णभम्मि सान्दणक्खत्ते इन्दुणो व्विअ।

[तत् किं विचार्यते। अस्मदीयभटाक्रान्ते सुगमः शत्रोः पुरे मार्गस्तव नभसि सान्द्रनक्षत्रे इन्दोरिव।]

**कासः**—त्वं पुरोपरोधमात्रं जानासि। तत एवं ब्रवीषि।

**छर्दिः**—किं अण्णं वि तहिं कडए पउत्तं जं मए ण जाणीअदि।

[किमन्यदपि तस्मिन् कटके प्रवृत्तं यन्मया न ज्ञायते।]

---

स्वभावत एवातिगूढमन्तस्स्थितस्य सकलस्यापि वस्तुनो बलात् प्रकृत्यैव बहिष्करणशीलायां त्वयि न कथंचिदपि विस्रम्भस्यावकाश इति भावः। **भसणेति**। भषणं-बुक्कनं शीलं यस्य तस्य। कुक्कुरस्य-उन्मत्तशुनकस्येव। स्थितस्येति शेषः। नीचपात्रसदृशमिदं ग्राम्यमपभाषणम्। तव जाया-त्वत्पत्नी। त्वमपि शुनकवत् कसनवेगेनासकृच्छब्दायमानो जोषंभावमसहमानः सघोषं प्रकाशयस्यात्मस्थितं विषयम्। अतस्तादृशस्य तव जायायाः कथमन्यथाभाव इति सोल्लुण्ठनमिदमुत्तरम्। प्रस्तुतं-प्रकृतविषयम्।

**मयेति**। कटकप्रवेशः-नगरप्रवेशः; सेनानिवेशस्थलप्रवेशो वा। **ता किमिति**। किं विचार्यते-किमर्थमालोच्यते। (ता कुदो विचारो—तस्मात् कुतो विचार इति च पाठः।) शत्रोः पुरे-जीवस्य राजधान्याम्; शरीर इति यावत्। किंभूते पुरे; अस्मदीयभटाक्रान्ते-राजयक्ष्मणो भटैः श्वासगुल्माती-

**कासः**—श्रूयताम्—

> अस्मत्सैन्यैर्निरोधं कृतमगणयता स्वे पुरे सूपदिष्टं
> जीवोऽमात्येन योगं स किल निशमयन् प्रापदन्तर्मुखत्वम् ।
> इत्यस्माकं निशम्य प्रभुरतिविशदं चारवक्त्रात् कुमारं
> गत्वा पृच्छ त्वयेदं विदितमथ न वेत्याकुलः प्राहिणोन्माम् ॥६॥

---

सारादिभिरवष्टब्धे । मार्गः-द्वारम् ; प्रवेश इति यावत् । सुगमः-अयत्नसाध्यः । सान्द्रनक्षत्रे-तारागणैरुज्ज्वलैः स्वयूथ्यैः सर्वतः समभिव्याप्ते ; न तु जलधरपटलैराच्छादिते । नभसि-वियन्मण्डले । इन्दोरिव । एवं श्वासादिभिः स्वयूथ्यैराक्रान्ते शरीराख्ये पुरे कासस्य प्रवेशविषये कोऽपि न भवेत् प्रत्यूह इति भावः । **त्वमिति** । पुरोपरोधमात्रं-केवलं स्वयूथकृतनगराक्रमणमेव । नातः परं किमपि त्वं जानासि । ततो हेतोरेव त्वमेवं ब्रवीषि । (तत एवं ब्रवीमीति न समीचीनः पाठः ।)

कटके यद्व्यतिकरान्तरं निर्वृत्तं तद्विवृणोति **अस्मत्सैन्यैरिति** । श्रूयतां-यत् त्वया नाधिगतं वृत्तान्तान्तरं तदुच्यते निभृतमाकर्ण्यताम् । अस्मत्सैन्यैः-यक्ष्मपक्षीयैः सैनिकैः । कृतं निरोधं-आक्रमणम् । अगणयता-सावज्ञमुपेक्षितवता । अमात्येन-विज्ञानशर्माख्येन स्वमन्त्रिणा । सूपदिष्टं-सम्यगवबोधितम् । योगं-निदिध्यासनाख्यं मनोनियमनोपायम् ; अभियोगप्रकारं च ; शत्रुनिरसनोपयोगं प्रयोगमिति यावत् । सः जीवः । किलेति संभावनायाम् । निशमयन्-शृण्वन् । स्वे पुरे-शरीराख्ये नगरे ; हृत्पुण्डरीकाख्ये वा पुरे । अन्तर्मुखत्वं-बाह्यविषयेभ्यो निखिलकरणानां निश्शेषनिरोधपूर्वकं अन्तःकरणस्य पुण्डरीकपुराभिमुख्येन प्रवृत्तिमत्त्वम् । प्रापत्-अध्यगच्छत् । इति-एवं रीत्या । अस्माकं प्रभुः-अस्मदीयो राजा यक्ष्मा । चारवक्त्रात्-चारस्य मुखात् । अतिविशदं-निस्संशयं यथा तथा । निशम्य-श्रुत्वा । त्वया-कुमारेणेति यावत् । इदं-वृत्तम् । विदितं अथवा न

**छर्दिः**—जुवराएण पाण्डुणा विइदं ण वेत्ति णत्थि संदेहो । जेण एदं एव्व सुणिअ सअलसामन्तचक्केण सह सिद्धसेणिओ रहस्सागारम्मि णिद्दाभङ्गकसाइदलोअणो चिन्तापज्जाउलो जुवराओ चिट्ठदि । णाह, पञ्चा वि तुह वअस्सा सासा सेवातप्परा तह ज्जेव्व तत्थ वट्टन्दि । तुए वि तत्थ गच्छीअदु ।

[युवराजेन पाण्डुना विदितं न वेति नास्ति सन्देहः । येनैतदेव श्रुत्वा सकलसामन्तचक्रेण सह सिद्धसैनिको रहस्यागारे निद्राभङ्गकषायितलोचनः चिन्तापर्याकुलो युवराजस्तिष्ठति । नाथ, पञ्चापि तव वयस्याः श्वासाः सेवातत्परास्तथैव तत्र वर्तन्ते । त्वयापि तत्र गम्यताम् ।]

**कासः**—कथमिदं ज्ञातं त्वया ।

---

विदितम् । इति गत्वा-कुमारसविधं प्राप्य । कुमारं-पाण्डुमित्यर्थः । पृच्छ-विचारय । इति माम् । आकुलः-संभ्रान्तचित्तः सन् । प्राहिणोत्-पाण्डुसविधं प्रेषितवान् । समर्थस्य सचिवस्योपदेशानुरोधेन जीवराजादृतं प्रयोगबलं प्रसमीक्षितवतामस्माकं अस्मत्सैन्यकृतः पुरनिरोधः प्रायः परनिषूदनविषये स्यादकिञ्चित्कर इति कासश्छर्दिमवबोधयति ॥ ६ ॥

जुवराएण इति । विदितं नवेति नास्ति सन्देहः सम्यग्विदितमेवेत्यर्थः । येन-हेतुना । एतत्-योगेन जीवोऽन्तर्मुखस्तिष्ठतीति वृत्तमेव । समन्ताद्भवाः सामन्ताः-स्वस्याधीना राजानः, तेषां चक्रेण-व्यूहेन सह । सिद्धसैनिकः-सज्जीकृतसैन्यः । रहस्यागारे-वैरिजनदुर्लक्ष्ये क्वचिद्गृहे । चिन्तापर्याकुलः-विज्ञानशर्मणा समुपदिष्टस्य विदग्धराजनीतिप्रयोगात्मकस्य योगस्यावलम्बेन स्वयूथवधार्थं जीवकृतस्य गूढमन्त्रबलस्यानुसन्धानभीत्या जनितो यश्चित्तक्षोभस्तेन सुतरां विह्वल इत्यर्थः । अत एव, निद्राभङ्गकषायितलोचनः-निद्राभावादारक्तनयनः । त्वयापि तत्र गम्यतां-तवापि तत्र प्रवेशो निर्निरोध इत्यर्थः । पञ्च श्वासा अपि-श्वासरोगपञ्चकमपि । "महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा । भिद्यते स महा-

**छर्दिः**—तुह पुव्वगिहिणीए कण्ठकण्डूए परिदेवणमुहेण देइए विसूचीए संणिहाणे सव्वं राअकज्जं णिवेदिदम् । तहिं संणिहिदथम्भन्तरिदाए मए सुदं ।

[तव पूर्वगृहिण्या कण्ठकण्डूत्या परिदेवनमुखेन देव्या विशूचिकायाः संनिधाने सर्वं राजकार्यं निवेदितम । तत्र संनिहितस्तम्भान्तरितया मया श्रुतम् ।]

**कासः**—कुतः कीदृशं च परिदेवनं तस्याः ।

**छर्दिः**—जं तुए मं कामअन्तेण पुव्वगिहिणीए ताए पणअभङ्गो किदो तेण कादव्वं परिदेवणं खु ताए । तह खु कण्ठकण्डू देवीए कहिद-

---

व्याधिः श्वास एको विशेषतः" इति श्वासरोगस्य पञ्चत्वं निदाने। "पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः" इति कासस्यापि पञ्चत्वं प्रसिद्धम् । वयस्याः-उत्पत्तिस्थानहेतूपशयसङ्ख्यादिभिः कासेन सह श्वासस्य सुतरां समावस्थासद्भावात् कासस्य श्वासेन सह प्रणयित्वं प्रसज्यते । सेवातत्पराः-युवराजस्य परिचर्यायां कृतादराः । पुव्वगिहिणीए इति । पूर्वगृहिणी-प्रथमजाया; कासस्य पूर्वरूपावस्थायां कण्ठे शूकपूर्णत्वं कण्डूश्च प्रकृत्या प्रादुर्भवति । "पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता । कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते" इति तत्र निदानम् । कासस्य सम्यक् परिणतस्यानन्तरमेव दोषः च्छर्दिरूपेण कण्ठाद्बहिरायाति । अतः कण्ठकण्डूत्याः पूर्वपत्नीत्वम्, छर्देर्द्वितीयपत्नीत्वं च संघटितमिति ज्ञातव्यम् । परिदेवनमुखेन-विलपनद्वारा । संनिहितस्तम्भान्तरितया-समीपस्थितस्थूणावृतशरीरया ।

कुत इति । कुतः परिदेवनं-किं कारणं विलपनस्येत्यर्थः । कीदृशं च-परिदेवनप्रकारश्च किमात्मकः । पूर्वपरिगृहीतामात्मानं सर्वथा विस्मृत्य स्वनायकः

वदी, जं किल भट्टिणि, एवं मह दुज्जादं पण्डुगिहिणीए णिवेदिदुं गदम्हि । सा उण कालन्तरे एदं होदु त्ति जह तह मह अस्सुप्पमज्जणं किदवदी । तं जह—

[यत् त्वया मां कामयमानेन पूर्वगृहिण्यास्तस्याः प्रणयभङ्गः कृतस्तेन कर्तव्यं परिदेवनं खलु तया । तथा खलु कण्ठकण्डूर्देव्यै कथितवती, यत्किल—भट्टिनि, एवं मम दुर्जातं पाण्डुगृहिण्यै निवेदितुं गतास्मि । सा पुनः कालान्तरे एतत् भवत्विति यथा तथा ममाश्रुप्रमार्जनं कृतवती । तद्यथा—]

---

कान्तामपरां कामयमानः प्रणयभङ्गमाचरतीत्यन्वक्षमवेक्षन्ती का वा मानिनी परिभवमसहमाना परिदेवनं नाचरेदिति तटस्थवृत्तिमाश्रित्य प्रकटयति नीतिं जं तुए ममिति वाक्येन छर्दिः । इदं च पञ्चमाङ्के शाकुन्तले कालिदासकृतं कमनीयं वक्ष्यमाणं वर्णनमेकं स्मारयति—

"अहिणवमहुलोलुवो तुमं तह परिचुंबिअ चूअमंजरिम् ।
कमलवसदिमेत्तणिव्वुदो महुअर विम्हरिदोसि णं कहम् ॥"
[अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥]

कण्ठकण्डूः-तव कासस्य पूर्वपत्नी । देव्यै-यक्ष्मपत्न्यै विषूच्यै इत्यर्थः । तथा-वक्ष्यमाणरीत्या । कथितवती । भट्टिनि-राज्ञि । ममैतद्दुर्जातं-मदीयामिमां दुर्दशाम् । पाण्डुगृहिण्यै-कामलायै । एतत् कालान्तरे भवतु-अपरस्मिन् समुचिते समये विषयमिमं विचार्य यथोचितमाचर्येतेति भावः । यथा तथा-कथंचिदिति यावत् । अश्रुमार्जनं कृतवती-अश्रूणि प्रमार्ज्य मम सान्त्वनमकरोत् । तमेव सान्त्वनप्रकारं तद्यथेति प्रस्तौति ।

(स्मरणमभिनीय सभयम्–संस्कृतमाश्रित्य)

अस्यात्याहितकर्मणो व्यपगमे कासेन भर्त्रा समं
संधास्ये भवतीं तु तत्प्रियसखान् संप्रेषयन्ती रहः ।
इत्थं श्वासविलासिनीरुपगताः पञ्चापि हिक्का मुखी-
कृत्य द्रागुपसान्त्व्य पाण्डुदयिता मां प्राहिणोत् कामला ॥ ७ ॥

---

स्मरणमिति । स्मरणमभिनीय-विषूच्याः कामलायाश्च सविधे स्वसपत्न्याः कण्ठकण्ड्वाः कासेन सहानुरागानुबन्धसंविधानाय समापतितं कपटप्रबन्धमनुस्मृत्येति तात्पर्यम् । तथा च समुपनते कण्ठकण्डूकासयोरनुरागानुबन्धे कासः समुत्सृजेदात्मानमिति सभयत्वमभिहितं छर्द्याः ।

कण्ठकण्डूत्या विषूचीसविधे प्रोक्तमेव विषयं विवृणोति छर्दिः अस्येति । अस्य-संप्रति समुपनतस्य ; जीववर्गारब्धस्येति यावत् । अत्याहितकर्मणः-अतिभयावहस्यान्तर्मुखयोगरूपकृत्यस्य । व्यपगमे-अतिक्रमे । प्रतीक्षितस्य दौर्गत्यस्यापोहानन्तरमित्यर्थः । भवतीं-त्वाम् । भर्त्रा-त्वद्दयितेन । कासेन समम् । रहः-अतिगूढं यथा तथा । तत्प्रियसखान्-तस्य-कासस्य प्रियसुहृदः । पञ्च श्वासान्-महोर्ध्वच्छिन्नतमकक्षुद्रभेदेन पञ्चात्कान् श्वासरोगान् । संप्रेषयन्ती-कासस्यान्तिके तस्यावर्जनार्थं प्रेरयन्ती । संधास्ये-संयोजयिष्ये । उपगताः-आसन्नवर्तिनीः, सविधमागतवतीर्वा । श्वासविलासिनीः-श्वासानां रमणीः । पञ्च हिक्का अपि-'अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा' इत्युक्तरीत्या पञ्चप्रकारा हिक्काश्च ; द्वितीयान्तः शब्दोऽयम् । हिक्काश्वासयोरुभयोरपि कफवातात्मकत्वादेकस्थानसमुद्भवत्वाच्च जायापतित्वमस्त्युपक्षिप्तमिति बोध्यम् । "कफवातात्मकावेतौ पित्तस्थान-समुद्भवौ" इति दृढबलादयः । अपायावहत्वेऽपि तयोः साजात्यं अस्ति । "यथा श्वासश्च हिक्का च हरतः प्राणमाशु च" इति निदाने सुव्यक्तम् । मुखीकृत्य-द्वारीकृत्य ; हिक्कानां मुखैरित्यर्थः । (हिक्काः-सुखीकृत्येति पाठस्तु न समञ्जसः ।) पाण्डुदयिता-

तत्थ वि मन्दभाइणी अहं हदमणोरहा जादत्ति ।

[तत्रापि मन्दभागिन्यहं हतमनोरथा जातेति ।]

**कासः**—(विचिन्त्य) मा भैषीः । ज्ञातस्तव भावः, त्वयि प्रणयरसभङ्गे कण्ठकण्ड्वा यत्नः क्रियत इति । गच्छामि तत्रैव तानपि वशीकर्तुम् । तेऽपि मद्वृद्ध्यैव पुष्टाः कथं मह्यं द्रुह्येयुः ।

---

पाण्डुपत्नी । कामला; कर्त्री । माम् । उपसान्त्व्य-सामोक्तिभिश्चित्तशान्तिमुपपाद्य । द्राक्-सत्वरमेव । प्राहिणोत्-प्रेषितवती । कासमनुकूलयितुं तत्प्रियसखान् श्वासान्, कण्ठकण्डूमुपच्छन्दयितुं तत्पत्नीर्हिक्काश्च साधनत्वेन कामला समासादितवतीति भावः । कण्ठकण्डूतिः कासस्य प्रथमपत्नीति पूर्वनिर्दिष्टरीत्या प्रकाश्यतेऽनेन । केवलमौपचारिकेणोपच्छन्दनेन सान्त्वनं कृत्वा कालविलम्बमसहमानैव कामला मां स्वान्तिकात् प्रेषितवतीति सोद्वेगमिदं वचनम् ॥ ७ ॥

**तत्थवीति** । मन्दभागिनी-दौर्भाग्यशीला । अहं-कण्ठकण्डूतिरिति यावत् । तत्रापि-पाण्डुगृहिण्याः कामलायाः सविधेऽपीत्यर्थः । हतमनोरथा-भग्नाभिलाषा । जाता-संवृत्ता । इति-एवंरीत्या परिदेवनं कण्ठकण्ड्वा देव्या विषूच्याः सविधे कृतम्, यदेव स्तम्भान्तरितया मया चाकर्णितमिति छर्दिः सोद्वेगं कासायाभ्यधात् । **मा भैषीरिति** । त्वयि । विद्यमानस्येति शेषः । प्रणयरसस्य-आर्द्रानुरागस्य । भङ्गे-भेदनविषये । कण्ठकण्ड्वा यत्नः क्रियते । इति-एवंरीतिकः । तव भावः-अभिप्रायः । ज्ञातः-मयावगतः । तत्र-यत्र श्वासादयः सर्वे तिष्ठन्ति तस्मिन्नेव पुरे रहस्यागारे वा । तान्-श्वासहिक्काप्रभृतीनपि । वशीकर्तु-यथा ते मच्छन्दानुवर्तिनो भवेयुस्तथा तान् स्वायत्तीकर्तुम् । गच्छामि-अहमेव तेषां सविधमुपसर्पामीति भावः । ते श्वासादयोऽपि । मद्वृद्ध्यैव-कासाभिवृद्ध्या श्वासानां अभिवृद्धिः तथैव । (पाठान्तरे-मद्बुध्यैव-मदीयमतिविभवेनैव ।) पुष्टाः-प्राप्तबलाः । अतो मह्यं कथं द्रुह्येयुः-मदभिलाषस्यान्यथाभावेन समुद्युञ्जानाः कुतो मन्मनोरथं व्यापादयेयुः ।

छर्दिः—गच्छेहि कज्जसिद्धीए। अहं वि देईए पादमूलं गमिस्सम्।
[गच्छ कार्यसिध्यै। अहमपि देव्याः पादमूलं गमिष्यामि]

(इति निष्क्रान्तौ।)

प्रवेशकः।



(ततः प्रविशति रहस्यागारस्थः सुप्तोत्थितः सचिन्तः पाण्डुः।)

पाण्डुः— कः कोऽत्र भोः।

(प्रविश्य)

गलगण्डो दौवारिकः — विजयतां देवः।

(पाण्डुर्निद्रालसो जृम्भते।)



न कथंचिदपीति भावः। गच्छेति। कार्यसिध्यै-कण्ठकण्डूत्याः प्रणयप्रतिहनन-पूर्वकस्य छर्द्यनुरागानुवर्तनरूपस्य कार्यस्य दृढीकरणार्थमिति यावत्। युवराज-दर्शनेन यक्ष्मनियोजितस्य राजकृत्यस्य सिध्यै च। देव्याः-विषूच्या इति यावत्। (पादमूलं इति स्थाने सकाशं इति पाठान्तरम्।)

प्रवेशक इति। "वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। प्रवेशकस्तु नाद्यङ्के नीचपात्रप्रयोजितः॥" इति प्रवेशकलक्षणम्।



ततःप्रविशतीति। रहस्यागारे-शत्रुप्रभृतीनामगोचरे क्वचिद्विविक्ते गृहे तिष्ठतीति रहस्यागारस्थः। सुप्तश्चासावुत्थितश्च सुप्तोत्थितः। निद्रालसः-निद्रा-वशीभूतत्वात् मन्दीभूतदेहमनोव्यापारः। शरीराख्यस्य पुरस्य द्वारभूते गले जाय-मानत्वात् अस्य गलगण्डस्य द्वारपालकत्वमत्र विवक्षितम्। निद्रातन्द्रालुत्वमेव निरूपयति एष किलेति।

**गलगण्डः**—(आत्मगतम्) एष किल—

आरक्तसङ्कुचदपाङ्गमुदग्रदंष्ट्रं
व्यादाय वक्त्रमुरुपाटलदीर्घजिह्वम् ।
उच्चैर्भुजौ वलयितौ ग्रथिताङ्गुलीकौ
कुर्वन् सशब्दमिह जृम्भणमातनोति ॥ ८ ॥

अपि च—

जृम्भावसरे दारुणमाननविवरं सजिह्वमेतस्य ।
निपतितदीर्घकपाटं पातालद्वारमिव हि पश्यामि ॥ ९ ॥

---

आरक्तेति। एष पाण्डुः किल। आरक्तौ-अतीव कषायितौ, तथा सङ्कुचन्तौ अपाङ्गौ-नेत्रान्तौ यस्य तत्। उदग्रदंष्ट्रं-बहिरुत्थितकरालदन्तम्। उरुः-स्थूला, पाटला-शोणितवर्णा, तथा दीर्घा, जिह्वा यस्य तत्। एवं रीत्या रौद्राकारं वक्त्रं-आस्यम्। व्यादाय-उद्घाट्य। वलयितौ-परस्परं वेल्लितौ। अङ्गुल्य एवाङ्गुलीकाः, ग्रथिताः-अन्योन्यमन्तरान्तरा वक्रीकृत्य संयोजिताः, अङ्गुलीकाः दशाप्यङ्गुल्यः ययोस्तौ। भुजौ। उच्चैः कुर्वन्-शिरस उपरि दीर्घं प्रसारयन्। इह-इतः पुरत एव। सशब्दं-उच्चैर्घोषसहितं यथा तथा। जृम्भणं-जृम्भिकाम्। आतनोति। चिरं निद्राभङ्गेन ये किल विकाराः प्रकृत्यैव प्रादुर्भवेयुस्तानत्र निपुणं स्वभावोक्त्या निर्वर्णितवान् कविः। पाण्डुनाम्नो व्याधेर्महतो नाटकपात्रत्वेन परिकल्पितत्वात् तस्य राक्षसस्येव भीमाकारत्वमपि संभाव्योपवर्णितमिति च ज्ञातव्यम् ॥ ८ ॥

**जृम्भावसर** इति। एतस्य-पाण्डोः। जृम्भावसरे-मुखं व्यादाय जृम्भणमस्मिन् कुर्वति सति। सजिह्वं-बृहत्या रसनया सहितम्। दारुणं-भीषणम्। आननविवरं-आस्यकुहरम्। (आननबिम्बमिति पाठान्तरम्।) निपतितं-अधस्तात्

(प्रकाशम्) देवस्य कीदृशो मयि नियोगः ।

**पाण्डुः**—गलगण्ड, सेनापतीनाहूय मम निकटं प्रवेशय ।

**गलगण्डः**—तथा । (इति निष्क्रम्य त्रयोदशप्रकारान् सन्निपातान् प्रवेशयति । सर्व प्रविश्य प्राञ्जलयस्तिष्ठन्ति ।)

**तत्र एकः**—सविचार इव दृश्यते युवराजः । तत् क्षणं जोषमास्यताम् । यदेषः—

---

पतितम् , दीर्घकपाटं-महदर्गलदण्डं यस्य तत् । पातालद्वारं-रसातलविवरमिव । पश्यामि । पातालद्वारमिवातिकरालं गभीरं चास्यावलोक्यते आस्यमिति भावः । "उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् । तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥" (माघे-३-८) इतिवत् अभूतोपमेयम् अतिशयोक्तिरुत्प्रेक्षा च ॥ ९ ॥

**देवस्येति** । देवस्य-स्वामिनस्तव । मयि कीदृशो नियोगः-किं करणीयमिति भवानादिशति मामित्यर्थः ।

**गलगण्डेति** । "महान्तं शोभमल्पं वा हनुमन्यागलाश्रयम् । लम्बन्तं मुष्कवद्रोगं गलगण्डं विनिर्दिशेत्" इति गलगण्डस्य सामान्यं रूपम् । तस्य चात्र पाण्डोः प्रतीहारत्वेन निर्देशः । सेनापतीन्-वक्ष्यमाणान् त्रयोदश-विधान् परिगृहीतसेनानीपात्रान् सन्निपातान् । त्रयोदश सन्निपाता नाम— "एकोल्बणास्त्रयस्तेषु द्व्युल्बणाश्च तथेति षट् । त्र्युल्बणश्च भवेदेको विज्ञेयः स तु सप्तमः । प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट् । सन्निपातामयस्यैवं स्युर्विशेषास्त्रयोदश ।" इति । "विस्फारकः, आशुकारी, कम्पनः, बभ्रुः, विद्राख्यः, फल्गुः, कूटपाकलः, संमोहकः, पाकलः, याम्यः, क्रकचः, कर्कोटकः, वैदारिकः" इति नामतश्च त्रयोदशविधान् सन्निपातविशेषान् । (आदौ त्रयोदशविधान् इति पाठान्तरम् ।) **सविचार इति** । जोषमास्यताम्-वाचंयमा भूत्वा कुतोऽयं सविचारो दृश्यत इति निपुणं निरूपयाम इति यावत् ।

खट्वामङ्गविवर्तनेन लुलितक्षौमास्तरामावसन्
वीटीं भृत्यकरार्पितामगमयन् वक्त्रं गृहीतामपि ।
उत्तानस्तिमिते दृशावपि चिरादुच्चैर्वितानेऽर्पयन्
अत्यर्थं श्वसितोद्गमैर्विवृणुते चिन्तां निजान्तर्गताम् ॥ १० ॥

किञ्च पूर्वमपि—

न स्नाति वारिषु चिरं त्वरितं दुकूलं
वस्ते विलम्बसहनो न कदापि भुङ्क्ते ।

---

खट्वामिति । एषः-पाण्डुः । अङ्गविवर्तनेन-देहस्य निर्वृतिराहित्यात् ऊर्ध्वाधः परिभ्रमणेन । लुलितः व्याकुलीकृतः, क्षौमास्तरः-दुकूलप्रावारो यस्यास्ताम् । खट्वां-पर्यङ्कम् । आवसन्-अधितिष्ठन् । "उपान्वध्याङ्वसः" इति कर्मत्वम् आङ्पूर्वस्य खट्वाशब्दस्य । तथा भृत्यकरार्पितां-परिचारकपाणिना दत्ताम् । गृहीतां-स्वकरेण स्वीकृतामपि । वीटीं-संस्कृत्य पुटीकृतं ताम्बूलम् । वक्त्रं-आस्यम् । अगमयन्-शून्यहृदयत्वात् मुखे अनिक्षिपन् । उत्ताने च ते स्तिमिते च उत्तानस्तिमिते-उन्नमिते स्तब्धीकृते च । दृशौ-लोचने अपि । उच्चैः वितानेपर्यङ्कस्योपरितने पटच्छदे । चिरात्-दीर्घकालम् । अर्पयन्-निभृतमुपर्येव निहितदृष्टिरित्यर्थः । अत्यर्थं-अतिमात्रम् । श्वसितोद्गमैः-सवेगं प्रवर्तमानैरुच्छ्वसितैः । निजान्तर्गतां-स्वात्मनो मनसि गाढमास्थिताम् । चिन्तां-व्याकुलीभावम् । विवृणुते-प्रकाशयति । इति यदिति पूर्ववाक्येनान्वयः । सेयम् अस्यावस्थानरीतिः निर्भरचिन्तास्तिमितशून्यहृदयत्वं किंकर्तव्यतामूढत्वं चास्य निस्संशयमेव निरूपयतीति भावः ॥ १० ॥

न केवलमधुनैवास्येदमवस्थान्तरम्, अपि तु दिवसैरितःपूर्वमपि कतिपयैरेष चिन्तादन्तुरितचित्त एव दृश्यत इति निर्वर्णयति **किंच पूर्वमपी**त्यनेन । तमेव विषयं विवृणोति **न स्नातीति** । एष युवा राजा-युवराजः । **हृदि**, कार्यस्य-

भूषागणं वहति किञ्च विपर्ययेण
राजा युवैष हृदि कार्यविचारकृष्टः ॥ ११ ॥

**गलगण्डः**—(दण्डेन भूमिमाघट्टयन्) देव, सेनापतयः प्राप्ताः ।

**पाण्डुः**—(विलोक्य) भो भोः संनिपाताः, प्रतिराजस्य जीवस्य सकाशादस्मदीयराजस्य यक्ष्मणोऽधुना पराभवः संभाविष्यत इति श्रूयते । स यथा न भवेत् तथा सैन्यैः सह संनद्धव्यं भवद्भिः ।

---

कृत्यविशेषस्य, विचारेण-विमर्शनेन, कृष्टः; कार्यविशेषाणां शत्रुकुलाभियोगविषयकाणां परिशीलनैकासक्तचित्तवृत्तिरित्यर्थः । (कार्यविशेषकृष्ट इत्यपि पाठः ।) अत एव दैनन्दिनचर्यास्वपि क्वचिन्मन्दं क्वचित्त्वरितं च वीतव्यवस्थः शून्यहृदय एव प्रवर्तत इति निरूपयति—वारिषु-सरःप्रभृतिषु, स्नानघट्टेषु वा । चिरम् । स्थितः सन् इति शेषः । न स्नाति-स्नानक्रियां न यथाकालं निर्वर्तयति । दुकूलं-क्षौमपरिधानं तु । त्वरितम् । वस्ते-परिधत्ते । पुनः विलम्बसहनः-कालयापनजन्यमनर्थं कथंचिदप्यनालोचयन्नित्यर्थः । कदापि-कस्यामपि वेलायामिति यावत् । न भुङ्क्ते । किंच भूषागणं-विविधाभरणजालम । विपर्ययेण-व्यत्ययेन; आभरणं अधरोत्तरं परिवर्त्य वा, अवयवविपर्यासेन वा, वहति-धारयति । अलघुभिः कार्यविशेषैराकुलीकृतस्य पाण्डोः सुतरां विह्वलचित्तत्वमेवं श्लोकद्वयेन वर्णितम् ॥११॥

**दण्डेनेति** । दण्डेन भूमेराघट्टनं पाण्डोरनवहितचित्तस्य प्रबोधनार्थम् । सेनापतय इति विविधा बलवन्तः सन्निपातामया अत्र निर्दिश्यन्ते । **सन्निपाता इति** । विकृतिमधिगतानां वातादिदोषाणां समुच्चयः सन्निपातः । स च एकोल्बणद्व्युल्बणत्र्युल्बणादिभेदेन पूर्वोक्तरीत्या त्रयोदशविधः । भावप्रकाशादिषु दृश्यमानानि नामान्तराण्यपि यथा—कुम्भीपाकः, प्रोर्णुनाभः, प्रलापी, अन्तर्दाहः, दण्डपातः, अन्तकः, एणीदाहः, हारिद्रः, अजघोषः, भूतहासः, यन्त्रपीडः, संन्यासः, संशोषी चेति । संभाविष्यते-प्रतीक्षिष्यत इत्यर्थः । यथा न भवेत् । (यथा न संभविष्यतीति पाठान्तरम् ।)

**सन्निपाताः—**

अस्मादृशेषु बलशालिषु सैनिकेषु
राजन्नलं प्रभुपराभवचिन्तया ते ।
स्यात् किं वसन्तदिवसेषु विसृत्वरेषु
पद्माकरस्य तुहिनाभिभवप्रसक्तिः ॥ १२ ॥

कति कत्यस्मदीयाः सैनिकाः । तत्रैकैकस्य पराक्रमवतो युद्धाय न पर्याप्तमखिलं शत्रुसैन्यम् । किं पुनस्सर्वेषाम् । श्रूयन्तां तावदस्मदीयाः ।

---

**अस्मादृशेष्विति** । राजन्-युवराजमुद्दिश्यौपचारिकमिदं सम्बोधनम् । अस्मादृशेषु सन्निपाताभिधेषु । बलशालिषु । सन्निपातानां बलातिशयवत्त्वं स्वतस्सिद्धमेव । सैनिकेषु-सेनापतिषु । "सेनारक्षास्तु सैनिकाः" इत्यमरः । विद्यमानेष्विति शेषः । ते-तव । प्रभुपराभवचिन्तया-राजपराजयविषयकव्याकुलतया । अलं-मा नाम मनःक्षोभः क्रियतामित्यर्थः । वसन्तदिवसेषु । विसृत्वरेषु-प्रवर्धमानेषु । विपूर्वकसृधातोः क्वरच् । पद्माकरस्य-कमलसरसः । तुहिनेन-हिमेन, अभिभवः-बाधा, तस्य प्रसक्तिः-संभाव्यता । स्यात् किम् । न कथंचिदपि संभवेदिति भावः ॥ १२ ॥

**कति कतीति** । अस्मदीयाः-यक्ष्मपक्षे विद्यमाना इत्यर्थः । सैनिकाः-सेनायां विद्यमाना योधा इति सैनिकशब्दस्यात्रार्थः । सान्निपातिकानां दोषाणां वशंवदतया परिगण्यमानानामेव कुष्ठादीनां अनन्तरमेव निर्दिश्यमानत्वात् । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । एकैकस्य कुष्ठगुल्मादिषु प्रतिनियतरोगस्य । पराक्रमवतः-देहाज्जीवस्य निषूदनावश्यकशक्तिसंपन्नस्येति यावत् । अखिलमपि । शत्रुसैन्यं-जीवराजस्य सेना । युद्धाय न पर्याप्तं-एकैकस्य रोगरूपस्य योधस्य पुरतः सर्वमपि शत्रुसैन्यं युगपत् संभूयापि न योद्धुं प्रभवेदिति भावः ।

अष्टौ कुष्ठा दश च बलिनः प्लीहगुल्मास्तथाष्टौ
षट् चोन्मादा वसति दशकं पञ्चकं च व्रणानाम् ।
अर्शोभेदाः षडतिगतयो विंशतिश्च प्रमेहाः
कृच्छ्राश्मर्यो दश दश पुनः सन्ति सप्तातिसाराः ॥ १३ ॥

---

अष्टौ कुष्ठा इति । बलिनः-कुष्ठानां बहुदोष-धातुविकृतिजन्यत्वात् बलिष्ठत्वम् । तथा च चरकः—"न च किञ्चिदपि कुष्ठमेकदोषप्रकोपनिमित्तम्" इति । "वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च । दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः । अतः कुष्ठानि जायन्ते सप्त चैकादशैव च ।" इति माधवकरादिभिरपि कुष्ठे विकारमधिगच्छतां दोषदूष्याणां संग्रहः क्रियते । कुष्ठाः । अष्टौ दश च-अष्टादशसङ्ख्याकाः कुष्ठाः सन्ति । कुष्ठशब्दः पुन्नपुंसकयोः पठ्यते । कुष्ठस्याष्टादशविधत्वं चरकादिभिरपि निर्दिष्टम् । "स कुष्ठः सप्तविधोऽष्टादशविधोऽपरिसङ्ख्येयविधो वा" इति चरकनिदाने । तत्र महाकुष्ठाः सप्त क्षुद्रकुष्ठाश्चैकादश । बलिनः इति पदं प्लीहगुल्माः इत्यस्यापि विशेषणम् । प्लीहरोगाश्चत्वारः, गुल्मरोगाश्च ऋते रक्तजाच्चत्वार इति तेऽष्टौ । वात-पित्त-कफैस्त्रयो रक्तेन चैक इति प्लीहामयं भावमिश्रादयश्चतुर्धा विभजन्ति । गुल्मस्य तु वात-जपित्तज-कफज-सन्निपातजभेदेन प्राधान्येन चतुर्विधत्वं संपद्यते ; रक्तजस्य नात्र परिगणनेति 'अष्टौ' इति संख्यासूचनया ज्ञायते । उन्मादाः षट्प्रकाराः । "एकैकशः सर्वशश्च दोषैरत्यर्थमूर्छितैः । मानसेन च दुःखेन स तु पञ्चविधो मतः । विषाद्भवति षष्ठश्च" इत्युन्मादनिदाने माधवकरः । व्रणानां-रक्तजानां क्षतजानां दोषजानां च समेत्य दशकं पञ्चकं च वसति; शरीरे पञ्चदश व्रणाः स्युरित्यर्थः । "रक्तात् क्षतात् त्रिदोषैश्च व्रणाः पञ्चदशोदिताः" इति शार्ङ्गधरः । अतीव गतिः शोणितस्य बहिः स्रावरूपा प्रवृत्तिः येषु ते तादृशाः अर्शोभेदाः—"पृथग्दोषैः समस्तैश्च शोणितात् सहजानि च" इत्येवं-रीत्या स्वरूपादिभिर्विविधाः । षट् अर्शांसीति यावत् । अतिगतय इत्येतत्

(गलगण्डं प्रति) स्वामिनः कुमारस्य संनिधिं प्रापय सर्वानपि सैनिकान् ।

**गलगण्डः**—तथा । (इति निष्क्रम्य सर्वैः सह प्रविशति ।)

(सर्वे पाण्डुं प्रणम्योत्थाय प्राञ्जलयस्तिष्ठन्ति ।)

**पाण्डुः**—एवं प्रवृत्ते राजकार्ये किं भवन्तो मन्यन्ते ।

---

पदं काकाक्षिन्यायेन परस्ताद्विद्यमानस्य प्रमेहशब्दस्यापि विशेषणम् । अतिगतयः-मूत्रस्य मात्रातीतायाः प्रवृत्तेरुत्पादनशीला इत्यर्थः । प्रमेहाः । विंशतिः । "कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्राम्बुवसालसीकाः । मज्जा रसौजः-पिशितं च दूष्याः प्रमेहिणां विंशतिरेव मेहाः" इति निदाने । प्रमेहापेक्षया मूत्रमार्गानाश्रित्य सन्त्यन्येऽपि विंशती रोगा इति निर्देष्टुं पुनरिति पदम् । पुनः कृच्छ्राणि च अश्मर्यश्च कृच्छ्राश्मर्यः । अत्र कृच्छ्रशब्देन न केवलं मूत्र कृच्छ्ररोगः किन्तु मूत्राघातश्च सूच्यते । क्षतज-पुरीषजाश्मरीज-शुक्रजभेदात् कृच्छ्राणि चत्वारि । सुश्रुतोक्तरीत्या मूत्राघाता द्वादश । अश्मर्यश्च "वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजापरा" इति प्रमाणरीत्या चतस्रः । एवं कृच्छ्रादीनामपि विंशतिसंख्याकत्वं भवति । अतीसाराः सप्त सन्ति । "पृथक् त्रिदोषैः सर्वैश्च शोकादामाद्भयादपि । अतीसारः सप्तधा स्यात्" इति शार्ङ्गधरः । बलिन इति प्रथमतो निर्दिष्टं विशेषणं सर्वेषामपि रोगाणामिहाभिहितानां सामान्यमपि विशेषणं भवेत् । अत्र निर्दिष्टानां विविधानां व्याधीनां संख्यास्तावत् माधवनिदानात् विशेषतो विसंवदन्ति; तथापि तत्तद्ग्रन्थान्तराभिप्रायानुरोधेनैतत्सङ्ख्यानां कथंचित् सामरस्यमस्ति सम्पादितम् । अस्मिन् पद्ये 'षडतिगतयः' इत्यत्र 'षडतिधृतयः' इति, 'कृच्छ्राश्मर्यः' इत्यत्र 'किश्राश्मर्यः' इति च दृश्यमानः पाठभेदो न साधुः ॥ १३ ॥

**गलगण्डं प्रतीति** । गलगण्डं प्रति सन्निपाताः कथयन्तीति यावत् । सर्वैः-कुष्ठोन्मादप्रमेहादिभिः सह । **एवमिति** । राजकार्ये । एवं प्रवृत्ते—'अस्मत्सैन्यैर्निरोधं' इति श्लोकेन पूर्वोक्तरीत्या निर्वर्तमाने सतीत्यर्थः । **किं भवन्तो मन्यन्ते**-किं कर्तव्यमिति युष्माभिरालोचितमित्यर्थः ।

( तत्रादौ )

कुष्ठाः—

कार्या न चेतसि कुमार कदापि चिन्ता
स्थास्यन्ति के वद पुरः प्रतिगर्जतां नः ।
शत्रोः प्रविश्य पुरमीक्षितुमप्ययोग्यं
कुर्मो वयं तनुभृतामतिकुत्सनीयम् ॥ १४ ॥

उन्मादाः—कुमार, सर्वे सैनिकास्तिष्ठन्तु । ज्ञायतामस्माकमभिप्रायः ।

---

इतिकर्तव्यताविषये कुष्ठाः प्रथमतः स्वाशयमावेदयन्ति **कार्या न चेत**सीति । कुमार-युवराज । चेतसि चिन्ता कदापि न कार्या-अतिसङ्कटावहत्वेन परिगण्यमाने समयेऽपि मास्तु तव चित्तोद्वेग इति यावत् । प्रतिगर्जतां-वैरिपुरतो वीरायितप्रकटनार्थं सिंहनादं कुर्वताम् । नः पुरः-अस्माकम् अभिमुखे प्रतियोद्धुमिति यावत् । के स्थास्यन्ति-अस्मत्पुरतः स्थातुमपि न रिपवः प्रभविष्यन्ति, का कथा ततश्चायोधनस्य विषय इति भावः । वद-त्वमेवास्मच्छौर्यं समालोच्य ब्रूहि । विरोधिजनस्यावस्कन्दनं कया रीत्या करिष्यध्वं यूयमिति चेत्, तदेव विवृणोत्युत्तरार्धेन । वयं-कुष्ठाः । शत्रोः-जीवराजस्य । पुरं-शरीररूपं नगरम् । प्रविश्य-"प्रदुष्टाः प्रच्युता दोषा रसासृङ्मांससंश्रिताः । कुष्ठानि जनयन्त्याशु शरीरेषु शरीरिणाम्" इत्युक्तरीत्या रसादिधातूनां दूषणद्वारा सर्वतः सुलघु समाविश्य । अतिकुत्सनीयं-अतीव जुगुप्सनीयम् । अत एव तनुभृतां-शरीरिणाम् । ईक्षितुमपि अयोग्यं-दर्शनस्यापि गर्हणीयम् । कुर्मः । शत्रुसैन्यानां तत्र प्रवेशस्य वासस्य च कथा कैमुतिकन्यायेन दूरापेतेति भावः । पुं-नपुंसकयोः कुष्ठशब्दः ॥ १४ ॥

**उन्मादा** इति । पूर्वनिर्दिष्टाः षड्विधा उन्मादाः स्वकीयान् प्रभावान् प्रकटयन्ति । "मदयन्त्युद्धता दोषा यस्मादुन्मार्गमागताः । मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः" इत्युन्मादस्य निरुक्तिः । कुष्ठास्तावत् विकृत्य

कोपाध्मातककुत्स्थपुङ्गवकरव्याकृष्टगर्जद्धनु-
ज्यानिर्गत्वरमार्गणानलशिखादीने नदीने भृशम् ।
पाठीनान् कमठैः समं विलुठतः सर्वेऽनुकुर्वन्तु ते
शार्दूला इव शम्बरान् सरभसं यानद्य गृह्णीमहे ॥ १९ ॥

---

देहं क्रमेण विपदमुत्पादयेयुः; वयमुन्मादास्तु वशीकृत्य मनो जीवदेहमचिरेणैव व्यापादयेम; अतः शीघ्रकारित्वात् अस्माकमेव सैनिकान्तरात् कार्येऽस्मिन् प्रथमम् अवकाशदानं प्रशस्ततरमिति सप्रगल्भमुन्मादा वदन्ति ।

**कोपाध्मातेति** । शार्दूलाः । शम्बरान्-हरिणविशेषानिव । "शम्बरस्त्वल्पहरिणः पृष्ठतस्तु स बिन्दुमान्" इति वैजयन्ती । यान्-वैरिणः । अद्य । सरभसं-सावेगं ससंरभं चेत्यर्थः । गृह्णीमहे-अभियोगेनाक्रमामहे । ते-शत्रवः । सर्वे-न हि द्वित्राः शत्रवः परं तु समस्तमपि वैरियूथमिति यावत् । उन्मादाक्रान्तेषु परिपन्थिषु तेषां समुद्भवदवस्थान्तरमेव परिशिष्टः पद्यभागो निर्वर्णयति । कोपेन आध्मातः-संभृतः, समुद्रराजस्य निर्घृणत्वं दुश्शीलत्वं च समालोच्य प्रकृत्यैव प्रशान्तहृदयस्य रघुपतेरप्यखिलान्यप्यङ्गानि दुर्दमेन कोपसन्तापेन संपूर्णानि संधुक्षितानीव चाभवन्निति भावः; स चासौ ककुत्स्थपुङ्गवः-रघुपुङ्गवश्च, तस्य कराभ्यां व्याकृष्टा, तथा गर्जन्ती-शब्दायमाना, या धनुर्ज्या-चापनिबद्धमौर्वी, तस्या निर्गत्वराः-त्वरितं गमनशीलाः, ये मार्गणाः-शराः, त एव अनलशिखाः-अग्निज्वालाः; अथवा निरन्तरनिर्गच्छताम् इषुजालानाम् अन्योन्यसंघर्षणजनितसन्तापसमुन्मिषज्ज्वलनज्वाला इति वा; ताभिः दीने-तत्प्रोषजनितदुस्सहसन्तापेन परितप्ते । गत्वरशब्दो 'गत्वरश्च' इति क्वरबन्तो निपातः । नदीने-महोदधौ । कमठैः-कूर्मैः समम् । भृशं विलुठतः-सन्तप्तसागरजलोष्मणः सुतरामविषह्यत्वात् तेन प्लुष्टदेहत्वात् स्फुरणपूर्वकमितस्ततः परिभ्रमणशीलान् । (विलुठितान् इति पाठान्तरम् ।) पाठीनान्-सहस्रदंष्ट्रान् महतो मत्स्यविशेषान् । अनुकुर्वन्तु-तैः साधर्म्यं आवहन्तु । [श्रीरामो लङ्कापुरस्या-

**व्रणाः**—स्वामिन् कुमार, प्रथमं पुरमेव बाधनीयम् । तद्बाधया शिथिलीभविष्यत्यन्तर्मुखतापि जीवस्य । अत इदानीम्—

---

स्कन्दनाय सेनासमुत्तरणहेतुं सागरे सेतुं विधातुकामो विभीषणवचनानुरोधेन वारांनिधेराराधनाय, "एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः । संविवेश तदा रामो वेद्यामिव हुताशनः" इति श्रीरामायणोक्तप्रकारेण दर्भशयनं निशात्रयमधिशयानोऽपि न यादसांपतेः प्रसादमाससादेति, ततश्च जगदेकवीरो जलनिधेरवलेपमसहमानो रोषरूषितमनाः सागरशोषणाय समुद्युक्तो विशिखं वह्निशिखामुद्वमन्तं वारिधेरुपरि विससर्जेति, ततश्च समुद्रराजः शरतापोद्विग्नः शरणमुपगम्य रामम्, सेतुबन्धनेन स्वस्योपरि नेतुं सेनामानुकूल्यं तस्मा अयच्छदिति च रामायणकथा । सन्दर्भेऽस्मिन् चम्पूरामायणे विद्यमानं पद्यं श्लोकरीतिमिमामनुकरोतीति तदिहोद्धरामः ।

"रुषा विशिखमुच्छिखं जहति राघवे लाघवा-
दजायत रुजायतश्वसितनक्रचक्राकुलम् ।
रसातलवलत्तिमिस्तिमितकुम्भिकुम्भीनस-
प्रविष्टगिरिकन्दरं तरलमन्तरं वारिधेः ॥"]

जना अपि उन्मादाविष्टाः स्वयम् उन्मस्तकं परितपन्ति, परिप्रलपन्ति, भ्रमन्तीति च सर्वे जानन्ति ॥ १९ ॥

प्रथममिति । पुरं-जीवस्य निवासनगरभूतं शरीरमेव । बाधनीयं-बाधां कृत्वा रोधनीयम् । (बाधितव्यमिति पाठान्तरम् ।) तस्य-शरीराख्यस्य पुरस्य बाधया । जीवस्य । अन्तर्मुखता-पुण्डरीकपुराभिमुखत्वमपि ; ध्यानशीलत्वमिति यावत् । शिथिलीभविष्यति-सुमहदायसयन्त्रप्रयुक्ततीक्ष्णतमलोहगुलिकानिकरैरिव अरुन्तुदैर्व्रणैः शरीराख्ये पुरे समन्तात् विदीर्यमाणे संयमित्वावस्था जीवस्य स्वयं सुतरां विकलीभविष्यतीत्यर्थः ।

प्रचण्डमदपाण्डवप्रहितकाण्डवर्गत्रुट-
त्तरक्षुकरिकेसरिप्रियकशल्यशार्दूलकम् ।
अरण्यमिव खाण्डवं घनसरण्यतीतद्रुम-
व्रजं दहनहेतयः पुरमरेर्दहामो वयम् ॥ १६ ॥

---

अरिपुरस्य दाहोत्पादनरीतिमेव व्रणा वर्णयन्ति प्रचण्डेति । अत इदानीम् । दहनहेतयः-व्रणानां दहनशीलत्वात् स्वयम् आग्नेयास्त्रसदृशा इत्यर्थः । वयं-व्रणाः । अरेः-जीवराजस्य । पुरम् । दहामः-दहनकर्मणा नाशयामः । दहनरीतिमेव विशदयत्युपमानेन । प्रचण्डः-दुस्सहः, मदः-औद्धत्यं यस्य सः, दुर्धर्षपराक्रम इत्यर्थः ; पाण्डवः-अर्जुनः ; तेन प्रहिताः-विसृष्टाः, काण्डाः-शराः, तेषां वर्गैः-समूहैः, त्रुटन्तः-विशीर्यन्तः, विनश्यन्त इति यावत् ; तरक्षवः-मृगादनाख्याः क्षुद्रशार्दूलाः ; करिणः-गजाः ; केसरिणः-सिंहाः ; प्रियकाः-मृदूच्चघनरोमभिर्युक्ता हरिणाः ; "प्रियको रोमभिर्युक्तो मृदूच्चमसृणैर्घनैः" इति वैजयन्ती । शल्याः-श्वाविदः ; शार्दूला एव शार्दूलकाः-व्याघ्राः यस्मिंस्तत् । पाण्डुनन्दनेन प्रचण्डपराक्रममखिलमपि प्रकटीकृत्य प्रयुक्तैः शरवर्षैः खाण्डववननिवासिनः सुबहवो मृगाः सपदि व्यापादिता इति यावत् । घनानां सरणिः-मेघमार्गः, तम् अतीताः-अतिक्रम्य विवृद्धाः, द्रुमाः-वृक्षाः, तेषां व्रजाः-समूहाः यस्मिंस्तत् । अत्युच्छ्रितवृक्षसमूहसंवृतमिति यावत् । (घनसरण्यतीतं द्रुमम् इत्यसाधुः पाठः) । तादृशं खाण्डवम् अरण्यं-खाण्डवाख्यं महाभारतप्रसिद्धं महावनम् । दहनहेतयः-अर्जुनप्रेरितस्याग्नेयास्त्रस्य ज्वाला इव । "रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः" इत्यमरः । दहनहेतयः-आग्नेयास्त्राणीव इति वा । दहाम इति पूर्वेणान्वयः । ["अष्टाविंशतमे प्राप्ते युगे द्वापरशेषतः । वह्निर्ब्राह्मणरूपेण भिक्षां जिष्णुमयाचत ॥ दातुमङ्गीकृते भिक्षां तदा पाण्डुसुतेन वै । वह्निः स्वरूपमास्थाय जिष्णुं वचनमब्रवीत् ॥ अहमग्निः पाण्डुपुत्र यज्ञभागातिभोजनात् । व्याधितोऽहं ततो व्याधिं मम त्वं नाशयाधुना ॥

सर्वेऽपि अर्शोभेदाः—स्वामिन्, यदुक्तं व्रणैस्तदस्मभ्यमपि रोचते। तेन वयं च निरुद्धमूलद्वाराः—

गृह्णीयाम व्यथयितुमरेस्तत्पुरं येन सर्वे
व्याघ्राकृष्टा इव हि पशवः प्राणिनोऽस्मद्गृहीताः।
स्थातुं गन्तुं शयितुमशितुं पातुमाभाषितुं वा
नापेक्षन्ते मनसि दधतो दुःखमात्रानुभूतिम् ॥ १७ ॥

---

खाण्डवं नाम विपिनं सपक्षिमृगराक्षसम्। यदि त्वं मां भोजयितुं शक्नोषि श्वेतवाहन ॥ तदा मम त्वसौ व्याधिरपयास्यति नो चिरात्। विरोधात् तत्तु शक्रस्य न स्वयं भोक्तुमुत्सहे ॥ तन्मां त्राहि महाभाग वने तस्मिन्नियोजय। यथाहं सकलं भोक्तुं प्राप्नोमि त्वत्प्रसादतः ॥ तस्य तद्वचनं श्रुत्वा सव्यसाची महाबलः। दाहयामास विपिनं तत् सर्वं प्राणिसंयुतम्। देवकीतनयेनासौ वासुदेवेन पालितः ॥ खाण्डवं दाहयामास ज्वलनस्य हिते रतः ॥" इति पुराणेषु पाण्डवकारितखाण्डववनदहनविषयः प्रस्तूयते।] ॥ १६ ॥

यदुक्तं व्रणैरिति। गुणैः व्रणसदृशत्वात् ततोऽप्यधिकबाधावहत्वाच्च 'यदुक्तं व्रणैः तदस्मभ्यमपि रोचते' इत्यनुमोदनपुरस्सरम् अर्शोभिरपि अभिधीयते। वयं-अर्शोभेदाश्च। निरुद्धं-आक्रम्यावरुद्धम्, मूलद्वारं-पुरस्य प्रधानप्रवेशमार्गः यैस्ते। रोगपक्षे निरुद्धं-अवबद्धम्, मूलद्वारं-गुदमार्गः यैस्ते। अर्शसामङ्कुरैः सुतरां गुदस्य मूलमार्गो निरुध्यत इति सुविदितमिदं सर्वेषाम्। अत एव मूलरोग इति च नामास्य।

मूलमार्गं निरुध्य किं कुर्युरर्शोभेदा इत्येतदेव विशदयति गृह्णीयाम इति। मूलद्वाररोधनानन्तरं तत्-पूर्वोक्तम्। अरेः पुरं-शरीराख्यं नगरम्। व्यथयितुं-पीडयितुम्। गृह्णीयाम-आक्रमामहै। येन-शरीरस्य अस्मदाक्रमणहेतुना।

**प्रमेहाः**—स्वामिन्, अस्मासु विधेयेषु पुरोवर्तिषु किमर्थमन्येषां प्रस्तुत-कार्यं प्रति प्रेषणम्। तत् कर्तव्ये किञ्चिदस्मद्वचांसि कर्णयोरतिथीकर्तु-मर्हति भवान्।

**पाण्डुः**—वक्तव्यानि वो विवक्षितानि।

---

अस्मद्गृहीताः-अस्माभिरर्शोभिः आक्रान्ताः। सर्वे प्राणिनः। व्याघ्रैः-शार्दूलैः, आकृष्टाः-आस्कन्दिताः। पशवः-मृगा इव। हिशब्दोऽवधारणार्थे; पशुसमाना एवेत्यर्थः। स्थातुम्। गन्तुम्। शयितुं-शयनमधिगन्तुम्। पातुं-क्षीरसलिलादिक-मिति यावत्। (यातुं इति पाठो न साधुः)। किंबहुना। आभाषितुं वा-येन केनचित् परमसुहृदादिभिः सह संभाषितुमपि। न हि केवलं पीडायास्तस्या अनुभव एव दुस्सहः, परं तु दुःखमात्रानुभूति-तद्व्याधिजनितक्लेशानां केवलमनुभवमपि। मनसि दधतः-चिन्तयतोऽपि। स्थिति-गमन-शयनादीनि। नापेक्षन्ते नैवेच्छन्ति। 'अरिवत् प्राणान् शृणाति हिनस्ति इत्यर्शः' इति निरुक्त्या निष्पन्नं नामैवास्य क्रौर्यं निरूपयति। "पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम्। सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे॥ तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च। सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च॥" इति अर्शसां बहुव्यथाजन-कत्वं प्रमाणैरनुभवेन च सिद्धम्॥ १७॥

**स्वामिन्निति**। विधेयेषु-सर्वदा भवद्वचने स्थितेषु। पुरोवर्तिषु, न तु दवीयसि क्वचिद्देशे स्थितेषु। कर्तव्ये-पुरास्कन्दनरूपे कार्ये। कर्णयोः अतिथी-कर्तुं-श्रोत्राभ्यां सावहिति श्रोतुमित्यर्थः। (तत् कर्तव्ये इति वाक्यस्य स्थाने 'तत् क्रियतामस्मदुक्तिश्रवणादरः' इत्यपि पाठो विद्यते। नास्ति पाठयोरनयो-रर्थभेदः।) विवक्षितानि-वक्तव्यत्वेनाभिलषिता विषयाः। वक्तव्यानि-अभिधीयन्ता-मित्यर्थः।

प्रमेहाः—

प्रस्रावाख्यां परिणतिमसृङ्मांसमेदोऽस्थिमज्जा-
स्वातन्वन्तो वयमनुदिनं तत्पुरं शोषयामः ।
क्वान्तर्वक्त्रो भवतु विधुरीभूय जीवः क्व मन्त्री
तत्साहाय्यं कलयतु भवांस्तद्विषादं जहातु ॥ १८ ॥

प्रमेहाणां शरीरस्य विशोषणे विनाशने च विद्यमानं प्राबल्यमेव निरूपयति प्रस्रावाख्यामिति । वयं-प्रमेहाः । असृङ्मांसमेदोऽस्थिमज्जासु- तदाख्येषु शारीरेषु धातुषु । प्रस्रावाख्यां-प्रमेहे यत् मुहुः स्रवति मूत्रं तत्संज्ञाम् । प्रस्रूयते प्रकर्षेण स्रवतीति प्रस्रावः । "प्रस्रुत्स्नु स्रवः" इति वस्र. । "मूत्रं तु गुह्यनिष्यन्दः प्रस्रावः स्रवणं स्रवः" इति धन्वन्तरिनिघण्टुः । परिणतिं-विपर्ययम्, विकृतिमिति यावत् । अनुदिनम् । आतन्वन्तः विशेषेण कुर्वन्तः । तत्पुरं-तस्य जीवस्य शरीराख्यं नगरम् । शोषयामः-द्रवीकृत्य धातून् शरीरं सत्त्वहीनं कुर्मः । ("संप्रस्रावात् परिणतिमसृङ्मांसमेदोऽस्थिमज्ज्ञां व्यातन्वन्तो वयं" इति पाठे, वयम् । असृगादिधातूनां संप्रस्रावात्-विशिष्य स्रावणाद्धेतोः । परिणतिं-प्रस्रावरूपां विकृतिम् । व्यातन्वन्तः-विशिष्य कुर्वन्तः । इति व्याख्येयम् ।) एतस्यामवस्थायां जीवः । विधुरीभूय -क्लेशैरभिभूय । अन्तर्वक्त्रः-पूर्वोक्तरीत्या ध्यानपरः । एवमभिभूतस्यान्तर्मुखत्वं कथं नाम शरीरे तस्य सेत्स्यतीति भावः । मन्त्री-विज्ञानशर्मा वा । तत्साहाय्यं-तस्य जीवस्य साहाय्यम् । क्व कलयतु-विदधातु । द्वावपि विशीर्णाश्रयौ विहतमनोरथौ च भविष्यत इति भावः । तत्-तस्मात् कारणात् । भवान्-पाण्डुः । विषादं-मनः-क्लेशं । जहातु । वैरिनिषूदनकर्मणि प्रभविष्णुषु प्रमेहाख्येषु सत्स्वस्मासु वीतशङ्कं स्थीयतां भवतेति भावः । असृङ्मांसादीनां धातूनां प्रमेहे प्रस्रावात्मना परिणामे वक्ष्यमाणं च प्रमाणम्—"मेदश्च मांसं च शरीरजं च क्लेदं कफो वस्तिगतः प्रदूष्य । करोति मेहान्" इति । "कफः सपित्तः पवनश्च दोषा मेदोऽस्रशुक्रा-

अश्मर्यः—सर्वे सैनिकाः स्वस्वबलानुरूपं गर्जन्तु । स्वामिन् न वयं गर्जनपराः । किन्तु भूतार्थवादिन्यः ।

वर्धिष्यते न यावत् सहितः सर्वैर्भटैर्निजैर्वैरी ।
तावन्निग्रहणीयः श्रेयस्कामेन पुरुषेण ॥ १९ ॥

तथा हि—

वेलालङ्घिप्रसर्पत्तटविटपिसमुत्पाटनाटोपमूर्छ-
त्कल्लोलाक्रान्तपृथ्वीवलयजनलयोल्लेखसन्त्रस्तलेखः ।
अम्भोधिर्मा जनीति प्रतिकलमुदयद्वारिभूरीभविष्य-
च्चूषत्यह्नाय वह्निर्विघटितबडबावक्त्ररन्ध्रादुदञ्चन् ॥ २० ॥

---

म्बुवसालसीकाः । मज्जारसौजःपिशितं च दूष्याः प्रमेहिणां" इति च निदाने माधवकरादयः । "कफादयः प्रकुपिताः क्षिप्रमेव शरीरे विसृतिं लभन्ते । शरीरक्लेदं पुनर्दूषयन्तो मूत्रत्वेन परिणमयन्ति" इति च चरकः ॥ १८ ॥

सर्वे सैनिका इति । स्वापेक्षया सर्वेऽप्यपरे सैन्या इत्यर्थः । गर्जन्तु-सावलेपं उद्धतवादान् कुर्वन्तु । तथ्यैरतथ्यैश्च मिश्रितानि वचांसि साटोपं वदन्तु नामेति भावः । भूतार्थवादिन्यः-सत्यभाषिण्यः ।

वर्धिष्यत इति । वैरी-अस्मद्रिपुः । सर्वैः । निजैः-तदीयैः । भटैः-योधैः । सहितः । यावत् न वर्धिष्यते-अधिगतसमधिकबलो यावता न स्यात् । तावत्-तावतैव कालेन । श्रेयस्कामेन-आत्मविजयमाकाङ्क्षमाणेन । पुरुषेण । निग्रहणीयः-अभियोगादिना बलवदवस्कन्द्य निषूदनीयः । (वर्धिष्यते न यावद्दर्वमयानां निजैर्भटैर्वैरी इति च पाठान्तरम् ।) "उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च" इत्येषा नीतिरत्र सूचिता ॥ १९ ॥

पूर्वोक्तां नीतिमेव तथाहीति निर्धारयन् दृष्टान्तमुखेन च तां विशदयति वेलालङ्घीत्यादिना । अम्भोधिः-सागरः । वेलां-समुद्रकूलम्, लङ्घति-अतिक्रम्य

**पाण्डुः**—युक्तमुक्तं भवद्भिः ।

**अतीसाराः**—स्वामिनः कृपयैव भुजप्रतापं दर्शयन्तो वयं विजेष्यामह इति किमत्र चित्रम् । अतो वयं किमपि ब्रूमः । विदांकरोतु स्वामी ।

---

व्याप्नोतीति वेलालङ्घि; ताच्छील्ये णिनिः ; वेलालङ्घि यथा तथा प्रसर्पन्ति प्रकर्षेण वहन्तीति वेलालङ्घिप्रसर्पन्तः ; तथा तटविटपिनां-वेलारूढवृक्षाणाम्, समुत्पाटनेन-उन्मूलनेन यः आटोपः-संरम्भः तेन सह मूर्च्छन्तः-अतीवाभिवृद्धाः, ये कल्लोलाः-महोर्मयः (एतेन वेलालङ्घिप्रसर्पन्तश्च ते तटविटपिसमुत्पाटनाटोपमूर्छन्तश्च ये कल्लोलाः इति द्विकर्मककर्मधारयः) तैः आक्रान्तः-अभिव्याप्तः यः पृथ्वीवलयः-भूमण्डलम्; तत्र यो जनलयः जलनिधिकल्लोलकृतः प्रजापरिक्षयः, तस्य उल्लेखेन-उद्गमनेन, संक्षोभेणेत्यर्थः ; सन्त्रस्ताः-सुतरां भयाकुलीकृताः, (अन्तर्भावितण्यर्थोऽयम्) लेखाः-देवाः येन सः । "आदितेया दिविषदो लेखा अदितिनन्दनाः" इत्यमरः । एतादृशविप्लवजनकः मा जनि मा भूत्; माङि लुङ्; "न माङ्योगे" इत्यडागमप्रतिषेधः । इति हेतोः । विघटितं-विदारितम्, यत् बडबाया वक्त्रं-अन्तस्समुद्रं विद्यमानाया महत्या अश्वाया आस्यम्, तदेव रन्ध्रं-कुहरं तस्मात् । उदञ्चन्-सुमहतीभिर्ज्वालाभिः उद्गच्छन् । वह्निः- बाडबाग्निः । प्रतिकलं प्रतिक्षणम् । उदयत्-समुद्भवत् । किञ्च भूरीभविष्यत्-वर्धिष्यमाणम् । वारि-सागराम्भः । अह्नाय-झटिति । चूषति-पिबति । अनुक्षणमुद्वेलतया प्रवर्धमानमम्भोधिसलिलं उदर्चिषा रसातलस्थेन बडबामुखाग्निना यद्यनुपदं नाचूषितमभविष्यत्, तर्हि भूमण्डलमखिलमपि सागराम्भःपूरैरावृतमभविष्यत्; तद्वदेव वर्धिष्णोः शात्रवबलस्य निग्रहाय यदि न समुचितः समुद्यमः क्रियते, तर्हि स्वयूथस्याशेषस्यापि सुलघु शत्रुजनैरभिवृद्धैराक्रमणं निधनं च स्यादिति तात्पर्यम् ॥ २० ॥

**स्वामिन इति** । भुजप्रतापं-स्वकीयं विशिष्टं बलमिति यावत् । पाण्डोः कृपाबलेनैव परपक्षप्रतिक्षेपे स्वात्मनां दक्षत्वम् अभिदधन्तः स्वात्मनां नैच्या-

नेत्रे मज्जयितुं मुखं ग्लपयितुं जत्रुद्वयं व्यञ्जितुं
पार्श्वास्थ्नां गणनीयतां गमयितुं सत्त्वं भृशं लुण्ठितुम् ।
सप्तत्वेऽपि निजे स्थिते घटयितुं पञ्चत्वमेवाङ्गिनां
शक्तान्नः प्रहिणोषि यत्र तरसा तत् साधयामो वयम् ॥ २१ ॥

---

नुसन्धानं प्रभोः प्रशंसां च प्रकटयन्त इमेऽतिसाराः स्वाम्यनुग्रहः स्वेषां तेन विशिष्य भवेदिति प्रतीक्षन्ते । विदांकरोतु-अस्माभिरभिधीयमानमपि सम्यगाकर्ण्य भवान् विमृशत्वित्यर्थः ।

स्ववक्तव्यांशमेव स्वप्रभावप्रकटनपुरस्सरं प्रस्तौति नेत्रे मज्जयितुमिति । अङ्गिनां-प्राणिनाम् । नेत्रे-अक्षिगोलकौ । मज्जयितुं-अधो गमयितुम् । मुखं-वदनम् । ग्लपयितुं-विम्लापयितुम् । जत्रुद्वयं-वामदक्षिणभागयोः विद्यमानम् अक्षकास्थि-सहितम् अस्थ्नां सन्धिद्वयम् । व्यञ्जितुं-उन्नमय्य व्यक्तीकर्तुम् । पार्श्वास्थ्नां-उरस उभयोर्भागयोरवस्थितानां पर्शुकाख्यानाम् अस्थ्नाम् । गणनीयतां-एकैकशो गण-नार्हताम् । गमयितुं-प्रापयितुम् । मांसले तु शरीरे प्रतिपार्श्वं विद्यमानानि द्वादश-संख्याकानि एतान्यस्थीनि न व्यक्तानि भवन्ति । सत्त्वं-शारीरं मानसं च बलम् । भृशं लुण्ठितुं-अपहर्तुम् । किं बहुना । निजे-आत्मीये । सप्तत्वे सप्तसङ्ख्या-कत्वे । स्थितेऽपि-विद्यमानेऽपि । पञ्चत्वं-पञ्चसङ्ख्याकत्वमेव; इति विरोधाभासः; अन्यत्र मरणमेवेत्यर्थः । घटयितुं-प्रापयितुम् । शक्तान्-समर्थान् । नः-अतीसारा-निति यावत् । यत्र-यस्मिन् कार्ये; यत् कार्यं निर्वोढुमिति भावः । तत्-कर्म । तरसा-बलात् सहसा च । वयं साधयामः-निर्वर्तयामः । तस्मात् सैनिकान्तरा-पेक्षया वयं वीर्येण चाशुकारित्वेन च बलवत्तरा इति भावः । अत्र सप्तातीसारा इत्युक्तम् । "एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्ठ आमेन चोक्तः" इति माधवकरः षडतीसारान् प्रथमतो निर्दिश्य, पश्चात् "पित्तकृन्ति यदात्यर्थं

**पाण्डुः**—(सबहुमानम्)

अतिसारा इति स्पष्टं विष्टपत्रयविश्रुतम् ।
युष्मन्नामैव युष्माकं ब्रूतेऽतिशयितं बलम् ॥ २२ ॥

---

द्रव्याण्यश्नाति पैत्तिके । तदोपजायतेऽभीक्ष्णं रक्तातीसार उल्बणः" इति रक्तातीसारं सप्तमत्वेन अभिदधाति । "न ह्येतावता सप्तत्वं भवत्यतिसारस्य, पैत्तिकस्यायमवस्थाविशेषः" इति विजयरक्षितो यद्यपि षट्त्वमेवास्य रोगस्य निर्धारयितुं प्रयतते, तथापि लोके रक्तातिसारस्य विशिष्य गणनायाः सद्भावात् सप्तातिसारा इत्युक्तौ न कोऽपि विरोधः । किञ्च "पृथक् त्रिदोषैः सर्वैश्च शोकादामाद्भयादपि । अतीसारः सप्तधा स्यात्" इति शार्ङ्गधरादयः प्रकारान्तरेणापि सप्तत्वमतिसारस्य गणयन्ति । अतः सङ्गत एवायं सप्तातिसारा इति ॥ २१ ॥

**सबहुमानमिति** । स्वाभीष्टकार्यनिर्वहणक्षमत्वमेतेषां समालोच्य सबहुमानत्वम् अतिसारेषु । तदेव स्पष्टयति वक्ष्यमाणेन श्लोकेन ।

**अतिसारा इतीति** । अतिसाराः-निरतिशय बलवन्तः । इति-एवंरूपेण । स्पष्टं यथा तथा । विष्टपत्रयविश्रुतं-लोकत्रयप्रसिद्धम् । युष्मन्नामैव-युष्मदीयं नामधेयमेव । युष्माकम् । अतिशयितं बलं-अनितरसाधरणीं शक्तिम् । ब्रूते । यद्यपीह अतिसारशब्दस्य निरवधिकं बलमिति न विरुद्धोऽयमर्थः तथापि वैद्यतन्त्रेषु 'अतीव सरति गच्छतीत्यतिसारः' इति तस्य दृश्यते निरुक्तिः । इयमेव निरुक्तिः संप्राप्तित्वेन निदाने प्रतिपाद्यते । यथा—"संशम्यापां धातुरग्निं प्रवृद्धः शकृन्मिश्रो वायुनाधः प्रणुन्नः । सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं" इति । "गुदेन बहुद्रवसरणम् अतिसारः" इति व्याख्याने विजयरक्षितश्च । किन्त्वत्र प्रकरणानुरोधेन अतिशयितबलवत्त्वात् अतिसार इति निर्वचनं कवेर्वैदग्ध्यं व्यञ्जयति ॥ २२ ॥

**गुल्म-प्लीहानः**—श्रूयतां स्वामिना—

अस्मासु प्रविशत्सु शात्रवपुरं पीडाकरेषु द्रुतं
कार्याकार्यविवेक एव न भवेदल्पोऽपि तस्मिन् क्षणे ।
आस्तामेतदिदं वचो निशमय क्षन्तुं व्यथामक्षमो
विज्ञानेन च मन्त्रिणा सह पुराज्जीवः पलायिष्यते ॥ २३ ॥

---

**अस्मास्विति** । अस्मासु-गुल्म-प्लीहसु । कथंभूतेषु-द्रुतं पीडाकरेषु-क्षिप्रमेव बाधाजनकेषु । शात्रवपुरम् । प्रविशत्सु-कोष्ठादीनामन्तः स्थानमधिगत्य निविष्टेषु; नगरस्यान्तः गतिं समधिगतेषु इत्यन्यत्रार्थः । तस्मिन् क्षणे । अल्पोऽपि । कार्याकार्यविवेकः-कर्तव्याकर्तव्येषु विषयेषु परिच्छिन्नं ज्ञानम् । नैव भवेत् । किंकर्तव्यतामूढः सन् जीवः सर्वधा चित्तक्षोभं प्राप्नुयादिति पद्यस्यास्य द्वितीयपादस्थानि पदानि सर्वाण्यपि संभूय सूचयन्ति । न केवलमेतावदेव, परं तु सुमहते जीवराजस्यात्याहितायास्मत्प्रवेशः प्रकल्प्येतेति पुनरभिधीयते आस्तामित्यादिना । आस्तामेतत्-अस्मत्प्रवेशानन्तरमेव जीवस्य कृत्याकृत्यविवेकाभवः संभविष्यतीत्येतत् तिष्ठतु नाम दूरे । इदं वचः-वक्ष्यमाणम् अस्मद्वचनम् । निशमय-आकर्णय । जीवः । व्यथां-अस्मत्कृतां बलवतीं बाधाम् । क्षन्तुम् अक्षमः-सोढुम् अशक्नुवानः सन् । विज्ञानेन मन्त्रिणा सह । पुरात् । पलायिष्यते । गुल्मस्य, विशेषतः सान्निपातिकस्य द्रुतं विदाहित्वम् अतीव पीडाकरत्वम् असाध्यत्वं च वैद्यके प्रतिपादितमेव । यथा—"महारुजं दाहपरीतमश्मवद्घनोन्नतं शीघ्रविदाहि दारुणम् । मनश्शरीराग्निबलापहारिणं त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥" इति । प्लीहोदरेऽपि "तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः ॥" इत्यादिभिः पीडा दुस्सहा शीघ्रकारिणी च भवत्यातुरस्येति वैद्यजनविदितमिदं तत्त्वम् । इत्यन्ततः प्लीहा गुल्मैश्च स्वस्वप्रभावाः सावष्टम्भं आविष्कृता वाचा ॥ २३ ॥

पाण्डुः—अस्मत्सैनिकोपरुद्धे पुरे पिपीलिकापि न प्रसरीसरीति। परं तु सर्वैरिदमाकर्णनीयम्। शास्त्रानुसारिणि मन्त्रिणि, तदनुरक्ते विक्रमाभिमानरक्षणैकपरे द्विजदेवपोषणैकतानमानसे राजनि, तस्मिन् निपुणं किमपि प्रतिविधानमनुसन्धेयम्। अतः प्रागेवातर्कयं किञ्चिदत्याहितहेतुस्तदीयान्तर्मुखतेति।

कुष्ठेष्वेकः—स्वामिन्, प्रागस्माभिः प्रेषितः शत्रुशिबिरं प्रविष्टः कर्णमूलोऽद्यापि नागतः; किं तैर्गृहीतः स्यात्।

---

सर्वेषामपि स्वसैनिकानां वाचोयुक्तीर्विविधाः समाकर्ण्य तदनन्तरं स्वाशयं संक्षिप्याविष्करोति पाण्डुः अस्मदित्यादिना। संख्यया सामर्थ्येन च समधिकैः स्वसैनिकैः उपरुद्धे-समाक्रान्ते। पुरे-शरीराख्ये पत्तने। पिपीलिकापि न प्रसरीसरीति-सूक्ष्मकीटप्रवेशार्होऽप्यवकाशस्तत्र न स्यात् इत्यर्थः। प्रसरीसरीति इति यङ्लुगन्तः प्रयोगः। परंतु-तथापि। सर्वैः-युष्माभिरशेषैरपि। इदमाकर्णनीयं-वक्ष्यमाणं विषयतत्त्वं श्रोतव्यम्। केवलं युष्मद्बलमेव संप्रति भवद्भिः प्रकटितम्; प्रत्यर्थिनां शक्तिः कीदृशीति किञ्चिदपि न विचारितमेकेनापि अस्मदीयेन, यामेवाहं संप्रति चिन्तयन्नस्मीति तद्विषयमेव स्पष्टमाचष्टे। मन्त्रिणि शास्त्रानुसारिणि सति; न तु यथेच्छावर्तिनि। राजनि तदनुरक्ते सति-राजतन्त्रप्रवीणस्य मन्त्रिणो वचसि विहितविस्रम्भे सति च; समाहितप्रीतौ राजनीति यावत्। अनुसन्धेयं-आलोचनीयम्। अतः-अस्मात् कारणात्। तस्य-जीवस्य। अन्तर्मुखता। अत्याहितस्य-महत्या आपदः, हेतुः। इति अतर्कयं-समालोचितवानस्मि। (पिपीलिकापि न प्रसरीसरीति, कुतः पुनरियं तस्य पलायनशङ्का। परं तु सर्वैरिदमाकर्णनीयम्। नीतिशास्त्रानुसारिणि मन्त्रिणि इति पाठान्तरम्।) स्वामिन्निति। प्राक्-पाण्डुसविधं प्रति स्वेषामागमनात् प्रागेवेत्यर्थः। शत्रुशिबिरं-वैरिणः कटकम्। प्रविष्टः-प्रत्यर्थिजनप्रयत्नादिकमपसर्पितुं अन्तर्गतः। (अत्र स्वामिन् इति स्थाने स्वगतम्

(ततः प्रविशति अध्वश्रान्तः कर्णमूलः ।)

**कर्णमूलः**—(दृष्ट्वा) एतत् खलु—

तत्तत्कार्यनिवेदनार्थमिलितान्योन्यानभिज्ञस्पश-
प्राप्तव्यावसरप्रतीक्षणकृतद्वाःपार्श्ववेद्यासिकम् ।
अन्तर्मन्दिरनिस्सरज्जनवचोविज्ञाप्यमानप्रभु-
व्यापारश्रवणेप्सुबाह्यमनुजं पश्यामि पाण्डोर्गृहम् ॥ २४ ॥

---

इति पाठान्तरम् ।) कर्णमूलः-कर्णस्याधस्तात् तालुन ऊर्ध्वं जायमानः श्वयथुः । पुट्टालम्मै इति भाषायाम् । अतीव रहस्यविषयाणां निगूढवृत्त्या ज्ञातुं चारत्वेन शत्रुकटके संचरणीयत्वात् कर्णमूलस्तत्कार्योचित इति तत्र निर्दिष्टः ।

तदिति । एतत् खलु इति पूर्ववाक्यमत्रानुवर्तते । एतत्-पुरो दृश्यमानम् । पाण्डोः गृहं खलु पश्यामि । तदेव वर्णयति तदित्यादिना । तत्तत्कार्याणां-यस्य यस्य यानि यानि कार्याणि कर्तव्यत्वेन निर्दिष्टानि तेषां तेषां कार्यविषयाणाम्, निवेदनार्थं-विज्ञापनार्थम्, मिलिताः-एकत्र समागताः, तथा अन्योन्यानभिज्ञाः-परस्परमपरिचिताश्च ये स्पशाः-चारपुरुषाः, तैः प्राप्तव्यस्य-अधिगन्तव्यस्य, अवसरस्य-तत्तदर्थं परिकल्पितावकाशस्य, प्रतीक्षणाय-प्रतिपालनार्थम्, कृता-विहिता, द्वाःपार्श्ववेद्यासिका-गृहद्वारस्य पार्श्वयोर्निर्मितवेदिषूपवेशनं यस्य तत् । (प्रतीक्षककृत इति पाठस्तु न साधीयान् ।) स्वस्वकृतकार्यजातनिवेदनार्थं युवराज-दर्शनावसराकाङ्क्षिणो बहवश्चारपुरुषा यथाकालमन्तर्गन्तुकामा गृहस्य बहिर्वेदि-कायां निषण्णाः सन्तीति भावः । आसिकाशब्द उपवेशार्थः । "दुरीश्वरद्वार-बहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः" इतिवत् । किञ्च । अन्तर्मन्दि-रात्-गृहस्यान्तःप्रदेशात्, निस्सरन्तः-बहिरागच्छन्तः, ये जनाः तेषां वचनैः-वार्ताभिः, विज्ञाप्यमानाः-निवेद्यमानाः, ये प्रभुव्यापाराः-राजकृत्यविशेषाः, तेषां श्रवणे, ईप्सवः-आसक्ताः, बाह्यमनुजाः-गृहस्य बहिः वीथीषु च विद्यमानाः

(द्वाःस्थं प्रति) गलगण्ड, कथय कर्णमूलं संप्राप्तं माम् ।

(गलगण्डः प्रविश्य निष्क्रम्य कर्णमूलं प्रवेशयति ।)

**कर्णमूलः**—(आत्मानं दृष्ट्वा स्वगतम्)

श्रमाम्भस्संसिक्तालिकलुलितपुण्ट्राङ्कवदनो
द्रवच्चर्मोपानद्दृढपिहितपार्श्वाञ्चलपदः ।
समुद्यन्निश्श्वासप्रसरपरिशुष्काधरपुटो
विलङ्घ्याहं दीर्घां सरणिमगमं पाण्डुसविधम् ॥ २९ ॥

---

प्रजाः यस्मिंस्तत् । द्वयोः प्रबलयो राज्ञोः परस्परस्पर्धया प्रत्यहं पारस्परिकेषु अभियोगोद्यमेषु सत्सु प्रचलत्सु, राजकृत्यसंबन्धिनो वार्ताविशेषान् राजगृहाभ्यन्तरात् तदा तदा निर्गच्छद्भयो जनेभ्यः सर्वेऽप्यवगन्तुं बाह्यजनाः स्युः समुत्सुका इति विदितमिदं सर्वेषाम् । पाण्डोर्गृहमेवं दृश्यमानमास्ते इति कर्णमूलः स्वयं तदवलोक्य वर्णितवान् ॥ २४ ॥

द्वाःस्थमिति । द्वाःस्थं प्रति-द्वारपालकमवलोक्येत्यर्थः । कर्णमूलं-तदाख्यं पुरुषाकारेणागतं रोगम् । मां संप्राप्तं कथय-कर्णमूलोऽहं समायात इति युवराजाय निवेदयेत्यर्थः । (निष्क्रम्य कर्णमूलेन सहान्तः प्रविशति इति पाठो न समुचितः, तस्य पुनर्बहिर्गमनस्य क्वचिदप्यसूचितत्वात् । अनन्तरं कासस्य प्रवेशावसरे गलगण्डस्य बहिरेव स्थितिश्च सूच्यते ।)

दूरदेशागमनश्रमजनितां स्वात्मनोऽवस्थामेव विवृणोति श्रमाम्भ इति । अहं-कर्णमूलः । कथम्भूतोऽहम् । श्रमाम्भसा-आयासजनितस्वेदसलिलेन, संसिक्ते-आप्लाविते, अलिके-ललाटे, लुलितः-प्रमृष्टः, पुण्ट्राङ्कः-पुण्ट्ररूपलाञ्छनम्, वदने यस्य सः । तन्मुखे श्रमजनितेन स्वेदोदकेन ललाटाङ्कितः पुण्ड्रः परिमृष्ट इत्यर्थः । तथा द्रवन्त्यौ-स्वेदजलाप्लावनेन आर्द्रीभवन्त्यौ, चर्मोपानहौ-चर्मनिर्मितपादुके ताभ्याम्, दृढपिहितं-बलवत् संश्लिष्टम्, पार्श्वाञ्चलं-परिसरोपान्तभागः ययोस्तादृशे, पदे-चरणतले यस्य सः । समधिकस्वेदजलार्द्रीकृते चरणस्थोपानहौ

(पाण्डुं दृष्ट्वा) कुमार, विजयी भव ।

**पाण्डुः**—भद्र किम् । किञ्चिदुपलब्धं तत्र भवता प्रविष्टेन ।

**कर्णमूलः**—किं सफलो न भविष्यति कुमारनियोगो विशेषोपलम्भेन ।

**पाण्डुः**—कथय कथय ।

**कर्णमूलः**—श्रूयताम् । उपरुद्धमस्मत्सैनिकैः पुरम् ।

**पाण्डुः**—किमेतत्परिज्ञानाय प्रेषितोऽसि । विदितं खल्विदं सर्वेषाम् ।

---

सुदृढं पादतलयोरग्रभागैः सह नीरन्ध्रं संश्लिष्टे इति भावः । (पार्श्वाञ्चलपटः इति पाठे तु—द्रवच्चर्मोपानद्भ्यां दृढपिहिते-बलवदानद्धे, पार्श्वाञ्चले-पर्यन्तभागौ यस्य सः, तादृशः पटः-परिधानवस्त्रं यस्य स इत्यर्थः ।) किञ्च समुद्यतां-बलवता वेगेनोद्गच्छताम्, निश्वासानां-श्वासपवनानाम्, प्रसरेण-व्याप्त्या ; निरन्तरस्पर्शेनेत्यर्थः, परिशुष्कं-सुतरामनार्द्रीकृतम्, अधरपुटं-अधरयुग्मं यस्य सः । एवंभूतस्सन् । दीर्घां-दवीयसीम् । सरणिं मार्गम् । विलङ्घ्य । पाण्डुसविधम् । अगमं-आगतोऽस्मि । अतिदूरयात्रां परिक्रमणेन परिसमाप्य सुमहता परिश्रमेण युवराजान्तिकमागतोऽस्मीति भावः ॥ २९ ॥

**भद्रेति** । सेवकादस्मात् प्रयोजनापेक्षितया भद्र इति वात्सल्यसूचकं संबोधनम् । किं-को विशेषः । तत्र-शत्रुपुरे । प्रविष्टेन भवता । किञ्चिदुपलब्धं—यत् किञ्चित् परिपन्थिनां सम्बन्धि रहस्यं किमवगतम् । कुमारनियोगः—युवराजनिर्दिष्टः कार्यविशेषः । विशेषोपलम्भेन-असाधारणानां वृत्तान्तानामधिगमेन । किं सफलो न भविष्यति-भृत्यजनः कुमारस्य नियोगं अशून्यमेव करिष्यतीत्यर्थः । कथय कथयेत्याम्रेडितवचनं विपक्षवृत्तान्तविशेषश्रवणे समुत्पन्नमौत्सुक्याधिक्यं सूचयति । उपरुद्धं समन्ततश्चाक्रान्तम् । कर्णमूलेन निवेदितस्य विदितपूर्वस्य सर्वसामान्यस्य विषयस्याकर्णनानन्तरमेव भग्नोत्साहः पाण्डुः सनिर्वेदं सावज्ञं च पृच्छति कर्णमूलम्, किमेतत्परिज्ञानायेत्यादिना ।

**कर्णमूलः**—(सर्वतो विलोक्य) एतदेव प्रस्तोतुमयमवसरः ।

**पाण्डुः**—विस्रब्धं कथय । किं न जानासि अस्मच्छरीराण्येव किलैते ।

**कर्णमूलः**—देव, भवदाज्ञया प्रविष्टोऽस्मि पुण्डरीकपुरम् । तत्राद्राक्षं च सन्निरीक्षणैकपरे ईक्षणे, निगमार्थश्रवणप्रसृते श्रवसी, शिवनिर्माल्यगन्धसन्तर्पितं घ्राणम्, विघसामृतास्वादनैकतानां रसनाम्, त्रेताभस्मावगुण्ठितां त्वचम्, धर्मार्थसंग्रहीतारौ करौ, तदर्थं कृतसञ्चरणौ

---

सर्वतो विलोक्येति । रहस्यवृत्तान्तस्य वक्तव्यतया विस्रम्भानर्हः कोऽपि विद्यते वा इति ज्ञातुं सर्वतो विलोकनम् । एतत् रहस्यं वृत्तम् । प्रस्तोतुं-निवेदितुम् । विस्रब्धं-वीतशङ्कं यथा तथा । एते तत्र तिष्ठन्तो जनाः । अस्मच्छरीराण्येव-विश्वसनीयविषयेऽस्मद्देहतो न व्यतिरिक्ता इत्यर्थः । "भगवन् अव्यतिरिक्तेयमस्मच्छरीरादशङ्कितमभिधीयताम्" इति कादम्बर्यां कपिञ्जलं प्रति एवमेव महाश्वेतोक्तिः । पुण्डरीकपुरं-जीवराजराजधानीम् । अद्राक्षं-साक्षान्मद्दृष्ट्यैवापश्यम् । चकारेण नगरप्रवेशस्यापि समुच्चयः । दृष्टान्येव वस्तुतत्त्वानि विवृणोति **सन्निरीक्षणेत्यादिना** । अत्र ईक्षणादिकरणानां यक्ष्मादिरोगाणां धारणाप्रभृतीनामिव च पुरुषत्वेन व्यपदेशं कृत्वा व्यवह्रियते । ईक्षणे-नेत्रेन्द्रिये । जीवस्येति शेषः । सतां-सात्त्विकानां निवृत्त्युपयोगिसन्मार्गस्य वा, निरीक्षणैकपरे-तदेकावलोकननिरते । भवत इति शेषः । श्रवसी-श्रोत्रेन्द्रिये । निगमार्थनां-वेदोपबृंहितानां विषयतत्त्वानाम्, श्रवणे-आकर्णने, प्रसृते व्यापृते । घ्राणेन्द्रियं तु । शिवनिर्माल्यं-शिवार्चनावशिष्टं गन्धमाल्यादिकं तस्य गन्धेनैव सन्तर्पितं-सन्तुष्टम् । रसनां-रसनेन्द्रियम् । विघसः-भुक्तशेषमन्नम्, भगवन्निवेदितावशिष्टान्नमिति भावः, स एवामृतं तस्यास्वादनैकतानाम् । भगवन्निवेदितोपात्तात् आहाराद्दते नान्यद्भुज्यत इति भावः । "अमृतं विघसो यज्ञशेषभोजनशेषयोः" इत्यमरः । त्वचं-त्वगि-

चरणौ, चिरन्तनसरस्वतीचिकुरपरिमलामोदसदनं वदनं च। तद्दर्शनेन क्वचिदपि स्थलमलभमानः स्थातुमपि नाशक्नुवम्, किंपुनर्देवस्याज्ञां परिपालयितुम्।

कुष्ठः—(विहस्य) अनासारवर्षणम् अजागलस्तनसमवस्थं तव गमनमागनं च—

संनिपातः—कुष्ठ, सावशेषमिव तव वचनम्।

कुष्ठः—स्वामिपोषितस्वकलेबरनिरर्थकता च।

---

न्द्रियम्। त्रेता-संस्कृतमग्नित्रयम्, दक्षिणाग्निः, गार्हपत्याग्निः, आहवनीयाग्निरिति ते त्रयः, तादृशादग्नित्रयादागतं यत् भस्म तेन अवगुण्ठितां-समन्तादुद्धूलिताम्। करौ। धर्मार्थयोः-तदाख्ययोः पुरुषार्थयोः, संग्रहीतारौ-विहितपरिग्रहौ; न्याय्येन पथा द्रव्यार्जनं विधाय, तस्य द्रव्यस्य धर्मादनपेतेषु कृत्येषु विनियोगश्च कराभ्यां क्रियत इत्यर्थः। चरणौ। तदर्थं-अर्थार्जनधर्माचरणार्थम्। कृतसञ्चरणौ-आदृतगमनागमनौ। वदनं-आस्यं च। चिरन्तनसरस्वत्याः-श्रुत्याः, चिकुरस्य-कुन्तलस्य; उपनिषद इत्यर्थः, यः परिमलामोदः-सुगन्धनिर्हारः, तस्य सदनं-आवासस्थलम; वेदान्तरहस्यरसानामास्वादननिरतमित्यर्थः। "क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयश्चिरन्तनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः" इति यतिराजसप्तत्यां श्रीवेदान्तदेशिकः। एवं सात्त्विकजनादृतेषु धर्मेष्वेव व्यग्राणि व्यापृतानि च ज्ञानेन्द्रियकर्मेन्द्रियाण्यद्राक्षं पुण्डरीकपुर इति भावः। तद्दर्शनेन-तस्य करणग्रामस्यावलोकनेन। देवस्य-युवराजस्य। आज्ञां प्रविश्य पुण्डरीकपुरं शात्रवकुलप्रवृत्तिं सर्वामपि विदित्वागम्यतामित्येतादृशं निदेशम्। किं पुनः परिपालयितुं-यत्र क्वचित् कोणे स्थातुमपि न शक्तमिति चेत् का वार्ता कार्यान्तरविलोकनविचारणविषय इति कैमुतिकेन परिपन्थिपक्षीयमसाधरणं बलं स्वकीयमसामर्थ्यं च युगपदाविष्कृतम्। कर्णमूलस्य

**कर्णमूलः**—जाग्रति मच्छिरसि महाराजपादपङ्कजरेणौ कथमेतद्भविष्यति ।

**पाण्डुः** —ततस्ततः ।

**कर्णमूलः**—ततश्च—

तस्मिन् पुरे स्थानमहं विचेतुं चरन् समन्तात् क्वचिदप्यपश्यम् ।
त्रिष्वाशयेषु स्थितिमत् सशङ्कं संचारितं केन च पङ्गुयुग्मम् ॥२६॥

---

शक्तिवैकल्यमुपहसति **कुष्ठो विहस्येत्यादिना** । आसारस्य-धारारूपस्य सलिलस्य, वर्षणं शीलं यस्य तत्, तादृशं न भवतीति अनासारवर्षणम् । घनगर्जितमित्यन्त-र्भावितविशेष्यमिदं विशेषणम् । अजागलस्तनसमवस्थं-अजागले लम्बमानं स्तनमिव निरुपयुक्तम् । तव-कर्णमूलस्य । इतो महतायासेन तावद्दूरगमनं पुनस्ततोऽप्यधि-कतरेण श्रमेण तस्मात् प्रतिनिवर्ततं च । वचनं तव सावशेषमिव-त्वदीयः कण्ठस्वरो वाक्यशेषो विद्यत इति सूचयतीत्यर्थः । वचनशेषमेव पूरयति **स्वामि-पोषितेत्यनेन** । स्वामिना-प्रभुणा, पोषितं-जीविकादानादिना संवर्धितम् । यत् कलेबरं-स्वशरीरम् । तस्य निरर्थकता-प्रयोजनाभावत्वं च । तव पूर्ववचनेन सूचि-तेति शेषः ।

**जाग्रतीति** । महाराजस्य-यक्ष्मणः, पादपङ्कजयोः रेणौ-रजोभूते । मच्छि-रसि मम मूर्धनि । महाराजचरणयोः सविस्रम्भं सेवातत्परे इत्यर्थः । जाग्रति-सति जागरूके । एतत् स्वामिपोषितस्वकलेबरनिरर्थकत्वादिकम् । कथं भविष्यति। यावताहं सजीवो भवामि तावता स्वामिसेवया स्वशरीरधारणं सार्थमेव करिष्यामीति भावः ।

तथा चेन्द्रियाणां प्रतिनियतस्य समुच्चमस्य प्रदर्शनानन्तरं यदवलोकितं तदेव वदति **ततश्चेति** । ततश्च-पूर्वनिवेदितविषयेभ्योऽनन्तरम् । **तस्मिन् पुरे इति** । तस्मिन् पुरे । अहम् । स्थानं-स्थातुं वृत्तान्तादिकं ज्ञातुं च समुचितं

**पाण्डुः**—(स्वगतम्) वायुना संचार्यमाणं कफपित्तयोर्युगं तद्भवेत्। (प्रकाशम्) ततस्ततः।

**कर्णमूलः**—तस्मादन्तःपुरचारिणः पङ्गुयुग्मात् तत्संचारयतः पुरुषाच्च प्रवृत्तिरुपलब्धुं शक्येति तच्च तं चोपासर्पमहम्। स च तच्च मयि दृष्टमात्रे—

---

देशम्। विचेतुं-अन्वेष्टुम्। (विवेक्तुं इति पाठे तन्नगरस्थस्थानानि विविच्य ज्ञातुमित्यर्थः।) समन्तात्-परितः। चरन् सन्। क्वचित्-कस्मिंश्चित् प्रदेशे। त्रिषु आशयेषु-प्रधानेषु त्रिषु नगरस्थलेषु; अन्यत्र नाभेरधस्तात्, नाभिहृदययोर्मध्ये, हृदयस्योर्ध्वं चेति त्रिषु स्थानेषु। स्थितिमत्-अधिगतास्पदम्। केन च-केनचित् पुरुषेण, केनचित् धातुना च। सशङ्कं-सवितर्कं यथा तथा। सञ्चारितं-नीयमानम। पङ्गुयुग्मं-द्वौ पङ्गू पुरुषौ। अप्यपश्यम्-अपि चाद्राक्षम्। नियमनिष्ठानां पूर्वनिर्दिष्टानां ज्ञानेन्द्रियादीनाम् अवेक्षणानन्तरं त्रीनप्येतान् पुरुषानद्राक्षमिति भावः। एते च त्रयस्त्रिदोषा एव नान्ये। सर्वशरीरव्यापिनामपि तेषां वात-पित्त-कफानां नाभेरधः, हृन्नाभ्योर्मध्ये, हृदयस्योर्ध्वं च क्रमेण स्थानानि निर्दिष्टानि। "ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः" इति। तेषु दोषद्वयस्य पङ्गुत्वम् इतरस्य वातस्य तयोर्नेतृत्वं च "पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः। वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्" इत्यादिना सुप्रसिद्धं वैद्यके। इदं च तत्त्वं वक्ष्यमाणेन वायुनेतिवाक्येन पाण्डुः स्वयं विवृणोति॥ २६॥

तस्मादिति। अन्तःपुरे चरतीति अन्तःपुरचारि तस्मात्। पङ्गुयुग्मात्-स्वतन्त्रचलनासमर्थात् पित्त-कफाख्यदोषद्वयात्। तौ दाषौ सञ्चारयतः-स्वशक्त्या समन्तान्नयतः। पुरुषात्-वाताभिधात् दोषाच्च। प्रवृत्तिः-विपक्षसम्बन्धी व्यापारः। सः-संचारयन् पुरुषश्च। तत्-पङ्गुयुग्मं च। मयि-कर्णमूले। दृष्टमात्रे सति। यावताहं तेषां दृग्गोचरोऽभवं तदुत्तरक्षण एव तैर्वक्ष्यमाणरीत्या प्रोक्तमिति यावत्।

भद्र गच्छ परिसर्प मा कुतो देशतस्त्वमसि नन्विहागतः ।
कस्य वा वद परिग्रहो भवानित्यपृच्छदथ सोऽपि तच्च माम् ॥ २७॥

भो भो भद्रमुखाः परिग्रहतया कस्यापि नाहं स्थितो
रात्रिं नेतुमिहागतोऽस्मि नियतं सायाह्नि भिक्षाटनम् ।
स्थानं मे यदि शक्यतेऽपगतये प्रातस्तदा दीयता-
मित्युक्ते तु मया तदन्तरुदभूदन्योन्यमालोचना ॥ २८ ॥

---

**भद्रेति** । भद्र-हे सुमुख । मा परिसर्प-मा समायाहि अत्र । गच्छ-प्रदेशमिमं विहाय बहिर्याहि । भवान् । कस्य वा पुरुषस्य । परिग्रहः-परिजनः । भवसीति शेषः । वद-स्पष्टं ब्रूहि । नन्विति संबोधने । इह-एतत्प्रदेशे । कुतः-कस्मात् । देशतः-देशात् । त्वम् । आगतोऽसि । इति-एवंप्रकारेण । सः-नेता पुरुषोऽपि । तत्-पङ्गुयुग्मं च । माम् । अपृच्छत् । तेषामपि त्रयाणां पुरुषाणां जीवराज-तन्मन्त्रिणोः शासनेन नियन्त्रितत्वात् राजद्रोहशङ्कया तस्यापरिचितस्य पुरुषस्य तत्त्वावगमे तस्य बहिः प्रेषणे च त्वरातिशयश्चित्तोद्वेगश्चानेन सूचितः ॥ २७ ॥

तस्य कर्णमूलोक्तमुत्तरप्रकारमपि **भो भो भद्रमुखाः** इत्यादिना विवृणोति । भो भो भद्रमुखाः-हे त्रयः पुरुषाः । अहम् । कस्यापि-कस्यचिदपि । परिग्रहतया-परिजनत्वेन । न स्थितः-न भवामि । नाहं कस्यचित् सेवक इत्यर्थः । सायाह्नि-सायन्दिने । ममेति शेषः । भिक्षाटनं-भिक्षार्जनार्थं संचारः । नियतं-नियमत्वेन विद्यते । अन्वहं सायमहं भिक्षार्थं बहिः पर्यटामीत्यर्थः । इह । रात्रिं-रात्रिकाल । नेतुं-यापयितुत । आगतोऽस्मि । नान्यत् प्रयोजनमत्रागमनस्येति सूचयन् तेषां स्वविषये शङ्कां निवारयति । प्रातः । अपगतये-निर्गमनाय । मे-मम । स्थानं-अवस्थितये समुचितमवकाशम् । यदि शक्यते-साध्यं भवति चेत । दातुमिति

अनन्तरं च 'कार्यान्तरव्यापृते च राजनि, नूतनपुरुषपरिमार्गणपरे च नागरिके, भिक्षो रात्रौ नावसरस्त्वादृशामत्र शयितुम्' इत्युक्तवत्सु तेषु, 'क्व कार्ये राजा व्याप्रियते कुत एवं भिक्षुकाणामभ्युपरोधः' इति पृष्टवानस्मि।

**पाण्डुः**—ततस्ततः।

**कर्णमूलः**—तेऽपि मां भद्रेत्यामन्त्र्य समकथयन्।

---

शेषः। तदा दीयताम्। प्रातरुत्थाय बहिर्गमिष्यामि, तावत्पर्यन्तं रात्रावत्र स्थीयतामिति यद्यवकाशदानपुरस्सरम् अनुज्ञाप्यते तर्हि तिष्ठामीति भावः। इति। मया। उक्ते सति। तदन्तः-तेषां मध्ये। अन्योन्यं-परस्परम्। आलोचना-मन्त्रणम्। उदभूत्-प्रावर्तत। मदुत्तरदानानन्तरमेव परस्परं ते समालोचनार्थं प्रवृत्ता इति यावत्॥ २८॥

**अनन्तरमिति**। तेषामालोचनानन्तरमित्यर्थः। उक्तवत्सु तेषु-तैरभिहिते सतीत्यर्थः। तैरुक्तमेव विशदयति **कार्यान्तरेत्यादिना**। राजनि-जीवराजे। कार्यान्तरेषु-राजकीयव्यापारेषु, व्यापृते-समुद्युक्ते सति। नागरिके-नगररक्षाधिकृते पुरुषे। नूतनपुरुषाणां-आगन्तुकत्वेन शङ्कनीयानां नराणाम्, परिमार्गणपरे-अन्वेषणासक्ते सति। नागरिकशब्दस्य 'नगररक्षकाणामधिकारी' इति शाकुन्तलव्याख्यानम्। भिक्षो इति संबोधनेन व्यवस्थादिभिरनियन्त्रितानां नराणाम् अस्मिन् सङ्कटावहे समये विशिष्य रात्रिवेलायां नात्र शयनाद्यर्थम् अवकाशं दातुं शक्यत इति भावः। तपस्विभिः भिक्षुभिः संकटः कोऽपि न भवेत्, ततः कुतो भिक्षुकाणामुपरोधः पुरेऽस्मिन् क्रियत इति पृष्टवान् कर्णमूलः।

**तेऽपीति**। भद्रेति सौजन्योचितं संबोधनम्, यच्च कर्णमूलस्य रिपुजनपदं प्रविश्य स्थितस्य किञ्चिदिवाश्वासकम् अभिनन्दनीयं चाभवत्।

पुण्डरीकपुरे मन्त्रिप्रेरितः परमेश्वरम् ।
आराद्धुं गतवान् राजा मनोद्वारेण तिष्ठति ॥ २९ ॥

किञ्च—

शत्रुनिरुद्धे च पुरे परिसर्पाशङ्कया नगरगुप्त्यै ।
नागरिकशिक्षणमिति प्रोवाचेमां तदानीं ते ॥ ३० ॥

---

**पुण्डरीकपुर** इति । राजा-जीवः । मन्त्रिप्रेरितः-सचिवेन बोधितः सन् । परमेश्वरं-ईशानम् । आराद्धुं-संपूजितुम् । गतवान् । (गत्वा च संप्रति) मनोद्वारेण-निदिध्यासनाधिकरणभूतस्य चित्ताख्यस्यान्तःकरणस्य द्वारा । पुण्डरीकपुरे । तिष्ठति । जीवराजो मन्त्र्युपदेशानुरोधेन मनोद्वारा गत्वा महेश्वरं ध्यानादिना समाराधयन् हृत्पुण्डरीकमधिवसतीति भावः । अनेन श्लोकेन 'क्व कार्ये राजा व्याप्रियते' इत्यस्य कर्णमूलकृतस्य प्रश्नस्य प्रत्युत्तरं दत्तम् ॥ २९ ॥

**किञ्च** इत्यनेन 'कुत एवं भिक्षुकाणामप्युपरोधः' इत्येष द्वितीयः प्रश्नः समाधीयते । **शत्रुनिरुद्धे चेति** । पुरे-जीवस्य नगरे; शरीर इति यावत् । शत्रुनिरुद्धे-यक्ष्मपर्क्ष्यैः आमयरूपैः प्रतिपक्षजनैः सति समावृते । परिसर्पाणां-गुप्तचारिणां चारपुरुषाणाम्, शङ्कया-वितर्कवशात् । नगरगुप्त्यै-जीवराजनिवासार्हस्य पुरस्य शत्रुपक्षीयेभ्यः संरक्षणाय । नागरिकशिक्षणं-नागरिककृतं शिक्षणमिति मध्यमपदलोपी समासः; नगरपरिपालनकर्माधिकृतेन विहितो नियोगप्रकारोऽयं य एष भिक्षुकाणामप्यत्रोपरोधो नामेति भावः । नागरिक इति रक्षापुरुषाधिकारी य एव नगरगुप्तौ नियमेनाधिकृतो भवति । इति-एवंरीत्या । ते पङ्गुप्रभृतयः । तदानीं-मत्कृतप्रश्नावसरे । इमां-वाचमित्यर्थः । प्रोवाचन्-प्रत्यवदन् ॥ ३० ॥

अत्रान्तरे विजृम्भमाणं यामिककलकलमश्रृणवम्। श्रुत्वा च कथंचिल्लब्धावकाशः स्वामिकार्यगौरवादागतोऽस्मि ।

**पाण्डुः**—(आकाशे लक्ष्यं बध्वा सोपहासम्) रे रे मन्त्रिहतक, अस्मज्जयार्थं सहजवैरिणं रसं साधयितुं किल तव प्रयत्नः। तर्हि पश्य—

साधितोऽपि स किं कुर्याद्रसः पथ्यक्रमं विना ।
जिह्वाचापलमुद्भाव्य स एव ध्वंसयिष्यते ॥ ३१ ॥

---

**अत्रान्तर इति**। यामिककलकलं-यामिकानां-यामिन्यां पर्यायतः प्रतिप्रहरं नगररक्षामाचरताम्, कलकलं-कोलाहलशब्दम्। प्रतिपन्थिचाराविष्टं नगरमिति प्रतिश्रुत्य प्रहररक्षकैर्विहितं संक्षोभसहितसंरावमिति यावत्। कथंचिदिति-सुबहुभी राजपुरुषैर्यामिकैरपरैश्च नगरमार्गाणां सर्वत्र संकुलीभूतत्वात् तेषां मध्यात् कस्यचिद्वैदेशिकस्य मादृशस्य विनिर्गमनं दुश्शकमभूदिति भावः।

**आकाश इति**। आकाशे लक्ष्यं बध्वा-तिर्यगन्तरिक्षे दृष्टिं साकूतं प्रसार्येत्यर्थः। केनचित् सह संलपन्निव स्वयमेवाकाशबद्धदृष्टिर्यदभिभाषणं तदाकाशभाषितमिति नाटकेषु व्यवह्रियते। "किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकस्तत् स्यादाकाशभाषितम्" इति तल्लक्षणम्। अस्मज्जयार्थं-यक्ष्मपक्षीयाणां सर्वेषां रोगसमूहानां विजयार्थम्। सहजवैरिणं रसं-सर्वेषामपि व्याधीनां प्रकृत्यैव प्रत्यर्थिभूतं पारदम्। तथा राजनिघण्टुः—"पारदः सकलरोगनाशनः षड्रसो निखिलयोगवाहकः। पञ्चभूतमय एष कीर्तितो देहलोहपरसिद्धिदायकः" इति। अथ विज्ञानशर्मणा विनिर्मितस्य स्वेषां विनाशहेतोरुपायस्यापि विघातहेतुकं स्वालोचितमुपायान्तरं विनिर्दिश्य स्ववैरिणं पाण्डुस्तर्जयति **तर्हि पश्येत्यादिना**।

**साधितोऽपीति**। स रसः-पारदः। साधितोऽपि-परमेश्वरप्रसादाधिगमादिद्वारा देहसिद्धिकरत्वेन सम्पादितसंस्कारोऽपीत्यर्थः। पथ्यक्रमं-औषधगुणाभि-

किञ्च, भक्त्या तं घटयित्वा चतुरोऽपि पुमर्थांस्तस्य साधयितुं किलायमपरो यत्नः; तत्रापि प्रतिविधास्यते ।

**कर्णमूलः**—(सप्रश्रयम्) देव, **युगविगमसमयसमसमुदितमार्ताण्डमण्डलस्येवा-खण्डितप्रतापस्य तवापि कियान् स रसः, शोषणे वा तस्य तव किं न महिमातिशयः । तथाहि**—

---

वर्धनपूर्वकं देहहितकार्याहारादिसेवनप्रकारम् । विना । सः-रस एव । जिह्वाचापलं-विविधरसविशिष्टाशनजातानाम् आस्वादने रसनाया लौल्यम् । उद्भाव्य-समुत्पाद्य । ध्वंसयिष्यते-शरीरस्य विनाशं विधास्यति । रससेवनावसरे पथ्याहारस्य परि-पालनावश्यकतामालोच्यैव रसरत्नसमुच्चये एकादशेऽध्याये "कण्टारीफलकाञ्जिकं च कमलं तैलं . . " इत्यादिभिः पथ्याहारा बहवः सन्ति प्रतिपादिताः ॥३१॥

न केवलं ऐहिकस्यासाधारणफलस्य प्रदातू रसस्य सिध्यर्थं स मन्त्री यतते, अपि तु पुमर्थानाम् आमुष्मिकसिद्धिसम्पादकानाम् अस्मद्यूथमूलच्छेदहेतूनां साधनाय स जीवं संधुक्षयतीत्याह **किञ्चेत्यादिना** । भक्त्या-परमेश्वरविषयक्या । तं-जीवम् । घटयित्वा-योजयित्वा । प्रतिविधास्यते-पुमर्थसाधकोद्यमानां विघाताय यतिष्यत इति यावत् । **देवेति** । युगविगमसमयः-युगान्तकालः, प्रलयकाल इति यावत्; तस्मिन्, समसमुदितानां-एककालेनोदयमधिगतवताम्, मार्ताण्डानां-द्वादशादित्यानाम्, मण्डलं-व्यूहः, तस्येव । अखण्डितप्रतापस्य-अप्रतिहतपरा-क्रमस्य; सूर्यपक्षे संवर्तमेघादिभिरपि कथंचिदप्यसंशमनीयसन्तापसंयुतातपस्ये-त्यर्थः । तवापि । सः रसः कियान् । तस्य-रसस्य । शोषणे-नीरसीकरणे । तव । महिमातिशयः-अनितरसाधारणः प्रभावः । किं न । अस्त्येवेत्यर्थः । रस इत्यस्य सलिलमित्यपि पाक्षिकार्थः; अपां शोषणे मार्ताण्ड इव रसशोषणे भवानपि प्रभवति सर्वथेति भावः । तामेव शक्तिं निरूपयति तथाहीति ।

दृष्ट्वा वैरिचमूसमूहमवशादुद्वेलमुज्जृम्भित-
क्रोधात् सङ्गररङ्गसीमनि भवत्युद्दामबद्धादरे ।
जीवः क्व क्व च तस्य मन्त्रिहतको विज्ञानशर्मा पुन-
र्दृश्येरन् क्व तृणाग्नितुल्यमहसस्तस्याल्पसारा रसाः ॥ ३२ ॥

**पाण्डुः**—आः, अस्त्वेतत् । भद्र, कथय कीदृशी प्रकृतीनां प्रवृत्तिः ।

---

दृष्ट्वेति । वैरिचमूसमूहं-शत्रुसेनानिवहम् । दृष्ट्वा । अवशात्-स्वयमेव निर्निरोधं यथा तथेत्यर्थः । किञ्च उद्वेलं-निर्मर्यादं यथा तथा । उज्जृम्भितक्रोधात्-अभिवृद्धप्रकोपात् हेतोः । भवति-त्वयि । सङ्गररङ्गसीमनि-रणाङ्गणभूमौ । उद्दामबद्धादरे-बलवदाहितश्रद्धे सति । (अद्धा निबद्धादरे इति पाठे-सत्यं आहितश्रद्धे सतीत्यर्थः) जीवः क्व-जीवराजः कुत्र तिष्ठेदित्यर्थः । (जीवः कः इति पाठे जीवः कीदृशः, त्वत्समक्षं स क्षुद्रः स्यादित्यर्थः) तस्य मन्त्रिहतकः-तदीयो दुष्टः सचिवः । विज्ञानशर्मा च क्व दृश्येत । यत्र क्वचित् पलायनमेव तयोर्गतिरिति भावः । तस्य-जीवस्य विज्ञानशर्मणो वा । तृणाग्नेः-आश्रितशुष्कयवसस्य आश्रयाशस्य, तुल्यं-दौर्बल्यतस्तत्सदृशम्, महः-तेजः, वीर्यमिति यावत्, येषां ते । अत एव अल्पसाराः-बलेनातिलघिष्ठाः । रसाः-विविधाः पारदादयः पुनः । "रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा । इति पञ्चविधो जातः क्षेत्रभेदेन शम्भुजः" इति रसस्य पञ्चविधत्वं प्रसिद्धम् । रसोपरसादिभिः सिद्धानि विविधान्यौषधानि वा । क्व दृश्येरन्-प्रकुपितस्य दुस्सहतेजसस्तव पुरस्तात् रसोऽयं नीरसो भूत्वा क्वापि निलीयेतेति भावः । तव पुरतो न केवलं जीवराजः, तत्सचिवो विज्ञानशर्मा च, परं तु पारदादयस्तत्साधिता रसाश्च स्युरकिञ्चित्करा इति कर्णमूलः पाण्डोरुत्साहमभिवर्धयत्यनेन वाक्येन ॥ ३२ ॥

आः इति कर्णमूलोक्त्या आमोदनपूर्वकक्रोधसूचकः शब्दः । अस्त्वेतत्-प्रासङ्गिकागतोऽयमास्तां विचार इत्यर्थः । प्रकृतीनां-पौरजनानाम् । प्रकृतिशब्देन वातादिदेहप्रकृतयश्चार्थाल्लभ्यन्ते ।

के स्वामिनि दृढभक्ताः के प्रबलाः के च दुर्बला नगरे ।
अरिमित्रोदासीनाः के पुनरङ्ग त्वया दृष्टाः ॥ ३३ ॥

**कर्णमूलः**—कथयामि, देव श्रूयताम् ।

तत्र प्रकृतयस्तिस्रो वातपित्तकफात्मकाः ।
तत्र यः प्रबलो वातः स तु स्नेहैर्वशीकृतः ॥ ३४ ॥

---

**के स्वामिनीति** । अङ्गेति सप्रेमामन्त्रणम् । नगरे-शरीराख्ये पुरे । स्वामिनि-जीवराजे । दृढभक्ताः-अत्यन्तप्रीतिमन्तः । के । प्रबलाः-बलिष्ठाः । के । दुर्बलाश्च-तथा दृढभक्तिमत्सु हीनबलाश्च । के । स्वामिनि निरवधिकभक्तियुक्तैरपि दुर्बलैः कातरैश्च तैर्न किमपि स्यात् फलम् ; वीर्यबलादिविशिष्टैरपि तैर्भक्तिरहितैश्च न किमपि स्यात् प्रयोजनम् ; इति प्रथमाङ्कव्याख्याने निर्दिष्टा नीतिरत्राप्यनुसन्धेया (दृश्यतां प्रथमाङ्के २९ पद्यव्याख्यानम् ) । पुनः-किञ्च । अरिमित्रोदासीनाः के-के तस्य जीवस्य प्रकृतिषु शत्रवः, के तस्य सुहृदः, के च मध्यस्थाः । त्वया । दृष्टाः-तत्रावलोकिताः ॥ ३३ ॥

**तत्रेति** । तत्र-पुरे । प्रकृतयः-जननकाले जायमानाः स्वभावाः प्रजापर्यायत्वेन अत्र निर्दिश्यन्ते । तिस्रः-त्रिविधाः प्रकृतयो दृष्टा इति यावत् । ताश्च वात-पित्त-कफात्मकाः । 'शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयान्तरे । यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता' इति द्वन्द्व-सान्निपातिकसङ्कलनेन यद्यपि सप्त प्रकृतयः प्राक्तनैः सुश्रुतादिभिः सन्त्यभिहिताः, तथापि सर्वासां दोषत्रयान्तर्गतत्वात् 'शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः । तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक्' इत्यानन्तरिककालजैः वाग्भटाद्याचार्यैः सूचितां रीतिमनुसृत्य तिस्रः प्रकृतयोऽत्र प्रतिपादिताः । शरीराख्ये पुरे वात-पित्त-कफात्मकास्त्रिविधाः प्रकृतयः, त एव प्रकृतयः—राज्याङ्गभूताः प्रजा इत्यर्थः । तासां तादात्विकीमवस्थामपि विशदयत्युत्तरार्धेन तदानन्तरिकश्लोकेन च । तत्र-तासु प्रकृतिषु । प्रबलो यो वातः-

किञ्च—

तदनुगतं यत् पित्तं मधुरमयैस्तद्विजेयमुपचारैः ।
पङ्गुर्यस्तत्र कफस्तीक्ष्णोपायैर्वशं स चानीतः ॥ ३९ ॥

---

वायुनामा दोषः । अतिबलवत्त्वं च वायोः सर्वैरायुर्वेदाचार्यैश्चरकादिभिर्विवृतमस्ति । यथा—'प्राणादिभेदेन पञ्चात्मा वायुः प्रवर्तकश्चेष्टानामुच्चावचानां नियन्ता प्रणेता च मनसः । सर्वेन्द्रियाणामुद्योगकरः । सर्वेन्द्रियार्थानामभिवोढा । सर्वशरीरधातु-व्यूहकरः सन्धानकरः शरीरस्य । प्रवर्तको वाचः । स्थूलाणुस्रोतसां भेत्ता । कर्ता गर्भाकृतीनाम् ।' इत्यादीनि बहूनि प्राकृतानि विकृतानि च कर्माणि स्वबलेन महता निर्वर्तयितुं प्रभवति वातः । सः-तादृशो वातस्तु । स्नेहैः- घृत-तैल-वसा-मज्जाख्यैश्चतुर्भिः शुद्धैः संस्कृतैर्वा स्नेहौषधैः । वशीकृतः-स्वायत्तीकृतः ; यथा कुपितः सन् शरीरे कमपि सङ्कटं विकारं वा नोपजनयेत् तथा प्रकृतिभावं वातो नीत इत्यर्थः । 'वातस्योपक्रमः स्नेहः' इत्युक्तप्रकारेण प्रकृतिष्वन्यतमो वातः प्रकोपावस्थामनधि-गत्यैव समुपशमित इत्यर्थः । अन्यत्र प्रबलरिपुपक्षे "प्रबलेऽरौ सामदाने" इति राजनीतिमनुरुध्य बलेन दुर्दमो वाताख्यः शत्रुः स्नेहैः-सामप्रयोगैः दानादिभिश्च स्निग्ध्यमाविष्कृत्य वशीकृतः-स्वानुकूलो विहित इति च सरसः श्लेषार्थः ॥ ३४ ॥

प्रबलस्य वातस्य स्नेहेन वशीकरणानन्तरं किमुपनतमवशिष्टस्य प्रकृति-द्वयस्येति प्रश्ने प्रवृत्ते तत्र ब्रूते **किञ्चेति** । तीक्ष्णगुणः पित्ताख्यो दोषश्च किञ्चि-दुच्चावचतया वातवद्दुर्जयः । वातेन संधुक्षितो हुतवह इव देहाख्यं पुरं वातानु-सृतं पित्तं विदह्य विनाशयेत् । अतः कथं सा प्रकृतिः पित्ताख्यापि जीवस्यानु-कूल्यमाचरेदिति पृष्टे, तत् समाधीयते **तदनुगतमिति** । तदनुगतं-तेन वातेन अनुगतं-अनुसृतम् । तं वातम् अनुगच्छतीति तदनुगतमिति वा । यत् पित्तम् । वायुवह्न्योरिव वात-पित्तयोः साहचर्यं तु सहजमेव । अतस्तस्य वीर्यं क्रौर्यं च विपरीतफलमुत्पादयेदिति विभाव्य, तत्संशयं परिहरति **मधुरेति** । मधुर-मयैः-स्वादुप्रायैः । उपचारैः-उपशमोपायैः । विजेयं-जेतुं शक्यमिति निर्णीतं

**पाण्डुः**—अथ कीदृशो मनसो वृत्तान्तः ।

**कर्णमूलः**—

उद्दामबुद्धिविभवेन मनस्तु तत्र
विज्ञानशर्मसचिवेन वशीकृतं सत् ।
कार्ये महत्यधिकृतं हितकारि राज्ञः
सर्वात्मनाप्यनुसरत्यधुना तमेव ॥ ३६ ॥

---

जीवराजादिभिरित्यर्थः । "पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् । स्वादुतिक्तकषायाणि भोजनान्यौषधानि च । सौम्या भावाः पयः सर्पिः" इति पित्तविजयार्थं स्वादुशीतप्रायाः सदुपचाराः समभिहिताः । प्रबलानां साहाय्यमधिगतानां क्रूराणां च लोके वशीकरणं मधुरमयैः-हृदयङ्गमैः उपचारैः प्रकल्प्यते । पङ्गुः-सर्वथा सहायान्तरं विना प्रचलितुमशक्तः, सुतरां मन्दस्वभाव इत्यर्थः । यः कफः-तृतीया प्रकृतिः । स च । तीक्ष्णोपायैः-कटुतिक्तरूक्षप्रायैरुपचारैः । वशं-आनुकूल्यम् । नीतः-प्रापितः । "श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् । अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम्" इति कफस्य तीक्ष्णोपायसाध्यत्वं शास्त्रज्ञविदितम् । अपि च मन्दवीर्याः शत्रवोऽपि वित्रासनताडनादिभिस्तीक्ष्णोपायैरेव लोके नृपैरपरैश्च वशीक्रियन्ते । एवं वैद्यशास्त्रोक्तान् विधीननुरुध्य वातादिदोषरूपाणां प्रकृतीनां संक्षिप्तान् संशमनोपायान्, राजनीतिमनुसृत्य प्रबलानां दुर्बलानां च प्रतिपन्थिभूतानां प्रकृतिमण्डलानां सामदानदण्डादिरूपोपायैः स्वायत्तीकरणप्रकारांश्च श्लेषोक्त्या साधु समर्थितवान् कविः ॥ ३५ ॥

**अथ कीदृश इति** । मनसो वृत्तान्तः कीदृशः— मनसश्चेष्टा किमध्यात्मपरा भवति, अथ काम-क्रोध-मदादीनामधीना सती उन्मादादीनामस्मदीयानामनुकूला वर्तते वा इत्याकाङ्क्षा ।

**उद्दामेति** । तत्र-शत्रुपुरे । मनस्तु । उद्दामः-अतिबलीयान्, अनियन्त्रितप्रसर इति यावत्; बुद्धेर्विभवः-मतिविकासविशेषः यस्य तेन । विज्ञानशर्म-

**पाण्डुः**—अथ विज्ञानशर्मस्पर्धिनो ज्ञानशर्ममन्त्रिणः कीदृशः प्रकारः ।

**कर्णमूलः**—

विज्ञानमन्त्रिमन्त्रैर्विविधैरसकृद्विधूतनिजशक्तिः ।
स ज्ञानशर्ममन्त्री तिष्ठति केवलमसौ स्वरूपेण ॥ ३७ ॥

---

सचिवेन । वशीकृतं-तत्प्रतिभाविशेषेण बलादाकृष्य तदायत्तीकृतं सत् । महति-प्रभाषेण प्रथिम्नि । कार्ये-आधिपत्ये । सर्वेषामपीन्द्रियाणां निग्रहपूर्वकं निखिल-लोकनियन्तुः परमेश्वरस्य प्रसादलाभाय समुचिते निरवधिकानन्ददायिनि निदि-ध्यासनाख्ये कर्मणीति भावः । अधिकृतं-तत्कार्यनिर्वहणधुरन्धरत्वेन नियोजितं सत् । राज्ञः-जीवराजस्य । हितकारि-आनुकूल्यं संपादयत् सत् । तं-जीवमेव । अधुना । सर्वात्मना-अशेषेणापि प्रकारेण । अनुसरति । विचित्रेण विज्ञानशर्मणो मतिप्रभावेण सुतरामावर्जितं मनश्च बाह्यैरान्तरैश्चोद्यमैः सर्वथा जीवराजस्य श्वःश्रेयसायैव प्रवृत्तमिति भावः ॥ ३६ ॥

प्रकृतयः प्रभोर्जीवराजस्य वशंवदाः समभवन्; पक्षद्वयेऽपि मध्यस्थ-भावमवलम्बमानं मनश्च बलवदद्य जीवासक्तमभवत्; अथ सयूथ्यैरन्तःकलह-माचरद्भिः स्याद्राज्यस्य बलवत्पालितस्यापि कदाचित् सङ्कटे पतनम् इति विचार्य तद्विषयं पृच्छति अथेति । अथ-एवममीषु सर्वथास्माकं प्रतिकूलतामधिगतेषु सत्स्वित्यर्थः । विज्ञानशर्मणा स्पर्धिनः-प्रतिद्वन्द्वीभवतः । ज्ञानशर्मणः-मुक्त्यनु-कूले मार्ग एवैकान्तप्रवृत्तिमतस्तदाख्यस्य जीवसचिवस्य । "मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः" इत्यमरः । प्रकारः-रीतिः । कीदृशः ।

**विज्ञानमन्त्रीति** । सः-त्वत्कूटमन्त्रोपयोगित्वेन त्वयालोच्यमानः असौ ज्ञानशर्माख्यो मन्त्री । विविधैः-ऐहिकानां नैकविधानां श्रेयसाम् आपादकैः; त्रिवर्गसाधनोचितैरिति भावः । विज्ञानमन्त्रिणः मन्त्रैः-विमर्शपूर्वकयुक्तिविशेषैः । असकृत्-अनुपदम्, बहुवारमित्यर्थः । विधूता-तिरस्कृता, निजशक्तिः-स्वसामर्थ्यं

एवंविधविविधविचित्रचरित्रविस्मापितसकललोकस्य स्वामिहितकरणैकतानस्य तस्य मन्त्रिणः पारे खलु वाङ्मनसयोश्चरिताद्भुतानि । तथा हि—

तत्तद्दुर्घटराजकार्यघटनाव्यापारपारीणया
शक्त्या दुष्प्रसहस्य तस्य वचनैर्नानोपपत्त्यन्वितैः ।
निर्द्वन्द्वोऽपि स निर्गुणोऽपि च निराकारोऽपि निर्लेपनो-
ऽप्याः कष्टं प्रतिपक्षतामुपगतो जीवो विचेष्टेत नः ॥ ३८ ॥

---

यस्य सः; तथाभूतः सन् । स्वरूपेण केवलं-ज्ञानाख्यं स्वकीयं रूपमनपहाय स्थितः सन्, स्वोचितनिश्श्रेयसमार्गे जीवं प्रवर्तयितुं सर्वथा चासमर्थो भूत्वेत्यर्थः । तिष्ठति-ज्ञानाख्यनाममात्रावशिष्टः सत् क्वचित् कोणे लीन एवास्त इति भावः ॥ विज्ञानशर्मणो निसर्गसिद्धैस्त्रिवर्गसाधनोपायैर्विवशीकृते जीवे ज्ञानशर्मा तत्पुरतः संप्रत्यकिञ्चित्करः स्वयं क्वचिज्जोषमास्त इति भावः ॥ ३७ ॥

एवंविधेति । एवंविधानि-पूर्वोक्तरीत्या प्रकृति-मनो-बुद्धि-ज्ञानशर्मप्रभृतीनां वशीकरणसमर्थानि, विविधानि-नानाप्रकाराणि, तथा विचित्राणि-अद्भुतानि यानि चरित्राणि-प्रख्यातकृत्यानि तैः विस्मापिताः सकललोकाः येन तस्य । स्वामिहि-तस्य करणे एकतानस्य-स्वप्रभोरनुकूलाचरणैकनिरतस्य । तस्य-तथाविधप्रभाव-वतः । मन्त्रिणः । चरिताद्भुतानि-आश्चर्यावहानि कर्माणि । वाङ्मनसयोः पारे खलु-अवाङ्मनसगोचराणीत्यर्थः । तथा हीति तान्येवोपपादयति ।

तत्तदिति । तत्तद्दुर्घटराजकार्याणां-अनितरदुस्साध्यानामनेकविधानां राज्य-निर्वहणकृत्यानाम्, घटनाव्यापारे-साधनोद्यमे, पारीणया-प्रभवत्या । शक्त्या-स्वसामर्थ्येन । दुष्प्रसहस्य-आक्रमणानर्हस्य । तस्य-मन्त्रिणः । नानोपपत्त्यन्वितैः-विस्रम्भणीयविविधहेतूपसृष्टैः । वचनैः-वाचोयुक्तिभिः । सः-जीवः-इति जीवराज अत्र जीवात्मा व्यवहृतः । निर्द्वन्द्वोऽपि-सुख-दुःख जन्म-मरणादिभिः द्वन्द्वदोषैर्वि-रहितोऽपि । निर्गुणोऽपि-रजस्तमःप्रभृतिभिर्गुणैरस्पृष्टोऽपि । निराकारोऽपि-स्थूल-

तस्मादेवंस्थिते प्रकृतिमण्डले दुर्भेद्ये च शत्रुपक्षे महदत्याहितमापतिष्यति । (इति भयं नाटयति ।)

पाण्डुः—(विचिन्त्य) मा बिभेहि । तत्रापि काचिदस्त्यबाधिता नीतिः ।

**कर्णमूलः**—कीदृशी ।

**पाण्डुः**—श्रूयताम् ।

**यच्चञ्चलं प्रकृत्या विषयेषु मनो निसर्गदुर्दान्तम् ।**
तत्कामादिभिरेतैर्भेदयितुं शक्यते शनकैः ॥ ३९ ॥

---

सूक्ष्म-श्वेत-रक्तादिरूपैः स्वरूपैरनन्वितोऽपि । निर्लेपनोऽपि-संसृतिसंबन्धादिवासनादोषादिभिरस्पृष्टोऽपि । "तेजस्स्वरूपो निर्द्वन्द्वो निराकारो निराश्रयः । निर्लिप्तो निर्गुणः साक्षी" इत्येवमादिप्रमाणनिर्दिष्टलक्षणविशिष्टो जीवात्मेति भावः । तथाविधोऽपि जीवः । नः-यक्ष्मपक्षीयाणाम् । प्रतिपक्षतां-शत्रुभावम् । उपगतः-प्राप्तः सन् । विचेष्टेत-प्रवर्तेत । स्वेषाम् उन्मूलनकर्मणि महामतेरघटनघटनापटीयसो मन्त्रिणो मन्त्रबलात् समुद्युक्तः स्याज्जीव इति सम्यगवगत्य महान्तं मनः-क्लेशं समुद्वेगं च सूचयति आः कष्टमिति ॥ ३८ ॥

**तस्मादिति** । प्रकृतिमण्डले-राज्याङ्गभूते प्रकृतीनां समूहे । "राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च" इत्यमरः । वातादिप्रकृतिसमवाये च । एवंस्थिते-पूर्वनिर्दिष्टरीत्या विज्ञानशर्ममन्त्रविवशस्य जीवराजस्य सर्वात्मना स्वाधीनत्वं समधिगते सति । शत्रुपक्षे । दुर्भेद्ये-दुर्जये च सति । अत्याहितं-जीवितापोहहेतुकं महद्भयम् । **तत्रापीति**—तादृशे समुपनतेऽप्यवस्थान्तर इत्यर्थः । अबाधिता-अमोघा । नीतिः-परिहारपद्धतिः ।

तमेव नीतिप्रकारं विशदयति **यच्चञ्चलमिति** । यत्-यस्मात् कारणात् । मनः-अन्तःकरणाख्यमाभ्यन्तरमिन्द्रियम् । प्रकृत्या-स्वभावत एव । चञ्चलं-अती-

तस्मिन् सर्वविषयाधिष्ठाने मनसि स्वाधीने सुकर एव कार्यशेषः। किञ्च याः किलाद्यास्तत्र तिस्रः प्रकृतयस्तासु यस्तीक्ष्णोपायैः संयमित-वृद्धिः श्लेष्मा तस्योपचयं केनाप्युपायेन विधाय तेनैव तावपि क्षोभयितुं शक्येते।

---

वास्थिरस्वभावम्। किञ्च विषयेषु—रूप-रस-गन्ध-शब्द-स्पर्शाख्येषु पञ्चेन्द्रिय-गोचरेषु बाह्येषु भावेषु। निसर्गदुर्दान्तं-स्वभावत एव सुतरामनियन्त्रितप्रसरम्। भवतीति शेषः। तत्-तस्माद्धेतोः। कामादिभिः-कामप्रभृतिभिः; क्रोध-लोभाद-यश्चादिशब्देन गृह्यन्ते। एतैः-अस्माकं सन्निहितैरित्यर्थः; कामक्रोधादीनां मानसिक-विकाराणां पाण्डुप्रभृतीनां शारीरविकाराणां च परस्परसन्निहितसम्बन्धं सूचयति एतैरिति शब्दः। शनकैः-क्रमेण। भेदयितुं-जीवेन सह मनसो विद्यमानं सौजन्यं विघटयितुम्। शक्यते।

"अपि च प्रभूतमदमेदुरात्मनो विषयाटवीषु विविधासु धावतः।
स्वबलेन हन्त मनसो निवर्तनं बिसतन्तुनेव सुरदन्तियन्त्रणम्॥"

इति सङ्कल्पसूर्योदये श्रीवेदान्तदेशिकेनाभिहितरीत्या निसर्गचञ्चलं विशिष्य विषयव्यापृतं मनः कामादिसाहाय्यतः स्ववशीकर्तुं सुशकमेवेति पाण्डुः स्वयमा-लोच्य, किञ्चिदिवानेन स्वस्य स्वसुहृदां च समाश्वासनमासादितुं अभिलषति॥३९॥

**तस्मिन्निति**। तस्मिन्-तादृशचञ्चलादिगुणविशिष्टे। सर्वेषां ज्ञानेन्द्रिया-दिभिः ग्राह्याणां विषयाणां शब्दादीनाम्, अधिष्ठाने-आश्रयत्वेनावस्थिते। मनसि। "तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः" इत्युक्तरीत्या मनसः सर्वेन्द्रियात्मकत्वात् सर्वविषयाणामपि नैसर्गिकमधिष्ठान-त्वमपि तस्य संघटते। कार्यशेषः-अवशिष्टः दशानां ज्ञानेन्द्रिय-कर्मेन्द्रियाणां वशीकरणरूपः कर्मसमुदायः। आद्याः-प्रधानाः। अनेन सत्त्व-रजस्तमोरूपाः महदहङ्कारबुद्धिप्रभृतयस्तत्त्वविशेषाश्च जीवराजस्य प्रकृतिष्वन्तर्भवन्तीति मन्त-

विज्ञानोऽयं यद्यपि स्वामिभक्तस्तत्राप्यस्यासन्निधाने विविक्ते ।
भेदो राज्ञस्तस्य तैस्तैरुपायैः शक्यः कर्तुं ज्ञानशर्मोपजापैः ॥४०॥

एवं राज-मन्त्रिणोर्विरोधेन विश्लिष्टे प्रकृतिमण्डलेऽचिरादेव हस्तगता महाराजस्य यक्ष्मणो जयलक्ष्मीः ।

**कर्णमूलः**—(सहर्षम्) साधु चिन्तिता मन्त्रिवर्येण राजतन्त्रनीतिः ।

**पाण्डुः**—भद्र, महाराजनिकटं गतो नाद्याप्यायाति कासः ।

---

व्यम् । (वाताद्यास्तत्र तिस्रः प्रकृतयः इत्यपि पाठः ।) तीक्ष्णोपायैः-तिक्त-कटु-कषायप्रायाणां स्पर्शतो वीर्यतश्चोष्णानाम् औषधान्नविहाराणां प्रयोगैः । केनाप्युपायेन-उपायान्तरेण ; स्वाद्वम्ललवणप्रायाणां स्पर्शतो वीर्यतश्च शीतानाम् आहारविहारादीनां प्रयोगेणेति यावत् । "रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः । तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् । कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते" इति प्रमाणानुरोधेनात्र कफस्य शमन-प्रकोपनोपाया उपपाद्यन्ते ।

विचक्षणस्य विलक्षणज्ञाननिधेर्विज्ञानशर्मणः साहाय्येनोपबृंहितबलो जीवः कथमभिभवनीय इत्याकाङ्क्षायां तत्रोपायमाह **विज्ञानोऽयमिति** । अयं विज्ञानः-त्रिवर्गसाधकः सचिवः । यद्यपि स्वामिभक्तः-स्वकीये राज्ञि विश्वस्तहृदयः । तत्रापि-तथा विद्यमानेऽपि । अस्य-विज्ञानशर्मणः । असन्निधाने-तद्विरहिते समये । विविक्ते-जीवे एकान्ततस्स्थिते सति । ज्ञानशर्मोपजापैः-ज्ञानशर्माख्यापवर्गसाधकमन्त्रिकृतविप्रलम्भवचनैः ; सुहृद्भेदविधायकरूपैरिति भावः । तैस्तैः-अनेकरूपैः । उपायैः-नीतिप्रयोगैः । तस्य राज्ञः-जीवराजस्य । भेदः-विज्ञानशर्मायत्तस्य सौहृदस्य विश्वासस्य च विच्छेदः । कर्तुं शक्यः-तन्मैत्रीविघटनविधानं साध्यमेवेति भावः ॥ ४० ॥

**एवमिति** । एवं-स्वात्मना पूर्वं संभावितरीत्येत्यर्थः । **प्रकृतिमण्डले** ।

(प्रविश्य)

**गलगण्डः**—देव, महाराजपादमूलात् कासः प्राप्तः ।

**पाण्डुः**—त्वरितं प्रवेशय ।

(ततः प्रविशति गलगण्डेनानुगम्यमानः कासः । कासो जानुभ्यां प्रणम्य किञ्चिदुपसर्पति ।)

**पाण्डुः**—भद्र, कीदृशो मयि राजनियोगः ।

**कासः**—(करपिहितमुखः, कर्णे) एवमिव ।

**पाण्डुः**—भद्र, तदर्थमेवेयं बद्धपरिकरता । तिष्ठ त्वमत्रैव । राजानमिममुदन्तमन्यमुखेन प्रापयिष्ये ।

(नेपथ्ये यामप्रहरध्वनिः ।)

**पाण्डुः**—(श्रुत्वा सैनिकान् प्रति) तदहमिदानीं कार्यशेषं निर्वर्त्य प्रकृतकार्यार्थं संनह्यामि । भवन्तोऽपि तावत्—

---

विश्लिष्टे-अधिगतान्योन्यानुकूल्यविच्छेदे । देवेति । महाराजपादमूलात्-यक्ष्मणः सकाशात् । करपिहितेति । आस्योद्भूतसृणिकाकणिकावाहिनिश्वासवातनिवारणपूर्वकं स्वामिसन्निधौ प्रह्वीभावप्रकटनाय सेवकजनैः करेण मुखपिधानं सल्लापसमये क्रियत इति सर्वविदितोऽयं संप्रदायः । अथवा विषयस्यातिगूढस्य तृतीयपुरुषात् गोपनाय च मुखमेवं करेण सामान्यतः पिधीयते । कर्णे-श्रोत्रस्यातीवान्तिके । एवमिव-एवं संदिष्टं महाराजेनेति भावः । पूर्वस्मिन्नङ्के "अस्मत्सैन्यैर्निरोधं कृतमगणयता" इति पद्ये विद्यमानो विषयस्तादृशः कश्चिदपरश्च एवमिवेति कर्णान्तिके कथ्यते । यामप्रहरेति । यामे-यामान्ते, एकैकस्य च यामस्यावसान इत्यर्थः; कृतः प्रहरः-घण्टादीनां ताडनम्, तस्य ध्वनिः-यामावसानद्योतकशब्दः । समुद्भूत इति शेषः । श्रुत्वेति । कार्यशेषं-स्वगृहे कर्णमूलादिभिः सह समालोचितस्य कार्यस्यावशिष्टमपि भागम् । निर्वर्त्य-सम्यगालोचनया निष्पाद्य । प्रकृतकार्यार्थं-यक्ष्मादिष्टकर्मनिर्वहणार्थम् । संनह्यामि-यतिष्ये ।

बिभ्राणास्तान्युपमितमहाभोगिभिर्बाहुदण्डै-
र्येषां येषां दधति निजतां यानि यान्यायुधानि ।
स्वस्वस्थानेष्ववहितमनोवृत्तयस्त्यक्तशङ्काः
सर्वे तिष्ठन्त्वरिपुरमभिव्याप्य सैन्याः प्रवीराः ॥ ४१ ॥

(इति निष्क्रान्ताः सर्वे ।)

। इति द्वितीयोऽङ्कः ।

---

कास-कर्णमूलादीनपि इतः कर्तव्ये कर्मण्यादिशति बिभ्राणा इति । सर्वे । प्रवीराः-विक्रमेण विशिष्टाः । सैन्याः-योधाः । उपमिताः महाभोगिना यैस्तैः ; अतिस्थूलसर्पभोगसदृशैरित्यर्थः । बाहुदण्डैः-बलवद्दण्डाकारैर्भुजैः । यानि यानि आयुधानि-गदा-खड्ग-धनुःप्रभृतीनि प्रहरणानि । येषां येषां-सैनिकानाम् । निजतां-स्वकीयताम् । दधति-स्वकीयत्वेन तिष्ठन्तीत्यर्थः । व्याधिपक्षे कुष्ठस्य विविधाः व्रणाः, अर्शसो गुदाङ्कुराः, अतीसारस्य रेचनम्, ज्वरस्य दाहरूपोऽग्निः इत्येवमादीनि क्रमशः स्वीयानि प्रहरणानि भवन्ति । तानि तानि-आयुधानि । बिभ्राणाः-आदाय धृतवन्तः सन्तः । अवहितमनोवृत्तयः-सावधानचित्ताः । त्यक्तशङ्काः-साध्वसरहिताः । वित्रासजनकं शात्रवबलविहितं विविधमायोधनकोलाहलमवलोक्य मनसि भयं मात्रयाप्यनाहितवन्त इति भावः । स्वस्वस्थानेषु-तत्तदुचितत्वेन नियमितेषु स्थलेषु । अरिपुरं-शत्रुनगरम् । अभिव्याप्य-समन्ततो रुध्वा । तिष्ठन्तु । सैनिकैः सर्वैरपि सायुधपाणिभिः साध्वसरहितैः सावहिति संभूय सपत्नपुराभियोग एव संप्रति विधातव्य इति यावत् ॥ ४१ ॥

इति वैद्यरत्नबिरुदाङ्कितेन, आयुर्वेदभूषण-आयुर्वेदाचार्येत्याद्युपाधिभाजा मेल्पाक्कं पण्डित दुरैस्वाम्यय्यङ्गार्महोदयेन मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां
**नन्दिन्याख्यायां** व्याख्यायां
**द्वितीयोऽङ्कः ।**

# तृतीयोऽङ्कः

(ततः प्रविशति पश्चाद्बद्धं पुरुषं किङ्करेण विकर्षन् विचारो नागरिकः ।)

**नागरिकः**—अङ्ग गद, कस्त्वमसि ।

**पुरुषः**—(स्वगतम्) किमहं ज्ञातोऽस्म्यनेन गद इति ।

**नागरिकः**—किं विचारयसि । यदि सत्यं गदसि ततो मोक्ष्यसे ।

**पुरुषः**—(स्वगतम्) नाहमनेन ज्ञातः ।

---

एतावता निर्वृत्तानामितो निर्वर्तिष्यमाणानां च कथावस्तूनां संक्षिप्योपपादकं विष्कम्भं नामार्थोपक्षेपकं कथासङ्घटनार्थं प्रस्तौति तृतीयाङ्कारम्भे । एष च शुद्धविष्कम्भः; यत्र हि मध्यमगुणविशिष्टैः पात्रैः शुद्धसंस्कृतवाण्यैव व्यवहारः प्रचलेत् । अन्यस्तावत् मिश्रविष्कम्भः, स च संस्कृत-प्राकृतभाषामयो नीचैः नीच-मध्यमैर्वा पात्रैः प्रवर्तेत । "वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः । शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यमकल्पितः" इति तल्लक्षणम् ।

**ततःप्रविशतीति** । भुजयुगस्य च पश्चादाकृष्य बन्धनं पश्चाद्बन्धनमित्युच्यते; तया रीत्या बद्धं पुरुषम् । किङ्करेण विकर्षन्-स्वचोदितेन भृत्येन कृताकर्षणः सन्नित्यर्थः । विचारः-तदाख्यः । नागरिकः-नगररक्षकः पुरुषः । **अङ्गेति** संबोधने । गद-वद । गद-हे हृद्गद इति सुबन्तत्वेन व्याधिसम्बोधनार्थे च गद-

बिभ्राणो मुखबाहुवक्षसि कृतं पुण्ड्रत्रयं भस्मना
हस्तोपात्तविशुद्धताम्रकलशो रुद्राक्षमाली गले ।
धृत्वा वैदिकवेषमाविशमिह स्वस्वामिना प्रेरितो
हृद्रोगोऽहमरेरवेक्षितुमना जीवस्य राज्ञः स्थितिम् ॥ १ ॥

---

शब्दः श्लेषयात्र प्रयुक्तः; येन किल बद्धस्य पुरुषस्य वक्ष्यमाणरीत्या संशयोत्पत्तेरवकाशः समुद्भवेत्। गद इति-हृद्गद इति। गदसि-वदसि। गदसीति सुस्पष्टं तिङन्तत्वद्योतनेन पूर्वनिर्दिष्टो गदशब्दश्च वचनार्थकस्तिङन्त इति पुरुषेणावगम्येतेति तथा प्रयोगः। अत एवानन्तरमेव पुरुषश्चिन्तयति नाहमनेन ज्ञात इति। (यदि सत्यं गदोऽसि इत्यसाधुः पाठः।)

कुतो वाहं गद इति नागरिकादिभिः नावगम्यत इत्यत्र स पुरुष एव स्वयं हेतुमाह **बिभ्राण इति**। अहं-पुरुषान्तरत्वेन धृतवेषः पुरुषः। हृद्रोगः-हृद्गदः; नान्यः। हृद्रोगो नाम—"दूषयित्वा रसं दोषा विगुणा हृदयं गताः। हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते" इति, "अत्युष्णगुर्वम्लकषायतिक्तैः श्रमाभिघाताध्यशनप्रसङ्गैः। सञ्चिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः" इति च तत्कारणलक्षणानि। स्वस्वामिना-आत्मनः प्रभुणा पाण्डुना राजयक्ष्मणा वा। प्रेरितः। वैदिकवेषं-वैदिकस्येव बाह्यमण्डनम्। न तु वस्तुतोऽस्य वैदिकत्वमिति भावः। धृत्वा। वेषस्वरूपमेव विवृणोति बिभ्राण इत्यादिना। मुख-बाहु-वक्षसि-एतेष्ववयवेषु; प्राण्यङ्गत्वादेकवद्भावः। भस्मना कृतम्। पुण्ड्रत्रयं-रेखात्रयविन्यस्तान् पुण्ड्रानिति यावत्। बिभ्राणः-धारयन्। हस्ते उपात्तः-गृहीतः, विशुद्धःनिर्मलोज्वलः, ताम्रकलशः येन सः। गले-कण्ठे। रुद्राक्षमाली-रुद्राक्षमालावान्। एवंभूतः सन्। अरेः-शत्रुभूतस्य जीवस्य राज्ञः-जीवराजस्य। स्थितिं-सन्निवेशप्रकारम्। अवेक्षितुमनाः-दिदृक्षुः सन्। इह-जीवनगरे। आविशं-प्रविष्टवानस्मि। सपत्नजनेभ्यः स्वात्मनो गोपनाय धृतवैदिकवेषः शत्रुनगरं प्रविष्टोऽस्मीति यावत् ॥१॥

अनन्तरमनेन नागरिकेण झटिति गृहीत्वा बध्वा च विकृष्टोऽस्मि । भवतु एवं ब्रवीमि । (प्रकाशम्) आर्य, मुञ्च माम् । विप्रश्निकतामुपजीव्येदं जठरहतकं पुष्णामि ।

**नागरिकः**—अस्त्वेतत् । कुतो रात्रिसञ्चारः ।

**पुरुषः**—यस्य कस्यचित् यत्किञ्चित् भावि फलमुक्त्वा पारितोषिकं गृह्णामीति ।

**नागरिकः**—किं दिवसस्ते तत्कर्मणो न पर्याप्तः ।

**पुरुषः**—बाढम् । श्रूयताम्—

यामो यात्यविलम्बितं दिनमुखे स्नानादिभिः कर्मभिः
पश्चाद्भिक्षितुमारभे प्रतिदिनं धान्यानि वा तण्डुलान् ।
तैरन्नान्युपपाद्य पञ्च च महायज्ञान् विधायाश्नति
श्रीकण्ठाय निवेद्य मय्यतिथये दत्वा च गच्छत्यहः ॥ २ ॥

---

अनन्तरमिति । वैदिकवेषेण नगरप्रवेशानन्तरम् । (अनन्तरमनेन नागरिकेण संयमितः इति संक्षिप्तं पाठान्तरम् ।) एवं ब्रवीमि-मनस्यालोचितमुपायमनुरुध्य वदामीति यावत् । विप्रश्निकतां-दैवज्ञत्वम् । उपजीव्य-जीवनोपायत्वेनावलम्ब्य । इदं जठरहतकमिति स्वोदरपोषणे मुहुरनुभूयमानं परिश्रममालोच्य एवं सनिर्वेदमभिधीयते । कुतो रात्रिसञ्चारः-विप्रश्निकोपजीविनः किमर्थं रात्रिवेलायामितस्ततश्चङ्क्रमणमित्यर्थः । यस्य कस्यचिदिति । भावि फलं-कालान्तरभाविशुभाशुभरूपं परिणामविषयम् । पारितोषिकं-सबहुमानं दीयमानमुपायनम् । बाढमिति नागरिकोक्तं 'किं दिवसस्ते न पर्याप्तः' इति वचनं दृढीकरोति । दिवसस्यापर्याप्तत्वमेव निरूपयति श्रूयतामिति ।

याम इति । दिनमुखे-प्रभातकाले । स्नानादिभिः-स्नान-सन्ध्यावन्दन-जपादिभिः । कर्मभिः । यामः-दिनस्य प्रथमः प्रहरः । अविलम्बितं-अतित्वरितमिव ।

**किङ्करः**—अये युक्तमिदम्। इह तु यामादूर्ध्वं रुध्यते नगरसंचारः।

**पुरुषः**—यदिदानीं यामादूर्ध्वं कालस्तर्हि न संचरामि, निद्रास्थानं गच्छामि।

**किङ्करः**—कुत्र निद्रास्थानम्।

**पुरुषः**—धर्मशालायाम्।

---

याति-प्रचलति। पश्चात्-प्रथमयामानन्तरम्। प्रतिदिनम्। धान्यानि-व्रीहि-यव-गोधूमादीनि। तण्डुलान् वा। भिक्षितुं-याचितुम्। आरभे। ततः, तैः-भिक्षया सम्पादितैस्तण्डुलादिभिः। अन्नानि-ओदनव्यञ्जनादीनि। उपपाद्य-विपाच्य। पञ्चमहायज्ञान्—ब्रह्मयज्ञ-पितृयज्ञ-देवयज्ञ-भूतयज्ञ-मनुष्ययज्ञाभिधान्। "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" इति महायज्ञपञ्चकं मनुना विवृतम्। विधाय-निर्वर्त्य। श्रीकण्ठाय-महेश्वराय। तानि निवेद्य-समर्प्य। अतिथये दत्वा च। भगवन्निवेदनानन्तरमागच्छद्भ्यः सर्वेभ्यश्च प्रदाय। देव-मनुष्ययोः पूजनं यद्यपि पञ्चमहायज्ञेषु भवत्यन्तर्गतं तथापि परमेश्वरस्य परस्तादतिथेश्च सपर्या विशिष्य कर्तव्येत्याशयेन पुनस्तयोः पूजनं प्रत्येकं प्रत्यपादि। मयि अश्नति-भुञ्जाने सति। अहः-दिवसः। गच्छति-अवसानं याति। प्रातरारभ्य यावत् सायम् आह्निककृत्यानां अनुष्ठानायापि नालं भवति कालः, अतो विप्रश्निकजीविकायै ममावकाश एव नोपलभ्यत इति भावः। (तैरन्नाद्युपपाद्य धूर्जटिमुखान् देवान् निवेद्यातिथीन् संतर्प्याश्नत एव याति दिवसः शेषः कुतः सञ्चरः इत्युत्तरार्धस्य पाठान्तरम्। अस्यार्थः सुगमः। शेषः कुतः सञ्चरः-अवशिष्टो दिवसः सञ्चाराय कुतः; बहिः सञ्चरणाय दिवसे नैवास्त्यवकाश इत्यर्थः।) कपटवेषस्य कापटिकीयं वाचोयुक्तिः॥ २॥

**अये इति**। यामादूर्ध्वं-रात्रौ प्रथमप्रहरादनन्तरम्। नगरसंचारः-नगरे वीथीषु जनानाम् इतस्ततो गमनागमनम्। (निद्रास्थानम् इति स्थाने स्वप्स्यामीति

ागरिकः—किमिदं राजमन्दिरं तव धर्मशाला । अत्र हि—

नोंकारः पवते न गीतिरटति स्वाहेति न श्रूयते
न न्यायव्यवहारतारवचसः सङ्घीभवन्ति द्विजाः ।
नात्युच्चैः पृषदाज्यहोमसुरभिर्धूम्या जरीजृम्भते
भुक्त्वा पञ्चजनाः स्वपन्ति परितो न स्त्री कुमारो न च ॥ ३ ॥

---

ाठान्तरम् ।) यत्र धर्मकार्याणि प्रचलन्ति अथवा यात्रिकाणां तादात्विकनिवाससौकर्यादिकमस्ति सा धर्मशाला । किमिदमिति । राजगृहं प्रविशन् धर्मशालां गच्छामीति केमसंबद्धं प्रलपसीति यावत् । तथा भ्रान्त्या समागत इति चेत्, तादृशभ्रमजनकेषु कार्येषु न किञ्चिदप्यस्मिन् सदने समवलोक्यत इति विशदयति अत्र हीति ।

नोंकार इति । ओंकारः-प्रणवोच्चारणम् । न पवते-न पुनाति । पूञ् शोधने इति धातोर्निष्पन्नोऽयं शब्दः । इदं गृहमिति शेषः । अत्र गीतिः-सामगानमिति यावत् । नाटति-न प्रचलति । (नोंकारः प्लवते न गाति नटति इति पाठो न साधुः ।) स्वाहेति तदाख्यो देवहविर्दानशब्दः । न श्रूयते । न्यायव्यवहारः-धर्मनीतिसंवादः, तस्मिन् तारं उच्चध्वनियुक्तं वचः येषां ते । अथ वा न्यायव्यवहारः-तर्कशास्त्रसंवादः, तस्मिन् तारवचसः, द्विजाः-विप्राः । न सङ्घीभवन्ति-गोष्ठीबन्धरूपेण न संमिलन्ति । पृषदाज्यं-दधिबिन्दुमिश्रितं घृतम् । तस्य होमः, तेन सुरभिः-शोभनगन्धविशिष्टा । "पृषदाज्यं सदध्याज्ये" इत्यमरः । "तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्" इति हूयमानयज्ञाग्नेः पृषदाज्येन संभृतत्वं श्रुतिसंप्रतिपन्नम् । तादृशी धूम्या-धूमसंहतिः । अत्युच्चैः-अत्युन्नतत्वेन । नोज्जृम्भते-नभस उपरि नोद्गच्छति । पञ्चजनाः-मनुजाः । भुक्त्वा । यात्रामाचरतां जनानां धर्मशालासु भोजनदानं सामान्यतः क्रियते । परितः-समन्ततः । न स्वपन्ति-न निद्रामाचरन्ति । तथा स्त्री च, कुमारः-बालकश्च । न स्वपितीति योज्यम् । न च स्त्रियः न वा बालकाश्च भुक्त्वात्र स्वपन्तीति भावः ।

**पुरुषः**—अस्त्विदं राजमन्दिरं तथापि सुप्रवेशमस्मादृशामिति श्रुतमस्ति ।

**नागरिकः**—सुप्रवेशमिति कस्मात् त्वया श्रुतम् ।

**पुरुषः**—आर्यमिश्रेभ्य एव ।

**नागरिकः**—हुम्, किमस्माभिरिदं कथितम् ।

**पुरुषः**—नहि नहि, अन्यजनैः ।

**नागरिकः**—कैस्ते कथितम् । यदिदं परिचितजनस्यापि राजशासनमन्तरेण दुष्प्रवेशम्, किं पुनरपरिचितस्य ते ।

**किङ्करः**—विसंस्थुलेवास्य वचनव्यक्तिः । गृहीत इव चोरस्तरलतारकविलोचनः पश्यन्नयं वक्तुं न शक्तः प्रत्युत्तरम् । ततश्चार इव लक्ष्यते ।

---

धर्मशालासु प्राक्कालिकासु वेदाध्ययनादीनि विविधानि कर्माणि सामान्यतः प्रवर्तेरन्; तेषु न ह्येकमपि गृहेऽस्मिन् प्रवर्तमानं प्रदृश्यते; सत्येवं कथं ते धर्मशालाभ्रान्तिरत्र समुत्पन्नेति पुरुषमनुयुङ्क्ते नागरिकः ॥ ३ ॥

अस्त्विति । सुप्रवेशं-सर्वेषामपि निराक्षेपं यथा तथा प्रवेशार्हम् । श्रुतमस्ति-आकर्णितमित्यर्थः । आर्यमिश्रेभ्यः-सज्जनेभ्य एव; अन्यत्र युष्मभ्यमेव इति च हुम् इति साक्षेपपरिप्रश्ने । (हुम् इति स्थाने हन्त इति पाठान्तरम् ।) आर्यमिश्रेभ्य इत्यस्य युष्मभ्यमित्यर्थं मनसि निधाय किमस्मामिरिदं कथितमिति नागरिक आक्षिपति । तादृशेनैवाशयेन शाकुन्तले "ननु आर्यमिश्रैः प्रथममेवाज्ञप्तम्" इति प्रयुक्तमास्ते । "आर्यमिश्रान् विज्ञापयामि" इति विक्रमोर्वशीयेऽपि ।

नहीति । नहि नहि-युष्माभिर्नैव कथितमित्यर्थः । कैस्ते इति । (कैरिति स्थाने कैरन्यजनैरिति पाठान्तरम् ।) राजशासनं-राजाज्ञा । राजगृहे राज्ञ आज्ञां विना न कस्यचिदपि प्रवेशः सुकरः; विशिष्य विद्वेषिजनैः समन्तात् नगराक्रमणादिरूपे समुपनते सङ्कटे संप्रति स सुतरामपरिचितस्य दुष्कर इति भावः । विसंस्थुलेति । वचनस्य-भाषणस्य, व्यक्तिः-स्वरूपम्; भाषणरीतिरिति यावत् ।

नागरिकः—तर्हि शिक्षयतु भवानिमम् ।

किङ्करः—अरे, कथय तथ्यम् । मृषावादिनस्तव वैदिकता राजशासनस्य न प्रतिरोधिनी । (इति कशामुद्यच्छति ।)

पुरुषः—मा ताडय । तथ्यं वदामि ।

नागरिकः—यदि तथ्यं वदसि तदा विज्ञानमन्त्रिणं दर्शयित्वा संभावयिष्यामि ।

किङ्करः—प्रतीहार्या धारणया सह प्रासादमधिरूढो मन्त्री । तत्संनिधौ त्वमपि नेष्यसे ।

पुरुषः—(स्वगतम्) तथा चेन्मम दुर्लभमेव जीवितम् । (प्रकाशम्, भीतिमभिनीय) अभयं मे दीयताम् यदि तथ्यमेव श्रोतव्यम् । (इति प्रणमति ।)

नागरिकः—दत्ताभयोऽसि । कथयात्मानम् ।

पुरुषः—(उत्थाय प्राञ्जलिः) ह्रदुदोऽस्मि । विसृज मां दायया ।

नागरिकः—चार एवायम्, वैदिकवेषमवलम्ब्यागतो दत्ताभयश्च ।

---

विसंस्थुलेव-असंबद्धेव । किमप्यसंबद्धं प्रलपतीवेति यावत् । मध्ये मध्ये प्रतिहतेव इति वा चोरस्य गृहीतस्य तरलतारकविलोकनत्वमपि सहजमेव । (तरलतारकविलोचनं इति क्रियाविशेषणत्वेनापि पाठान्तरमस्ति ।) चारः-गूढपुरुषः । तर्हीति । चारपुरुष इति यद्यवगतं तर्हि यथानीति शिक्षामर्हत्ययमिति भावः । वैदिकता-शुद्धविप्रस्येव वैदिकवेषधारणम् । मृषावादिनः-असत्यवादिनः । तव । राजशासनस्य-राजदण्डस्येत्यर्थः । न प्रतिरोधिनी-न विरोधिनी । मृषावादिन इति दण्डस्य हेतुः । यद्यपि त्वं वैदिकब्राह्मणवेषं धत्से तथापि "अदण्ड्यत्वेऽपि विप्राणां युक्त्या दण्डनिपातनम्" इति प्रमाणानुरोधेन मृषावादित्वात् दण्ड्य एव त्वमिति

**किङ्करः**—अतः किं कर्तव्यम् ।

**नागरिकः**—'श्रुतमिहत्यं राजकार्यं कस्मैचिदपि न कथय' इति शपथं गृहीत्वा पुराद्बहिर्विसृज्यताम् । अथवा किमनेन वराकेण कथनीयम् । दत्ताभयोऽयमिति मन्त्रिणे निवेद्य कथञ्चिन्मोचयितव्यः ।

**किङ्करः**—तथा करोमि । (इति निष्क्रान्तः ।)

(नेपथ्ये कुक्कुटध्वनिः ।)

**नागरिकः**—(आकर्ण्य) कथं रजनीविरामः ।

(पुनर्नेपथ्ये)

**वैतालिकः**—

पत्यावस्तं व्रजति विगलच्चञ्चरीकाञ्जनाश्रु
त्रासान्मीलद्दलदृशमितो रागमर्कः करेण ।

---

तात्पर्यम् । दत्ताभयः- अभयदानेन कशाभिघातादिदण्डनेभ्यो रक्षितोऽसीति भावः । कथयात्मानं-कस्त्वमिति ब्रूहि । (कस्त्वं कथयेति पाठान्तरम् ।) अतः-दत्ताभयत्वहेतोः । (अत इति स्थाने तर्हीति पाठान्तरम् ।) श्रुतमिति । (श्रुतमिहत्यमिति वाक्यस्य स्थाने 'सर्वमिदं राजकार्यं त्वया कस्मैचिदपि न कथनीयम्' इति पाठान्तरमस्ति ।) किमनेन वराकेण कथनीयं-क्षुद्रेणामुना शपथरूपेण किं वक्तव्यम् । मन्त्रिणे निवेद्य-सर्वथा प्रभवते सचिवाय विज्ञाप्य ।

**आकर्ण्येति** । रजनीविरामः-व्युष्टा निशा । **वैतालिक इति** । निशान्ते राज्ञां बोधकारकः स्तुतिपाठको वैतालिकः । विविधो मङ्गलगीतिवाद्यादिकृतस्तालशब्दः तेन व्यवहरतीति वैतालिक इति तस्य व्युत्पत्तिः । "वैतालिको बोधकरः" इत्यमरः । वैतालिकानां तत्तत्समयेषु बोधकरत्वस्तुतिपाठकत्वादीनि नियतानि कार्याणीति

द्रागालिङ्गेदपि कुमुदिनीमित्यपन्यायशङ्की
कूकूशब्दं विसृजति जवात् कुक्कुटः पूर्वमेव ॥ ४ ॥

---

"वैतालिकाः स्फुटपदप्रकटार्थमुच्चैर्भोगावलीः कलगिरोऽवसरेषु पेठुः" इति पद्येन माघश्च वर्णयति। (स. ५.)।

पत्याविति प्रभातकालं वर्णयति। पत्यौ-नायके, चन्द्रमसीति यावत्। अस्तं व्रजति सति-अस्तमिते सति; मृते सतीत्यपि गम्यते। विगलन्ति-परिस्रवन्ति, चञ्चरीकाः-भ्रमरा एव, अञ्जनाश्रूणि-अञ्जनमिश्रितानि नेत्राम्बूनि यस्यास्ताम्। कृष्णवर्णानां भ्रमराणां अञ्जनकलुषितनेत्राम्बुबिन्दुभिः सादृश्यमत्रोत्प्रेक्ष्यते। त्रासात् वक्ष्यमाणहेतुजनितभयात्। मीलन्ति-निमीलनं प्राप्नुवन्ति, दलानि कुसुमपत्राण्येव दृशः यस्यास्ताम्। तथाविधां कुमुदिनीं-कैरवणीन्; तन्नाम्नीं युवतिमपीति ध्वन्यते। अर्कः-सूर्यः; तदाख्यः कामुकश्चेति गम्यते। रागं-प्रातस्सन्ध्यासमुचितं आरुण्यम्; अन्यत्रानुरागं च। इतः प्राप्तः। करेण-किरणव्यूहेन; अन्यत्र हस्तेन। द्राक्-रागान्धत्वात् त्वरितमनालोच्यैव। अप्यालिङ्गेत्-अप्याश्लिष्येत्। अपीति शङ्कायाम्। इति अपन्यायशङ्की-नीतिविरुद्धः सङ्कटः समुपनमेदित्याशङ्कमान इत्यर्थः। कुक्कुटः। पूर्वमेव-तादृशधर्मविरुद्धस्य कार्यस्य संभवात् प्रागेव। 'प्रक्षालनाद्धि पङ्कस्य' इति नीत्या दोषोत्पत्तेः पूर्वमेव तत्परिहारोपायावलम्बनं समीचीनमिति मत्वेवेति भावः। जवात्-यावच्छक्यं झटित्येव। कूकूशब्दं-तद्विधं कुक्कुटस्य कण्ठस्वरम्; अन्यत्र तादृशम् आक्रोशशब्दम्। अन्याय्यदर्शनसमये कूकूशब्दोच्चारणं आक्रोशवशात् सहजमेव लोके। विसृजति-उच्चरति। अनेन वर्णनेन पौरकार्यान्निवृत्तमनोवृत्तेर्जीवराजस्य परमेश्वरध्यानावहितचित्तत्वम्, तत्समयमवलोक्य छिद्रान्वेषिणः शत्रुवर्गस्य रोगानीकरूपस्य जीवपुराक्रमणोद्यमः, तथा रोगानीकैर्भविष्यदभियोगस्य निवारणाय निपुणमतिना तत्पूर्वमेव समुचितोपायचिन्तनादिकं चेति वक्ष्यमाणः कथासन्दर्भः सूच्यते ॥ ४ ॥

द्वितीयो वैतालिकः—

रागं मुखेन दरदर्शिततारकेण
मां व्यञ्जतीमपि समेत्य करेण गाढम् ।
आलिङ्गिता कुमुदिनीति रुषापराद्रिं
यातां निशां द्रुतमनुव्रजतीव चन्द्रः ॥ ९ ॥

---

चन्द्रास्तमयपूर्वकं सूर्योदयमभिवर्ण्य पुनः सूर्योदयपूर्वकं चन्द्रास्तमयं च वर्णयति रागं मुखेनेति । चन्द्रः पुरुषः । निशा चन्द्रानुरक्ता कामिनी । चन्द्रस्तु निशां अनादृत्य कुमिदिनीनाम्नीं वल्लभामपरां प्रीत्या परिष्वजते । तदसहमाना निशा पाश्चात्यपर्वतशिखरमारुह्य तिरोधत्ते । अनन्तरम् अनुतापात् भयाद्वा चन्द्रो द्रुतपदं तामेव निशामनुव्रजति । इत्युक्ते निशया सह चन्द्रोऽपि तदानीमन्तरधात् इति भावगर्भितं विषयं वर्णयति पद्यमिदम् । दरदर्शिते-ईषदुन्मीलिते, तारके-कनीनिके यस्मिंस्तेन । मुखेन-वदनेन । निशापक्षे दरदर्शिताः-ईषत्प्रकाशिताः, तारकाः-नक्षत्राणि यस्मिंस्तेन । मुखेन-निशामुखेन; सायंसमयेनेति यावत् । सायन्तने तारकाणां दृश्यादृश्यत्वेन प्रायः समुद्भवात् तासां दरदर्शितत्वम् । रागं-अनुरागम् । निशापक्षे सन्ध्यारागमिति यावत् । व्यञ्जतीमपि-स्फुटं सूचयन्तीमपि । चन्द्रः-तदाख्यो नायकः, चन्द्रमाश्च । समेत्य-सम्यग्गत्वा; सप्रेमबहुमानमभ्यत्येति भावः । कुमुदिनी-तदभिधा कामिनी; कैरवणी च । करेण-हस्तेन; किरणव्यूहेन च । गाढं-अशिथिलबन्धं यथा तथा । आलिङ्गिता-आश्लिष्टा । (निशामुखसमये निर्वृत्तस्य विषयस्य निशावसानावसरे वर्ण्यमानत्वात् 'आलिङ्ग्यते' इति दृश्यमानात् पाठान्तरादपि भूतार्थद्योतकः 'आलिङ्गिता' इति पाठः साधीयान् इति स एवास्माभिरादृतः ।) इति रुषा । अपराद्रिं-अस्तगिरिम् । यातां-अधिगताम् । निशां-तदाख्यां वनिताम्; रात्रिं च । द्रुतं-उद्वेगोत्पन्नत्वरातिशयवशादित्यर्थः । अनुव्रजतीव-तामनुसृत्य धावतीवेति यावत् ॥ ९ ॥

अपि च—

प्रातर्जातमिति द्रुतं प्रशिथिलं बध्वा दुकूलं दृढं
धम्मिल्लं च्युतमाल्यमप्युपवनान्निर्गत्वरीरित्वरीः ।
आकृष्यांशुकपल्लवे कठिनयोरालिङ्ग्य वक्षोजयो-
राघ्रायाननपङ्कजे च कथमप्युज्झन्त्यहो कामिनः ॥ ६ ॥

**नागरिकः**—तदधुना राजकार्ये चावहितस्तिष्ठामि ।

(इति निष्क्रान्तः ।)

। **शुद्धविष्कम्भः** ।

---

**प्रातरिति** । प्रातर्जातं-उदयकालः संप्राप्त इति । प्रशिथिलं-रात्रौ यथेच्छ-विहारेण नीवीमोक्षादिना सुतरां विलुलितम् । दुकूलं-क्षौमम् । द्रुतं-त्वरितं यथा तथा । दृढं बध्वा । च्युतमाल्यं-पूर्वं निधुवनादिसंभ्रमवशात् विशिथिलं माल्यं यस्मात् तम् । धम्मिल्लं-केशपाशमपि । द्रुतं बध्वा । उपवनात्-क्रीडोद्यानात् । निर्गत्वरीः-बहिर्गन्तुं यतमानाः । 'गत्वरश्च' इति क्वरबन्तो निपातः ; 'टिड्ढाणञ्' इत्यादिना ततो ङीप् । इत्वरी-कुलटाः कामिनीः । कामिनः-तासु बद्धरागा विलासिनः । अंशुकपल्लवे-तासां अतिमृदुले दुकूलाञ्चल इति यावत् । आकृष्य-वाल्लभ्य-वशात् बलवदादाय । कठिनयोः-तारुण्यवशाद्दृढयोः । वक्षोजयोः । आलिङ्ग्य । आननपङ्कजे-तासाम् अरविन्दसुन्दरे वदने च । आघ्राय-चुम्बनादिकं कृत्वा । कथमपि-सुतरामधिगतमनोवैक्लव्यं यथा तथेति भावः । उज्झन्ति-गृहगमनाय विसृजन्ति । अहो इति चित्तसन्तापे ॥ ६ ॥

**तदिति** । तत्-प्रभातप्रायत्वात् रजन्या इत्यर्थः । राजकार्ये-राजकीये तत्तत्कर्मणि । **शुद्धविष्कम्भ** इति पूर्वोक्तलक्षणविशिष्टं वस्तुसङ्घटनोपयोगिनम् अर्थोपक्षेपकं प्रस्तूय कविः कथान्तरमारभते ।

(ततः प्रविशति प्रासादाधिरूढः प्रतीहार्या धारणया दर्शितमार्गो मन्त्री ।)

**मन्त्री**—संप्रति हि—

सोपानानि हिरण्मयानि परितः प्रत्युप्तरत्नान्यहं
पादाभ्यां समतीत्य किङ्करगणालम्बी स्वयं पाणिना ।
भित्तिष्वालिखितैर्वृतं खगमृगस्त्रीपुंसवृक्षाचलै-
रारुक्षं निटिलाक्षशैलधवलं प्रासादमभ्रंलिहम् ॥ ७ ॥

(विचिन्त्य स्वगतम्) अहो दुरन्तता राजधर्माणाम् । तथा हि—

---

मन्त्री महाराजस्य सौधम् अनुप्रविशन् लौकिकन्यायमनुरुध्य तदेव वर्णयति **सोपानानीति** । अहम् । संप्रति हीति पूर्वोक्तौ शब्दौ इहानुषज्येते । पाणिना-स्वकीयेन हस्तेन । स्वयम् । किङ्करगणं-सेवकसमूहम् आलम्बत इति-किङ्करगणालम्बी । परितः-बहुत्र । प्रत्युप्तरत्नानि-विविधरत्नखचितानि । हिरण्मयानि-स्वर्णमयानि । हिरण्मयानीति हिरण्यस्य विकार इत्यर्थे दाण्डिनायनादिसूत्रेण निपातः । सोपानानि । पादाभ्यां समतीत्य-राज्यनिर्वहणभारेण दुर्भरेण समाकुलितचित्तत्वात् स्वपदाभ्यां सोपानैः संचरणमपि महते श्रमायेति सूचयति पादाभ्यामित्येतत । भित्तिषु । आलिखितैः-चित्रे विन्यस्तैः । खग-मृग स्त्री-पुंस-वृक्षाचलैः-तद्रूपैश्चित्रैः । वृतं-व्याप्तम् । तथा निटिलाक्षस्य-शङ्करस्य, शैलः-कैलासपर्वतः, तद्वत् धवलं-रजतवदतीव शुक्लम् । अभ्रंलिहं-अभ्रंकषम्, अत्युन्नतमिति भावः । अभ्रं लेढीत्यभ्रंलिहः ; 'वहाभ्रे लिह' इति खश्प्रत्ययः ; 'अरुर्द्विषजन्तस्य मुमिति' मुमागमः । प्रासादं-महाराजस्य सौधम् । आरुक्षं-अधिरूढवानस्मि ॥ ७ ॥

**विचिन्त्येति** । राजधर्माणां-राज्ञा नियमेन निर्वर्तनीयानां कार्याणाम । दुरन्तता-निरवधिकता । दुरन्तत्वमेव तथा हीति दढीकृत्य विवृणोति ।

आत्मानं परिरक्ष्य दुष्करतपोवृद्धद्विजाराधनै-
र्दानीयेषु च भक्तिपूर्वमसकृद्देयप्रदानैरपि ।
दण्डं दण्डयितव्यमात्रविषयं कृत्वा धरित्रीतले
राज्ञा धर्मपथे मतिं क्रमयता संरक्षितव्याः प्रजाः ॥ ८ ॥

---

आत्मानमिति । आत्मानं-स्वशरीरम् । परिरक्ष्य । स्वशरीरपरिपालनं खलु राज्ञः प्रथमो धर्मः, प्रजाक्षेमस्याशेषस्यापि तदायत्तत्वात् । अत एवाचार्यवाग्भटः प्राह—"राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् । सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः । अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः । योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः" इति । दुष्कराणि यानि तपांसि तैः वृद्धाः-महान्तः ये द्विजाः-विप्राः तेषां आराधनैः-पूजनैः । असकृदिति द्वितीयपादोक्तः शब्दस्त्वत्राप्यनुषज्यते दानीयेषु च इत्यत्र विद्यमानेन चकारेण । दानीयेषु-दानार्हेषु जनेषु च । असकृत्-पदे पदे । भक्तिपूर्वं यथा तथा । देयप्रदानैः-दानार्हद्रव्याणामर्पणैरपि । (दानप्रदानैरपि इति च पाठान्तरम् ।) दण्डयितव्यमात्रविषयं-दण्डनार्हजनमात्रपर्यवसायिनम् । दण्डं-शिक्षाम् । भ्रान्त्या वा अनवधानेन वा हेत्वन्तरैर्वा यथा निरपराधिनो न शिक्षामनुभवेयुस्तथा जागरूकेण राज्ञा दण्डनीतिः परिपालनीयेति भावः । "दण्ड्यस्यादण्डनान्नित्यमदण्ड्यस्य च दण्डनात् । अतिदण्डाच्च गुणिभिस्त्यज्यते पातकी भवेत्" इति शुक्रनीतिः । कृत्वा । धर्मपथे-शास्त्रैः शिष्टैश्च विहिते धर्ममार्गे । मतिं-स्वबुद्धिम् । क्रमयता-व्यापारयता । राज्ञा-यथोक्तधर्मनिष्ठेन भूमिपालेन । धरित्रीतले-जगति । प्रजाः । संरक्षितव्याः-साधु परिपालनीयाः । प्रथमतः प्रजारक्षणमूलभूतस्य स्वात्मनः संरक्षणम्, ततस्तपोधनानां लोकोज्जीवनोपायोपदेशनिष्णातानां द्विजानामुपचरणम्, दानयोग्यानां दीनजनानां द्रव्यादिवितरणपूर्वकमादरणम्, शिष्टजनपरित्राणपूर्वकं दुष्टजनशिक्षणम् इत्येवं रीत्या सर्वदा धर्म्ये पथि निहितदृष्टिना नृपतिना प्रजानां पालनमस्ति निर्वर्तनीयमिति नितरां राजधर्मनिर्वहणस्य दुरन्ततां विमृश्य चिन्तास्तिमितमना भवति सचिवः ॥ ८ ॥

किं बहुना—

श्वःश्रेयसार्थं यततेऽनिशं यो राज्ञा किलानेन पृथग्विमर्शः ।
स्वस्मिन्नमात्येषु सुहृत्सु राष्ट्रे दुर्गेषु कोशेषु बलेषु कार्यः ॥ ९ ॥

निर्ज्ञातसर्वतन्त्रेषु विगूढामोघमन्त्रेषु मन्त्रिषु विन्यस्तसमस्तकार्यभरस्य तु राज्ञो निश्चिन्ततैव । परं तु तेषां व्याकृष्यन्ते दुरन्तया तत्कार्यचिन्तयानया हृदयानि ।

---

तस्यैतस्य जीवराजस्य चिन्ताभारमेव क्रोडीकरोति किंबहुनेति । तदेवावस्थान्तरं विवृणोति श्वःश्रेयसार्थमिति । यः-जीवराजः । अनिशं-सर्वदा । श्वःश्रेयसार्थं-आगामिमोक्षरूपश्रेयस्साधनार्थमित्यर्थः । श्वः-आगामि श्रेयः-कल्याणं यस्मिन् तत् श्वःश्रेयसम् इति तद्व्युत्पत्तिः । "श्वसो वसीयः श्रेयसः" इत्यच् । यतते-उद्युक्तो वर्तते । अनेन-तथा श्वःश्रेयसोद्युक्तेनेति भावः । राज्ञा-जीवेन । किलेति संभावनायाम् । स्वस्मिन्-चतुर्वर्गसाधनोपायभूते स्वशरीर इति यावत् । अमात्येषु-मन्त्रिवर्गोपदिश्यमानेषु विषयेषु तत्प्रवृत्तिषु चेति भावः । सुहृत्सु-अत्रापि मित्रजनरञ्जनकृत्येष्वित्यर्थः । राष्ट्रे-राज्यनिर्वहणविषये । दुर्गेषु-जलशैलाद्यावरणादिभिर्निर्मितेषु दुर्गमेषु स्थलेषु । कोशेषु-धनागारेषु । बलेषु-सैन्येषु च । दुर्गादीनां निर्वहणरक्षणकृत्येष्विति यावत् । पृथक्-प्रत्येकं यथा तथा । विमर्शः-विविच्य परिशीलनम् । कार्यः-अवश्यं कर्तव्यो भवति । पूर्वश्लोकेन धर्मपथेन प्रजानां सामान्यतः पालनधुरायां विद्यमानं राज्ञः परिश्रममभिधाय, पद्येनानेन स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलाख्यानि राज्यनिर्वहणे परस्परोपकारकाणि सप्ताप्यङ्गानि राज्ञो मनसि दुरूहविमर्शास्पदानि भवन्तीति च संजगृहे ॥ ९ ॥

निर्ज्ञातेति । निर्ज्ञातानि-निश्शेषतोऽवगतानि, सर्वतन्त्राणि-अशेषशास्त्रविशेषाः यैस्तेषु । विगूढाः-विशिष्य गुप्ताः, अमोघाः-सफलाः, मन्त्राः-राजरहस्योपाया यैस्तेषु । मन्त्रिषु-स्वसदृशेष्वमात्यवरेषु । विन्यस्तः-आरोपितः, समस्त-

सामन्ता विनमेयुरित्युपचयः कोशस्य सिद्ध्येदिति
स्थानेषु द्विषतां स्थितीरपि चराः पश्येयुराप्ता इति ।
स्यादायोपगमो यथेति विभवैस्तुष्टाः प्रवीरा भटा
वर्तेरन्निति मा मलिम्लुचगणात् भूरुद्विजेतेति च ॥ १० ॥

---

कार्यभरः-सकलराज्यतन्त्रनिर्वहणभारः येन तस्य । राज्ञस्तु । निश्चिन्ततैव-सक्लेश-स्मृतिपरता चिन्ता, तद्राहित्यं निश्चिन्तता । श्वःश्रेयसासक्तचेतसा सप्ताङ्गसहित-राज्यभारस्य मन्त्रिसात्कृतत्वात् तादृशराज्यधुरावहनचिन्तैव तस्य संप्रति ना-स्तीति भावः । परं तु-तथापि । तेषां-मन्त्रिणाम् । अत्र मन्त्रिणामिति बहुवचनान्तत्वं विविधराजकृत्यनिर्वहणधुरन्धराः सन्ति सचिवा बहवो राज्ञ इति, तेषां चैष विज्ञान-शर्मा प्रधान इति च सूचितं भवति । हृदयानि-सचिवानां मनांसि । दुरन्तया-निर-वधिकया । अनया-पूर्वोक्तया । तत्कार्यचिन्तया-तेषां राज्यकार्याणां आलोचनाव्या-पारेण । व्याकृष्यन्ते-सर्वदा विविधराज्यकार्यालोचनासक्तानि तेषां हृदयानीत्यर्थः ।

तच्चिन्ताप्रकारानेव विशदयति सामन्ता इति । समन्ताद्भवाः सामन्ताः-प्रातिवेशिका नृपाः । यथा-येन प्रकारेण । विनमेयुः-वशंवदा भूत्वा स्वात्मानमनु-वर्तेरन् इति । कोशस्य-धनागारस्य, तत्रस्थधनस्येति यावत् । उपचयः-अभिवृद्धिः । यथा सिद्ध्येत्-निष्पद्येत इति । आप्ताः-विश्वसनीयगुणविशिष्टाः । चराः-प्रणिधयः; रहस्यवृत्तान्ताख्यायिनः पुरुषा इति यावत् । स्थानेषु-तेषु तेषु प्रदेशेषु । द्विषतां-शत्रूणाम् । स्थितीः-अवस्थानप्रकारानपि । यथा पश्येयुः-अवगच्छेयुः इति । आयोपगमः-अर्थप्राप्तिः । यथा स्यात् इति । कैः कैः करग्रहणैरुपायान्तरैर्वा न्याय्येन मार्गेण राज्यनिर्वहणाय पर्याप्तो धनायः स्यादिति यावत् । प्रवीराः-प्रकृष्टशौर्य-वन्तः । भटाः-योधाः । विभवैः-बहुमूल्यैर्वेतनैः पारितोषिकैरपरैश्चाधिपत्योचि-तर्बहुमानैरिति भावः । यथा तुष्टाः-संपूर्णमनोरथाः । वर्तेरन्निति । भूः-पृथिव्यां निवसत्प्रजावर्ग इत्यर्थः । मलिम्लुचाः-तस्कराः तेषां गणः-निवहः तस्मात् । यथा मा च उद्विजेत-न च बिभ्येत् । इत्येतादृशया दुरन्तया चिन्तया तेषां

अहमपि राज्ञा विन्यस्तसमस्तकार्यभारतया यत्सत्यं व्याकुल एव । तथा हि—

कार्येषूक्तेषु राज्ञा कतिचिदपि मया साधितान्येव पूर्वं
साधिष्यन्ते परस्तात् कतिचन कतिचिच्चापि साध्यन्त एव ।
किञ्चानुक्तेषु सद्यः किमपि किल कुशाग्रीययात्मीयबुद्ध्या
पर्यालोच्यैव तत्तत्समयसमुचितं कर्तुमुत्कण्ठितोऽस्मि ॥ ११ ॥

---

हृदयान्याकृष्यन्ते इति पूर्ववाक्येनान्वयः । राज्ञा स्वकीये राज्यनिर्वहणभारे सचिवसात्कृते सति राज्ञानुभूतश्चिन्ताभरोऽपि स्वयमनुपदमेव धर्ममार्गैकनिहित-चेतसां राजकार्यधुरन्धराणां मन्त्रिणां मनस्यासज्जत इति भावः । एषा च नीतिः नन्दवंशे निहितनिरतिशयश्रद्धम् अतिप्रबुद्धम् अमात्यराक्षसमुद्दिश्य विराधगुप्तेनोक्तं मुद्राराक्षसीयं वचनम् अनुस्मारयति । तद्यथा—

"किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन् कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥" इति ॥

एवमेवाङ्गीकृतस्य राज्यभारनिर्वहणतन्त्रस्य विषये नृपादपि मन्त्रिणां मनो नूनमधिकतरं चिन्तासन्तानदन्तुरितं स्यादिति मन्त्री निर्वर्णितवान् ॥ १० ॥

**अहमपीति** । विन्यस्तः-आयत्तीकृतः, समस्तकार्यभरः-अशेषराजकृत्य-निर्वहणधुरा यस्मिन् सः; तस्य भावस्तत्ता तया । यत्सत्यं-नूनमेव । व्याकुलः-चिन्ताभरायासित एव । राज्यतन्त्रनिर्वहणकृत्यैर्विविधैः सर्वदा मनसश्चिन्तानिर्भरत्वविषये स्वस्यापि राज्ञः समानधर्मत्वम् अपिशब्देन विवक्षितं भवति ।

**कार्येष्विति** । राज्ञा-जीवेन । उक्तेषु-आदिष्टेषु । कार्येषु-राजकृत्येषु । मया-आत्मना मन्त्रिणा । कतिचित्-कानिचन । पूर्वमेव । अपि साधितानि-निर्वर्तिता-

अत एव तत्र तत्र व्यापृतेन मया पुरगुप्त्यै मत्सदृश एव कोऽपि विनियुक्तो विचारनामा नागरिकः । तत् प्रकृतकार्ये व्यापृतव्यम् । कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—विजयतां देवः ।

**मन्त्री**—भद्र, मद्वचनेनानुशासनीयाः पौरा नगरालङ्काराय ।

---

न्येव । कतिचन-अन्यानि कानिचित् । परस्तात्-क्रमशः कालान्तरे । साधिष्यन्ते । कतिचिच्चापि कार्यान्तराणि । साध्यन्ते-अद्य वर्तमानकाले समुचितैर्यत्नैर्निष्पाद्यन्त एव । सचिवस्य सर्वस्वातन्त्र्यं राज्यनिर्वहणे सश्रद्धत्वं धूर्वहत्वं च सूचयत्युत्तरार्धेन किञ्चेत्यादिना । न केवलं नृपनिर्दिष्टकार्याणां निर्वर्तनेनैव स्वस्य कृतकृत्यता परं तु सन्त्यपराण्यपि तदनुक्तानि स्वमतिकौशलेन समालोच्य साधनीयानीति विषयं प्रस्तौति किञ्चेतिशब्दः । अनुक्तेषु-राज्ञा अनिर्दिष्टेषु कार्येषु । किमपि-स्वधिषणैकगोचरं कार्यम् । किलेति संभावनायाम् । सद्यः-अद्यैव । कुशाग्रीयया-कुशाग्रवदतिसूक्ष्मया । आत्मीयबुद्ध्या-स्वकीयया मत्या । पर्यालोच्यैव-आवापोद्वापपुरस्सरं सम्यक् परिशील्यैव । न तु तरसा यथातथमिति भावः । तत्तत्समयसमुचितं-तत्तत्कालविशेषानुरोधं यथा तथा । कर्तुं-निर्वोढुम् । उत्कण्ठितोऽस्मि-अतीवासक्तमना भवामि । इतःपूर्वं मन्त्रिणः समुचिता धुरा केवलमेकास्यासीत्, अद्य तु राज्ञो धुरापि सकला सविशेषा चैतदायत्ताभवदिति अतश्च अस्य व्याकुलीभावः शतधा समभिवृद्ध इति, अत एव च भूतभविष्यद्वर्तमानसमयकर्तव्यकार्यनिवहसमालोचनपर एव सर्वदा यापयति कालमेष इति चाभिहितं भवति ॥ ११ ॥

अतएवेति । पूर्वपद्योक्तेन हेतुनेति यावत् । तत्र तत्र-विविधेषु सङ्ख्यातीतेषु कार्येषु । (सर्वत्र तत्र तत्रेति पाठान्तरम् ।) व्यापृतेन-समुद्युक्तचित्तेन । पुरगुप्त्यै-शत्रुपक्षीयेभ्यो नगरस्य पालनाय । मत्सदृशः-मतिकौशलादिना स्वात्मनः समान

आलिप्यन्तां सुधाभिः पुरसदनगता भित्तयो भृत्यवर्गैः
रम्भास्तम्भाः क्रियन्तां कपिशफलभृतः पार्श्वयोर्द्वारभूमेः।
बध्यन्तां तोरणानि श्रितनवमणिभिर्दामभिः सन्तु रथ्याः
संमृष्टाश्चाम्बुसिक्ताः प्रतिगृहमुपरि ग्रथ्यतां केतनाली ॥१२॥

---

एव; एतेन तस्मिन् पुरुषान्तरेऽस्य विस्रंभातिशयवत्त्वं सूचितम्। कोऽपि पुरुषो विचारनामा। नागरिकः-नगरपरिपालनाधिकृत इति यावत्। प्रकृतकार्य-सिद्ध-प्रतिज्ञस्य राज्ञ आगमिष्यतः संभावनाय नगरालङ्कारादिरूपे कर्मणि। भद्रेति। मद्वचनेनानुशासनीयाः-मन्त्रिमहाशय एवम् आदिशतीति नियोक्तव्याः।

नगरालङ्कारप्रकारमाह **आलिप्यन्तामिति**। भृत्यवर्गैः इति कर्तृपदं पद्य-स्थैनैकैकवाक्येन चान्वेति। पुरसदनगताः-नगरगृहानाश्रित्य विद्यमानाः। भित्तयः। भृत्यवर्गैः। सुधाभिः-जलविद्रावितचूर्णशर्कराभिः। करणभूताभिः। आलिप्यन्तां-सुधाद्रवैः सर्वेषामपि गृहाणां भित्तयो धवलीक्रियन्तामिति यावत्। (आलिम्पन्तां इति पाठान्तरम्।) द्वारभूमेः-एकैकस्य च गृहस्य बहिरङ्गणस्थ-प्रतीहाराख्यस्य प्रदेशस्य। पार्श्वयोः-उभयतः। कपिशफलभृतः-नातिपरिणत-त्वात् किञ्चिद्धरितवर्णविशिष्टैः फलैः संयुक्ताः। रम्भास्तम्भाः-स्थूलस्थूणासदृशाः कदलीवृक्षाः। क्रियन्तां-स्तम्भरूपेण निवेश्य बध्यन्तामिति यावत्। श्रिताः-संयोजिताः, नवमणयः-नवविधानि रत्नानि येषु तैः। दामभिः-मालाभिः। तोरणानि। बध्यन्ताम्। रथ्याः-वीथयः। अम्बुसिक्ताः। तथा संमृष्टाः-सम्यक् शोधिताश्च। सन्तु। गृहे गृहे-प्रतिगृहम्। उपरि-गृहाणामूर्ध्वम्। केतनाली-ध्वजपटपङ्क्तिः। ग्रथ्यतां निबध्यताम्। राज्ञि बहुमानं तच्छ्रेयोवृद्धिश्रवणेन प्रजानां संजातं प्रमोदातिशयं च सूचयितुमेवं नगरालङ्कारविधानं सुतरामावश्यक-मिति सचिवः संदिशति ॥ १२ ॥

यतः संप्रत्येव सिद्धप्रतिज्ञो राजा समागमिष्यति ।

**दौवारिकः**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्तः ।)

**मन्त्री**—(सदृष्टिक्षेपं परिवृत्यावलोक्य च) अहो रिपूणां पुरावस्कन्दनप्रकारः । तथा हि । पाण्डुना प्रेरिता रोगाः—

मूर्धानं व्याप्तुकामाः शतमथ नवतिर्लोचने षट् च रोगाः
नासामष्टादशास्यं खलु चतुरधिका सप्ततिर्हृच्च पञ्च ।
वक्षोजौ पञ्च शूलैः सह समगणनैः कुक्षिमष्टौ च गुल्माः
स्वार्हस्थानान्युपेतं त्रिगुणगणनया पञ्चकं च व्रणानाम् ॥ १३ ॥

---

यत इति । सिद्धा-निष्पन्ना, प्रतिज्ञा-रससिद्ध्यादिसाधनार्थो मनोरथः यस्य सः । समागमिष्यति-नगरं प्रवेक्ष्यति । सदृष्टिक्षेपमिति । आकस्मिकतया ज्ञातेन विस्मयावहेन उद्वेगजनकेन वा विषयेण हठादाकृष्टे मनसि यः किल तत्र दृष्टिपातो झटिति क्रियते स दृष्टिक्षेप इत्यभिधीयते । पुरस्य अवस्कन्दनं-आक्रमणम्, तस्य प्रकारः । पाण्डुना प्रेरिता रोगा इत्यस्य आनन्तरिकेण पद्येनान्वयः ।

शरीराख्यस्य जीवराजपुरस्यावस्कन्दनरीतिमेव विवृणोति मूर्धानमित्यादिना । मूर्धानं-शिरः । शतं रोगाः । शिरोरोगैः सह कपालरोगाश्चात्र गृह्यन्ते । व्याप्तुकामाः-व्यापनशीलाः । अथ लोचने-नेत्रे । नवतिः षट् च-षण्णवतिसङ्ख्याका रोगाः । व्याप्तुकामा इति पदं प्रतिवाक्यमन्वेति । (नवतिर्लोचने षट् च भूयः इति पाठान्तरम् ।) नासां-नासिकाया बहिरन्तश्च । अष्टादश रोगाः । आस्यं-मुखं खलु । चतुरधिका सप्ततिः-चतुस्सप्ततिः व्याधयः । हृत् हृदयं च । पञ्च रोगाः । वक्षोजौ-स्तनौ । पञ्च । कुक्षि-उदरम् । समगणनैः-गुल्मसमसङ्ख्याकैः; अष्टभिरिति यावत् । शूलैः-कुक्षिशूलैः सह । अष्टौ गुल्माः-गुल्मरोगाः । स्वार्हस्थानानि-स्वस्य स्वस्य समुचितानि पाणिपादमुखगुदवस्ति-

अथ च स्वयमेव मन्त्रिभूतस्य युवराजस्य पाण्डोः पुरोपरोधवैचित्री वाचामतिवर्तते पन्थानम् । (सामर्षं सावहित्थं चाकाशे लक्ष्यं बध्वा) साधु मन्त्रि-धुरीण साधु । अनया गुप्तप्रयोगप्रकारगोचरया धिषणया शौर्येण च दैत्य-गुरुं वृषपर्वाणं चातिशेषे । (सोपहासम्) मयि—(इत्यर्धोक्ते विरमति ।)

---

प्रभृतीनि अङ्गानि । उपेतं-आक्रान्तम् । व्रणानां-शारीरव्रणशोभादीनाम् । त्रिगुण-गणनया-सङ्ख्यया त्रिगुणितया । समन्वितमिति शेषः । पञ्चकं-त्रिगुणितं पञ्चकं पञ्चदशसङ्ख्याकमित्यर्थः । एवं परपक्षसचिवेन पाण्डुना समादिष्टाः सर्वेऽपि रोगरूपाः शात्रवयोधाः शरीराख्यं पुरं बहिरन्तश्चावस्कन्द्य विशङ्कटं सङ्कट-मुत्पादयितुम् उपक्रान्ता इति भावः । अत्र व्याधीनां शिरोनेत्रसम्बन्धिनां विनिर्दिष्टाः सङ्ख्या निदानग्रन्थेषु निर्दिष्टप्रतिनियतव्याधिसङ्ख्याभ्यो विसंवदन्ति । अनन्तवात-सूर्यावर्तादयः शिरोरोगा एकादशेति माधवकरः । शार्ङ्गधरोक्तानां दारुणोपशीर्षकारूंषिकादीनां नवकपालरोगाणाम् एतैः सह गणनायामपि मूर्धगताः रोगा विंशतिरेव । नेत्रे शुक्लभाग-कृष्णभाग-दृष्टिवर्त्माद्याश्रया आमयाः षट्सप्तति-रिति माधवनिदानम्; शार्ङ्गधरः चतुष्षष्टिरिति । नासारोगादिसङ्ख्यास्तु न तावता विसंवदन्ति । 'मूर्धानं व्याप्तुकामा उपदश नयने षष्टिरष्टौ च रोगाः' इति कविप्रोक्तं स्यादिति वयमभिप्रैमः ॥ १३ ॥

अथ चेति । युवराजस्य-पाण्डोः । स्वयमेव मन्त्रिभूतस्य-युवराजपदव्या सह स्वात्मनैव मन्त्रिणो दुर्भरां धुरामप्यावहतः । युवराजो मन्त्रिस्थानेऽप्यधिकृत इति लोकविलक्षणैषा नीतिरिति चाशयः । पुरोपरोधस्य-शरीररूपनगरावस्कन्दस्य, वैचित्री-विलक्षणता । वाचां पन्थानम् अतिवर्तत इति सावहेलनमिदं प्रशंसावच-नम् । सावहित्थं-अमर्षादिजनितक्रोधादिमनोविकाराणां परपक्षाश्रितदोषादीनां च गोपनपुरस्सरम् उद्भावितो मानसो भावः अवहित्थम् अवहित्था वा; तेन तया वा सहितं सावहित्थं यथा तथा । (लक्ष्यं बध्वा इत्येतत् क्वचित् पुस्तके विसृष्टम् ।) गुप्तस्य-निगूढस्य, प्रयोगस्य-पुरोपरोधरूपव्यापारस्य, प्रकारः-रीतिः,

धारणा—(सस्मितम्) अमच्चस्स वाक्यसेसेण तक्कीअदि धीरोदत्तत्तणम् ।
[अमात्यस्य वाक्यशेषेण तर्क्यते धीरोदात्तत्वम् ।]

मन्त्री—अस्खलितासाधरणकार्यावधारणधौरेये स्खलितानि तव मनीषितानि भवन्ति । (पुरो विलोक्य) अहो नगरालङ्कारचातुरी पौराणाम् ।

---

तद्गोचरया-तत्र प्रवृत्तया । (गोचरयेति स्थाने गौरवयेति पाठान्तरम् ।) धिषणया-मत्या । दैत्यगुरुं-असुराचार्यम् उशनसम् । शौर्येण-पौरुषेण च । वृषपर्वाणं-तदाख्यं देवानां परमवैरिणं महाबलम् असुराधिपम् । [वृषपर्वणः पत्नी शुक्रदुहिता देवयानी; वृषपर्वणो दुहिता शर्मिष्ठा, यां च ययातिर्नृप उपयेमे ।] अतिशेषे-अतिशयितो वर्तसे । पाण्डो रोगस्य सुतरामसुरस्वभावत्वात् धिषणया दानवगुरुः, शौर्येण दानवाधिपो वृषपर्वा चास्य क्रमात् दृष्टान्तीकृतः । अस्खलितासाधारणेत्यादिना वक्ष्यमाणरीत्या स्वप्रभावप्रकटने वैलक्ष्यात् मयीत्युक्त्वा मध्ये विरमति । अमच्चस्सेति । वाक्यशेषेण-मध्ये विरतेन वाक्येन । समर्थपदलोपो वाक्यशेषः । धीरः-ओजस्वी । "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इति धीरशब्दनिरुक्तिः । उदात्तः-गंभीरः । तयोर्भावः धीरोदात्तत्वम् । "अविकत्थनः क्षमावान् अतिगम्भीरो महासत्त्वः । स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः" इति धीरोदात्तलक्षणम् । धीरोदात्तत्वात् विकत्थनमाचरितुं सपदि मनसा संकुचन् वाक्यं पूरयितुं न प्रभवति । अस्खलितेति अस्खलितानि-प्रमादविरहितानि, यानि असाधारणकार्याणि-असामान्यानि राजकृत्यानि, तेषाम् अवधारणे-सावहिति परिज्ञानविषये, धौरेये-धुरन्धरे । मयि इति पूर्वावशिष्टमन्त्रिवाक्येनान्वयः । विद्यमाने सतीति शेषः । तव-पाण्डुनाम्नः प्रतीपमन्त्रिण इति यावत् । मनीषितानि-वाञ्छितानि कर्माणि । स्खलितानि-भग्नानि । भवन्ति । अस्खलितवृत्तेः मन्त्रिधूर्वहस्य मम पुरतस्त्वादृशानाम् अव्यवस्थित-

कीर्णान्यम्बुपृषन्ति किङ्करगणै रथ्यान्तरे ताडिता-
न्यातोद्यानि निकेतकेकिनटनप्रारम्भहेतूनि च ।
बद्धा मन्दिरशृङ्गसीमसु हसन्नाथापनीतांशुक-
व्यक्तोरोजसलज्जसिद्धयुवतिव्याकृष्टचेला ध्वजाः ॥ १४ ॥

---

कर्मणां मनोरथा भग्नमूला भवेयुरिति भावः । (कार्यावधारणधौरेयस्खलितानि इति असमस्तपदपाठो न समञ्जसः ।) अहो इति पौरैरारचितानां नगरालङ्काराणां दर्शनजनितं स्वविस्मयं प्रकटयति मन्त्री ।

नगरालङ्कारप्रकारमेव निरूपयति कीर्णानीति । रथ्यानां वीथीनाम्, अन्तरे-मध्ये, जनसञ्चारमार्ग इति यावत् । (रथ्यान्तरे इति स्थाने अभ्यन्तरे इति पाठान्तरम् ।) किङ्करगणैः-सेवकवर्गैः । अम्बुपृषन्ति-जलकणिकाः । कीर्णानि-समन्ततोऽभ्युक्षितानि । तथा निकेतकेकिनां-गृहमयूराणाम्, नटनप्रारम्भस्य-नर्तनोद्यमस्य, हेतूनि-कारणभूतानि । आतोद्यानि-वीणा-वेणु-मुरज-तालाख्यानि चतुर्विधानि वाद्यानि च । ताडितानि । हसद्भिः-शृङ्गारचेष्टावशात् हासं कुर्वद्भिः, नाथैः-कामुकैर्नायकैः, अपनीतं-आकृष्टम्, अंशुकं-उत्तरीयं येभ्यस्ते; तत एव व्यक्ताः-नग्नीकृताः; उरोजाः-स्तनाः यासां ताः; अत एव सलज्जाः-सव्रीडाः; याः सिद्धयुवतयः-तदाख्यदेववनिताः; ताभिः, व्याकृष्टानि-आहृतानि चेलानि-दण्डाग्रग्रथितवस्त्राणि येभ्यस्ते । तादृशाः ध्वजाः । (व्याकृष्टचेलध्वजाः इति अभिन्नपदप्रयोगो न समीचीनः ।) सहासं स्वकान्तैः स्ववक्षोजावरणवस्त्रेषु क्रीडावसरे समाकृष्टेषु, सविधोद्धूयमानानां सौधाग्रस्थितपताकानाम् वस्त्राणि तात्कालिकावरणार्थं सिद्धवनिताभिः सपदि समाकृष्टानीति भावः । नगरहर्म्याणाम् अत्युन्नतत्वम् अनेन सूचितं भवति । मन्दिरशृङ्गसीमसु-भवनानाम् अत्युच्छ्रितानाम् अग्रभागेषु । (मन्दिरमार्गसीमसु इति पाठान्तरम्) बद्धाः । विद्यन्त इति शेषः । नगरवीथयः समन्तात् सलिलसेचनेन वीतरजस्काः शीतलाश्चापादिताः; वाद्यानां

अपि च ।

मन्ये रम्भाः पुरमृगदृशामूरुसौभाग्यचौर्यात्
बद्धा भृत्यैः प्रतिगृहमपि द्वारपार्श्वद्वयेषु ।
अम्भोदुर्गात् कथमपि हृता यन्त्रितोच्चैर्विताने
तासां वक्त्राम्बुजपरिमलग्राहिणी पद्ममाला ॥ १९ ॥

---

विविधानां प्रतिसदनं वादनेन प्रजाभिः परमामोदश्च प्रकटितः; सौधाग्रेषु च सप्रमोदम् उच्छ्रिताः पताकाश्च परितो निबद्धाः। इति नगरालङ्कारप्रकारः कविनात्रोपवर्णितः ॥ १४ ॥

अपि चेति अलङ्कारान्तराण्यपि नगरस्य निर्वर्णयति। मन्ये रम्भा इति। पुरमृगदृशां-नगरनिवासियुवतीनाम्। ऊरूणां सौभाग्यस्य-सक्थ्नां सौन्दर्यस्य चौर्यात् हेतोः। भृत्यैः-सेवकजनैः। गृहे गृहे प्रतिगृहं-एकैकस्मिन्नपि भवने। द्वाराणां-गृहप्रकोष्ठानाम्, पार्श्वद्वयेषु। रम्भाः-कदलीस्तम्भाः। बद्धाः-रज्जुभिर्निबद्धाः। इति मन्ये। पुरसुन्दरीणाम् ऊरुकाण्डानुकारिणो रम्भास्तम्भा इति भावः। तासां-पुरसुन्दरीणाम्। वक्त्राम्बुजानां-सरोजसदृशमुखानाम्, परिमलस्य-सौरभ्यस्य, ग्राहिणी-अपहर्त्री। पद्ममाला-तामरसकुसुमानां राजिः। अम्भोदुर्गात्-परैर्दुष्प्रापात्-सलिलमयात् निराबाधदेशात्। "दुष्प्रापं तु परं दुर्गं यन्त्रशैलजलादिभिः" इति वैजयन्ती। कथमपि-महता यत्नेन दुर्गं विलङ्घ्य आहरणस्य सुमहद्यत्नसाध्यत्वात्। हृता-बलादानीता। उच्चैः-उन्नते। विताने-उल्लोचाख्ये गृहादीनामुपरितनान्तरालचित्रावरणे। यन्त्रिता-आरोप्य पिनद्धा। मन्ये इत्यत्रापि अनुषज्यते। सरसिजैः नगरसुन्दरीणाम् आननसौरभ्यापहाररूपापराधस्य आचरितत्वात् तेषामिदम् उच्चैर्बन्धनरूपं दण्डनमभूद्विहितमिति भावः ॥ १९ ॥

किञ्च, सुधालेपधवलीकृतसौधवसतयः पौरयुवतयः शारदाभ्रगतपरमाद्भुततडिल्लताविभ्रममुद्भावयन्ति । किञ्च, चञ्चरीकगणश्चित्रलिखितसहकारमञ्जरीकलितोत्कलिकया सञ्चरमाणोऽपि कदर्यमवनीपतिमुपगतो वनीपकलोक इव निष्फल एव निवर्तते । कतिचन निकेतनानि च नूतनानि आलिखितेन अहिनकुलेन, अश्वमहिषेण, गोव्याघ्रेण च भित्तिषु निर्वैरसत्त्वानि अनुकुर्वन्ति चत्वराणि तपोधनाश्रमपदस्य । (अन्यतोऽवलोक्य सहासम्)

---

सुधालेपेति । सुधालेपेन धवलीकृतानि यानि सौधानि-राजार्हाणि गृहाणि तान्येव वसतयः-वासस्थलानि यासां ताः । पौरयुवतयः । शारदाभ्रं-शरत्काले दृश्यमानः मेघः, तद्गताश्च ताः परमाद्भुताश्च, याः तडिल्लताः, तासां विभ्रमं-विडम्बनं भ्रान्तिं वा । उद्भावयन्ति । सुधालेपधवलितानां सौधानां धवलशारदाम्बुदसदृशत्वम्, तेषु निवसन्तीनां सुवर्णयष्टिगौराणां सुन्दरीणां विद्युल्लतातुल्यत्वं चात्रोद्भावितम् । वीतसलिलत्वादतीव शुभ्राणां शारदाभ्राणां मध्ये तडिल्लतानां सम्भवस्योपपत्त्यभावात् तेषु तथाविधरूपावलोकनस्य परमाद्भुतत्वम् अभिहितम् । चञ्चरीकगणः-भ्रमरवर्गः । चित्रेषु लिखिताः याः सहकारमञ्जर्यः-रसालकुसुमगुच्छाः, तासु कलितया-कृतया, उत्कलिकया-उत्कण्ठया । सञ्चरमाणः-आलेख्यगताम्रमञ्जरीणामुपरि परिभ्रमन्नपि । कदर्यं-कृपणम् । अवनीपतिं-प्रभुम् । उपगतः-उपस्थितः । वनीपकलोकः-अर्थिजन इव । चित्रार्पितानां चूतकुसुमानाम् अकृत्रिमप्रसूनसंबन्धि नैसर्गिकं लावण्यं विना मकरन्दसुगन्धिभ्यां विद्यत इति भावः । भित्तिषु आलिखितेन-चित्रेषु निवेशितेन । अहिश्च नकुलश्च तयोः समाहारः अहिनकुलं तेन । अश्वमहिषेण, गोव्याघ्रेण चेत्यनयोरपि एवमेवैकवद्भावः । "येषां च विरोधः शाश्वतिकः" इति सूत्रेण परस्परशत्रुभूतप्राणिवाचकानाम् अमीषां शब्दानां द्वन्द्वैकवद्भावः । अन्यो-

दृष्ट्वाकृष्टकचामुदस्तचिबुकां पत्या कराभ्यां बलात्
कामप्येणदृशं करौ विधुवतीमास्वाद्यमानाधराम् ।
आलेख्ये पुरशिल्पिना विलिखितां भित्तौ बहिर्मन्दिरात्
नार्यः सस्मितनम्रवक्त्रकमलाः कर्षन्ति यूनां मनः ॥ १६ ॥

---

न्यवैरं स्वाभाविकं सर्वदा चावहताम् अहि-नकुलादीनां मृगाणां सह निवसतिं सूचयन्ति यानि भित्तिगतानि चित्राणि तद्युक्तानि नगरनिकेतनानि । तपोधनाश्रमपदस्य-मुनीनाम् आश्रमस्थलस्य । निर्वैराणि-अपोहितस्वाभाविकविद्वेषाणि, सत्त्वानि-सर्पतार्क्ष्य-कुरङ्गशार्दूलादयो जन्तवः । तानि । अनुकुर्वन्ति-स्वरूपतो गुणतश्चानुसरन्ति ।

**दृष्ट्वेति** । मन्दिरात् बहिः । भित्तौ । पुरशिल्पिना-नागरिकेण चित्रकारेण । आलेख्ये-चित्रे। विलिखिताम् । (विलिखितामिति स्थाने विरचितामिति पाठान्तरम् ।) कामपि । एणदृशं-मनोहरां युवतिम् । कथंभूताम्, पत्या-स्वभर्त्रा । कराभ्याम् । आकृष्टः कचः यस्याः ताम्-बलात् एकेन करेण गृहीतकेशपाशाम् । अन्येन करेण उदस्तं-उन्नमितं चिबुकं यस्यास्ताम् । बलात् आस्वाद्यमानः अधरः यस्यास्ताम् । अतएव करौ विधुवतीं-बलात्कारोत्पन्नसात्त्विकभावजनितव्रीडाविशेषेण प्रकम्पयन्तीम् । दृष्ट्वा-सर्वजनावलोकनार्हे बाह्यकुड्यस्थले ग्राम्यकर्मायत्तस्य मिथुनस्य चित्रमवलोक्य । नार्यः-तन्मार्गेण यातायातमाचरन्त्यस्तरुण्यः । सस्मितानि-व्रीडासूचकमन्दस्मेरसहितानि, अत एव नम्राणि-आनमितानि, वक्त्रकमलानि याभिस्ताः । तथाविधाः सत्यः । यूनां-तादृशनारीजनावलोकनासक्तानां तरुणानाम् । मनः । कर्षन्ति । महाराजस्य वीथीषु समागमं प्रतीक्षद्भिः पौरजनैः न केवलं नगरमार्गाः चत्वरादिप्रदेशाश्च परं तु स्वात्मनां गृहाणि च सुधालेपन-चित्ररचनादिभिः सुमनोहरमलङ्कृतानीति भावः ॥ १६ ॥

नन्विदानीमत्र नगरालङ्कारदर्शिनो राज्ञः समागमं प्रतीक्षमाणाः पौरास्तस्य परमुपचाराय संनह्यन्ति । तथाहि—

स्थाप्यन्ते गृहवासवेदिषु घटाः संवेष्टितास्तन्तुभिः
प्रत्यग्राम्रदलप्रसाधितमुखा विप्रैः पयःपूरिताः ।
कन्याभिर्घृतसिक्तवर्तिनिकरैर्नीराजनाभाजनैः
साध्यन्ते सममेव लाजसुमनश्चित्राणि पात्राणि च ॥ १७ ॥

(विचिन्त्य) कथमसौ राजा लिप्सितं फलं लब्ध्वा समायास्यति? कथमस्य साम्बशिवप्रसादमन्तरेण लिप्सितफललाभः? कथं वा कठोराणि

---

नन्विति । इदानीं-निर्वर्तितनिश्शेषनगरालङ्कारेऽस्मिन् समये । समागमं-आगमनम् । परम् उपचाराय-विशिष्य संमाननाय । संनह्यन्ति-उद्युक्ताः सन्ति ॥

तानेवोपचारोद्यमप्रकारान् तथाहीति विवृणोति । स्थाप्यन्त इति । तन्तुभिः संवेष्टिताः-सूत्रैः समन्ततः संवीताः । तथा पयसा-शुद्धोदकेन पूरिताः । प्रत्यग्रैः-तदानीमेवानीतैः अम्लानहरितैः, आम्रदलैः, प्रसाधितानि-अलङ्कृतानि, मुखानि येषां ते । घटाः-पूर्णकुम्भाः । गृहवासवेदिषु-गृहाणां बाह्याङ्गणवटितासु वितर्दिकासु । विप्रैः । स्थाप्यन्ते । सूत्रवेष्टितानां साम्रदलानां शुद्धोदकपूर्णकुम्भानां वहिर्वितर्दिकासु स्थापनं तावत् माननीयजनानां स्वागतरूपपूजनकर्मस्वन्यतममिति आचारज्ञा जानीयुः । तथैव घृतसिक्ताः वर्तिनिकरा येषु तैः । नीराजनाभाजनैः-आरात्रिकोपकरणभूतैः दीपपात्रैः । सममेव-नीराजनासाधनैः सहैव । लाजैः-भर्जिततण्डुलैः, सुमनोभिः-कुसुमैश्च, चित्राणि-शबलीकृतानि ; विचित्रतया अलङ्कृतानीति यावत् । पात्राणि-महतां सभाजनार्थमुपयुज्यमानानि भाजनानि च । कन्याभिः । साध्यन्ते सज्जीक्रियन्ते ॥ १७ ॥

कथमसाविति । लिप्सितं-काङ्क्षितम् । समायास्यति-प्रत्यागमिष्यति । लिप्सितफललाभः-अभीष्टफलसिद्धिः । कथं भविष्यतीत्यर्थः । कठोराणि-पञ्चाग्नि-

तपांसि विनानेन सुलभः शिवप्रसादः? कथमनेन स्वकालविकस्वरशिरीषदल-कोमलशरीरेण सुकरा कठोरा तपश्चर्या? न चैतस्य तादृशतपश्चरणादृते-ऽखिलपुरुषार्थसाधनं भगवतश्चन्द्रकलावतंसस्य निरन्तरध्यानं संभाव्यते। नलिनीदलान्तरालतरलोदबिन्दुसमस्यन्दा दुर्निरोधा हि चित्तवृत्तयः। तदिदानीं मदीयमन्तःकरणं दुरन्तचिन्तोदधौ निमज्य पुनरुन्मज्जति। अथवा कस्य किमसम्भावितम् अनुकूलतामुपगतवत्या नियत्या। (दक्षिणभुजस्पन्दमभिनीय) कथमस्थाने मम विचारः। सर्वं सुघटितं भविष्यति।

---

मध्यादिषु निर्वर्तनीयत्वात् अतिकृच्छ्राणि। स्वकाले-समुचिते काले, ग्रीष्मर्ताविति यावत्; विकस्वराणि-विकासीनि, यानि शिरीषदलानि-शिरीषकुसुमानि, तानीव कोमलं-अतीव मृदुलम्, शरीरं यस्य तेन। तादृशेन मृदुशरीरप्रकृतिना अनेन-राज्ञा। कठोरा-अतिप्रयाससाध्या। तपश्चर्या। कथं सुकरा-कथमनेन सुलघु निर्वर्त्येतेत्यर्थः। अखिलपुरुषार्थानां-धर्मार्थकाममोक्षाख्यानाम्, साधनं-सम्पादकम्। चन्द्रकलावतंसस्य-परमेश्वरस्य। चित्तवृत्तयः-मनसो व्यापाराः। नलिनीदलस्य-पद्मपत्रस्य, अन्तराले-मध्ये, विद्यमान उदबिन्दुः-जलकणिका, तस्य समः, स्यन्दः-प्रसरः, चलनमिति यावत्, यासां ताः; पद्मपत्राम्बुबिन्दुवत् अतितरां चञ्चला इत्यर्थः। अत एव दुर्निरोधाः-यन्त्रणानर्हाः। चित्तवृत्तिनिरोधेनैव चन्द्रमौलेर्निरन्तरध्यानम्, तादृशध्यानेनैव तपसः कठिनस्याचरणम्, महता तपसैव महेश्वरस्य प्रसादाधिगमः, तत्प्रसादेनैव अभीप्सितार्थलाभश्चेति अमीषाम् अवस्थान्तराणाम् एकैकस्य च दुष्करत्वमालोच्य, दुरन्ते-अपारे, चिन्तोदधौ। मदीयम् अन्तःकरणं-मामकं मनः। निमज्य। पुनः उन्मज्जति-चिन्तारूपकालुष्यमपास्य नैर्मल्यमवाप्य ईप्सितफलप्राप्तिर्महाराजस्य नैव स्यात् दुस्साधेति निश्चेतुं प्रभवतीति भावः। अथवेति चित्तस्यावस्थान्तरमनुकूलरूपं निर्दिशति। अनुकूलतां-आनुकूल्यम्। उपगतवत्या-प्राप्तवत्या। नियत्या-दैवेन। (अनुकूलता-

(नेपथ्ये)

**वैतालिकः—**

वातं प्रावृषिकं निरुध्य सहसा गात्रप्रकम्पप्रदं
संफुल्लानि विधाय चारुकमलान्यासाद्य हंसागमम् ।
दिष्टया लब्धवता प्रसादमधिकं वापीजलाधारयोः
सद्यः शारदवासरेण धवलो मेघोऽम्बरं प्रापितः ॥ १८ ॥

---

मुपगते दैवे इति पाठान्तरम् ।) विचारः-चिन्ता । अस्थाने इत्यव्ययमेतत्; अनुचितमित्यर्थः । सुघटितं-सम्यक् निष्पादितम् । नेपथ्य इति । नेपथ्य-वैतालिकयोः पूर्वमेव विवरणं कृतम् ।

**वातमिति** । शारदवासरेण-शरत्कालसम्बन्धिना दिवसेन । दिष्टया-दैववशात् । गात्राणां-अङ्गानाम्, कम्पस्य-वेपनस्य, प्रदं-उत्पादकम् । प्रावृषिकं-वार्षिकम् । वातं-अतिशीतलं मारुतम् । सहसा-आकस्मिकतया । निरुध्य-निवर्त्य; अपगतवातं कृत्वेत्यर्थः । चारुकमलानि-मनोहरसरसीरुहाणि । संफुल्लानि-सम्यक् विकसितानि । विधाय-कृत्वा । वृष्टयां विनिवृत्तायां कालाम्बुदेषु च विलयमधिगतेषु पङ्कजानां सङ्कोचावस्थाव्यपगमपूर्वकम् अभिवृद्धिः शारदो विकासश्च स्वयं प्रकृत्यैव प्रादुर्भवतीति भावः । हंसानाम् आगमं-मानसात् इह प्रत्यागमनम् । आसाद्य-प्राप्य । प्रावृडारम्भे हंसा इमं देशं विहाय मानससरसे यान्ति, शरदि च ततस्ते प्रतिनिवर्तन्त इति च कविसमयसिद्धो व्यवहारः । वापी-दीर्घिका, जलाधारः-जलाशयः तयोः । अधिकं प्रसादं-सुतरां नैर्मल्यम् । लब्धवता-प्रापितवता । शारदवासरेणेति पूर्वेणान्वयः । धवलः-शरत्कालवशात् जलसञ्चयराहित्याच्चाधिगतपाण्डुरस्वभावः । मेघः । अम्बरं-आकाशम् । प्रापितः-नीतः । अनेनन च वैतालिकीयवर्णनेन प्रस्तुतकथावस्तुनि मन्त्रिणो मनोरथानुरोधेन सपदि समुपनतोऽवस्थाविपर्ययः सूचितः । यथा-सर्वेष्वप्यान्तरेषु बाह्येषु चाङ्गेषु जीवराजस्य नगरसीमाङ्गणभूतेषु रिपुप्रहितैः शतसङ्ख्याकैः रोगानीकैः,

मन्त्री—(श्रुत्वा सहर्षम्) अस्मत्कृतप्राणनिरोधेन निर्धूतसकलतपोविघ्नेन विशुद्धाद्वैतज्ञानसाधनेन समाधिना समाराधितयोः धूर्जटिश्वरराजकन्ययोः प्रसादेन राज्ञा रसो हस्तगतः कृत इत्यनेन वैतालिकवचनेन सूच्यते ।

---

'मूर्धानं व्याप्तुकामाः शतमथ' इत्याद्युक्तरीत्या बहुधा चाक्रान्तेषु, शत्रुसैन्यकृतं पुरावस्कन्दनमिदं निरीक्ष्य मनाक् व्याकुलीभूतमनसि मन्त्रिणि, सहसा जीवाधिगतेन शिवप्रसादेन तेषाम् आमयरूपाणाम् अनीकानां शात्रवाणां विनाशहेतू रससिद्धिश्च संप्राप्ता इति विषयो वक्ष्यमाणो व्यञ्जितः । एतच्च सूचनम् आनन्तरिकेण मान्त्रिवाक्येनैव सम्यक् प्रतिपद्यते ॥ १८ ॥

श्रुत्वेति । वैतालिकपठितपद्याभिव्यञ्जितसूच्यार्थस्य स्वाभिमतकार्यानूकूल्यद्योतकत्वात् मन्त्रिणः सहर्षत्वम् । अस्मत्कृतः-विज्ञानशर्मविहितः; विज्ञानशर्मणः साहाय्यतो निर्वर्तित इति यावत्; प्राणनिरोधः-प्राणायामो यस्मिंस्तेन । रेचक-पूरक-कुम्भकलक्षणः प्राणनिग्रहोपाय एव प्राणयामः, यश्च यम-नियमादिषु अष्टसु समाध्यङ्गेषु अन्यतमः प्रधानश्च । प्रबलप्राणायामाख्योपायसाधितेनेत्यर्थः । (समद्युतप्राणनिरोधेन इति, समुद्युक्तप्राणनिरोधेन इति, समनुभूतप्राणनिरोधेन इति शुद्धाशुद्धरूपाः पाठभेदाः सन्ति ।) निर्धूताः-निराकृताः, सकलतपोविघ्नाः यस्मिंस्तेन । निर्विकल्पकाख्यस्य समाधेः लय-विक्षेप-कषाय-रसास्वादसंज्ञाः चत्वारो विघ्नाः सम्भवन्ति । (१) अखण्डवस्त्ववलम्बनेन मनोवृत्तेर्निद्रारूपावस्था 'लयः' । (२) अखण्डवस्त्ववलम्बनेन मनोवृत्तेरन्यावलम्बनं 'विक्षेपः' । (३) लय-विक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनायाः स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं 'कषायः' । (४) अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दास्वादनं 'रसास्वादः'; समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा । अनेन विघ्नचतुष्टयेन रहितं चित्तं निर्वातस्थदीपशिखेव निश्चलं ध्येयवस्तुनियतं स्यात् । तदवस्थाकस्य समाधेः निर्विकल्पसमाधिरिति नाम । अद्वैतं एकमेव ब्रह्म, नान्यत् सत्यम् इति यत् ज्ञानं तत् अद्वैतज्ञानम्; विशुद्धं च तत् अद्वैतज्ञानं च विशुद्धाद्वैतज्ञानम्, तस्य साधनेन-संपादकेन । ब्रह्मैव सत्यं

(पुनर्नेपथ्ये)

दिङ्मण्डलस्य विमलीकरणे प्रवीणान्
निर्विघ्नमुत्सृजति नीरजबन्धुरंशून् ।
पङ्कश्च पान्थपदयोगममृष्यमाणः
संशोषमेत्य शकलीभवति क्षणेन ॥ १९ ॥

---

प्रत्यक्षादिसिद्धं विश्वं ब्रह्मणि आरोपितम् असत्यम् । ब्रह्मस्वरूपस्य अज्ञानात् विश्वं वस्तुवत् प्रतिभाति; प्रकृतिर्जीवश्चापि पर्यवसाने ब्रह्मैव इत्येवं रूपं यत् ज्ञानं तदेव शुद्धाद्वैतज्ञानम् । समाधिना-संयमेन । समाधिस्वरूपं च वैजयन्त्याम् एवं व्याख्यातम्-"प्रत्याहारस्त्विन्द्रियाणां विषयेभ्यः समाहृतिः । धारणा तु क्वचित् ध्येये चित्तस्य स्थिरबन्धनम् । ध्यानं तु विषये तस्मिन् एकप्रत्ययसन्ततिः । समाधिर्ना तदेवार्थमात्राभासनरूपकम् । प्रयुक्तं धारणाद्येतत्त्रयमेकत्र संयमः ॥" इति । समाधिना समाराधितयोः-उपासितयोः । (समाधिशब्दः क्वचित् पुस्तके उत्सृष्टः । धूर्जटि-धरराजकन्यकयोः इति स्थाने पार्वतीपरमेश्वरयोः इति पाठश्च क्वचिद्दृश्यते ।) तयोः प्रसादेन-अनुग्रहेण । रसः-यक्ष्मनिर्मूलनसमर्थः पारदः । राज्ञा-जीवराजेन । हस्तगतः कृतः-अधिगत एव । इति-एवंरीतिकोऽर्थः । वैतालिकवचनेन सूच्यते । पूर्वस्मिन् पद्ये वातं प्रावृषिकं निरुध्येत्यनेन प्राणनिरोधाख्यः प्राणायामः, संफुल्लानि विधायेति द्वितीयपादेन शुद्धाद्वैतज्ञानसाधनभूतः समाधिः, वापीजलाधारयोः इत्यनेन धूर्जटिधरराजकन्ये, लब्धवता प्रसादमित्यनेन पार्वतीपरमेश्वरयोः प्रसादः, शारदवासरेणेत्यनेन जीवराजः, धवलो मेघ इत्यनेन हस्तगतो रसश्च क्रमेण सूचिताः । पुनर्नेपथ्य इति वैतालिकस्य वचनान्तरमपि वक्ष्यमाणपद्यरीत्या श्रूयत इति भावः ।

दिङ्मण्डलस्येति । नीरजबन्धुः-सूर्यः । दिङ्मण्डलस्य-दिशां चक्रवालस्य । विमलीकरणे-तमोराशिपरिहारपूर्वकं प्रकाशने । प्रवीणान्-विशिष्य समर्थान् । अंशून् मयूखान् । निर्विघ्नं-वार्षिकवारिदकृताच्छादनरहिततया निरर्गलं यथा तथेत्यर्थः ।

मन्त्री—(श्रुत्वा) एतेनापि वचसा देहस्य नीरोगीकरणसमर्थान् रसान् प्रयोक्तुं राज्ञस्तस्य च यक्ष्महतकस्य विनशितुं प्राप्तः कालोऽयमिति च सूच्यते। (सबहुमानम्) साधु रे वैतालिक साधु। यदधुना

---

विसृजति-विमुञ्चति। अनेन देहरक्षणे कृतोद्यमो जीवराजः शिवप्रसादाधिगतान् विविधव्याधिमण्डलनिर्धूननिपुणान् रसयोगान् यथेच्छं प्रयुज्य देहं नीरोगीकर्तुं व्यवसित इत्यर्थोऽपि व्यज्यते। पङ्कः-प्रावृट्कालसमुद्भूतः कर्दमश्च। पान्थानां-पथिकानां, पदयोगं-चरणैराक्रमणम्, अमृष्यमाणः-पथिकजनपादाहतिरूपावमाननां असहन्निवेति संभावना। क्षणेन-अतित्वरयेति यावत्। संशोषं-सुतरां शुष्कीभावम्। एत्य-प्राप्य। शकलीभवति-खण्डशः स्फुटति। परकृतपादताडनरूपां निराकृतिं, निष्ठुराणि चित्तसन्तापकराणि वचांसि चासहमानः कश्चिन्मानी यथा कार्श्यं हृदयविदारणं चाधिगत्य नश्येत् तथा निरर्गलं निस्सरद्भिः सूर्यकिरणैः सन्तप्तः, परितः प्रचलतां पथिकानां पादाघातैः चूर्णिकृतश्च समभवत् पङ्क इति भावः। अनेन चोत्तरार्धेन प्रधानः परिपन्थी जीवराजेन निराकृतो निहतश्चेति ध्वन्यते॥ १९॥

एतेनेति। एतेनापि वचसा-दिङ्मण्डलस्येति पद्यपठनेनापि। नीरोगीकरणसमर्थान्-व्याधिविनाशनयोग्यान्। रसान्-रस-गन्धकादिभिः कृतान् औषधविशेषान्। प्रयोक्तुं-देहे नियोजयितुम्। राज्ञः-स्वकीयस्य प्रभोः जीवराजस्य। यक्ष्महतकस्य-दुरात्मनो राजयक्ष्मणः। विनशितुं च। अयं कालः प्राप्तः। दिङ्मण्डलस्येति श्लोके नीरजबन्धुशब्दो देहबन्धुं जीवम्, दिङ्मण्डलशब्दः देहम्, विमलीकरणे प्रवीणान् अंशून् इति शब्दाः नीरोगीकरणसमर्थान् रसांश्च एकत्र सूचयन्ति। पदयोगममृष्यमाणः इति वाक्यं रसौषधप्रयोगस्य दुस्सहत्वम्, पङ्क इति शब्दः यक्ष्मरोगम्, संशोषमेत्य क्षणेन शकलीभवतीति वाक्यं तस्य यक्ष्मणः शीघ्रमेव विनाशं च शत्रुपक्षे सूचयन्तीति मन्त्री विवृणोति। अत एव

गूढाभिप्रायेण भवता बोधितव्यं बोधितम् । तदेव वृत्तं सप्रकारमवगन्तुं राजानं प्रत्युद्गमनेन बहुमन्तुं च तत्रैव गच्छामि । (इत्युत्थाय आकाशे) अरे यक्ष्महतक, भवदीयमतःपरं पश्यामि शौण्डीर्यम् । (पुरो विलोक्य) कथमागत एव देवः । यतो देवी पुरोमार्गदर्शिनी पुरो दृश्यते । यैषा—

धम्मिल्ले घनसन्निभे सिततडिद्वल्लयेव मल्लीस्रजा
वक्त्रेन्दौ रुचिरैणनाभितिलकव्याजात् कलङ्केन च ।
हारेण स्तनकोकयोरपि बिसस्वच्छेन चायामिना
पादाम्भोरुहयोश्च हंसकयुगेनाराविणा राजते ॥ २० ॥

---

गूढमभिप्रायं मनस्याकलयन् यः पद्यद्वयं स्वयमपठत् वैतालिकः, तम् आमोदयति भवता बोधितव्यं बोधितमिति । (यदधुना इत्येतत् पदद्वयम् आन्ध्रपुस्तके नास्ति ।) सप्रकारं-सविशेषम्; विस्तरेणेति यावत् । (अवगन्तुम् इति स्थाने अवगमयितुम् इत्यस्ति पाठान्तरम् ।) शौण्डीर्यं-गर्वम् । (यतो देवी इत्यनन्तरं 'इत इतो भवान्' इत्यधिकः पाठ आन्ध्रकोशे दृश्यते ।)

धम्मिल्ले इति । घनसन्निभे-नीलाम्बुदसदृशे । धम्मिल्ले-संयते केशपाशे । सिततडिद्वल्लयेव-प्रभाविशेषस्फुरद्विद्युल्लतयेव विद्यमानया । मल्लीस्रजा-मल्लीकुसुममाल्येन । तथा वक्त्रेन्दौ-चन्द्रसदृशे वदनमण्डले । एणनाभिः-मृगमदः; कस्तूरीत्यर्थः; तेन कृतं तिलकम् एणनाभितिलकम्; रुचिरं च तत् एणनाभितिलकं च रुचिरैणनाभितिलकम्; तस्य व्याजात् । कलङ्केन-लाञ्छनेन च । कलङ्कशोभाम् आवहति तिलकमित्यर्थः । तथा स्तनकोकयोः-चक्रवाकपतगवत् घनवर्तुलयोः वक्षोजयोरपि । बिसस्वच्छेन-मृणालवद्धवलेन । आयामिना-दीर्घेण च । हारेण । चक्रवाकानां बिसमध्ये निवासस्य नियतत्वात्, स्वच्छस्य दीर्घहारस्य मध्ये विद्यमानस्य वक्षोजद्वयस्य कृत एवमुल्लेखः । पादाम्भोरुहयोः-पङ्कजसदृशयोः पदयोः । आराविणा-शब्दायमानेन; हंसपक्षे-पङ्कजमध्यस्थितकेसरेभ्यो निष्यन्दमानस्य

अयमपि महाराजस्तस्या अनुपदमागच्छति। संप्रति हि एतस्य—

विचारविगमादिदं विलसति प्रसन्नं मुखं
गृहीतसुषमं हिमव्यपगमादिवाम्भोरुहम् ।

---

मधुनो यावदिच्छं पानेन समुपजनितसंमोदभरत्वात् कृतकलकलशब्देन । हंसकयुगेन-नूपुरद्वयेन च। अन्यत्र हंसमिथुनेन च। यैषेति पूर्वोक्तौ शब्दौ अत्रान्वेतव्यौ। या देवस्य पुरोमार्गदर्शिनीति पूर्वमुक्ता देवी, एषा एवंनिर्दिष्ट-रीतिभिः राजते-अतीव दर्शनीया भवति। एवमेव हंसकशब्दस्य पादकटक-मरालयोः श्लेषरूपेण माघकाव्ये वर्ण्यते—

"मदनरसमहौघपूर्णनाभीह्रदपरिवाहितरोमराजयस्ताः ।
सरित इव सविभ्रमप्रयाताः प्रणदितहंसकभूषणा विरेजुः ॥" इति ।

(वक्त्रेन्दौ इत्यत्र वक्त्रेन्दोः इति, रुचिरैणनाभितिलकव्याजात् इत्यत्र रुचिरेण नाभितिलकव्याजात् इति, च आयामिना इत्यत्र या चामुना इति च पाठभेदा दृश्यन्ते।) स्फुरत्प्रभायाः विद्युल्लतायाः समानायाः मल्लीस्रजो धारणात् धम्मिल्लः सलिलभरितनीलनीरदस्य च, मध्येचन्द्रबिम्बं परिदृश्यमानस्य नीललाञ्छनसदृश-रूपस्य कस्तूरिकाविशेषकस्य संयोगात् मुखं चन्द्रस्य च, धवलस्य आयतमृणा-लकाण्डस्य सदृशाकारस्य हारस्य वक्षसि वहनात् स्तनयुगं मृणालमध्यविद्योत-मानस्य चक्रवाकमिथुनस्य च, वर्णशब्दादिभिः मरालमिथुनसमानस्य नूपुरद्वयस्य वहनात् चरणयुगमपि हंसमिथुनसनाथस्य सरसिजद्वयस्य च आनुरूप्यं सर्वथा आवहन्तीति निरूप्य मन्त्री देव्यास्तत्कालसुषमाम् एवं श्लाघते ॥ २० ॥

**अयमपीति**। तस्याः-महिष्याः। अनुपदम् आगच्छति-तस्याः पश्चात् आयाति।

**विचारविगमादिति**। संप्रति हीत्यादिकं पूर्ववाक्यम् अत्रान्वेति। संप्रति हि। एतस्य-जीवराजस्य। इदं-पुरो दृश्यमानम्। मुखम्। हिमस्य-हेमन्तर्तोः,

विषाणिन इव प्रतिद्विरददर्शनामर्षिणो
गतिश्च किल मेदिनीं नमयतीव धीरोद्धता ॥ २१ ॥

---

व्यपगमात्-अतिक्रमात् हेतोः। गृहीतसुषमं-अधिगतरामणीयकम्। अम्भोरुहमिव शरदि नीरदापगमानन्तरं नैर्मल्यमधिगतास्वप्सु निर्निरोधमुन्मिषत् कमनीयं कमलमिवस्थितमिति यावत्। विचारविगमात्-मनोव्याकुलस्य निरासात्-हेतोः। राजयक्ष्मणि बलवदभिवृद्धे बलवर्णादीनां हानिः, व्यथा, मनोदैन्यम् इत्येतादृशानि च लक्षणानि विशिष्य विलोक्यन्ते। यथा—"क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते। ज्वरो व्यथा मनोदैन्यं विड्भेदाग्निवधावपि।" इति यक्ष्मणोऽभिवृद्धस्य लक्षणम्। तादृशमनोदैन्यादिविचारविरहितत्वं राजयक्ष्मविनाशसूचकेषु प्रधानलक्षणेषु अन्यतममिति लक्षयितुमिदमुक्तम्। अत एव प्रसन्नं-ओजसस्तेजसश्चाभिवृद्धया सुतरां स्वच्छं यथा तथा। विलसति। किञ्च। प्रतिद्विरदस्य-विरोधिवारणस्य, दर्शनेन अमर्षिणः-रोषाविष्टस्य, विषाणिनः-दन्तिन इव। एतस्य राज्ञः। धीरोद्धता-धीरत्वौद्धत्यसहिता; सावष्टम्भेति यावत्। "मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः। आत्मश्लाघानिरतो धीरैर्धीरोद्धः कथितः" इति धीरोद्धतस्य विवरणम्। तादृशी गतिः-गमनम्। मेदिनीं-भूतलम्। नमयतीव। किलेति प्रश्ने। विनष्टविपक्षभयत्वात् ओजसा तेजसा च विलसन्मुखकान्तिः स्वप्रयुक्तैरुपायैः वित्रस्तं शात्रवबलमखिलमपि तृणाय मन्वानो धैर्येणौद्धत्येनोत्साहेन च धरातलमधस्तात् स्वबलपराक्रमाभ्याम् अवनमयन्निव सफलमनोरथ इव सावष्टम्भं समायाति महीपतिरिति भावः।

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्"

इति कुशमवलोक्य रामेणाभिहिताम् उत्तररामचरितस्य वचनरीतिम् अनुस्मारयति वर्णनमिदम् ॥ २१ ॥

(ततः प्रविशति जीवो बुद्धिश्च ।)

जीवः—अहो श्रुति-स्मृतिविहितानां कर्मणां प्रभावः । यानि मया समयेषु समनुष्ठितानि मदीयमन्तःकरणमशोधयन् । शोधिते च तस्मिन् भगवद्भक्तिर्नाम कापि कल्पलता प्रथममङ्कुरिता । पश्चादुपचितपरिचया च सा मम हृदयानुरञ्जनी क्रमेण भगवन्तौ परमेश्वरौ साक्षात् दर्शितवती । अनितरसाधारणया च तया प्रसन्नौ भगवन्तौ संप्रत्यभिलषितान् रसगन्धकादीन् प्रसादीकृत्यार्पितवन्तौ । अग्रेऽपि तस्या एव महिम्ना सकलमप्यभिलषितं पुमर्थं लप्स्यामहे ।

---

ततः प्रविशतीति । जीवः-राजा । बुद्धिः-तस्य देवी च । श्रुतिस्मृतीति । श्रौतैः स्मार्तैश्च कर्मभिः यथावदनुष्ठितैः सात्त्विको गुणः समभिवर्धते; तेन च यत्सत्यमन्तःकरणं नैर्मल्यमधिगच्छति । न केवलं मनश्शुद्धिरेव तस्य फलम्; परं तु राजयक्ष्मादिरोगाणाम् अपोहेन शरीरशुद्धिरपि प्रकल्पते । यथा हि चरके राजयक्ष्मचिकित्सिते—"हर्षणाश्वासनैर्नित्यं गुरूणां समुपासनैः । ब्रह्मचर्येण दानेन तपसा देवतार्चनैः । सत्येनाचारयोगेन मङ्गलैरविहिंसया । यया प्रयुक्तया चेष्टया राजयक्ष्मा पुरा जितः । तां वेदविहितामिष्टिम् आरोग्यार्थी प्रयोजयेत् ॥" इति रोगराजविजयपूर्वकं देहशुद्धिस्थापनरूपस्यारोग्यस्याभिवृद्धये वेदविहितं यज्ञादिकमपि साधु अनुष्ठेयमित्यभिधीयते । शोधिते इति । तस्मिन्-अन्तःकरणे च । शोधिते-रजस्तमोभ्यां विरहिते सतीति भावः । प्रथमं-शोधनानन्तरमेव । अशेषाणामप्यभीष्टार्थानाम् अर्पणशीलत्वात् भगवद्भक्तौ कल्पलतात्वाध्यवसायः क्रियते । पश्चादिति । सा-भगवद्भक्तिः । उपचितपरिचया-मनसा समधिगतसमधिकसंस्तवबला; हेतुरियम् । हृदयानुरञ्जनी । परमेश्वरी च

बुद्धिः—अज्जउत्त, किं एदे रसगन्धआ अण्णणिरवेक्खा सअं जेव्व विपक्खक्खपणं णिव्वहन्दि । [आर्यपुत्र, किमेते रसगन्धका अन्यनिरपेक्षाः स्वयमेव विपक्षक्षपणं निर्वहन्ति ।]

राजा—देवि, दिव्यौषधीभिः शोधिताः सन्तो विविधरसायनद्वारा उक्त-सामर्थ्या ह्येते ।

देवी—ता एव्वं संविहाणसमत्थेण केण वि होदव्वम् । [तदेवं संविधानसमर्थेन केनापि भवितव्यम् ।]

---

परमेश्वरश्च परमेश्वरौ-पार्वतीपरमेश्वरौ । अनितरेति । अनितरसाधारणया-परां काष्ठामारूढया । रस-गन्धकादीन्-राजयक्ष्मनिषूदनोपयोगिनः पारद-गन्धकादि धातुविशेषान् । प्रसादीकृत्य-स्वात्मनोः प्रसादस्य फलत्वेन विधाय । अग्रेऽपीति । इतः परमपि । पुमर्थ-सकलमपि त्रैवर्गिकं फलम् अन्ततश्चापवर्गमिति भावः । अज्जउत्तेति । अन्यनिरपेक्षाः-अनपेक्षितपदार्थान्तरसंयोगाः । विपक्षक्षपणं-राजयक्ष्म-तदनुबन्धिरोगसमूहरूपवैरिवरूथिनीविनाशात्मकं कर्म । देवीति । दिव्यौषधीभिः "सर्पाक्षी क्षीरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका" इत्यादिभिः षड्भिः श्लोकैः रसरत्नसमुच्चये समभिहिताभिः प्रशस्ताभिः अन्याभिश्च तादृशीभिः मूलिकाभिः । शोधिताः-अष्टादशसंस्कारादिभिः सम्यक् पाचिताः सन्तः । विवि-धरसायनद्वारा-राजमृगाङ्क-कनकसुन्दर मृगाङ्कपोटलीप्रभृतीनां नानाविधानां रासा-यनिकौषधयोगानां रूपेणेत्यर्थः । उक्तसामर्थ्याः-यथाभिहितरोगपरिहरणरूपकर्म-निर्वहणक्षमाः ॥

ता एव्वमिति । एवं-पूर्वोक्तरीत्या । संविधानसमर्थेन-रसायनाद्यौषधनिर्मा-णविषये तत्प्रयोगादिविषये च निपुणेन । केनापि-साहाय्यदानविचक्षणेन केनचन पुरुषेण ।

राजा—विज्ञानशर्मैवात्र निर्वोढा । यतः—

ऋषिरेव विजानाति द्रव्यसंयोगजं गुणम् ।
विज्ञानशर्मणः कोऽन्यः सर्वज्ञाननिधिस्त्वृषिः ॥ २२ ॥

किञ्च—

महेशतेजस्सम्भूतो रसः कारुणिकाग्रणीः ।
यः स्वानिष्टमुरीकृत्य परपीडां व्यपोहति ॥ २३ ॥

---

निर्वोढेति—कार्यसाधनप्रवीणः । ऋषिरेवेति । ऋषिः-ओषधीनां गुणाभिज्ञो योगीश्वर एव । द्रव्याणां-औषधोपयोगिपदार्थानाम्, संयोगजं-परस्परायोजनसंभवम् । गुणं-रस-गन्धकादीनां परस्परसंयोगतः प्रादुर्भवन्तं विविधं विसदृशं गुणविशेषमिति यावत् । विजानाति । विज्ञानशर्मणः-मन्त्रिवर्यात् । अन्यो ऋषिः कः । न कोऽपीति भावः । तु शब्दोऽवधारणे । स तु सर्वज्ञाननिधिः खलु । अतो रस-गन्धकादीनां शोधने मारणे संयोजने प्रयोगेषु च विविधेषु विशिष्य प्रवीणो विज्ञानशर्मा; तस्मिन् विद्यमाने को नश्चिन्तावकाश इति भावः । गतेर्ज्ञानार्थत्वात् अत्र ऋषिशब्दः सर्वज्ञत्वप्रबोधकः । "गत्यर्थादृषतेर्धातोर्नामनिर्णयकारणम् । यस्मादेव स्वयं भूतस्तस्माच्च ऋषिता मता" इति मत्स्यपुराणीया (अध्याय १२०) निरुक्तिः ॥ २२ ॥

महेशेति । महेशतेजस्सम्भूतः-शिवतेजोभूतात् सप्तमधातोस्तदीयात् जातः । रसः पारदः । महारोगापोहरूपप्रभावद्योतकमिदं विशेषणम् । "शिवाङ्गात् प्रच्युतं रेतः पतितं धरणीतले । तद्देहसारजातत्वाच्छुक्लमच्छमभूच्च तत्" इति रसेन्द्रसारसङ्ग्रहे । "चकास्ति तत्र जगतामादिदेवो महेश्वरः । रसात्मना जगत्त्रातुं जातो यस्मान्महरसः" इति रसरत्नसमुच्चये च । कारुणिकानाम् अग्रणीः । सत्यप्यचेतनत्वे रसस्य, महेश्वरतेजस्सम्भवमहिम्ना करुणाविशिष्टत्वं

तदुक्तम्—

"मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति ।
अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात्" ॥ २४ ॥

---

तस्य प्रसज्यत इत्याशयः। कारुणिकाग्रेसरत्वं कथमवगम्यत इत्युपपादयत्युत्तरार्धेन। यः-रसः। स्वानिष्टं-मर्दन-दाहन-मारणादि रूपं स्वकीयं दुःखम्। उरीकृत्य-अङ्गीकृत्य। परपीडां-इतरेषां रुग्णानां व्याधिरूपां दुरवस्थाम्। व्यपोहति-निवारयति। परपीडापनोदनार्थमेव स्वानिष्टमेष स्वयमङ्गीकरोतीति भावः। इममाशयमेवानन्तरिकेन श्लोकद्वयेन ग्रन्थान्तरादुद्धृतेन विशदयति ॥ २३ ॥

**तदुक्तमिति**। तत्-तस्मादेव, उक्तं-वाग्भटादिभिः वक्ष्यमाणरीत्या कथितम्।

**मूर्छित्वेति**। आवश्यकानाम् ओषधिवर्गाणां संयोजनेन रसं मृदित्वा, तत्र मिश्रीभूतनाग-वङ्गादिजनितदोषाणां परिहरणपूर्वकं नष्टपिष्टाभिधं मूर्तिबन्धनं यत् तादृशं संस्करणं रसस्य मूर्छनमित्युच्यते। अथवा ओषधीभिः काभिश्चन संयोजिताभिर्मर्दनेन रसनिष्ठानां मल-वह्नि-विषाख्यानां दोषाणां यः परिहारक्रमः तस्यापि मूर्छनमिति नाम। "मर्दनादिष्टभैषज्यैर्नष्टपिष्टत्वकारकम्। तन्मूर्छनं हि वङ्गाहिमलदोषविनाशनम्" इति; "गृहकन्या मलं हन्यात् त्रिफला वह्निनाशिनी। चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः। मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्छयेत्। इत्थं संमूर्छितः सूतो दोषशून्यः प्रजायते" इति च तयो रसरत्नसमुच्चये क्रमेण अष्टमे एकादशे चाध्याये लक्षणे निरूपिते। अव्यभिचरितव्याधिनिषूदनोपयोगिसंस्करणं च मूर्छनमिति केचिद्वदन्ति। तत्प्रकारश्च—"गन्धकेन रसं प्राज्ञः सुदृढं मर्दयेद्भिषक्। कज्जलाभो यदा सूतो विहाय घनचापलम्। दृश्यतेऽसौ तदा ज्ञेयो मूर्छितो रसकोविदैः। असौ रोगचयं हन्यादनुपानस्य योगतः" इति रसेन्द्रसारसङ्ग्रहे। एतादृशीं मूर्छनां प्राप्य। रस इति शेषः। रुजं-व्याधिम्। हरति। स्वयं मूर्छारूपं व्याधिसङ्कटमधिगत्यापि परेषां रोगपरि-

"सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् ।
श्वित्रं महदपि शमयति कोऽन्यस्तस्मात् पवित्रतरः ॥ २५ ॥"
इति ।

---

हारकरणेच्छुरिति विशेषार्थः । बन्धनं-स्वाभाविकद्रवत्वे सति वह्निनानुच्छिद्यमानत्वं मूर्तिबद्धत्वं स्वेदनादिपञ्चविंशतिसङ्ख्याकं संस्कारविशेषम् । तेषां च बन्धनलक्षणानां विवरणं रसरत्नसमुच्चये एकादशेऽध्याये द्रष्टव्यम् । तादृशं बन्धनम् अनुभूय-प्राप्य । मुक्तिदः-रोगमोक्षणकरः । भवति । स्वयं बन्धनरूपां दुरवस्थामनुभूयापि परेषां बन्धनात् विमोचनं विदधातीति विशेषश्च द्योत्यते । मृतः-भस्मीभूतः सन् । अमरीकरोति-स्वस्योपयोक्तारं पुरुषं मरणभयरहितमातनोतीत्यर्थः । स्वयं मरणमधिगत्य परान् मरणात् निवारयतीति च विशेषार्थः । किञ्च—रसस्तावत् स्वयं मूर्छां संप्राप्य परेषां रुजानिवारणं करोति; तथा स्वयं बन्धनं-संसृतिबन्धादिकम् अनुभूय इतरेषां मोक्षफलदायकं भवति; तथैव स्वयं मृतिमपि स्वीकृत्य परेषाम् अमरत्वं-देवत्वं च वितरतीति च तृतीयोऽप्यर्थो व्यज्यते । अत एव सूतात्-पारदात् । अन्यः को वा । करुणाकरः-दयालुर्भवतीति तन्महिमातिशयो ग्रन्थान्तरादाहृतेन श्लोकेनानेन विवृतः ॥ २४ ॥

**सुरगुर्विति** । अयमपि श्लोको रसरत्नसमुच्चयादुद्धृतः । सुराणां हिंसा नाम देवानां दूषणम् । गुरूणां हिंसा । द्विजानां हिंसा ब्रह्मद्वेषः ब्रह्महत्त्यादिकं वा । गवां हिंसा । एतादृशानां पापानां कलापेन समूहेन, उद्भवः-उत्पत्तिः यस्य तत् । अतएवासाध्यं-महापापकर्मोद्भूतत्वेन असाध्यम् । किलासाख्यमिति पाठश्च साधुः । तादृशं महत्-महारोगेष्वन्यतमम् । श्वित्रं नाम दारुणाख्यं किलासरोगमपि । रस इति शेषः । शमयति । अतः । तस्मात्-रसात् । अन्यः कः-पदार्थः । पवित्रतरः । न कोऽपि किल । इति वैद्याचार्यैः प्राक्तनैरपि रसस्यासाधारणः प्रभावः प्रतिपादितोऽस्तीति भावः । अत एव

गन्धकस्यापि माहात्म्यमुक्तम्—

"ये गुणाः पारदे प्रोक्तास्ते गुणाः सन्ति गन्धके ।"

"शुद्धो गन्धो हरेद्रोगान् कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च ॥ २६ ॥" इति ।

---

"वचांस्यतथ्यानि कृतघ्नभावो निन्दा सुराणां गुरुधर्षणं च ।
पापक्रिया पूर्वकृतं च कर्म हेतुः किलासस्य विरोधि चान्नम् ॥"

इति किलासाख्यस्य श्वित्रस्य पापकर्मफलत्वं चरकेणापि तथैव स्पष्टमभिहितम् । तादृशमहाव्याधिनाशकस्य महतो रसस्य शिवप्रसादात् विज्ञानशर्मणो बुद्धिमहिम्ना च साधितत्वात् यक्ष्मादिविरोधिवर्गो निश्शेषतो निरस्तप्राय इति फलितोऽर्थः ॥ २९ ॥

रसगन्धकयोः संयोगेनैव बहूनि सिद्धौषधानि निर्मीयन्ते । किञ्च शिवतेजोभूतस्य रसस्येव पार्वतीतेजोभूतस्य गन्धकस्यापि रोगसमूहनिषूदने निरतिशया शक्तिरस्तीति रसशास्त्रविदो वदन्ति । अतो रसस्यानन्तरं गन्धकस्य प्रभावः प्रतिपाद्यते गन्धकस्यापीति । गन्धकस्य माहात्म्यमपि रसरत्नसमुच्चयादिषु रसग्रन्थेषु प्रमाणग्रन्थेषु प्रतिपादितमिति तान्येव वचनानि अत्रोद्धरति ।

**ये गुणा इति** । पारदे-रसे । ये गुणाः-कुष्ठादिव्याधिसमूहनाशकरूपाः सन्तीति प्रोक्ताः । ते गुणाः गन्धकेऽपि सन्ति । इति शिववीर्यस्य रसस्य, गौरीवीर्यस्य गन्धकस्य च शक्तिविशेषान् सम्यगवधार्य देवैस्तयोः प्रभावः सश्लाघं प्रकटित इति वाग्भटेनोक्तं रसरत्नसमुच्चये । यथा—"रसस्य बन्धनार्थाय जारणाय भवत्वयम् । ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्ति हि । इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि" इति । तस्यौषधगुणांश्च वाग्भटस्यैव वचनेनाह **शुद्धो गन्ध इति** । गन्धकस्य कुष्ठहरत्वं जाठराग्निवर्धकत्वं

किञ्च प्रतिदिनं निषेव्यमाणैरेतैः प्रियरतीनां युवतीनाम् अनभिमतां पुंसां जरामुपरुध्य तासामभिमते यौवने तेषां स्थापनं क्रियते ।

**देवी**—(सलज्जं सदृष्टिक्षेपं च) संपत्तो एसो विण्णाणणामहेओ अमच्चो । ता णम्मालावस्स ण एसो अवसरो । [संप्राप्त एष विज्ञाननामधेयोऽमात्यः । तन्नर्मालापस्य नैष अवसरः ।]

**राजा**—(विलोक्य) अये, मन्त्रिबृहस्पतिः संप्राप्तः । (सानुशयम्)

---

वीर्यवर्धकत्वं चेत्येवमादयो गुणा निघण्टुषु प्रसिद्धाः । मृत्युजराहरत्वं त्वस्यातीव रसायनगुणविशिष्टत्वात् सम्पद्यत इति मन्तव्यम् । अस्य च धन्वन्तरिनिघण्टौ गुणा एवमभिहिताः—

"गन्धाश्मातिरसायनः सुमधुरः पाके कटूष्णान्वितः
कण्डूकुष्ठविसर्पदोषशमनो दीप्तानलः पाचनः ।
आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्यप्रदो
गौरीपुष्पभवस्तथा कृमिहरः सत्त्वात्मकः सूतजित् ॥" इति ।

इति-एवंरीत्या । रस-गन्धकयोः माहात्म्यस्य बहुप्रमाणसिद्धत्वात्, तयोः प्रयोगविषये निपुणस्य सचिवस्य च सद्भावात् स्वकीयं रिपुनिषूदनकर्मणि विद्यमानं विस्रम्भातिशयमाविरकरोद्राजा ॥ २६ ॥

**किञ्चेति** । प्रतिदिनम् । एतैः-रस-गन्धकसंयोगनिर्मितैरौषधैः । निषेव्यमाणैः-उपयुज्यमानैः । प्रिया रतिः संभोगः यासां तासाम् । युवतीनाम् । अनभिमतां-तरुणीजनानभिनन्दिताम् । पुंसां जरां-स्वदयितानां स्थविरावस्थाम् । (अनभिमतानां पुंसां जरामिति पाठो न साधीयान् ।) उपरुध्य-निवार्य । तेषां-तत्तरुणीपतीनाम् । यौवने स्थापनं क्रियते-प्रत्यहं निषेवितैः वाजीकरणगुणयुक्तै रसौषधैः पुनस्तारुण्यं पुंसां समुत्पाद्यत इत्यर्थः । सूतेन्द्र-मदनसुन्दर-कुसुमायु-

कर्तव्यो विधिरित्थमित्थमिति मामुक्त्वा जिगीषुर्द्विषं
स्वस्यैवोपरि राज्यतन्त्रमखिलं द्रष्टव्यमासज्य च ।
अद्येदं क्रियते करिष्यत इदं पश्चादकारि त्विदं
प्रागेवेति दुरन्तया कृशतनुं पश्याम्यमुं चिन्तया ॥ २७ ॥

---

धादयो रस-गन्धकसंयोगसमुत्पादिता योगाः पुंसां स्त्रीणामपि वृष्यास्तारुण्याभिवर्धकाश्च भवन्तीति रसरत्नसमुच्चयादिषु वाजीकरणाध्यायादीनां पठनेनावगम्येत । **सदृष्टिक्षेपमिति** । शृङ्गारालापस्य स्वप्रियतमेन विस्रब्धमारब्धस्य यः कोऽपि श्रोता सविधे समागच्छतीति संभ्रान्तचित्तया सहसा यदवलोकनमन्यतः स एष दृष्टिक्षेपः । दृष्टिक्षेपेण सहितं यथा तथा सदृष्टिक्षेपम् । नर्मालापस्य-केलिप्रयुक्तसल्लापस्य ॥

**कर्तव्य इति** । सानुशयमिति पूर्वोक्तस्याशयस्य कारणं विवृणोति पद्येनानेन । द्विषं-शत्रुम् । जिगीषुः-जेतुमभिलषन् । विधिः-रससाधनार्थमीश्वराराधननिष्ठाक्रमः । इत्थमित्थमिति भगवद्ध्यानादिनिमित्तं विविधानां योगासनादीनाम् अन्येषां च पूजाक्रमाणां विवरणविषयकम् आम्रेडनम् । कर्तव्यः-अनुष्ठेयः । इति माम् उक्त्वा-मह्यमुपायान् उपदिश्य । द्रष्टव्यं-पर्यवेक्षणीयम् ; निर्वहणीयमिति यावत् । अखिलं राज्यतन्त्रं-निश्शेषमपि राज्यकृत्यम् । स्वस्यैवोपरि आसज्यस्वात्मन्येव स्वयं समारोप्य च । अमुं-अग्रतः समायान्तं मन्त्रिणम् । अद्य-वर्तमाने काले । इदं-कार्यजातम् । क्रियते निर्वर्त्यते । इदं-अन्यत् कार्यजातम् । पश्चात् करिष्यते । इदं-कार्यान्तरमपरं तु । प्रागेव चाकारि । इति दुरन्तया-निरवधिकया अविच्छिन्नप्रसृतया वा । चिन्तया-मनोव्यापारेण । कृशतनुं-क्षीणशरीरम् । पश्यामि । अतिदुर्भरया राज्यभारनिर्वहणचिन्तया सन्ततमाक्रान्तचित्तत्वात् क्षीणदेहः संजातोऽयमित्यवलोक्य राज्ञः समभवदनुशयस्तस्मिन्निति भावः ॥२७॥

एतदनुज्ञयैव निर्विचारमानसेन मया कृतं परमेश्वराराधनम् ।

**मन्त्री**—(उपसृत्य) स्वस्ति सफलमनोरथाभ्यां स्वामिभ्याम् ।

**राजा**—ननु भवत्साहाय्यमेवात्र हेतुः ।

**देवी**—एव्वमप्पमत्तेण चित्तवावारेण सहायत्तणं कुणन्तो दीहाऊ होइ ।

[एवमप्रमत्तेन चित्तव्यापारेण सहायत्वं कुर्वन् दीर्घायुर्भव ।]

**राजा**—अत्र निषीदतु भवान् ।

**मन्त्री**—(उपविश्य) निर्विघ्नमेव कार्यसिद्धिर्जातेति मनोरथानामुपरि वर्तामहे ।

**राजा**—तदेव वक्तुकामोऽस्मि ।

**मन्त्री**—अवहितोऽस्मि ।

**राजा**—त्वदुक्तमार्गेण प्रथमं पद्मासनं बद्ध्वा तथैवोपविष्टोऽहम् ।

---

एतदिति । एतदनुज्ञया-अस्य मन्त्रिणो नियोगेनैव । निर्विचारमानसेन-राज्यतन्त्रविषयकव्याकुलरहितचित्तेन । परमेश्वराराधनं-परमशिवोपासनम् । (परमेश्वराराधनम् इति स्थाने भगवदाराधनम् इति पाठान्तरम् ।) **स्वस्तीति** । स्वामिनी च स्वामी च स्वामिनौ इति एकशेषः ; ताभ्याम् । **नन्विति** । अत्र-सफलमनोरथत्वविषये । **एव्वमिति** । एवं-यथापुरमेव । चित्तव्यापारेण-राज्यनिर्वहणकार्यचिन्तनेन । सहायत्वं-राज्ञः साहाय्यम् । **तदेवेति** । तदेव-कार्यसिद्धिः कथं जातेति तद्विवरणमेवेति यावत् । अवहितोऽस्मि-राजभाषितं श्रोतुं जागरूकोऽस्मि । **त्वदुक्तेति** । त्वदुक्तमार्गेण-त्वदभिहितोपायानुरोधेन । पद्मासनं-योगासनविशेषः । योगशास्त्रेषु चास्यासनस्य लक्षणमेवमुक्तम् ; बहुरोगहरत्वमप्यस्याभिधीयते । यथा—

"वामोरूपरि दक्षिणं नियमतः संस्थाप्य वामं तथा
दक्षोरूपरि पश्चिमेन विधिना धृत्या कराभ्यां धृतम् ।
अङ्गुष्ठं हृदये निधाय चिबुकं नासाग्रमालोकयेत्
एतद्व्याधिसमूहनाशनकरं पद्मासनं प्रोच्यते ॥" इति ।

शुद्धान्तःकरणेन सन्ततपरिध्यातार्ककोटिप्रभ-
प्रालेयद्युतिकोटिशीतलशिवारूढाङ्कगङ्गाधरः ।
सानन्दाश्रुकणो दृशोः सपुलको गात्रेषु सप्रश्रय-
स्तुत्युक्तिर्वदने कृताञ्जलिपुटो मूर्धन्यभूवं चिरम् ॥ २८ ॥

---

तथैवोपविष्टः-निबद्धपद्मासन एव निविष्टः । अभवमिति शेषः ।

योगासनोपवेशानन्तरं किमासीदिति विवृणोति शुद्धान्तःकरणेनेति । अहमिति पूर्ववाक्यादन्वेतव्यम् । शुद्धान्तःकरणेन-सात्त्विकगुणसम्भृतत्वात् भगवद्ध्यानैकनिरतेन अतएव परिशुद्धेन निजेन मनसा । अर्ककोटिप्रभः-कोटिसूर्यप्रभावान् तथा प्रालेयद्युतयः-चन्द्रमसः, तेषां कोटिरिव शीतलः । सत्यपि कोटिसूर्यसमप्रभत्वे वीतसन्तपनशीलः कोटिसङ्ख्याकचन्द्रमसां संयोगजन्यं सुबहुलं शीतलमेव स्वस्वरूपेणाविर्भावयतीति भावः । तथा शिवया-पार्वत्या आरूढः अङ्कः यस्य स शिवारूढाङ्कः । अर्ककोटिप्रभश्चासौ प्रालेयद्युतिकोटिशीतलश्चेति विशेषणोभयपदकर्मधारयः ; स चासौ शिवारूढाङ्कश्चेति पुनस्तद्वदेव समासः । स चासौ गङ्गाधरश्च । सन्ततं-तैलधारावदविच्छिन्नं यथा तथा, परिध्यातः-निदिध्यासनेन लक्ष्यीकृतः, गङ्गाधरः-परमेश्वरः येन सः । कान्त्या कोटिसूर्यसमं शैत्येन कोटिचन्द्रसदृशं पार्वत्यधिष्ठिताङ्कं शिरसि गङ्गां धारयन्तं च शिवं तदेकनिरतेन शुद्धेन मनसा सश्रद्धं ध्यायन्नासमिति यावत् । एवं भूतोऽहं चिरम् । दृशोः-नेत्रयोः । सानन्दाश्रुकणः- आनन्दबाष्पबिन्दुसहितः । गात्रेषु सपुलकः-रोमाञ्चैः संवलितः । वदने-आस्ये । सप्रश्रया-विनयसंभृता, स्तुत्युक्तिः-प्रशंसाप्रवणवाक् यस्य सः । मूर्धनि । कृताञ्जलिपुटश्च । अभूवम् । निर्विकल्पसमाधिना निटिलेक्षणस्य निभृतावलोकनानुभूतिरेवं वर्णिता ॥ २८ ॥

तदनु मयि प्रसादाभिमुखः प्रज्वलदग्निशिखाकलापकपिलजटामण्डलाटवीविलुठज्जाह्नवीचरबालहंसायमानचन्द्रलेखः, कण्ठगतकालकूटद्युतियमुनोभयपार्श्वनिस्सरन्निर्झरायमाणरुद्राक्षमालिकः, परिहितशार्दूलचर्मसन्दर्शनभीतमिव मृगमेकं संरक्षितुं करे बिभ्राणः, करान्तरे च प्रणतजनदुरदृष्टशिलाभञ्जनं टङ्कं च कञ्चन, भगवान् काञ्चनगिरिधन्वा गिरिकन्यासमेतः स मामेतदवोचत् ।

ध्यानेन ते प्रसन्नोऽस्मि वृणीष्व वरमर्पये ।
इत्युक्तवन्तं देवं तमयाचे रसगन्धकान् ॥ २९ ॥

---

तदन्विति । प्रसादाभिमुखः-अनुगृहीतुं सज्जः । प्रज्वलन्तीनां अग्निशिखानां कलापवत्-समूहवत्, कपिलं-पिङ्गलं, जटामण्डलम् तदेवाटवी, तस्यां विलुठन्ती-भ्रमन्ती, या जाह्नवी-स्वर्गङ्गा, तस्यां चरतीति चरः, बालहंसः तद्वदाचरतीति बालहंसायमाना, चन्द्रलेखा-शशिकला यस्य सः । तथा कण्ठगतस्य कालकूटस्य-तदाख्यस्य महाविषस्य द्युतिः-कृष्णवर्णच्छाया, सैव यमुना; यमुनायाः कृष्णवर्णत्वेन वर्णनं कविसमयसिद्धम्; तस्या उभयपार्श्वयोः निस्सरन्-प्रवहन्, निर्झरः-सलिलसंपातः तद्वदाचरतीति निर्झरायमाणा रुद्राक्षमालिका यस्य सः । किञ्च परिहितस्य-उपरि धृतस्य, शार्दूलचर्मणः-व्याघ्राजिनस्य, सन्दर्शनेन, भीतं-व्याघ्रभ्रान्त्या सन्त्रस्तमिव स्थितम् । एकं मृगं-कुरङ्गम् । संरक्षितुम् । प्रणतजनानां दुरदृष्टशिलायाः-दौर्भाग्यरूपनिष्ठुरशिलायाः, भञ्जनं-भेदनम् । टङ्कं-पाषाण-दारणोपयोगि उपकरणं च । बिभ्राण इति अत्राप्यन्वेति । काञ्चनगिरिधन्वा-मेरुधन्वा स शिवः । गिरिकन्यासमेतः-पार्वतीसहितः । एतत्-वक्ष्यमाणं वचनम् ॥

ध्यानेनेति । ते-तव । ध्यानेन-मदेकपरया निश्चलया चित्तवृत्त्या; अनुस्मरणेन । प्रसन्नोऽस्मि वरं वृणीष्व । अर्पये । इत्युक्तवन्तं-सानुग्रहमभिहितवन्तम् ।

ततस्तेन साम्बशिवेन दीयमानान् रसगन्धकानग्रहीषम् । पुनश्चाहं साष्टाङ्गं प्रणम्य सप्रश्रयमयाचिषम् । देवदेव,

फलिन्यः फलहीना याः पुष्पिण्यो या अपुष्पिकाः ।
गुरुप्रसूतास्ता मुञ्चंत्वह्मसो न इति श्रुतिः ॥ ३० ॥
यस्मै ददासि तं रुग्भ्यः सर्वाभ्यः पारयामहे ।
इति सोमेनौषधयः संवदन्तीति च श्रुतिः ॥ ३१ ॥

---

तं देवं-परमेश्वरम् । रसाः-सूतादयः पञ्चविधाः पारदविशेषाः, अभ्रकादयोऽष्टविधा महारसाः, गन्धकाः-आमलसारादयस्त्रिविधाः ; रसाश्च गन्धकाश्च रसगन्धकाः तान् । अयाचे-अभ्यर्थयम् ॥ २९ ॥

**ततस्तेनेति** । अम्बिकायाः सान्निध्यस्य प्रसादातिशयमालोच्य साम्बशिवेनेति प्रयोगः । (क्वचित् पुस्तके साम्बशिवेनेति पदं न दृश्यते ।) रसस्य शिववीर्यत्वं गन्धकस्य पार्वतीवीर्यत्वं च समालोच्य, उभाभ्यामपि प्रसन्नाभ्यां सन्निहिताभ्यां तयोरर्पणं साधुतरमिति मत्वा च साम्बशिवेनेति प्रयुक्तं भवति । (साष्टाङ्गमिति पदं च क्वचिन्न दृश्यते ।)

**फलिन्य इति** । देवदेव-महादेव । याः ओषधयः । फलिन्यः-फलवत्यः । याः फलहीनाः-ताम्बूलवल्ल्यादिवत् फलरहिताश्च सन्ति । याः पुष्पिण्यः-कुसुमैः सहिताः । अपुष्पिकाश्च-उदुम्बरादिवत् पुष्परहिताश्च याः । ताः सर्वाश्च ओषधयः । गुरुः-मन्त्राभिमानी देवो बृहस्पतिः, तेन प्रसूताः-तदनुज्ञानुरोधेन सम्यगभिवृद्धाः सत्यः । नः-अस्मान् । अह्मसः-आमयरूपपापात् । मुञ्चन्तु-मोचयन्तु । इति-एवंप्रकारेण । श्रुतिः-श्रुतिवचनं विद्यत इत्यर्थः । एष श्लोकः "याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वह्मसः" इति श्रुतिम् (यजुर्वेदे, अध्याय १२, मन्त्र ८९) शब्दतोऽर्थतश्चोदाहरति । **यस्मै ददासीति** । यस्मै-रुग्णाय । नः ओषधीः इति शेषः । ददासि-अनुग्रहपूर्वकं

अतः स्वामिन् सर्वास्ताः सिद्धौषधयः सोमायत्ताः स च भगवतः शिरोभूषणमत्रैव सन्निहितः। अतः श्रीपरमेश्वर,

शोधयितुं रसगन्धान् कर्तुं च रसौषधानि विविधानि।
दिव्यौषधीश्च सर्वा दापय मौलिस्थितेन चन्द्रेण॥ ३२॥

---

प्रयच्छसि। तं-रुग्णम्। सर्वाभ्योः रुग्भ्यः-सर्वामयेभ्यः। पारयामहे-रोगेभ्यो मोचयामह इति यावत्। इति-एवंरीत्या। ओषधयः-चेतनाविशिष्टा ओषधीनां देवताः। सोमेन-तासामधीश्वरेण चन्द्रात्मकेन। संवदन्ति-व्यवहरन्ति। इति च-एवंप्रकारेण च श्रुतिः। विद्यत इति शेषः। एष च श्लोकः "ओषधयः संवदन्ते सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि" इति श्रुति-वाक्यं (यजुर्वेदे, अध्याय १२, मन्त्र ९६) अनुरुणद्धि। एतच्छ्रुतिवाक्यद्वयमपि स्वप्रार्थनाया अङ्गीकारस्यावश्यकर्तव्यतानिरूपणार्थं जीवराजेन सन्दर्भेऽस्मिन् परमेश्वराय निवेदितमिति ज्ञातव्यम्॥ ३०, ३१॥

अत इति। अतः-एवं श्रुतिभिरपि अभिधीयमानत्वात्। स्वामिन्-प्रभो परमेश्वर। ताः सिद्धौषधयः-व्याधिनिवारणरूपनिश्चयफलप्रदा ओषध्यः। सो-मायत्ताः-सोमाधीनाः। सः-सोमश्च। भगवतः-परमेश्वरस्य भवतः। शिरोभूषणं-मूर्धालङ्कारस्वरूपपरिकरभावमवलम्बन्। अत्रैव सन्निहितः।

ततः किं कर्तव्यमित्याकाङ्क्षायाम् आह शोधयितुमिति। अतः श्रीपर-मेश्वरेति पूर्वनिर्दिष्टं पदद्वयमप्यत्रान्वेति। अतः-पूर्वोक्तेन हेतुना। श्रीपरमेश्वर। रसगन्धान्-पारदगन्धकादीन् धातुपदार्थान्। शोधयितुं-कञ्चुकदोषादिपरिहारार्थम् अष्टादशसंस्कारादिभिः निर्दुष्टत्वेन विधातुम्। विविधानि रसौषधानि कर्तुं-निर्मातुं च। सर्वाः। दिव्यौषधीः-रसादीनां दोषपरिहारपूर्वकव्याधिनिवारणसमर्थवीर्य-विशिष्टा महौषधीः। मौलिस्थितेन-भवच्छिरसि सर्वदा सन्निहितेन। चन्द्रेण-ओषधीशेन सोमेन। दापय। भवदधीनसत्ताकः सोमो भवन्नियोगेन भक्तजनाय मादृशाय नियतमुपकुर्यादिति मयैवं परमेश्वरः संप्रार्थित इति भावः॥ ३२॥

ततः स च महौषधीशः परमेश्वरानुज्ञया सर्वा एता दिव्या ओषधीर्दत्तवान्। यदर्थं प्रेषितोऽहं भवता तदेतान् रसगन्धकान् ओषधीभिः सह गृहाण। (इति मन्त्रिहस्तेऽर्पयति।)

**मन्त्री**—(सहर्षं गृहीत्वा निरूप्य च) सप्तकञ्चुकादिदोषनिराकरणेन शुद्धानेतानोषधीभिः सह शत्रुजयाय प्रयोक्ष्यामहे।

**देवी**—कित्तिआ ते सत्तुजणा किंणामहेआ अ कस्सिं समए पुरोपरोहं किदवन्तो। [कियन्तस्ते शत्रुजनाः किंनामधेयाश्च कस्मिन् समये पुरोपरोधं कृतवन्तः।]

**मन्त्री**—श्रूयतां तावत्।

---

ततः सचेति। महौषधीशः-सोमः। अहं-जीवराजः। यदर्थं-रसगन्धकौषधीनां सम्पादनार्थम्। भवता-मन्त्रिणा। प्रेषितोऽस्मि—"सामर्थ्यसिध्द्यै रसगन्धकानां संयोजनार्थं सकलौषधीश्च। सम्पादयामोऽथ तदाश्रितस्य सर्वौषधीशस्य विधोः प्रसादात्" इति प्रथमाङ्के निर्दिष्टविषयानुरोधेन प्रहित इति भावः। (अस्य वाक्यस्य स्थाने 'ततश्च भगवदाज्ञया तेन सोमेन सर्वास्ता मह्यं दत्ताः' इति पाठान्तरमस्ति।) सहर्षमिति। सप्तकञ्चुकाः-सप्तसङ्ख्याकाः कञ्चुकदोषाः; ते च—पर्पटी, पाटनी, भेदी, द्रावी, मलकारी, अन्धकारी, ध्वाङ्क्षी इति नामभिर्व्यवह्रियन्ते। आदिशब्देन विष-वह्नि-मलाख्या नैसर्गिकदोषाः, नागवङ्गाख्यौ यौगिकदोषौ चेति दोषान्तराणि च सूच्यन्ते। सप्तकञ्चुकदोषाणाम् औपाधिकदोषा इति संज्ञान्तरं च विद्यते। "औपाधिकाः पुनश्चान्ये कीर्तिताः सप्त कञ्चुकाः" इति रसरत्नसमुच्चये। तेषां निराकरणेन शुद्धान्। एतान्-रसपदार्थान्। शत्रुजयाय-शत्रुभूतरोगानीकनिवारणाय।

पुण्डरीकपुरं राज्ञि प्रविष्टे रन्ध्रलाभतः ।
स्वराजानुज्ञया पाण्डुररुधत् सैनिकैः पुरम् ॥ ३३ ॥

यक्ष्महतकस्यास्मच्छत्रोर्बहवः सैनिकाः ।

ग्रहण्यश्मर्यतीसारशूलार्शःपाण्डुकामलाः ।
विषूचिकाकुष्ठगुल्मसन्निपातज्वरादयः ॥ ३४ ॥

---

पुण्डरीकपुरमिति । राज्ञि-जीवराजे । पुण्डरीकपुरं प्रविष्टे-'शक्यं तत् खलु पुण्डरीकनगरं' इति प्रथमाङ्कोक्तरीत्या शिवभक्तिदर्शनाय, तथा 'पुण्डरीकपुरे मन्त्रिप्रेरितः' इति द्वितीयाङ्कोक्तरीत्या च पुण्डरीकपुराख्यम् आन्तरं स्थलं प्रविष्टे सति । रन्ध्रलाभतः-छिद्राधिगमसौकर्यात् । छिद्रान्वेषित्वं च द्विषतां सर्वत्र सहजं खलु । पाण्डुः-शात्रवमन्त्री । स्वराजानुज्ञया-स्वनृपतेर्यक्ष्मणोऽनुयोगेन । सैनिकैः-रोगानीकैः । पुरं-शरीराख्यं नगरम् । अरुधत्-पूर्वाङ्कस्यान्तिमे पद्ये 'बिभ्राणास्तान्युपमित' इत्येवं वर्णितरीत्या पुराक्रमणमकरोत् ॥ ३३ ॥

यक्ष्महतकस्येति । बहवः सैनिकाः-'रोगा मूर्ध्नि शतं' इति पूर्वोक्तरीत्या (अङ्कः १ पद्यं २६) योधाः शतशः सन्ति । 'परीवारा एतस्य रोगविशेषा भीमरूपा बहवः' इति च प्रथमाङ्के प्रतिपादितम् । (सैनिका इत्यनन्तरं रोगरूपा इति क्वचिदधिकः पाठः ।)

तानेव रोगरूपान् सैनिकान् पुनः संगृह्णाति ग्रहणीत्यनेन । ग्रहणीप्रभृतयो रोगरूपा इमे तस्य यक्ष्मणः शत्रुहतकस्य सैनिका बहवः सन्तीति पूर्ववाक्येणान्वयः । एवमेव पूर्वमपि (अङ्क १. श्लो. २६) "ज्वरपाण्डुप्रमेहार्शश्शूलगुल्मभगन्दराः । कासश्वासावतीसारसन्निपाताश्मरीव्रणाः" इति किञ्चिद्विभिन्नरीत्या रोगानीकविवरणं कृतमास्ते ॥ ३४ ॥

**देवी**—अमच्च, एत्तिअं पुरोपरोहसंरम्भं कुणंतेण सहसैणिएण देण जक्खहदएण अम्हाणं किं अच्चाहिदं कादव्वम् । [अमात्य, एतावन्तं पुरोपरोधसंरम्भं कुर्वता सहसैनिकेन तेन यक्ष्महतकेनास्माकं किमत्याहितं कर्तव्यम् ।]

**मन्त्री**—देवि, पुरान्निष्क्रामयितव्या वयमित्येव तस्य हताशस्य दुराशाभिनिवेशः ।

**देवी**—अहो अणत्तणीणत्तणं जक्खहदअस्स । जो अम्हेसु पुरादो णिक्कन्तेसु सअं कहिं ठाइस्संति अत्तणो वि णासं ण गणेदि । [अहो अनात्मनीनत्वं यक्ष्महतकस्य । योऽस्मासु पुरान्निष्क्रान्तेषु स्वयं कुत्र स्थास्यामीति आत्मनोऽपि नाशं न गणयति ।]

**मन्त्री**—सत्यमुक्तं देव्या ।

---

अमच्चेति । पुरोपरोधसंरम्भं-नगराक्रमणसंक्षोभम् । यक्ष्महतकेन-दुर्वृत्तेन राजयक्ष्मणा । अत्याहितं-महोपघातः । एवं ससंभ्रमं नगरोपरोधमाचरता दुष्टेन यक्ष्मणा कीदृशः सङ्कटः स्वेषां समुपनमेदिति आकाङ्क्षा । **पुरादिति** । हताशस्य-पापाभिलाषिणो यक्ष्मणः । दुराशाभिनिवेशः-दुष्टमनोरथनिर्वर्तननिर्बन्धः । **अहो इति** । अनात्मनीनत्वं-आत्मने हितम् आत्मनीनम् , तन्न भवतीति अनात्मनीनं-आत्मनोऽहितम् , तस्य भावः अनात्मनीनत्वम् । अस्मासु-जीवप्रभृतिषु । पुरात्-शरीराख्यात् नगरात् । निष्क्रान्तेषु-विनिर्गतेषु । आत्मनोऽपि नाशं न गणयति-शरीरे जीवेन विरहिते सति (मृते सति) यक्ष्मणोऽपि नियतमनुक्षणमेवाधारविनाशादनिवार्यः समुपनमेद्विध्वंस इति भावः । अत एवास्यानात्मनीनत्वं व्यपदिष्टम् । **सत्यमुक्तमिति** । अनात्मनीन इति, आत्मनो नाशमपि न गणयतीति यदुक्तं तत्सत्यमित्यर्थः ।

महापातकसंभूतेस्तस्य पापस्य यक्ष्मणः ।
वैरायितमिदं चित्रं स्वविनाशमपीच्छतः ॥ ३९ ॥

यदुक्तमभियुक्तैः—

“अपथ्यसेविनश्चौरा राजदाररता अपि ।
जानन्त एव स्वानर्थमिच्छन्त्यारब्धकर्मतः” ॥ ३६ ॥ इति ।

किञ्च—

ये निघ्नन्ति निरर्थकं परहितं ते के न जानीम
इत्येवं या समभाणि भर्तृहरिणा काष्ठा परा पापिनाम् ।
तामेतामतिशेत एष सपरीवारस्य नाशं निज-
स्योत्पश्यन्नपि निष्क्रमाय यतते यो नः पुरात् पातकी ॥३७॥

---

अनात्मनीनत्वमेव निरूपयति **महापातकेति** । महापातकेन-परस्वापहरादिरूपेण, संभूतिः-उत्पत्तिः यस्य । “मांसलोलुपः परस्वाभिलाषी परविषयभोगानसहमानः स्वामिनो हन्ता च क्षयरोगी भवति” इति वीरसिंहावलोकनम् । अत एव पापस्य-स्वयं पापात्मकस्य । तस्य यक्ष्मणः-राजयक्ष्मणः । स्वविनाशमपि इच्छतः-स्वस्य ध्वंसेनापि परस्य विनाशमभिलषत इति यावत् । इदं वैरायितं-विद्वेषः । चित्रं-अन्यादृशम् । भवतीति शेषः ॥ ३९ ॥

**यदुक्तमिति** । अभियुक्तैः-प्रामाणिकैरभिज्ञैः ।

**अपथ्यसेविन इति** । अपथ्यसेविनः-अहिताहारविहारादीनुपयुञ्जन्तो नराः; अयुक्तकार्यकर्तारो वा । चौराः-तस्कराः । राजदाररताः-नृपभार्यास्वासक्ता अपि । स्वानर्थं-स्वेषां संभविष्यत्सङ्कटम् । जानन्त एव । आरब्धकर्मतः-प्रारब्धानां प्राक्तनदुष्कर्मपरिपाकप्रभवाणां बलादिति भावः । इच्छन्ति-तत्तत् पापकर्म कर्तुमभिलषन्ति । लोके मानवानां ‘प्रारब्धकर्मविक्षेपाद्वासना तु न नश्यति’ इति शास्त्रानुरोधेन तत्तत्कर्मानुगुणमेव कर्मसु शुद्धेषु निषिद्धेषु च प्रवृत्तिः प्रकृत्यैव भवतीति शास्त्रतोऽनुभवतश्च ज्ञातमेवेदं वस्तुतत्त्वमिति भावः ॥ ३६ ॥

**ये निघ्नन्तीति** । ये-जनाः । परहितं-परेषामानुकूल्यम् । निरर्थकं-फलरहितं यथा तथा; स्वप्रयोजनं किमप्यनुद्दिश्यैवेति यावत् । निघ्नन्ति-नाशयन्ति ।

अस्त्यत्र लौकिकोऽप्याभाणकः—"स्वनासाच्छेदेन शत्रोरमङ्गलमापादयत्यनात्मनीनो मूर्खः" इति ।

---

ते-मनुष्याः । के-कथंभूताः ; अधमतमेभ्योऽपि तेषां निकृष्टत्वात् मानवानां मध्ये उत्तममध्यमाधमगोष्ठीषु कुत्र वा तेषां गणना समुचितेति । न जानीमः । मानवजातौ तान् गणयितुमपि न प्रभवाम इति भावः । इत्येवं-एवमुक्तरीत्या । भर्तृहरिणा-तन्नाम्ना प्रसिद्धेन अभियुक्तेन प्राचीनेन नीतिनिपुणेन । पापिनां-दुर्वृत्तानाम् । या परा काष्ठा-परमावधिः । समभाणि-कथिता । निरर्थकमेव परहितविनाशोद्यमरूपात् कार्यात् नान्यत् परमं पातकमस्तीति तस्य भावः । सपरीवारस्य-सर्वैः सैनिकादिभिः परिच्छदैः सहितस्य । निजस्य-स्वात्मनः । नाशम् । उत्पश्यन्नपि-जीवादीनां देहान्निर्गमेन स्वस्य स्ववर्गीयाणां च ध्वंसः संभविष्यतीति सम्यगागामिविषयं जानन्नपि । यः पातकी-राजयक्ष्माख्यः पापात्मा । नः-अस्माकम् । पुरात्-देहरूपात् नगरात् । निष्क्रमाय-बहिर्निषूदनाय । यतते । एषः-पातकी यक्ष्मा । तां-पूर्वोक्ताम् । एतां-पापिनां परां काष्ठाम् । अतिशेते-अतीत्य वर्तते । पापिष्ठोऽभ्योपि पापिष्ठतम एष इति भावः ।

"एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥"

इतीदं भर्तृहरिनीतिशतकस्थं पद्यम् । न केवलं निरर्थके किन्तु स्वानर्थोदर्के महति पापकर्मणि प्रवृत्तोऽयं कोऽप्यपूर्वोऽनात्मज्ञो घातुक इति फलितोऽर्थः ॥३७॥

अस्तीति । लौकिकः-लोकप्रसिद्धः । आभाणकः-जनोक्तिः । स्वनासाच्छेदेन । अनात्मनीनो मूर्खः-आत्मनो लाभनष्टादिकमजानन् मूढधीः । शत्रोः अमङ्गलं-अश्लीलम् । आपादयति-उत्पादयति । क्षीणनासाद्यवयवाः पुरुषाः पुरतः प्रयाणकाले यद्यागच्छन्ति तदशुभसूचकं शकुनं भवति । शत्रोः प्रस्थानादिसमये तस्याशुभं शकुनं निष्पादयितुं स्वकीयां नासिकामेव छित्वा तत्पुरतः स्वैरं तदनिष्टेच्छुर्यथा गच्छेन्मूढः तद्वत् एष यक्ष्मापि स्वानर्थमपि स्वयमङ्गीकृत्य

**देवी**—ता कहिं दाणिं एत्तिआणं रोआणं णिग्गहो सुअरो। [तत् कथमिदानी-मेतावतां रोगाणां निग्रहः सुकरः।]

**मन्त्री**—देवि, मा भैषीः। निखिलरोगनिसर्गवैरिणि रसे स्वाधीने कः शत्रुजये सन्देहः।

**राजा**—तर्हि कुतो विलम्ब्यते।

**मन्त्री**—अहं पुनरधुना रसमोषधीभिः सह संयोजयितुं गच्छामि। देव्या सह देवेन किञ्चिद्विश्रम्यताम्।

(इति निष्क्रान्ताः सर्वे।)

। इति तृतीयोऽङ्कः।

---

वैरिविध्वंसाय यतत इति भावः। "वमद्भिकेशो हतमानसत्त्वः क्षीणाङ्ग-नग्नान्यजतैलदिग्धाः" एतादृशानां प्रस्थानकाले पुरतो दर्शनेन कार्यसिद्धिर्न भवेदिति शकुनशास्त्रम्। (शत्रोरमङ्गलमशुकुनमापादयतीति च पाठान्तरम्।) **निखिलरोगेति**। रसे-पारदे। निखिलरोगनिसर्गवैरिणि-सर्वेषामपि व्याधीनां स्वभावत एव निवारणोपयोगिनि; "जरारुङ्मृत्युनाशाय रस्यते यत्ततो रसः" इति, "देहलोहमयीं सिद्धिं सूते सूतस्ततः स्मृतः। रोगपङ्काब्धिमग्नानां पारदानाच्च पारदः" इति, "एवंभूतस्य सूतस्य मर्त्यमृत्युगदच्छिदः" इति च रसस्य नैसर्गिकाः सर्वरोगाणां मृत्योरपि निवारकरूपा गुणाः शास्त्रप्रतिपादिताः। स्वाधीने-शिवस्य प्रसादात् ओषधीनां संयोगबलाच्च सति स्वायत्तीकृते। **अहं पुनरिति**। ओषधीभिः सह रसं संयोजयितुं-महौषधीभिः साकं रसस्य संयोजनेन दोषशोधनपूर्वकं तस्य वीर्यमभिवर्धयितुमित्यर्थः। (देव्या सह देवेन किञ्चिद्विश्रम्यताम् इति स्थाने देवेनापि विश्रम्यताम् इति पाठान्तरम्।)

इति वैद्यरत्नबिरुदाङ्कितेन आयुर्वेदभूषण-आयुर्वेदाचार्याद्युपाधिभाजा मेल्पाक्कं पण्डित दुरैस्वाम्यय्यङ्गार्महोदयेन मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायाम्

**तृतीयोऽङ्कः**।

---

# चतुर्थोऽङ्कः

(ततः प्रविशति विदूषकः ।)

विदूषकः—उत्तं खु दोआरिएण पाणेण रण्णो रसगन्धअवरप्पदाणं सुणिअ बलिअं रोसवसंगदेण जक्खहदएण पण्डुणा सह किं वि मंतिअ सपरिवारस्स अम्हाणं रण्णो उवरि वइक्कमं किं वि कादुं उज्जोओ करिअदित्ति सुदवंदेण विण्णाणणामहेएण मन्तिणा कज्जगदिं आवेदिअमाणो अन्तेउरवेदिअन्दरे राआ चिट्ठदित्ति । ता राअसमीवं गमिस्सम् । (इति परिक्रम्य उदरं करतलेन परामृश्य) अहो मुहुत्तादो पुव्वं खादिदं मातुलुङ्गफलप्पमाणाणं मोदआणं सदं वि जिण्णं जादम् । जं तस्सि

---

उत्तं खु इति । दौवारिकेण-प्रतीहारेण; प्राणेन-तन्नाम्ना दौवारिकेण । प्राणावयोः दौवारिकत्वं कथं प्रसज्यत इति प्रथमाङ्के व्याख्यातम् । अत्र रसगन्धकवरप्रदानश्रवणं यक्ष्मणो रोषोत्पत्तेः बलवत् कारणम् । ततः पूर्वं जीवस्योपरि सामान्यतः शत्रुत्वेन यो रोषः प्रकृत्यैवासीत् स तु रसगन्धकादीनां स्वविनाशहेतूनां वरप्रदानत्वेनाधिगमानन्तरं बलवदभिवृद्ध इति भावः । किमपि मन्त्रयित्वा-कूटबन्धरूपेण कमप्युपजापं कृत्वा । सपरिवारस्य अस्माकं राज्ञः-अस्मा-

समए धण्णकुम्भीपीणुत्तुङ्गो मह पिचंडो ठिदो। दाणिं उण तिणकिअकटो विअ तणूहोदि।

[उक्तं खलु दौवारिकेण प्राणेन राज्ञो रसगन्धकवरप्रदानं श्रुत्वा बलवद्दोषवशंगतेन यक्ष्महतकेन पाण्डुना सह किमपि मन्त्रयित्वा सपरिवारस्यास्माकं राज्ञ उपरि व्यतिक्रमं कमपि कर्तुमुद्योगः क्रियत इति श्रुतवता विज्ञाननामधेयेन मन्त्रिणा कार्यगतिमावेद्यमानोऽन्तःपुरवेदिकान्तरे राजा तिष्ठतीति। तद्राजसमीपं गमिष्यामि। अहो मुहूर्तात् पूर्वं खादितं मातुलुङ्गफलप्रमाणानां मोदकानां शतमपि जीर्णं जातम्। यत् तस्मिन् समये धान्यकुम्भीपीनोत्तुङ्गो मम पिचण्डः स्थितः। इदानीं पुनस्तृणकृतकट इव तनूभवति।]

---

कम अस्मदीयनृपस्य च। कमपि व्यतिक्रमं-कांचिद्विपदम्। कार्यगतिं-कर्तव्योपायम्; शत्रुकृतकूटबन्धनिर्वहणानुकूलत्वेन तत्कृतोपाजापादीनां स्वरूपस्य, तत्प्रतिविधानपुरस्सरं स्वपक्षीयजयसम्पादनोपायस्य च रहसि विधातव्यं मन्त्रकर्मेति यावत्। अन्तःपुरवेदिकान्तरे-अवरोधान्तर्विद्यमानानां वितर्दिकानामन्यतमे। उदरं परामृश्य-समन्ततः कुक्षिं संमृज्य। खादितं-भुक्तम्। मातुलुङ्गफलप्रमाणानां-बीजपूरफलवत् स्थूलानामित्यर्थः। मोदकानां-खाद्यानामपूपविशेषाणाम्। औदरिकत्वात् शतसङ्ख्याकानां महाप्रमाणानां मोदकानां भक्षणमपि कतिचिन्नाडिकापर्यन्तमपि तस्य बुभुक्षोपशान्तये न प्रकल्पत इति भावः। तस्मिन् समये-मोदकशतभक्षणानन्तरिके क्षणे। धान्यकुम्भी-धान्योच्चयरक्षणार्थमुपयुज्यमानः कण्डोलाख्यो धान्यकोष्ठः; तद्वत् पीनोत्तुङ्गः-तिर्यगूर्ध्वं चाभिव्याप्य बृंहितः। महाशनेन सुतरां स्थौल्यमधिगत इति यावत्। पिचण्डः-कुक्षिः। तृणकृतकटः-कुश-काशादिभिर्निर्मितमास्तरणमिव। तनूभवति-अतीव लघूभवति; भुक्तस्याशेषस्यापि मोदकोत्करस्य झटिति जठरानलेन पाचितत्वात् रिक्तकोष्ठस्य काममुदरं तलिनं भवति।

(विमृश्य) णं मज्झण्णो वट्टइ । तहहि—

पत्तगअं घरहरिणो तिह्णाए पिबइ सीअलं सलिलम् ।
गंधेण कुणइ सुहिदं घाणं घिदमिस्ससक्करापूवो ॥ १ ॥

अहो पमादो । राअसमीवं गमिस्सं ति महाणससमीवं गदो ह्मि । अदो एव्व तह वत्तुलतणुअरगोहूमापूवसंदिदसरावेहिं, माहिसदहिमंडमिस्सिदमासविरइअभक्खविसेसणिबिडिअभाअणेहिं, परितत्तंबरीसभज्जिदचणअचअपूरिअपिचंडएहिं, फाणिदसंकलिदजवधाणासमुल्लसिदविसालामत्तेहिं, दुद्धदहिसक्करासलिलभाविदविविहपिथुअरासिसंपुण्णविसंगडचसअविसेसेहिं, मल्लिआमुउलपुञ्जधवलसालितंडुलन्नसमुच्चअविराजिदतम्ममअभंडगणब्भंतरट्ठाविद-

---

विमृश्येति । अथ मध्यंदिनं निर्वर्णयति यदा हि विदूषकस्य विशिष्यौदरिकस्य बुभुक्षा दुर्निवारमेधते ।

पत्तगअमिति । गृहहरिणः-गृहाभिवर्धितो मृगः । तृष्णया-महता मध्याह्णार्कमरीचितापेनाभिवर्धितया पिपासया । पात्रगतं-मृगपानोपयोगिकटाहस्थितम् । शीतलं-मृण्मयकटाहस्थितत्वात् अतीव शिशिरम् । सलिलं पिबति । मध्याह्नस्य स्वाभाविको धर्मः सूचितोऽनेन । उत्तरार्धेन तत्समये बुभुक्षुणोदरम्भरिणानुभूयमानावस्थानुरोधेन यद्वक्तव्यं तदभिधीयते । गन्धेणेति । घृतमिश्रशर्करापूपः-आज्यपाचितशर्करासंवलितः पिष्टपूपः । गन्धेन-पच्यमानाज्योत्थितेन परिमलेन । घ्राणं-नासेन्द्रियम् । सुखितं करोति-घ्राणेन्द्रियं प्रीणयति । मध्यन्दिनस्योत्कटावस्थायाः सूचनपुरस्सरं महानसस्यान्तिके स्वस्यागमनं च विदूषकेनार्थात् पद्येनानेन सूचितं भवति ॥ १ ॥

अहो प्रमाद इति । प्रमादः-अनवधानता । अनवधानेन यस्य समागतोऽन्तिकं तदेव महानसं निर्वर्णयति अतएवेति । अत एव हेतोः । तथा-वक्ष्यमाणप्रकारेण । महानसस्य । विसृमरः-सर्वतः प्रसरणशीलः । गन्धः-भक्ष्यादीनां परि-

सुवण्णसवण्णसूपणिहाणपिठरेहिं, कित्तपरिवक्कवंताककारइल्लपडोलकोसातईणि-प्पावराअमासकदलीपणसकुम्हण्डप्पमुहसलाडुखंडमअशाकषंडमंडिदबहुविअ-भाअणविसेसेहिं अ परिसोहमाणस्स महाणसस्स विसमरो गंधो। घुमघुमा-अदि मे णासाबिलम्। सिलसिलाअदि तालुरसणामूले सुणिग्गत्तरं लाला-जलम्। पज्जलदि विअ हणूमन्तवालग्गलग्गग्गिसिहागहिदघरपरम्परं लंकाउरं विअ बुमुक्खादुरं मे उदरम्।

[ननु मध्याह्नो वर्तते। तथाहि—

पात्रगतं गृहहरिणस्तृष्णया पिबति शीतलं सलिलम्।
गन्धेन करोति सुखितं घ्राणं घृतमिश्रशर्करापूपः॥ १॥

अहो प्रमादः। राजसमीपं गमिष्यामीति महानससमीपं गतोऽस्मि। अत एव तथा वर्तुलतनुतरगोधूमापूपसान्द्रितशरावैः, माहिषदधिमण्डमिश्रितमाषविरचितभक्ष्यविशेषनिबिडित-भाजनैः, परितप्ताम्बरीषभर्जितचणकचयपूरितपिचण्डकैः, फाणितसंकलितयवधानासमुल्लसित-विशालामत्रैः, दुग्धदधिशर्करासलिलभावितविविधपृथुकराशिसम्पूर्णविशङ्कटचषकविशेषैः, मल्लि-कामुकुलपुञ्जधवलशालितण्डुलान्नसमुच्चयविराजितताम्रमयभाण्डगणाभ्यन्तरस्थापितसुवर्णसवर्ण-सूपनिधानपिठरैः, कृत्तपरिपक्वन्ताककारवेल्लपटोलकोशातकीनिष्पावराजमाषकदलीपनसकूष्मा-ण्डप्रमुखशलाटुखण्डमयशाकषण्डमण्डितबहुविधभाजनविशेषैश्च परिशोभमानस्य महानसस्य विस्मरो गन्धः। घुमघुमायते मे नासाविलम्। सिलसिलायते तालुरसनामूले सुनिर्गत्वरं लालाजलम्। प्रज्वलतीव हनूमद्वालाग्रलग्नाग्निशिखागृहीतगृहपरम्परं लङ्कापुरमिव बुभुक्षातुरं मे उदरम्।]

---

मलामोदः। गोधूमापूपाः-रोटीति प्रसिद्धा गोधूमपिष्टकृतलोत्कारिकाः, तैः सान्द्रिताः-निबिडमापूरिताः, शरावाः-वर्धमानकाख्यविशालपात्रविशेषाः तैः। माहिष-दधिमण्डेन-अनुद्धृतनवनीतेन माहिषेण दध्ना, मिश्रिताः माषविरचितभक्ष्यविशेषाः-सदधिमाषापूपाः, तैः निबिडितानि च तानि भाजनानि च तैः। परितप्ताम्बरीषे-सम्यगग्नितप्तभ्राष्ट्रे, भर्जितः यः चणकचयः तेन पूरितैश्च तैः पिचण्डकैः-वेणुलतादिनिर्मितैः पिठरविशेषैश्च। फाणितेन-मत्स्यण्डिकाख्यघनद्रवात्मकशर्करापाकेन संकलिताभिः-संयुक्ताभिः, यवधानाभिः-भर्जितयवतण्डुलैः, समुल्लसितैश्च तैः विशा-

(किञ्चित् पुरतो विलोक्य) इह खु महाणसदुवारदेसे अवणदपुव्वकाओ विलोईअदि चुह्लिपावअपज्जलणत्थफुक्कारपवणविकिण्णभसितलेशपुञ्जधूसर-

---

लामत्रैः-विस्तृतपात्रैश्च । दुग्धे दध्नि शर्करासलिले च पृथक् भाविताः-वासिताः विविधाः-नानाधान्यसमुत्थाः, ये पृथुकाः-चिपिटकाख्यभ्रष्टमृदितधान्यविशेषाः, तेषां राशिभिः सम्पूर्णाश्च ते विशङ्कटचषकविशेषाः-अतिविस्तृतभाजनविशेषाश्च तैः । मल्लिकाकुसुमपुञ्जवत् धवलानां शालितण्डुलान्नानां समुच्चयेन विराजितः-शोभमानः यः ताम्रमयभाण्डानां गणः, तस्याभ्यन्तरे-ताम्रभाण्डानां मध्य इति यावत्; सुवर्णसवर्णानां-वर्णतः कनकसदृशानाम्, सूपानां निधानाश्च ते पिठराश्च निधानपिठराः-तदाधारभूतकटाहाः तैः । कृत्ताः-खण्डशश्छिन्नाः, ततः परिपक्वाः-सम्यक् पाचिताः ये वृन्ताकादयः शलाटुखण्डाः, तन्मया ये शाकषण्डाः; तैः सुपक्वशाकसमूहैः मण्डिताश्च ते बहुविधा भाजनविशेषाश्च तैरपि परिशोभमानस्य महानसस्य । मे नासाबिलं-नासिकाद्वारम् । घुमघुमायते-नासाद्वारं महानसस्थभक्ष्यादीनां परिमलविशेषैः पूरितं भवतीति यावत् । सुनिर्गत्वरं-अत्यधिकमासिञ्चमानम्; स्वादूनां भक्ष्यभोज्यादीनां सुगन्धाघ्राणनेन सुतरां सपदि आस्यमस्माकं लालाजलनिष्यन्देन भवति स्कन्नमिति सुविदितमिदं सर्वेषाम् । मध्याह्नकालस्य समुपनतत्वात्, विविधानां सुपाचितानां भक्ष्यभोज्यादीनां स्वादूनां सुगन्धविशेषस्यानुभूयमानत्वाच्च बुभुक्षाया अभिवृद्धिः, तथा च विवृद्धेन जाठरानलेन उदरे सन्तापश्च विदूषकस्य विशिष्य समभवदिति स्वभावोक्त्या वर्णितं भवति ।

**किञ्चित् पुरत इति** । पुरतः-पुरस्ताद्विद्यमानमहानसाभिमुखमिति यावत् । अवनतपूर्वकायः-महानसादिषु सन्ततम् अतिक्लेशावहकर्मनिर्वहणशीलत्वात्, ततश्च कटीपृष्ठाद्यवयवानामपाटवप्रादुर्भाववशात् पूर्वकायस्यावनतत्वं पौरोगवस्य सामान्यतः संभवति । भसितलेशानां-भस्मकणानां, पुञ्जेन-निवहेन, धूसरं-धूलिभिरभिव्याप्तं मुखं यस्य सः । निटिले-फालतले, दृश्यमानाः विरलाः-नातिनिबिडाः

मुहो, णिडिलदीसंतविरलसेदंबुकणिओ, करंगुलीलग्गहिंगुपरिमलसंतप्पिद-समीवगदज्जणग्घाणेंदिओ, ईससंकमिदेंगाललंछिदपरिहाणपडो, दक्खिणकरग्ग-हीददव्वीसिहरतणुदरदीसमाणसाअपाअबप्पविलोअणपरो, अण्णकरलंबिदें-धणसअलो भद्दमुहो णाम पौरोगवो। ता एणं एव्वं पुच्छिस्सम्। 'अए भद्दमुह, तुए पक्केसु भक्खविसेसेसु किं वि किं वि मह हत्थे दादव्वं जं भक्खिअ एदं सुट्ठु एदं णेत्ति विआरिअ कहेमि; जं सुट्ठु तं परिवेसिअ रण्णो हत्थादो पारितोसिअं गेह्णदु भवम्' ति।

[इह खलु महानसद्वारदेशे ऽवनतपूर्वकायो विलोक्यते—चुल्लीपावकप्रज्वलनार्थफूत्कार-पवनविकीर्णभसितलेशपुञ्जधूसरमुखः, निटिलदृश्यमानविरलस्वेदाम्बुकणिकः, कराङ्गुलिलग्न-हिङ्गुपरिमलसन्तर्पितसमीपगतजनघ्राणेन्द्रियः, ईषत्संक्रमितेङ्गाललाञ्छितपरिधानपटः, दक्षिण-करगृहीतदर्वीशिखरतनुतरदृश्यमानशाकपाकबाष्पविलोकनपरः, अन्यकरलम्बितेन्धनशकलो भद्र-मुखो नाम पौरोगवः। तदेनमेवं पृच्छामि। 'अये भद्रमुख, त्वया पक्केषु भक्ष्यविशेषेषु किमपि किमपि मम हस्ते दातव्यम्, यद्भक्षयित्वा इदं सुष्ठु इदं नेति विचार्य कथयामि, यत् सुष्ठु तत् परिवेष्य राज्ञो हस्तात् पारितोषिकं गृह्णातु भवान्' इति।]

---

स्वेदाम्बुकणिकाः यस्य सः। महानसे चुल्लीसमीपे पाचकक्रियायाः प्रकृत्यैव श्रमावहत्वात् फालतले स्वेदकणिकानां निर्गमस्तावदनुभवसिद्धः। कराङ्गुलिषु लग्नानां-शाकादिषु संयोजनायोपयोगसमये संसक्तानां हिङ्गूनां-रामठकणानाम्, परिमलेन सन्तर्पितं समीपगतानां जनानां घ्राणेन्द्रियं येन सः। ईषत्संक्रमितेन-किञ्चित् तत्र तत्र संलग्नेन, इङ्गालेन-दग्धकाष्ठाङ्गारेण, मषीसदृशकृष्णवर्णेनेति यावत्, लाञ्छितः-श्यामवर्णेनाङ्कितः परिधानपटः-आच्छादनवस्त्रं यस्य सः। दक्षिणकरेण गृहीतायाः दर्व्याः खजस्य, शिखरे-अग्रभागे, तनुतरः यो दृश्यमान-शाकः तस्य पाकबाष्पस्य पक्कतासूचकस्यार्द्रोष्मणः, विलोकनपरः-शाकस्य पक्का-पक्कविमर्शनोद्युक्त इति यावत्। अन्यकरे-वामहस्ते, लम्बितं-संसक्तम्, इन्धन-शकलं-वह्निप्रज्वालनोपयोगिकाष्ठादीध्मखण्डः यस्य सः। पौरोगवः-सूदः। महा-

(सामर्षम्) कहं एसो सामरिसं दासीएउत्तो 'जइ तुह बुभुक्खा तदो रण्णो समीपं गदुअ भोअणं दादव्वं ति पुच्छ । अहं उदरंभरिणो तुह किं वि ण दाइस्सम् 'ति भणिअ महाणसब्भन्दरं गदो । होदु, राअसमीवं गमिस्सम् । (इति परिक्रम्यावलोक्य च) कहं एत्थ राअसमीवे विअणे अलगद्देण गिह्निअ बिलं पवेसिदो मण्डूओ विअ किं वि अणक्खरं पलवंतो अमच्चो वेहेओ चिट्ठइ । ता समअं पडिवालइस्सम् । (इति तिष्ठति ।)

[कथमेष सामर्षं दास्याः पुत्रः 'यदि तव बुभुक्षा ततो राज्ञः समीपं गत्वा भोजनं दातव्यमिति पृच्छ । अहमुदरंभरेस्तव किमपि न दास्यामि ।' इति भणित्वा महानसाभ्यन्तरं गतः । भवतु, राजसमीपं गमिष्यामि । कथमत्र राजसमीपे विजने अलगर्देन गृहीत्वा बिलं प्रवेशितो मण्डूक इव किमप्यनक्षरं प्रलपन्नमात्यो वैधेयस्तिष्ठति । तत् समयं प्रतिपालयिष्यामि ।]

(ततः प्रविशति राजा मन्त्री च ।)

**राजा**—(कर्णं दत्वा) कार्यपर्यालोचनयातिक्रान्तोऽप्यर्धदिवसो न ज्ञातः । यत इदानीम्—

---

नसे विविधानां स्वादूनां घ्राणेन्द्रियतर्पणक्षमपरिमलावहानां भक्ष्याणां सकृदवलोकनमात्रादेवौदरिक**स्यास्य** पौरोगव तदर्थं प्रष्टुं स्वयमाशा महत्युद्भूतेति सूचितं भवति तदेनमेवं पृच्छामीत्यादिभिर्वाक्यैः ।

**कहं एसो इति** । एषः-पौरोगवः । स्वानभिमतस्य सूदवचनस्याकर्णनेन सामर्षं साक्रोशं च दास्याः पुत्र इति तमधिक्षिपति । उदरंभरेः-आहारैकतत्परस्य । दास्याः पुत्र एषः 'यदि तव बुभुक्षा ततो राज्ञः' इत्यादिकं भणित्वा कथं महानसाभ्यन्तरं गतः इत्यन्वयः । विजने-एकान्ते । अलगर्देन-सलिलस्थेनोरगेन । बिलं-श्वभ्रम् । अमात्यो वैधेयः-मूर्खो मन्त्री । **कर्णं दत्वेति** । अर्धदिवसः-अह्नोऽर्धभागः । **अतिक्रान्तोऽपि** । कार्यपर्यालोचनया-कर्तव्यांशानां निपुणपरामर्शासक्तचित्ततयेत्यर्थः । यतः-अतीतदिवसार्धत्वात् इति यावत् ।

प्रासादोदरपुञ्जितप्रतिरवप्राग्भारदीर्घीकृतं
सद्यः पञ्जरगर्भ एव चकितानुद्भ्रामयन्तं शुकान् ।
कार्यव्याप्रियमाणमानवमुखं कर्षन्तमात्मोन्मुखं
मध्याह्नागमसूचनाय पटहो धत्ते ध्वनिं ताडितः ॥ २ ॥

संप्रति हि घोरातपसन्तापमसहमानाः प्राणिनः प्रायेण प्रच्छायशीतलं प्रदेशमावासाय प्रार्थयन्ते । तथा हि—

---

**प्रासादोदरेति** । मध्याह्नागमसूचनाय-मध्यं दिनं समुद्भूतमिति ज्ञापनाय । ताडितः पटहो ध्वनिं धत्ते-आहता ढक्का शब्दमुत्पादयति । ध्वनिस्वरूपमेव विशिनष्टि अवशिष्टः पद्यभागः । प्रासादस्य-हर्म्यस्य, उदरे-अन्तर्भागे, पुञ्जितानां-उपर्युपरि सञ्चितानाम्, प्रतिरवाणां-(पटहध्वनेः) प्रतिशब्दानाम्, प्राग्भारेण-बाहुल्येन, दीर्घीकृतं-अविच्छिन्नधारात्वेनायतीकृतमित्यर्थः । सद्यः-अतिबहुलशब्दस्य श्रवणानन्तरमेव । चकितान्-भयोद्विग्नान् । शुकान् । पञ्जरस्य गर्भे-अन्तराल एव । उद्भ्रामयन्तं-त्रासात् ससंभ्रमं परितः समुत्पातयन्तम् । तथा कार्येषु-तत्तदुचितेषु व्यापारेषु, व्याप्रियमाणानां-समुद्युक्तानाम्, मानवानां मुखम्; मुखमिति जात्येकवचनम् । आत्मोन्मुखं-ध्वनेः संमुखं यथा तथा । कर्षन्तं-आवर्जयन्तम् । यया दिशा पटहध्वनिः प्रसरति तदभिमुखं जनाः स्वमुखानि परिवर्तयन्तीति भावः । एवंविधं ध्वनिं पटहो धत्त इत्यन्वयः । मध्येऽहनि पञ्चदशनाड्याः समाप्तिसूचनाय पटहादीनामाहननं प्राक्कालीनमनुष्ठानम् ॥ २ ॥

**संप्रतीति** । संप्रति हि-अस्यां मध्यन्दिनवेलायाम् । घोरस्य-अतीव तीक्ष्णतमस्य आतपस्य सन्तापम् असहमानाः । प्राणिनः-पक्षिमृगसरीसृपादयः । प्रकृष्टा छाया येषु प्रदेशेषु ते प्रच्छायाः, प्रच्छायत्वेन शीतलम् । तादृशं प्रदेशम् । आवासाय-श्रमपरिहारपुरस्सरं संश्रयाय । प्रार्थयन्ते-सोत्सुकमभिलषन्ति । के ते प्राणिनः, कथमेतच्च ज्ञायत इत्येतद्विषयं तथाहीति निरूपयति ।

आसीदन्ति विशालशैलशिखरभ्रश्यन्नदीनिर्झरां
शुक्लापाङ्गकुलानि सूर्यकिरणैः शून्यामरण्यावनीम् ।
आवर्तस्फुटपुण्डरीकमुकुलप्रेङ्खोलनोद्गन्धिना
तृप्यन्तो मरुता स्वपन्ति च नदीतीरे बिलेषूरगाः ॥ ३ ॥

---

असीदन्तीति । शुक्लापाङ्गाः-मयूराः, तेषां कुलानि-समूहाः । शुक्लापाङ्गकुलानीति कर्तृपदम् । विशालं यथा तथा शैलशिखरेभ्यो भ्रश्यन्तः-निपतन्तः, नदीनिर्झराः-नदीरूपजलप्रपाता यस्यां ताम् । अटवीप्रदेशस्य सुतरां शीतलत्वसूचनार्थमिदं विशेषणम् । किञ्च सूर्यकिरणैः-दिवाकरकरोत्पन्नैरातपसन्तापैरित्यर्थः । शून्यां-विरहिताम् । सूर्यातपराहित्येन, निर्झराम्भोभिरासमन्तात् आप्लुतत्वाच्च प्रदेशस्य नितान्तशैत्यसौहित्यवत्त्वं सूचितं भवति । तादृशीम् अरण्यावनीं-वनप्रदेशम् । आसीदन्ति-निषेवन्ते । मध्याह्नार्कसन्तापमसहमानानां प्राण्यन्तराणामपि प्रकारान्तरेणावस्थान्तरमुत्तरार्धेन निर्वर्णयति । आवर्तेन-परितश्चालनेन, स्फुटानां-विकसितानां, पुण्डरीकमुकुलानां-सितारविन्दकुड्मलानाम्, प्रेङ्खोलनेन-आधूननेन, उद्गन्धिना-उद्गच्छत्सौरभ्यवता । मरुता-मन्दमारुतेन । तृप्यन्तः-तादृशसुगन्धिवातस्यास्वादनेन तृप्तिमधिगच्छन्तः । मारुतम् आहारत्वेन पीत्वा च मध्याह्नतापापनोदार्थम् आन्तरेण बाह्येन च शरीरेणासेव्य च भुजगानां सर्वथा तृप्तिर्भवतीति भावः । तथाभूता उरगाः-सर्पाः । नदीतीरे-सरित्कूले । नदीतीरोपान्तभागेषु सन्ततजलसेकेन शैत्यस्य सद्भावात् तादृशः प्रदेशोऽत्र सूचितः । बिलेषु-कुहरेषु । नदीकूलोपान्तस्थितेषु शीतलेषु रन्ध्रेष्विति भावः । स्वपन्ति-निद्रासुखमनुभवन्ति । (अत्र शुक्लापाङ्गकुलानीति स्थाने भुक्त्वा पान्थकुलानीति पाठान्तरम् । तदा पथिकानां वर्गाः किमप्यशनमुचितं भुक्त्वा सूर्यकिरणैः शून्याम् अरण्यावनीम् आसीदन्तीत्यन्वयः । अनन्तरं च आवृत्तस्फुटेति पाठान्तरे आवृत्तानि-घूर्णितानि च तानि स्फुटानि चेति विशेषणोभयपदकर्मधारयः ।

मन्त्री—अहो यौवनश्रियं पुष्णात्येष दिवसः । यतः,

छायाशीतलमध्वनि द्रुमतलं चण्डातपोपप्लुताः
शौरिं दानवपीडिता इव सुराः पान्था भजन्ति द्रुतम् ।
दुष्कीर्तिं क्षितिपा इव प्रकृतिभिर्लोभावधूतार्थिनो
गाहन्ते च करेणुभिः सह नदीमारण्यका वारणाः ॥ ४ ॥

---

किञ्च विलेषूरगा इत्यत्र खिलेषूरगा इत्यपि पाठः । खिलेषु-अप्रहतेषु निम्नोन्नतेषु नदीतीरभागेष्वित्यर्थः । किन्तु नैते पाठाः साधीयांसः) ॥ ३ ॥

**अहो इति** । एष दिवसः-दिवासमयः । यौवनश्रियं-मध्याह्नदशायाः परां काष्ठामित्यर्थः । पुष्णाति-औष्ण्योज्वल्यादिकं समग्रमधिगत्य शोभते । (यौवनश्रिय-मशिश्रयदिति पाठान्तरम् ।) तत्प्रकारमेव विशदयति यत इति ।

**छायाशीतलमिति** । चण्डातपेन-अतिक्रूरमध्याह्नार्कत्विषा, उपप्लुताः-संतप्ताः । पान्थाः-पथिकाः । अध्वनि-मध्येमार्गम् । छायया शीतलम् । द्रुमतलं-छायातरूणाम् अधःप्रदेशम् । दानवैः-असुरैः, पीडिताः-दौस्थ्यं गमिताः । सुराः-देवाः । शौरिं-महाविष्णुमिव । द्रुतं-अतित्वरितं यथा तथा । भजन्ति-आश्रयन्ते । छायाशीतलमित्यस्य शौरिपक्षे आश्रितेषु करुणार्द्रमिति ध्वन्यर्थो गम्यः । आरण्यकाः-अरण्ये भवाः ; सर्वदा काननिवासिन इति भावः । वारणाः-महागजाः । करेणुभिः-हस्तिनीभिः सह । नदीम् । लोभेन-कार्पण्येन, अवधूताः-तिरस्कृताः, अर्थिनः-याचकाः यैस्ते । क्षितिपाः-राजानः । प्रकृतिभिः-स्वकीयाभिः प्रजाभिः सह । दुष्कीर्तिं-अपख्यातिमिव । गाहन्ते-विशन्ति । वनगजाः सर्वदा स्वकीयाभिः करेणुभिः साकमेव विपिने विचरेयुरिति विदितमेतद्बहूनाम् । नृपे सुचरिते प्रजाश्च सुचरिताः ; तस्मिन् दुष्पथप्रवृत्ते ताश्च तादृशा एव भवेयुरिति सर्वविदितेयं स्वाभाविकी लोकप्रवृत्तिः । अत एव राज्ञो दुश्चरितैरपप्रथायां स्वस्य समुपनतायां तदधीना जना अपि तां प्राप्नुवन्तीति नीतिरिह सूचिता ।

अपि चेदानीम्—

घर्माम्भःकणलुप्यमानमकरीपत्राङ्कुरालङ्क्रियं
भूयिष्ठोद्गतफूत्क्रियानिलगलन्मासृण्यबिम्बाधरम् ।
ताम्यल्लोचनतारकालसगतिव्याख्यातनिद्रागमं
प्रच्छाये पथि रोचते स्थितवते पान्थाय कान्तामुखम् ॥ ९ ॥

---

अतो हि नाम "यथा राजा तथा प्रजाः" इति, "राज्ञि धर्मिणि धर्मिष्ठाः पापे पापरता जनाः" इति च नीतयः प्रचलन्ति लोके ॥ ४ ॥

पुनरप्यन्यथा वर्णयति मध्यन्दिनस्य महान्तं सन्तापातिशयम् **अपि चेदानीमिति** । प्रकारान्तरमेव वर्ण्यते **घर्माम्भ इति** । इदानीम्-अस्मिन् दिवसस्य यौवनभागे । प्रकृष्टा छाया-अनातपप्रदेशो यस्मिंस्तस्मिन्; बहुलशीतलच्छायासंपन्न इति यावत् । पथि-मार्गे । स्थितवते-श्रमपरिहाराय निषीदते । पान्थाय-मार्गचारिणे । कान्तामुखं-स्वप्रियाया वदनम् । आवर्जनीयसौन्दर्यशालिनीति कान्ताशब्दः सूचयति; अत एव मुखमपि तस्याः कान्तं भवतीति मन्तव्यम् । रोचते-प्रीतये प्रकल्पते । मध्याह्नसमये सुतरां प्रीणने हेतुमाह त्रिभिः पादैः । किंविधं मुखम्? घर्माम्भसां-स्वेदजलानाम्, कणैः बिन्दुभिः, लुप्यमानाः-प्रमृज्यमानाः, मकरीपत्राणां-मकरिकापत्राख्यानां चित्रवर्णलेखानाम्, अङ्कुरा एवालङ्क्रिया यस्य तत् । मध्याह्नार्कसन्तापसमुद्गतस्वेदजलबिन्दुभिः पथिकजनप्रियामुखविलिखितमकरिकापत्राख्या अलङ्करणवर्णरेखाः प्रमृष्टा इत्यर्थः । भूयिष्ठं-अतिबहुलं यथा तथा, उद्गतः-उपर्युपरि निर्गतः यः फूत्क्रियानिलः-श्रमबाहुल्योत्पन्नो दीर्घतरः श्वासवायुः, तेन गलन्मासृण्यः-लुप्यमानस्निग्ध्यः, बिम्बाधरः-बिम्बफलवत् पाटलवर्णयुक्तकोमलाधरो यस्य तत् । मध्येऽहनि मार्गसञ्चरणेन तीव्रतमातपसन्तापस्यासहनेन चानुपदमुद्गच्छता सुमहता सोष्मणा श्वासानिलेन पान्थवनितानां कोमलाधरा अपहृतस्निग्ध्या रूक्षाश्च भवन्तीति भावः । किञ्च ताम्यद्भ्यां-क्लिश्यमानाभ्याम्, लोचनतारकाभ्यां-नेत्राभ्यां कनीनिकाभ्यां च, तथा अलसगत्या-मन्दी-

राजा—(स्वगतम्) नन्वस्मिन्नवसरे

स्नातव्यं वसितव्यं जपितव्यं नमसितव्यमत्तव्यम् ।
अप्स्वंशुकमनुकूलं दैवतमन्नं क्रमेण मया ॥ ६ ॥

(प्रकाशम्) किमतः परमाचरितव्यम् ।

मन्त्री—मध्याह्न इति बुभुक्षिताः परिजनाः । ततः स्नानार्थमुत्तिष्ठतु महाराजः ।

---

भवत्पदचलनेन च, व्याख्यातः-निरूपितः निद्रागमो यस्य तत् । दर्शनविषये मन्दीभवतोरक्ष्णोः, सालसं घूर्णमानयोस्तारकयोः, गमनविषये सुतरामलसत्वमधिगच्छतोश्चरणयोश्चावलोकनेन पान्थजनकान्तामुखं नूनं निद्रोन्मुखं भवतीति ज्ञायत इति भावः । तथाविधं हि कान्ताया मुखं तत्कान्तस्य प्रच्छायशीतले पथि विश्रान्तिमधिगच्छतो मध्यन्दिते मनः समाकर्षतीति पद्यस्यास्य भावः ॥ ५ ॥

नन्विति स्वयमेव राजा मनसि निर्धारयति मध्याह्नकर्तव्यानि कर्माणि ।

स्नातव्यमिति । नन्वित्यादि पदत्रयमत्रान्वेति । नन्विति प्रश्ने; अनन्तरं सूच्यमानानि माध्यन्दिनानि कर्माणि मयाद्यानुष्ठेयानि खल्विति स्वयमेव मनसि विचारयति । अस्मिन् अवसरे-मध्याह्नकाले । मया । क्रमेण-श्लोकोक्तक्रममनुसृत्य । अप्सु-शुद्धोदके । स्नातव्यम् । अथ अंशुकं-वस्त्रम् । वसितव्यं-धार्यम् । अनुकूलं-तत्कालसमुचितं मन्त्रादिकम् । जपितव्यम् । अनुवारमिति पाठे मन्त्रादिकं पौनःपुन्येन जपितव्यमिति यावत् । दैवतं-इष्टदेवता । नमसितव्यं-प्रणामादिना पूजनीयम् । अन्नं-आहारः । अत्तव्यं-भोक्तव्यम् । क्रमेणेति शब्दः अप्सु स्नातव्यम्, अंशुकं वसितव्यमित्यादीनां पूर्वार्धोत्तरार्धयोः प्रयुक्तानां पदानां यथायोगमन्वयप्रकारमपि सूचयति । (अस्मिन् श्लोके अप्स्वंशुकमिति भागः क्वचित् पुस्तके ग्रन्थलोपवत् विसृष्टः । दैवतमन्त्रेति पाठभेदश्च दृश्यते ।) ॥ ६ ॥

अतःपरं कर्तव्यमुद्दिश्यामात्यस्याशयं जिज्ञासुः स्पष्टं तं पृच्छति किमतःपरमिति । आचरितव्यं-स्वैः कर्तव्यं कर्म । मध्याह्न इति-मध्यन्दिनस्य समुपन-

(राजा उत्तिष्ठति मन्त्री च ।)

**विदूषकः**—(श्रुत्वा) एव्वंवादिणो मन्तिणो होदु पुण्णलोओ । (उपसृत्य) जेदु जेदु महाराओ । [एवंवादिनो मन्त्रिणो भवतु पुण्यलोकः । जयतु जयतु महाराजः ।]

**राजा**—वयस्य, कथमागतोऽसि ।

**विदूषकः**—(मन्त्रिणं प्रति) अवि कुसलं अमच्चस्स । [अपि कुशलममात्यस्य ।]

**मन्त्री**—कथमभ्यवहारसमय इति प्राप्तोऽसि ।

**विदूषकः**—दाणिं जेव्व णिअघरे भोअणं कदुअ आअदेण अज्जेण वि किंति ण विण्णादं मज्झह्नो वट्टदित्ति । [इदानीमेव निजगृहे भोजनं कृत्वा आगतेनार्येणापि किमिति न विज्ञातं मध्याह्नो वर्तत इति ।]

**मन्त्री**—विज्ञातमेव । श्रूयतामिदानीम्—

---

तत्वादित्यर्थः । बुभुक्षिताः-क्षुधार्ताः । तदुक्तक्रमेणैव प्रथमतः स्नानार्थं यतितव्यमिति तं मन्त्री चोदयति स्नानार्थमुत्तिष्ठतु महाराज इति । एव्वमिति । सुतरां क्षुधितश्चौदरिकश्च विदूषको मन्त्रिवचनश्रवणेन हृष्टः सन् तं स्वयमनुगृह्णाति मन्त्रिणो भवतु पुण्यलोक इति । **वयस्येति** । भोजनवेलां सम्यगवगत्य समागतोऽयं ब्राह्मण इति सूचनाय कथमागतोऽसीति सोल्लुण्ठनं पृच्छति विदूषकम् । तमेव स्पष्टमाशयमाविष्करोति **कथमभ्यवहारेति** । अभ्यवहारसमयः-भोजनवेला । **इदानीमिति** । मध्याह्नः समुपनत इति भोजनं कृत्वा त्वमागतोऽसि ; अस्मिन् समये कथं नाम नास्माकं बुभुक्षा स्यादिति मन्त्रिणं पृच्छति ।

**विज्ञातमिति** । मध्याह्नोऽद्य वर्तत इति सम्यक् ज्ञातमेव । केन लक्षणेन मध्याह्नो ज्ञायते संप्रति वर्तत इति निरूपयति श्रूयतामिति ।

यूना सस्पृहदृश्यमानकबरीभारोरुपीनस्तनी
पान्थेनाध्वनि शालिगोपवनिता शून्ये स्फुरद्यौवना ।
आसन्नां निबिरीसवारणबुसापत्रापनीतातपा-
मारामक्षितिमापगातटगतां साकूतमालोकते ॥ ७ ॥

**विदूषकः**—(समुखभङ्गम्) अण्णस्स पुरिसस्स अण्णाए इत्थिआए संपक्कसूअणं णाम अणुइदं किं ति वण्णीअदु अज्जेण । जइ मज्झत्थो वण्ण-

---

मध्याह्नं शार्ङ्गरिकेण नयेन वर्णयति यूनेति । शून्ये-विजने, मनुजान्तरसञ्चाररहित इति यावत् । अध्वनि-मार्गे । स्फुरद्यौवना-पुष्टपीवरवक्षोजादिभिः स्पष्टीकृतनवयौवना । शालिगोपवनिता-शालिसस्यानां संरक्षणाय तत्र सन्निहिता-तरुणी । पान्थेन-यूना-पथि सञ्चरता केनचिन्नवे वयसि विद्यमानेन पुंसा । सस्पृहं-साभिलाषं यथा तथा, दृश्यमानाः-अवलोक्यमानाः, कबरीभारः-अतिप्रवृद्धः केशकलापश्च, उरुपीनस्तनौ-पीनोन्नतवक्षोजौ च यस्याः सा; अथवा कबरीभारश्च, ऊरू-सक्थिनी च, स्तने न यस्याः सा; तथाविधा सती । आसन्नां-समीपे विद्यमानाम् । निबिरीसैः-अतिनिबिडप्रवृद्धैः, वारणबुसापत्रैः-कदलीदलैः, अपनीतः-निवारितः, आतपो यस्यास्ताम् । आपगातटगतां-नदीतीरस्थाम् । आरामक्षितिं-उद्यानवने विद्यमानं प्रच्छायशीतलं स्थलम् । साकूतं-साभिप्रायम् । आलोकते-सोत्सुकं विहाराय विविक्तोऽयं देशः सुतरां समुचितस्तत्र त्वया-गम्यतामिति सूचयन्ती वीक्षत इति भावः ॥ ७ ॥

**समुखभङ्गमिति** । समुखभङ्गं-मुखविकारसहितं यथा तथा । विषयवैरस्यम् आत्मनः सूचयितुमेष मुखभङ्गः । अन्यस्य पुरुषस्य-पुरुषान्तरस्य । अन्यया स्त्रिया-वनितान्तरेण । न स तस्या भर्ता न वा सा तस्य पत्नीति भावः । तादृशास्त्री-पुरुषयोः संयोगसंबन्धी अनुचितो विषयोऽयम् आर्येण-सज्जनेन सता भवता किमर्थं वर्ण्यत इत्याक्षेपं सूचयति विदूषकः । आग्रहः-निश्चयः । संभावितं-

णीओ त्ति आग्गहो होदि तदो माणवाणं संभाविदं पाणभोअणं वण्णीअदु ; जेण सुदमेत्तेण वि मह संतोसो होदि ।

[अन्यस्य पुरुषस्यान्यया स्त्रिया संपर्कसूचनं नामानुचितं किमिति वर्ण्यते आर्येण। यदि मध्याह्नो वर्णनीय इत्याग्रहो भवति तदा मानवानां संभावितं पानभोजनं वर्णयतु; येन श्रुतमात्रेणापि मम संतोषो भवति ।]

**मन्त्री**—(विहस्य) भोजने, तत्प्रकारस्य तत्साधनस्य च श्रवणे कूतूहली भवान् ।

(प्रविश्य)

**दौवारिकः**—महाराअ, उवाअणहत्था सामंतभूवाला संपत्ता, मए वि तिदीअकच्छं पवेसिदा महाराओ पेक्खिदव्वेत्ति चिट्ठंदि । [महाराज, उपायनहस्ताः सामन्तभूपालाः संप्राप्ताः, मयापि तृतीयकक्षां प्रवेशिता महाराजः प्रेक्षितव्य इति तिष्ठन्ति ।]

---

समुचितम् । यदि कालोचिते वर्णने भवत्यध्यवसायः तर्हि मध्याह्नसमये मानवसमुदायस्यापि समुचितानां पानभोजनादीनां विषयमधिकृत्य सज्जनेन भवादृशेन वर्णनं साध्विति सर्वैरङ्गीक्रियेतेति स्वाशयं विशदयति विदूषकः । **तत्प्रकारस्येति** । तेषां-भोजनपदार्थानां, प्रकारः-वैविध्यम् । सूपापूपपायसादिकम् । तत्साधनस्य-भक्ष्यभोज्यादीनां पाचनविधानस्य च । कूतूहली औत्सुक्यवान् विविधानामाहाराणां तत्पाकक्रमाणां तदभ्यवहारे च त्वादृशा उदरंभरयः सर्वदा उत्कण्ठिताः स्वभावत एवेति भावः ॥

**महाराअ इति** । उपायनानि-उपहाराः, हस्ते येषां ते; उपहारसहिता इति यावत् । सामन्ताः-सम्-संलग्नोऽन्तः-एकदेशः यस्याः सा समन्ता-स्वविषयानन्तरा भूमिः, तस्या इमे सामन्ताः; समन्ताद्भवाः सामन्ता इति वा; सामन्ताश्च ते भूपालाश्च सामन्तभूपालाः-सन्निकृष्टदेशसंबन्धिनो राजानः । संप्राप्ताः-समागताः । तृतीयकक्षां-हर्म्यस्यान्तःप्रदेशे विद्यमानं तृतीयं प्रकोष्ठम् । महाराजः

(राजा मन्त्री च तद्दर्शनप्रदानाय निर्गमनं नाटयतः।)

**विदूषकः**—(आत्मगतम्) अए, दासीएपुत्तेहिं सामंतराएहिं मह ऊसाहभङ्गो किदो। [अये, दास्याः पुत्रैः सामन्तराजैर्ममोत्साहभङ्गः कृतः।]

(इति तदनुसरणं नाटयति।)

**मन्त्री**—एते स्वामिनं प्रणमन्ति।

**राजा**—(आकाशे) अपि कुशलिनो यूयम्।

**मन्त्री**—एते 'स्वामिनः कुशलप्रश्नेन कृतार्थाः स्मः' इति वदन्ति।

**विदूषकः**—(स्वगतम्) बुभुक्खिदस्स मह अकुसलं ति ण जाणादि वअस्सो। [बुभुक्षितस्य ममाकुशलमिति न जानाति वयस्यः।]

**मन्त्री**—कश्चित् स्वर्णौघमेको मणिगणमपरो भूषणव्रातमन्यः
क्षौमस्तोमं परोऽश्वान् रथकुलमितरो बालमातङ्गसङ्घम्।
सामन्तक्षोणिपालेष्वहमहमिकयोपाहरद्दृष्टिपातै-
र्देवस्यानुग्रहीतुं सकरुणमुचितं सर्वमित्यर्थयेऽहम्॥ ८॥

---

प्रेक्षितव्य इति तिष्ठन्ति-महाराजस्य दर्शनं प्रतिपालयन्तः सन्तीति भावः। राजेति। तद्दर्शनप्रदानाय-तेषां-सामन्तनृपाणाम्, राजकर्तृकदर्शनस्य प्रदानाय। निर्गमनं-कक्षान्तरगमनम्। दास्याःपुत्रैरिति उपालम्भोक्तिः। उत्साहभङ्गः-अभ्यवहार-कृताध्यवसायविशेषस्य विघटनम्। तदनुसरणमिति। तयोः-राज्ञो मन्त्रिणश्च, अनुसरणं-अनुवर्तनम्। एत इति। एते-सामन्तभूपालाः।

सामन्तभूपालसमानीतोपायनस्वरूपाणि निरूपयति कश्चिदिति। सामन्त-क्षोणिपालेषु कश्चित्-क्षोणिपालः। स्वर्णानाम् ओघं-समूहम्। उपाहरत्-उपहार-त्वेन आनीतवान्। उपाहरदिति क्रिया परस्तादप्येकैकेन वाक्येनैवमेवान्वेति। एकः-कश्चिदपरो राजा। मणीनां गणं-रत्नानां समूहम्। अपरो राजा। भूषणव्रातं-अलङ्करणसमूहम्। अन्यो नृपः। क्षौमस्तोमं-दुकूलसमूहम्। परो नृपः।

अपि च,

हंसाश्चित्रगताः शुकाः स्फुटगिरो लावा मिथोऽमर्षिणः
श्येनाः शीघ्रजवाः शिखण्डिन उपारोहत्कलापोच्चयाः ।
आनीतास्तपनीयपञ्जरगता भूपैरमीभिर्मुदा
किञ्चावेक्षितविक्रमाश्च मृगयाकालेषु कौलेयकाः ॥ ९ ॥

---

अश्वान् । इतरो नृपः । रथानां कुलं-निवहम् । इतरशब्दः पुनः काकाक्षिन्यायेन बालमातङ्गेत्यनेनाप्यन्वेति । इतरः । बालमातङ्गानां-कलभानाम्, सङ्घं-यूथम् । अहमहमिकया-अहंपूर्वमहंपूर्वमिति सावेगं ससङ्घर्षं च प्रवेशेनेति यावत् । उत्त-मानुपहारान् नृपा उपाहरन्निति राज्ञे मन्त्री निवेद्य पुनः कथयति । सर्वं-समस्तमिद-मुपहारवस्तु । देवस्य-महाराजस्य । दृष्टिपातैः-कटाक्षविक्षेपैः । सकरुणं-उत्तमो-पायनानि उपहृतवत्सु सामन्तभूपालेषु सौहार्दस्यार्द्रचित्ततायाश्च सूचनपुरस्सरम् । अनुग्रहीतुं-स्वकीयं प्रसादमाविष्कर्तुम् । उचितं-अर्हम् । इति अहमर्थये-तेषां कृते प्रार्थयामि भवन्तम् ॥ ८ ॥

उपायनानि ततोऽप्यन्यान्यपि समुपनतानीति सूचयति अपि चेति । तान्येव विवृणोति हंसा इति । चित्रं-विनोदावहं, गतं-गमनं येषां ते चित्रगताः । तथाविधा हंसाः-सजीवाः कलहंसाः । अत्र गतमिति भावे क्तः । "गतं तिरश्चीनमनूरुसारथेः" (माघे १-२) इतिवत् । स्फुटा-स्पष्टा गीः-वाक् येषां ते । शुकाः । सम्यक्कलभाषिणः कीरा इत्यर्थः । मिथः-परस्परम् । अमर्षिणः-वैराय-माणाः । लावाः-ककुभाख्या विष्किराः । शीघ्रजवाः-अतिवेगेनोत्पतन्तः । श्येनाः-शशादनाख्या गृध्रजातिपक्षिणः । उपारोहन्तः-विशिष्य वर्धन्तः, कलापोच्चयाः-बर्हभाराः येषां ते । शिखण्डिनः-मयूराश्च । तपनीयपञ्जरगताः-स्वर्णमयपञ्जरेषु स्थिताः । पूर्वोक्ताः पक्षिणः सर्वेऽपि विहगान्तरेभ्योऽपि गुणतो विशिष्टा विचित्राश्च तत्तदुचितेषु कनकमयपञ्जरेषु स्थापिता महाप्रभवे उपायनत्वेन समर्पणाय समानीता इति यावत् । किञ्च-न केवलमिमे विहारयोग्याः पक्षिवर्गाः किंतु सन्त्यपरे

राजा—मन्त्रिन्,

दत्तानि भूपतिभिरेभिरुपायनानि
तेषां वशे कुरु ममाधिकृता नरा ये ।
एतान् सभाजयितुमर्पय तत्तदर्हा-
ण्युष्णीषकञ्चुकदुकूलविभूषणानि ॥ १० ॥

मन्त्री—यथाज्ञापयति देवः ।

विदूषकः—णं वअस्स, मए वि विअई होइत्ति वाआमेत्तेण तुह उवाअणं दिण्णं, तदो बुभुक्खिदं मं किंत्ति ण संभावेसि । [ननु वयस्य, मयापि विजयी भवेति वाचामात्रेण तवोपायनं दत्तम्, ततो बुभुक्षितं मां किमिति न संभावयसि ।]

---

चोपयुक्ताः प्राणिन इति भावः । मृगयाकालेषु-आखेटसमयेषु । अवेक्षिताः-साक्षात् परीक्षिताः, विक्रमाः-शौर्यविशेषाः येषां ते । मृगयासु वनमृगाणामाक्रमणे विशिष्य निपुणा इत्यन्वक्षं निरीक्षितशक्तय इत्यर्थः । कौलेयकाः-श्वानश्च । अमीभिः भूपैः-अत्रागतैः सामन्तनृपैः । मुदा-प्रभोः समर्पणे संमोदेन सह; न तु भयेन न प्रभुनिर्बन्धोपनतबलात्कारेणवेति यावत् । आनीताः-उपहृताः ॥ ९ ॥

दत्तानीति । हे मन्त्रिन् । एभिः-इहागतैः । भूपतिभिः-नृपैः । दत्तानि उपायनानि-आगत्यार्पितान् उपहारान् । ये नराः । मया अधिकृताः-स्वद्रव्याणाम् आदानपूर्वकं संरक्षणार्थं स्वेन नियमिताः । तेषां-राजद्रव्यसंरक्षकाधिकारिणाम् । वशे कुरु-तदधीनानि कारय । अथ एतान्-समागतान्-सामन्तनृपान् । सभाजयितुं-सत्कर्तुम् । तत्तदर्हाणि-तस्य तस्य नृपस्य गौरवोचितानि, उष्णीषः-शिरोवेष्टः, कञ्चुकः, दुकूलं-क्षौमम्, विभूषणानि-स्वर्णादिनिर्मितान्यलङ्करणानि च । अर्पय-तत्तद्योग्यतानुरोधं पारितोषिकादीनि दत्वा बहुमानयेति यावत् ॥ १० ॥

यथेति । देवः-महाराजः । यथाज्ञापयति-प्रभोराज्ञानुरोधेन विदधामीत्यर्थः । (यथाज्ञापयति देव इति स्थाने तथाकरोमीति क्वचित् पाठः ।) णं वअस्स इति । वाचामात्रेण उपायनं दत्तं-विजयी भवेति अनुग्रहरूपं वाङ्मयमुपायनं वितीर्णम् ।

**मन्त्री**—राजन्, श्रोतव्यः कार्यशेषः ।

**विदूषकः**—हुं, चिट्ठदु दासीए वच्छो कज्जसेसो । वअस्स किं मह पडिवअणम् । [हुम्, तिष्ठतु दास्या वत्सः कार्यशेषः । वयस्य, किं मम प्रतिवचनम् ।]

**राजा**—मन्त्रिन्, ब्राह्मणस्य प्रथमं भोजनं निर्वर्तयेत्यन्तःपुरं गत्वा देवीं वद । अतः प्रागेव संभाव्य च सामन्तभूपान् स्वस्थानं प्रेषय । वयस्य, त्वमपि मन्त्रिणा सह गच्छ ।

**विदूषकः**—दीहाऊ होइ । [दीर्घायुर्भव ।]

**मन्त्री**—विजयी भवतु देवः ।

(इति विदूषकेन सह निष्क्रान्तः ।)

**राजा**—कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—आणवेदु महाराओ । अहं पस्स एव्व चिट्ठम्मि । [आज्ञापयतु महाराजः । अहं पार्श्वं एव तिष्ठामि ।]

**राजा**—मज्जनगृहमार्गमादर्शय ।

**दौवारिकः**—इदो इदो भवम् । [इत इतो भवान् ।]

---

**राजन्निति** । कार्यशेषः श्रोतव्यः-भवन्निर्दिष्टाद्राज्ञां संमाननरूपात् कार्यात् अन्यदपि यत्किञ्चित् विद्यते चेत्तदपि श्रोतुमिच्छामीत्यर्थः । यद्वा भवदभिहितादधिकं कार्यान्तरमपि विद्यते तदपि भवता श्रोतव्यमिति स्यादर्थः । हुं इति अनिष्टस्य विषयस्यापाकृतिसूचकमव्ययम् । कार्यशेषशब्दश्रवणेन राजा मन्त्री चाभ्यवहारकृत्यमनादृत्य कार्यान्तरव्यापृताविति विमृश्य तत्रासूयामाविष्कुर्वन् साक्रोशं कार्यान्तरमुपालभते तिष्ठतु दास्या वत्स इति । 'मए वि विजई होइत्ति' इति पूर्वोक्तस्य स्वकीयवचनस्य किमुत्तरमिति पृच्छति किं मम प्रतिवचन-

(परिक्रम्यावलोक्य च, संस्कृतमाश्रित्य)

स्नातुं ते परिचारिकाः स्तनभरश्रान्ताः शनैः साम्प्रतं
क्वाथोष्णानि जलानि मज्जनगृहे कुम्भीषु संगृह्णते ।
आयान्तीव तृषा जलार्थनमिषादासां विलासाद्गतिं
हंसाः केशभरश्रियं च शिखिनः स्नेहादिमा याचितुम् ॥ ११ ॥

---

मित्यनेन । अत इति । अतः-ब्राह्मणस्यास्य भोजने त्वरातिशयस्य विद्यमानत्वात् । सामन्तभूपान् । प्रागेव-पूर्वमेव, अति झटितीति यावत् । संभाव्य-सत्कारैः प्रीणयित्वा च । (संभाव्यात्रेति पाठे अत्र समागतान् भूपान् संमान्येत्यर्थः ।) प्रथमं त्वरितमेव सामन्तनृपान् संभाव्य, अनुपदमेव ब्राह्मणाय भोजनं दापयेति भावः । दीर्घायुर्भवेति । स्वसन्तोषद्योतकं प्रतिवचनम् । दौवारिकः-प्रतीहारः स च प्राणवायुः; दृश्यतां प्रथमाङ्के प्रतीहारप्रवेशसन्दर्भस्थं व्याख्यानम् । अहमिति । अहं पार्श्वे-भवतां समीप एव । न क्वचिदपि दूरतोऽगममिति भावः । (अहं पस्स एव्व चिट्ठम्मि इति पाठः क्वचित् पुस्तके न दृश्यते ।) मज्जनगृहमिति-स्नानगृहम् । (आदेशयेति च पाठान्तरम् ।)

स्नातुमिति । ते-भवतः । परिचारिकाः-उपचाराय नियुक्ताः स्त्रियः । स्तनयोः भरेण-सुतरां पीनोन्नतत्वाद्दुर्भरेण गौरवेण, श्रान्ताः-अधिगतायासाः सत्यः । साम्प्रतं-अधुना । स्नातुं-भवतः स्नानार्थम् । मज्जनगृहे-स्नानागारे । कुम्भीषु-स्नानकलशेषु । (कुम्भेष्विति पाठान्तरम् ।) क्वाथेन-क्वथनेन, उष्णानि-सुखोष्मवन्ति । जलानि । शनैः स्तनभरायासोपद्रुतत्वात् मन्दं मन्दम् । संगृह्णते-आददति । हंसाः-गृहे पोषिता हंसाः । तृषा-मध्याह्नसन्तापजनितपिपासया । जलस्य अर्थनं-अपेक्षणम्, तस्य मिषात्-व्याजात् । आसां-परिचारिकाणाम् । विलासात्-ललितगमनादिरूपविभ्रमात् । गतिं-रमणीयं पदविन्यासक्रमम् । तथा शिखिनः-तृषा जलार्थनायागता मयूराः । केशभरश्रियं-तत्स्त्रीणां कमनीयकुन्तलकलापशोभां च । स्नेहात्-गृहारामे सहवासपरिचयजनितप्रीत्या । इमाः-स्त्रीः ।

अत्र च हिरण्मयस्य गृहस्थूणस्य पार्श्वभागे—

अभ्यङ्गाय सुवर्णपात्रनिहितं तैलं वलत्सौरभं
विस्तीर्णस्फुटकर्णिकारकुसुमे येनाभिभाव्यम् मधु ।
न्यस्तं चन्दनदारुनिर्मितमिदं कूर्मासनं चासितुं
यत्पृष्ठे पृथिवीव च त्रिगुणिता कौशेयशाटी स्थिता ॥१२॥

---

याचितुमिव । आयान्ति-स्नानगृहाभिमुखमागच्छन्ति । तासां मनोहरः पदविन्यासविभ्रमो हंसानां सरसगतिविशेषरामणीयकम्, तासामतिनिबडस्निग्धकेशकलापस्य लावण्यं मयूरशिखाकलापकमनीयतां चातिशेत इति भावः । परमरमणीयरूपाः परिचारिकाः संप्रति जलकलशहस्ताः सुखस्नानाय प्रभुं प्रतिपालयन्त्यः स्नानगृहे सज्जास्तिष्ठन्तीति पद्यस्य सामान्यं तात्पर्यम् ॥ ११ ॥

**अत्रचेति** । अस्मिंश्च स्नानगृहे । हिरण्यस्य विकारो हिरण्मयं-स्वर्णमयं तस्य; हिरण्यशब्दान्मयट् । दाण्डिनायनेत्यादिवन्निपातः । गृहस्यावलम्बनार्था स्थूणा गृहस्थूणं-गृहस्तम्भः तस्य; अभिधानात् क्लीबत्वम् । पार्श्वभागे-अन्तिके ।

**अभ्यङ्गायेति** । विस्तीर्णं च तत् स्फुटं चेति विशेषणोभयपदकर्मधारयः; विशालं विकसितं चेत्यर्थः; कर्णिकारकुसुमं-द्रुमोत्पलाख्यं विशालं स्वर्णच्छायं पुष्पं तस्मिन् । विद्यमानमिति शेषः । मधु-मकरन्दम् । येन-तैलेन । अभिभाव्यं-तिरस्कार्यम् । संस्कारविशेषसमुपजनितवर्णसौरभ्यादिविशेषेण कनकवर्णकर्णिकारकुसुमादपि रमणीयतरस्य हिरण्मयस्याधारपात्रस्य सम्बन्धेन च कर्णिकारकुसुमस्थस्य मधुनः सौरभ्यात् शोभायाश्चापि तैलस्यास्य सौरभ्यं शोभा चातिरिच्यत इति भावः । तादृशं वलत्-मुहुर्मुहुरुद्गच्छत्, सौरभं परिमलं यस्मात् । (चलत्सौरभमिति च पाठः ।) तैलं-अभ्यञ्जनयोग्यं तैलम् । सुवर्णपात्रे-हिरण्मयभाजने, निहितं-स्थापितम् । आस्त इति शेषः । चन्दनदारुनिर्मितम् । इदं-पुरो दृश्यमानम् । कूर्मासनं-कमठाकारं पीठं च । आसितुं-उपवेष्टुम् । न्यस्तं-स्थापितमास्ते । यस्य पीठस्य पृष्ठे-उपरीति यावत् । त्रिगुणिता-त्रिधा संपुटिता । कौशेय-

अपि च नवाम्बुदश्यामलायां विपुलायतायामिन्द्रनीलमणिनिर्मितायां हर्म्यभित्तौ प्रतिफलितवपुश्चेटीजनस्तटिल्लताविभ्रममवलम्बते । अत्रैव—

कञ्चुल्या दृढसंयतस्तनभरा हारं गले कुर्वती
पश्चाल्लम्बितमम्बरं च जघने काञ्च्या दृढं बध्नती ।
स्वेदाम्भःकणमञ्जरीं च मृजती चेलाञ्चलेनानने
चेटीष्वेकतमेयमद्य यतते कर्तुं तवाभ्यञ्जनम् ॥ १३ ॥

---

शाटी-क्षौमवस्त्रं च । पृथिवीव । स्थिता । पृथिवी महाकूर्मस्य पृष्ठे तिष्ठतीति, सा च भूर्भुवस्स्वर्लोकात्मना त्रिधा स्थितेति च पौराणिकः समयः ॥ १२ ॥

अपिचेति । नवः-नूतनः, अम्बुदः-मेघः, स इव श्यामलायां-नीलवर्णायाम् । नवशब्दो मेघस्य सलिलवर्षात् पूर्वावस्थां सूचयति; तदानीमेव तस्य जलभरितत्वात् श्यामलवर्णत्वं सुतरां भवति । विपुला च सा आयता चेति विशेषणोभयपदकर्मधारयः; विस्तृतोन्नता, तस्याम् । इन्द्रनीलमणिभिः निर्मितायाम् । हर्म्यस्य-राजगृहस्य भित्तौ । प्रतिफलितं-प्रतिबिम्बितं वपुः यस्य सः । चेटीजनः । तटिल्लतानां-लतावदवनतदीर्घाणां विद्युताम्, विभ्रमं-भ्रान्ति विलासं वा । (विभ्रमस्थाने विन्यासमिति पाठान्तरम्) । अवलम्बते ।

कञ्चुल्येति । अत्रैवेति शब्दौ पूर्ववाक्यात् अत्रान्वेतव्यौ । अत्रैव-अस्मिन्नेव स्नानगृहे । चेटीषु-परिचारिकासु । एकतमा-एका चेटी । कञ्चुल्या-युवतिधार्येण क्षुद्रकञ्चुकेन । दृढं-निश्चलं यथा तथा, संयतः-सम्यग्बद्धः, स्तनयोः भरः-घनविवृद्धं स्तनयुगलमिति यावत्; यया सा । हारं-मुक्तावलीम् । गले-कण्ठे । कुर्वती-यथा नेतस्ततः समुल्लुठेत् तथोच्चैर्नि बध्नती । पश्चात् । लम्बितं-श्लथीभूय लम्बमानम् । अम्बरं-परिधानं च । जघने-कटिपार्श्वे । काञ्च्या-मेखलादाम्ना सह । दृढं यथा तथा । बध्नती । आनने-वदने । समुत्पन्नमिति शेषः । स्वेदाम्भसां कणाः-बिन्दवः, तेषां मञ्जरीं-आवलिम् । चेलाञ्चलेन । मृजती

**राजा**—दौवारिक, मन्त्री बिदूषकश्च कृतोचितव्यापारो न वेति विचार्यताम्। अहमप्यत्र स्नात्वा कृतशिवार्चनो भोजनाय यतिष्ये।

**दौवारिकः**—तह (तथा)। (इति निष्क्रान्तः।)

**राजा**—(स्मृतिमभिनीय) अये महानुभावा शिवभक्तिः; यस्याः प्रसादाद्भगवन्तं साम्बं साक्षात्कृत्य तदीयकरुणाकटाक्षामृतनिःष्यन्दकन्दलिताखिलपुमर्थोऽपि सन् संप्रति प्राकृतानर्थनिवर्तकान् रसगन्धकानासाद्य तावतैव कृतकृत्यंमन्यो मूढोऽहं विस्मृतवानस्मि तां भगवतीं शिवभक्तिम्। अहो धिक् प्रमादम्। नूनं सा भगवती मां कृतघ्नं मन्येत। (निःश्वस्य)

---

सती। (भजतीति पाठो न साधुः।) तव-जीवराजस्य। अभ्यञ्जनं-सुखेन मर्दनपूर्वकं तैलादिलेपनम्। कर्तुम्। अद्य यतते-संप्रति सज्जा विद्यत इत्यर्थः। तव तैलाभ्यञ्जनादिकं विधाय स्नानं निर्वर्तयितुं काचित् परिचारिका बद्धपरिकरा स्नानगृहे त्वां प्रतिपालयतीति भावः॥ १३॥

दौवारिकेति। मन्त्री विदूषकश्च। कृतोचितव्यापारः-पूर्वोक्तरीत्या विदूषकस्योचितो व्यापारः भोजनम्। मन्त्रिणस्तु तद्भोजननिर्वर्तनायान्तःपुरे राजनियोगानुरोधेन निवेदनम्, सामन्तभूपालानां संभावनापुरस्सरं स्वस्वस्थानेभ्यः प्रेषणं च; एवं कृतः-निर्वर्तितः, उचितः-तत्तद्योग्यः-व्यापारः-कर्म येन सः। अत्र-स्नानगृहे। स्मृतिमिति। स्मृतिं-स्मरणम्; अभिनीय-विस्मृतं कमपि विषयं स्मृतिपथमानयन्निव प्रकटीकृत्य। स्मृतिरेव जीवस्य भक्त्या संयोजने सख्यवृत्तिमाचरति; इदं च पुरतो व्यक्तं भविष्यति। शिवे भक्तिः शिवभक्तिः-इदमेकं नाटकपात्रम्। महान् अनुभावः-प्रभावः यस्याः सा। तमनुभावमेव विवृणोति यस्या इति। साम्बं-पार्वतीसहितं शिवम्। साक्षात्कृत्य-प्रत्यक्षीकृत्य। तदीयः-साम्बशिवसम्बन्धी, यः करुणाकटाक्षः स एवामृतनिष्यन्दः-सुधाधारापातः तेन कन्दलिताः-आविर्भूताः, पुमर्थाः-धर्मादयश्चतुर्विधपुरुषार्थाः यस्य सः। अहं

दृङ्मात्रदर्शितनिजप्रथितप्रभावा प्रह्लादभूमसुरभूरुहमूलभूता ।
जन्मान्तरीयतपसां परिपाकतः सा प्राप्तापि दैवहतकेन मया विमुक्ता ॥१४॥

तामेव हा स्मितसुधामधुराननेन्दुं भक्तिं तथा निरुपमामसकृद्विचिन्त्य ।
स्नातुं च भक्तमशितुं शयितुं विहर्तुं शक्नोमि नाहमधुना परितप्यमानः ॥१५॥

---

तथाविधोऽपि सन्; एवं शिवभक्तिप्रसादादेव शिवसाक्षात्कारस्य तदनुग्रहस्य पुरुषार्थसार्थस्य च पात्रत्वमधिगत्य धन्यो भवन्नपीति भावः । संप्रति-शिवभक्त्या असान्निध्यावसर इति यावत । प्राकृतानर्थाः-प्रकृतिसम्बन्धिन्यो विविधामयरूपाः पीडाः, तेषां निवर्तकान्-निषूदनोपकरणभूतान् । अहो इति दुःखे विस्मये च । महत्तरे सकलपुमर्थसाधकरूपे फले समुपनतेऽपि तन्निरस्य क्षुद्रे रस-गन्धकसाधन-कर्मणि प्रवृत्तोऽहमिति दुःखं विस्मयश्च । निःश्वस्येति अनुतापसूचकं कर्म ।

**दृङ्मात्रेति** । प्रथितः-प्रसिद्धश्चासौ प्रभावश्च प्रथितप्रभावः; निजश्चासौ प्रथित-प्रभावश्च निजप्रथितप्रभावः; दृङ्मात्रेण-कटाक्षपातमात्रेण, दर्शितः-निरूपितः, निजप्रथितप्रभावः-शिवसाक्षात्करणरूपमहिमा यया सा । प्रह्लादभूमा-आनन्दातिशयः, स एव सुरभूरुहः-कल्पतरुः; शिवभक्तिसमुद्भूतः प्रह्लादातिशयः कल्पतरुरिव सकलाभीप्सितश्रेयसां साधक इति भावः; तस्य सुरभूरुहस्य मूलभूता—आश्रितजनानां निखिलाभीष्टवितरणपुरस्सरं परमानन्दजननीति यावत् । सा-शिवभक्तिः । जन्मान्तरीयतपसां-पूर्वेषु बहुषु जन्मसु आचरितानां चान्द्रायणादिव्रतविशेषाणाम् । परिपाकतः-परिणामवशात् । प्राप्ता-अधिगतापि । हत एव हतकः, स्वार्थे कः; दैवेन हतकः तेन; दौर्भाग्याभिभूतेनेत्यर्थः । मया । विमुक्ता-विसृष्टा; दैवदुर्विपाकात् तां सर्वथा व्यस्मार्षमिति भावः ॥ १४॥

पुनः शिवभक्तिमेव स्मृत्वानुशोचति **तामेवेति** । हा-विषादे । स्मितं सुधेव स्मितसुधा, तया मधुरः आननेन्दुः-चन्द्रसदृशमुखं यस्यास्ताम् । तथा निरुपमां-असाधारणप्रभावसम्पन्नाम् । तां भक्तिं-शिवभक्तिमेव । असकृत्-पदे

हृदयानन्दविधात्रीं भक्तिं तामन्तरा न मे सौख्यम् ।
आसारेण विना किं घर्मम्लानस्य शाखिनस्तृप्तिः ॥ १६ ॥

तत् कथमहं प्राकृतमिमं व्यासङ्गं परित्यज्य तामेव परमानन्दकन्दलीमनुभूय कृतार्थो भूयासम् । (इति सचिन्तस्तिष्ठति ।)

(ततः प्रविशति स्मृतिः ।)

---

पदे । विचिन्त्य । परितप्यमानः-अनुतापेन नितरां दुःखायमानः । अहम् । अधुना-शिवभक्तिवैधुर्यावसरे । स्नातुम् । भक्तं-आहारम् । अशितुं-भोक्तुम् । जीवितधारणार्थं फलक्षीरादिकमप्रधानं किमप्यशनमाप्तजनकृतबलात्कारेण कदाचिदुपयुक्तमपि प्रधानस्यान्नस्याभ्यवहारे न कथंचिदपि प्रवृत्तिरस्तीति विशिष्य सूचनाय भक्तमिति शब्दः प्रयुक्तोऽत्र । शयितुं-शयने निद्रामधिगन्तुम् । विहर्तुं-क्रीडितुं च । न शक्नोति । न कस्मिंश्चिदपि कर्मणि मम मनः प्रवर्तत इति भावः । (भोक्तुमशितुमिति पाठो न साधुः ।) ॥ १९ ॥

शिवभक्तिवैधुर्योपनतं वैक्लब्यमेवान्यथोल्लिखति हृदयानन्देति । हृदयस्य-मनसः, आनन्दं विदधातीति हृदयानन्दविधात्री ताम् । तां भक्तिं तत्तादृशप्रभाववतीं शिवभक्तिम् । अन्तरा-विहाय । मे सौख्यं न-संसृतिसंतापखिन्नस्य मम शिवभक्तिमनवाप्य न कथंचिदपि मनसो निर्वृतिर्निष्पद्येत । निर्वृतिराहित्यमेव निरूपयति दृष्टान्तेन आसारेणेति । घर्मम्लानस्य-ग्रीष्मोष्मपरिप्लुष्टस्य । अत एव निरवधिकसलिलसेकमपेक्षतः । शाखिनः-वृक्षस्य । (शालिन इति पाठस्त्वसाधुः ।) आसारेण विना-नवाम्बुदान्निपतच्छीतलबहुलजलवर्षेण विना । किं तृप्तिः-तर्पणम् । स्यादिति शेषः । स कथंचिदप्यन्यथा न तृप्यति, तद्वदहमपीति भावः ॥ १६ ॥

तदिति । प्राकृतं-पृथग्जनोचितं प्रकृतिसम्बन्धिनम् । इमं व्यासङ्गं लौकिकेषु विषयेषु निरतिशयासक्तिम् । कथं-केनप्रकारेण । परित्यज्य-प्राकृतकार्यतत्परतामात्यन्तिकतया निरस्य । परमानन्दं-निरवधिकब्रह्मानन्दसुखम्, कन्दलयति-

**स्मृतिः**—अह्मो, भअवदीए शिवभत्तीए विओएण बलिअं उक्कण्ठिदो राआ संपदं ण्हाणभोअणव्वावारं वि णाणुमण्णेदि। ता तुरिअं गदुअ भअवदीए इमं वुत्तन्तं णिवेदिअ ताए णं संयोजइदुं यतिस्सं ति पुण्डरीअपुरं गदुअ, तत्थ सद्धाए सेविज्जन्तीं भअवदिं देट्ठूण सद्धामुहेण तह संविधाणं कदुअ आअदह्मि। ता राअसमीवं गदुअ एदं णिवेदम्मि। (इति परिक्रम्योपसृत्य च) जेदु जेदु देवो। [अहो, भगवत्याः शिवभक्तेर्वियोगेन बलवदुत्कण्ठितो राजा सांप्रतं स्नान-भोजनव्यापारमपि नानुमन्यते। तत् त्वरितं गत्वा भगवत्यै इमं वृत्तान्तं निवेद्य तयैनं संयोजयितुं यतिष्य इति पुण्डरीकपुरं गत्वा, तत्र श्रद्धया सेव्यमानां भगवतीं दृष्ट्वा श्रद्धामुखेन तथा संविधानं कृत्वा आगतास्मि। तद्राजसमीपं गत्वा इदं निवेदयामि। जयतु जयतु देवः।]

---

अभिवर्धयतीति निरवधिकब्रह्मानन्दकन्दलीम्। (परमानन्दलीलामिति पाठान्तरम्) तां-शिवभक्तिमेव। अनुभूय-शिवभक्तिप्राप्त्या परमेश्वराधीनचित्तवृत्तिः सन् तद्गुणान् अनुसन्धायेति भावः। कृतार्थः-अधिगतजन्मसाफल्यः। सचिन्तः-शिवभक्तिसमधिगमोपायचिन्तनाकुलमना इत्यर्थः। ततःप्रविशति स्मृतिरिति। स्मृतिः-भूतार्थविज्ञानम्। साप्यत्र एकं पात्रम्। "स्मृतिर्नाम सुख-दुःखकृतानां भावानामनुस्मरणम्, सा स्वास्थ्यजन्यरात्रिनिद्राच्छेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिर्विभावैरुत्पद्यते; सा च शिरःकम्पनावलोकन-भ्रूसमुन्नमन-प्रहर्षादिभिरनुभावैरभिनीयते" इति भरतः। जीवेन चिन्तारूपनाटितकेन स्मृतिर्नाम विषयः सूचितः; अतः सपदि स्मृतिनाम्नः पात्रस्य यथालक्षणमत्र प्रवेशः। स्मृतेः सान्निध्यात् साहाय्येन च विस्मृतायाः शिवभक्त्याश्च सान्निध्यं समुपनमेदिति कृत्वा स्मृत्याः सम्बन्धोऽत्र प्रकल्पितः।

**अह्मो** इति। भगवत्याः-षडैश्वर्यसंपन्नायाः; "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति भगशब्दार्थः।

राजा—(दृष्ट्वा) अये कथमियं स्मृतिः। सखि, दिष्ट्या चिरादागतासि।

स्मृतिः—देव्व, भअवदिं शिवभत्तिं उद्दिसिअ तुह एआरिसिं बलवदिं उक्कण्ठं दिट्ठूण—[देव, भगवतीं शिवभक्तिमुद्दिश्य तवैतादृशीं बलवतीमुत्कण्ठां दृष्ट्वा]—

(संस्कृतमाश्रित्य)

---

बलवदुत्कण्ठितः-विश्लेषासहनतया सुतरां खिन्नः। स्नान-भोजनव्यापारं-शरीरशुद्धि-जीवितधारणादिसमुचितं दैनन्दिनं कृत्यमपि। नानुमन्यते-निर्वर्तयितुं नैवेच्छति। तत्-जीवराजेन एतादृशावस्थान्तरस्याधिगतत्वात्। भगवत्यै-पूर्वोक्तप्रभाववत्यै शिवभक्तये। इमं वृत्तान्तं-शिवभक्तिवियोगतो राज्ञः समुपनतमवस्थान्तरम्। निवेद्य-विज्ञाप्य। तया-शिवभक्त्या। एनं-राजानम्। यतिष्य इति। स्मृत्याः प्रयत्नरूपोऽयमभिसन्धिः; अतो यतिष्य इत्यस्य स्मृतिरहमिति कर्ता। पुण्डरीकपुरं गत्वा-स्मृतिकर्तृकमिदं गमनम्। श्रद्धया सेव्यमानां-उपचर्यमाणाम्; श्रद्धा चात्र शिवभक्त्याः सखी परिचारिका वा; श्रद्धापुरस्सरभक्त्या एव फलावहत्वं सर्वत्र प्रसिद्धम्। दृष्ट्वा-दर्शनमपीदं स्मृतिकर्तृकम्। श्रद्धामुखेन। तथा-पूर्वनिर्दिष्टरीत्या। संविधानं-शिवभक्त्या सह जीवराजस्य संयोजनकार्यनिर्वहणम्। कृत्वा-यथोचितं घटयित्वा। आगतास्मि-ततः प्रतिनिवृत्तास्मि। उपसृत्य-राज्ञः सविधं गत्वा। दृष्ट्वेति। आकस्मिकागमनजनितविस्मयद्योतकोऽयम् अये इति शब्दः। कथमियं स्मृतिः-अपि नाम स्मृतिरेषा समागतेति भावः। सखि-शिवभक्त्याः संस्मरणाय जीवस्य साहाय्यविधानात् स्मृतेः सखीत्वमत्र संपद्यते। दिष्ट्या-भाग्यवशात्। चिरादागतासि-बहोः कालादनन्तरं प्राप्तासि। राज्ञो बलवतीमुत्कण्ठां दृष्ट्वा किमनन्तरं कृतमिति स्मृतिः पद्येन संस्कृतमाश्रित्यानन्तरं विवृणोति।

यातं देव मया जवेन महता तत् पुण्डरीकं पुरं
श्रद्धायै विनिवेदितं च भवदीयौत्कण्ठ्यमेतादृशम् ।
तां त्वद्विस्मृतिकोपितामिव मुहुः संप्रार्थ्य भक्तिं तयै-
वागत्यानुजिघृक्ष्यसे ननु यथा श्रद्धा समाधात् तथा ॥ १७ ॥

**राजा**—(सहर्षोत्कर्षम्) कथमेतावदनुगृहीतः । अहो प्रसादातिशयो मयि भगवत्याः । कथय सखि, किमत्रैवागमनानुग्रहं करिष्यति भगवती ।

**स्मृतिः**—अथ इं । [अथकिम् ।]

(ततः प्रविशति श्रद्धया सह भक्तिः ।)

---

**यातमिति**, देव-प्रभो । मया-स्मृत्या । महता जवेन-अतिवेगेन । तत्-पूर्वनिर्दिष्टं प्रसिद्धम् । पुण्डरीकं पुरं-पुण्डरीकनगरम् । यातं-गतम्; कर्मणि क्तः । तस्या अतित्वरितस्य गमनस्य शिवभक्तिवियोगजनितजीवराजदुरवस्थैव कारणम् । एतादृशं-अद्यान्वक्षमनुभूयमानम् । भवदीयौत्कण्ठ्यम् । श्रद्धायै-शिवभक्तिसख्यै । विनिवेदितं-विज्ञापितं च । त्वद्विस्मृत्या-त्वत्कृतभक्तिविस्मरणेन, कोपितामिव स्थिताम् । तां भक्तिं-शिवभक्तिम् । मुहुः-बहुवारम् । संप्रार्थ्य-सान्त्वोपायेन सुतरामनुनीय । यथा-येन प्रकारेण । तया-भक्त्यैव । आगत्य-स्वयं समागत्य । अनुजिघृक्ष्यसे-अनुगृहीतो भविष्यसि । तथा-तादृशसान्त्वोपायेन । श्रद्धा । ननु समाधात्-कोपव्यपनोदपूर्वकमसान्त्वयत् ॥ १७ ॥

**कथमिति** । स्वयमागत्य भक्तिरनुगृहीष्यतीति प्रथमतः स्वस्य परमोत्कण्ठितस्य विस्रम्भाभावात् कथमेतावदनुगृहीतोऽहमिति सविस्मयोक्तिरियम् । किमत्रैवेति वाक्यमपि प्रमोदातिशयेन समुपचितमौत्सुक्योद्रेकमेव विशदयति । अथकिं-बाढमित्यर्थः । भक्तिः-शिवभक्तिः; भक्तिर्नाम-पूज्येषु परमोऽनुरागः; भगवति या परानुरक्तिः सा भक्तिः । "अथातो भक्तिजिज्ञासा, सा परानुरक्तिरीश्वरे" इति शाण्डिल्यसूत्रम् । श्रद्धा नाम सच्छास्त्रप्रतिपादितेऽर्थे दृढप्रत्ययः । "प्रत्ययो धर्मकार्येषु नृणां श्रद्धेत्युदाहृता" इति स्मृतिः । "वेदबोधितफलावश्यम्भावविनिश्चयः श्रद्धा" इति चाहुः । इमौ द्वौ पुरुषगुणौ पात्रत्वेनेह प्रविशतः ।

**भक्तिः**—सखि श्रद्धे, सहजनिस्सङ्गनिर्मलस्वभावोऽपि देवो जीवस्तथा सर्वपुमर्थप्रसवित्रीमपि मां विसृज्य बुद्धिपारवश्यमापन्नो विरसविषयाभिमुख एव संवृत्तः ।

**श्रद्धा**—अंब, देवीए गुणमईए दुरच्चआए माआए कुडिलाए एसो अणादिसिद्धो सहावो जं विवेइणं वि पुरिसं मोहिअ विरसविसअप्पवणं करेइ। तह अ कदिदं अहिजुत्तेहिम् । [अम्ब, देव्या गुणमय्या दुरत्ययाया मायाया: कुटिलाया एषोऽनादिसिद्धः स्वभावो यद्विवेकिनमपि पुरुषं मोहयित्वा विरसविषयप्रवणं करोति । तथा च कथितमभियुक्तैः ।]—

(संस्कृतमाश्रित्य)

---

सहजेति। देवो जीवः-जीवराजः । निस्सङ्गः सङ्गराहित्यम, फलेऽभिनिवेशाभावः; प्राकृतेषु सुखेषु आसक्तिराहित्यं च; "वेदोक्तमेव कुर्वाणो निस्सङ्गोऽर्पितमीश्वरे। नैष्कर्म्यसिद्धिं लभते" इत्युक्तरीत्या नैष्कर्म्यसिद्धिसूचकमिदं निस्सङ्गत्वम्; अथवा प्रकृतिदोषसंबन्धरहितः; अनेनैवाशयेन "पुंसः सङ्गसमुज्झितस्य" इति कृष्णमिश्रेणोक्तम; निर्मलः-दोषरहितः, असंसृष्टपापः; निस्सङ्गश्च निर्मलश्च निस्सङ्गनिर्मलौ; तद्रूपः स्वभावो यः स निस्सङ्गनिर्मलस्वभावः; सहजो निस्सङ्गनिर्मलस्वभावो यस्य सः; तथाविधोऽपि सन्। सर्वेषामपि पुमर्थानां-धर्मार्थकाममोक्षाख्यानां पुरुषार्थानाम्, प्रसवित्रीं-उत्पादनशीलामपि। मां-शिवभक्तिम्। श्रेष्ठानां पुमपत्यानां प्रसवित्री महिषीत्यपि ध्वन्यते। बुद्धेः-तदाख्याया अन्याया स्त्रियः, पारवश्यं-पराधीनताम। आपन्नः-प्राप्तः। विरसाः-परिणामे जुगुप्सावहाः। ये विषयाः-शब्द-स्पर्श-रूपादयः, तेषाम् अभिमुख एव-आसक्तचित्त एव। संवृत्तः-अभूत्। "स्नातुं ते परिचारिकाः स्तनभरश्रान्ताः" इति, "कञ्चुल्या दृढसंयतस्तनभरा" इत्येवमादिभिः पूर्वं स्नानभूमिनिर्वर्णने वर्णितरीत्या ये शृङ्गारसंबन्धिनः प्राकृता विपाकविरसा विषयरसा-

"जरठापि काचिदसती संदर्श्य गुणान् परस्य पुरुषस्य ।
सङ्गं विनैव हसितैः सर्वस्वं हरति हन्त किं ब्रूमः" ॥ इति ॥१८॥

---

स्तेष्वेव जीवराजः कथंचिदासक्त इति वाक्यमिदं सूचयति। **अम्बेति**। गुणमय्याः-सत्त्वरजस्तमोरूपगुणत्रयस्वरूपायाः। "मायां तु प्रकृतिं विद्यात्" इति माया-प्रकृत्योरभेदः। मायानाम्न्याः प्रकृतेः सत्त्वरजस्तमांसीति त्रयो धर्माः। "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्तिता। केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च" इति श्रीधरस्वामी। दुरत्ययायाः 'मम माया दुरत्यया' इति भगवतैवोक्तरीत्या दुर्निवारशक्तिसंपन्नायाः। कुटिलायाः-शाश्वतश्रेयस्साधने निवृत्तिमार्गे निरपेक्षतां कृत्वा विपाकविरसे प्रवृत्तिमार्गे च प्रजानां विशिष्य प्रवर्तकत्वात् विलक्षणविकृतस्वरूपायाः। विरसेषु विषयेषु-लौकिकसुखेषु, प्रवणं-आसक्तम्। एष च प्रकृत्याः स्वभावो जीवनियमने नेदंप्रथमतया समुत्पन्नः, किन्तु अनादिसिद्धः। विषयोऽयं

"सततधृतिरप्युच्चैः शान्तोऽप्यवाप्तमहोदयो-
ऽप्यधिगतनयोऽप्यन्तः स्वच्छोऽप्युदीरितधीरपि ।
त्यजति सहजं धैर्यं स्त्रीभिः प्रतारितमानसः
स्वयमपि यतो मायासङ्गात् पुमानिति विश्रुतः" ॥

इति प्रबोधचन्द्रोदयोक्तं विषयतत्त्वं भावतो विशदयति।

अभियुक्तोक्तिमेवोदाहरति **जरठापीति**। अस्य श्लोकस्यायमापाततोऽर्थः। काचित्-अपूर्वा। असती-कुलटा। जरठापि-वृद्धापि। काचित्-अनितरसाधारणशक्तिमती स्त्रीति भावः। गुणान्-नर्मभाषण-हाव-भावादिकान् शृङ्गारभावान्। संदर्श्य-बहिः प्रकटस्य। सङ्गं-संयोगम्। विनैव। हसितैः-अनुरागद्योतकैः हेलार्थहासैरेव। परस्य पुरुषस्य-धनिकस्य-जारपुरुषस्य। सर्वस्वं-अशेषमपि अर्थजातम्।

**भक्तिः**—भवतु, स खलु परमेश्वरस्यैवांशः। अतस्तस्मिन् मम दृढः प्रेमातिशयः।

---

हरति। हन्त किं ब्रूमः-केवलं हाव-भाव-हसितादिभिर्बाह्यश्रृङ्गारचेष्टाभिरेव स्वयं जरठापि परिरम्भादिदेहस्पर्शस्य चावकाशमदत्त्वैव नैपुण्येन निश्शेषमपि कस्यचन परपुरुषस्य धनमपहरतीत्येतदतीव नूनं विस्मयावहमेवेति भावः। एवमन्यादृश-मस्या नैपुण्यमिति सूचनार्थमेव काचिदिति शब्दः प्रयुक्तः। **परमार्थतस्त्वय-मर्थः**। असती-ब्रह्मभिन्ना, जडात्मिकेति यावत्; मिथ्यास्वरूपिणीति अद्वैतिनः। जरठा-पुराणापि। "सा ब्रह्मभिन्ना प्रकृतिर्माया नित्या सनातनी" इति हि तस्याः स्वरूपमुक्तम्। काचित्-अनिर्वचनीयस्वरूपा; अघटितघटनापटीयसीति यावत्। मायेति शेषः। गुणान्-सत्त्व-रजस्तमस्संज्ञकान् त्रीन् गुणान्। संदर्श्य-जगत्सृष्टि-विषये निरूप्य। परस्य पुरुषस्य-परमात्मनः। सङ्गं विनैव-'असङ्गोऽयं पुरुषः' इति श्रुत्युक्तरीत्या विनैव पुरुषसंबन्धम्। हसितैः सर्वस्वं हरति-तं स्वकीयेन विचित्रैः प्रभावैः मोहयित्वा तस्य ज्ञानबलैश्वार्यादिकं सकलमपि नैसर्गिकं गुणजातं प्रसह्यापहरति। अथवा सङ्गं विनैव-कूटसङ्गं विहायैव। हसितैः-इन्द्रियार्थ-प्रपञ्चनादिभिर्लौकिकैरापातसुखप्रदैर्विषयैः। सर्वस्वं हरति-आत्मज्ञानादिकमपहरति; अर्थात् "कूटस्थासङ्गमात्मानं जडत्वेन करोति सा" इति वाराहोक्तप्रकारेण (वाराहे मायाचक्रे) पुरुषं जडीकरोतीति भावः। यद्यप्यात्मा प्रकृतिवशं गतः कर्मफलं भुङ्क्ते तथापि स निर्लिप्त एवोच्यते। हन्त किं ब्रूम इति पूर्ववत्। इति-एवं खलु वचनमभियुक्तानाम्। (काचिदसती संदर्श्य इति स्थाने काचिदास्ते संदर्भ्य इति, हसितैः इत्यत्र सह तैः इति च पाठभेदौ दृश्येते।) ॥ १८ ॥

**भवत्विति**। भवतु-तथैवास्तां नाम। तथापीति शेषः। सः-जीवः खलु। परमेश्वरस्यैवांशः; अद्वैततत्त्वानुरोधेन जीवपरमेश्वरयोरभेदाध्यवसायः क्रियतेऽनेन। अतः। तस्मिन्-जीवे।

सत्यज्ञाननिधिः सदैव सहजानन्दस्वभावोऽप्ययं
देवो बुद्धिवशं गतः पुरमिदं त्रातुं व्यवस्यत्यहो ।
अस्त्वेतद्ध्युपयुक्तमात्मकलने तस्मान्निरस्तामयं
निश्चिन्तं पुनरीशतत्परममुं कुर्यामभीष्टाप्तये ॥ १९ ॥

---

जीवे दृढप्रेमातिशयप्रसक्तेः सोपपत्तिकं विषयं प्रदर्शयति सत्यज्ञाननिधिरिति । अयं देवः-जीवः । सदैव । सत्यस्य ज्ञानस्य च निधिरिव निधिः आकरभूतः । सहजः-नैसर्गिकः, आनन्दस्वभावो यस्य सः; तथाविधः सन्नपि; आनन्दमयोऽपि सन्नित्यर्थः । जीवः शाश्वतो ज्ञानानन्दस्वरूप इति वेदान्तिनो वदन्ति । बुद्धेः-लौकिकबुद्धेः, वशं गतः-अधीनतामधिगतः सन् । इदं पुरं-शरीराख्यं नगरम् । त्रातुं-रक्षितुम् । व्यवस्यति-यतते । एतस्य नश्वरस्य प्रकृत्या कश्मलस्य च शरीरस्य कृते महान्तमुद्यममद्य कुरुते । अत एव अहो इति विस्मयं सूचयति । एवं खलु प्रबोधचन्द्रोदयेऽपि राजा विवेको दूयमानो वदति—

"चिरं चिदानन्दमयो निरञ्जनो जगत्प्रभुर्दीनदशामनीयत" इति ।

वनिताया वशं गतो लौकिके नश्वरे श्रेयसि संसक्तो जीवः शाश्वतमलौकिकं निःश्रेयसुखमुपेक्षते, यत एव खलु शिवभक्तिं मां स व्यस्माषींदिति भावः । अस्तु-तथाप्येवमास्तां नाम । एतत्-शरीररूपपुरत्राणनं हि । आत्मकलने-शरीरपरिपालने; "प्रसादमात्मीयमिवात्मदर्शः" (रघुवं-७-६९) इत्यत्रेव आत्मन्शब्द इह देहवाची । उपयुक्तं-प्रयोजनावहं भवति । तस्मात्-देहपरिपालनोपयुक्तत्वाद्धेतोः । निरस्तामयं-व्यपगतसकलरोगम् । अत एव निश्चिन्तं-शारीरव्यथाजनिताधिरहितं च स्थितम् । (अस्त्वेतद्व्यपयुक्तमिति पाठे, अस्य जीवस्य आत्मकलनेविषये समुपनते तस्मात्-भगवद्ध्यानात् । व्यपयुक्तं-उपरतम् । निरस्तामयम् । इत्यन्वेतव्यम् । ) आमुष्मिकनिःश्रेयससाधनस्य "शरीरमाद्यं खलु धर्मसाधनम्" इत्युक्तरीत्या नीरोगताविशिष्टं शरीरं खलु प्रथमं साधनं धर्मस्येति भावः । अमुं-

**श्रद्धा**—जुज्जइ एदं णिरुपाधिणिरवधिकरुणाए भअवदीए । ता एहि तं जेव्व अणुगहीदुम् । (इति मार्गमुपदर्शयति) इदो इदो भअवदी । [युज्यत एतन्निरुपाधिनिरवधिकरुणाया भगवत्याः । तदेहि तमेवानुग्रहीतुम् । इत इतो भवती ।]

**राजा**—(श्रुत्वा) अहो, अमृतासारसरसः कोऽप्यालापः कर्णविवरमाप्याययति । सखि, किमागतवती भगवती ।

**स्मृतिः**—को संदेहो । [कः सन्देहः ।]

**राजा**—(पुरोऽवलोक्य) अहो,

---

जीवम् । अभीष्टाप्तये-अपवर्गरूपमनोरथस्य प्राप्तये । पुनः । ईशतत्परं-परमेश्वरभजनासक्तम् । कुर्याम् । न किमप्यद्य छिन्नम्; आरोग्यसाधनानन्तरं पुनरपवर्गसाधनाय भक्तिपरिग्रहो भविष्यत्येवास्येति भावः । षष्ठाङ्के वक्ष्यमाणं निःश्रेयससाधकं ज्ञानशर्मसचिवस्यापवर्गसंबन्धिनमुपदेशमेष सूचयति विषयः ॥ १९ ॥

जुज्जईति । एतत्-मदपवर्गप्रापणाभिलाषित्वम् । निरुपाधिः-कारणरहिता, निरवधिः-अपरिमिता च करुणा यस्यास्तस्याः । भगवत्याः-शिवभक्त्याः । युज्यते-युक्तमेव भवति । निरर्गलस्य निर्हेतुकस्य च कारुण्यस्येदं सुतरां समुचितं यदनुकम्पनीयस्य प्राणिनः परिपालने स्वयं प्रवृत्तिर्नामेति भावः । तं-जीवमेव । (इदो इदो भअवदी इत्येतद्वाक्यं क्वचित्पुस्तके नास्ति; श्रुत्वा इति पदमपि नास्ति ।) श्रुत्वा-श्रद्धा-भक्त्योः संल्लापमाकर्ण्य । अहो इति हर्षं प्रकटयति । अमृतासारवत्-अमृतधारासेकवत्, सरसः-श्रुतिसुखः । (अमृतासारमय इति पाठान्तरम् ।) कोऽपि-अनुभूतपूर्वत्वेऽप्याह्लादातिशयसमुत्पादकत्वात् अपूर्व इव द्योतमानः । आलापः-आप्तजनकृतः संल्लापः । आप्याययति-सुतरां तर्पयति । तदालापाकर्णनसमनन्तरमेव, अनुभूतचरस्य स्वरसंयोगस्य श्रवणात् भक्तिमेवागतां मत्वा पृच्छति किं भगवत्यागतेति । कः सन्देह इति । त्वदनुग्रहविषये बद्धश्रद्धायां भक्त्यां कः संदेहस्यावकाश इत्यर्थः ।

निरुपाधिकनिस्सीमकरुणामृतवारिधिः ।
दिष्ट्या दृष्टा भगवती पुमर्थघटनापटुः ॥ २० ॥

(उत्थाय सरभसं प्रत्युद्गच्छति । श्रद्धा-भक्ती परिक्रम्योपविशतः । राजा साष्टाङ्गं प्रणमति ।)

**भक्तिः**—सकलाभीष्टभाजनं भूयाः ।

**श्रद्धा**—जेदु जेदु देवो । [जयतु जयतु देवः ।]

**राजा**—(उत्थाय) देवि, निरुपधिकरुणानिधे, अपराधिनमपि मामेवमनुगृहीतवत्यसीति सकलमनोरथानामुपरि वर्तामहे ।

अवने हि निरागसां जनानां भजतां जाग्रति दैवतान्तराणि ।
अवनाद्विहितागसोऽपि मेऽस्तु प्रथितं ते निरुपाधिवत्सलत्वम् ॥२१॥

---

**निरुपाधिकेति** । निरुपाधिका-निर्हेतुका, सा चासौ निस्सीमा-निरवधिका च निरुपाधिकनिस्सीमा, करुणा सैवामृतम्, तस्य वारिधिरिव वारिधिः-दयानिधिः । पुमर्थस्य मोक्षाख्यतुरीयपुरुषार्थस्य, घटनायां-सम्पादने, पटुः-समर्था । भगवती-भक्तिः । दिष्ट्या-भाग्यवशात् । दृष्टा-प्रत्यक्षीकृता । महता स्वकीयेनोद्यमेन या साधनीया सा स्वयमागतात्रैवेति विस्मयहर्षौ प्रकटयति अहो इति श्लोकात् पूर्वमुक्तेन पदेन ॥ २० ॥

**सकलेति** । सकलानामभीष्टानां-मनोरथानां त्रिवर्गापवर्गरूपाणाम्; भाजनं-पात्रम् ।

**अवन इति** । दैवतान्तराणि-इतरा देवताः, ब्रह्मेन्द्रवरुणादयः । निरागसां-अपराधरहितानाम् । तथा भजतां-स्तोत्रध्यानादिभिः सेवमानानाम् । जनानाम् । अवने हि-रक्षणे खलु । जाग्रति-उद्युक्ता भवन्ति । निरपराधित्वे सति स्वात्मनां सेवातत्परत्वं च दैवतान्तरैरवनविषये नियमेन सर्वत्रापेक्ष्यते । त्वं तु सर्वथान्यादृशस्वभावेति स्तौत्युत्तरार्धेन । विहितानि विधिवत् कर्तव्यकर्मवत् आचरितानि

उक्तं चात्राभियुक्तैः—

प्रवहन्ती तु दया तव परिहृतनीचोच्चवस्तुवैषम्या ।
पततु मयि स्फुटमधुना पङ्गोरुपरीव गगनगङ्गोर्मिः ॥ २२ ॥

---

आगांसि-अपराधा येन तस्य । मे-मम । अवनात्-संसृतिबन्धापोहनपूर्वकम् अपवर्गप्रापणेन रक्षणात् । ते-तव । निरुपाधिवत्सलत्वं-निर्हेतुकवात्सल्यम् । प्रथितं-सर्वविदितम् । अस्तु-भवतु ।

"जातापराधमपि मामनुकम्प्य गोदे गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्यनिर्भरतया जननी कुमारं स्तन्येन वर्धयति दष्टपयोधरापि"॥ इति

(गोदास्तुतौ) उक्तरीत्या कृतापराधेऽपि मयि तव वात्सल्यं मातुः स्वकीये बाल इव प्रवर्तत इति यावत् ॥ २१ ॥

अभियुक्तैः अत्र-अस्मिन् विषये च किमुक्तमिति प्रतिपादयति प्रवहन्तीति । तव-शिवभक्त्याः । दया तु । परिहृतं-तिरस्कृतम्, नीचोच्चवस्तूनां-निम्नोन्नतरूपपदार्थानाम्, लघुशिलाशकल-महाशैलादिरूपाणामिति यावत्; वैषम्यं-तारतम्यं यया सा, तथा भूता सती । उन्नतत्वेन अवटत्वेन च स्थितं विषमावस्थं स्थलमेकरीत्या पूरयित्वेति चार्थः । प्रवहन्ती-सर्वत्र एकरीत्या प्रवर्तमाना । नद्यां पूरोत्पीडे महाप्रवाहे सत्यभिवृद्धे सा यथा स्रोतोमार्गे विद्यमानानि लघूनि गुरूणि समस्तान्यपि वस्तुजातानि स्वसलिलौघेन विनैव तारतम्यम् आप्लावयति तथा भक्तिरपि भगवद्भक्तेषु सर्वेष्वपि वीतवैषम्यं स्वदयाप्रवाहं प्रवर्तयतीति भावः । यतस्त्वद्दयाया इयं निसर्गसिद्धा रीतिस्तस्मात् नीचेऽपि मयि सा प्रसरतु नामेति निवेदयत्युत्तरार्धेन । अधुना-अद्य; तव विस्मरणेन मयि जातानुतापे दैन्येन सति प्रार्थयतीत्यर्थः । मयि । पङ्गोः-दवीयांसं पन्थानं विलङ्घ्य गन्तुं सर्वथाप्यसमर्थस्येति भावः । उपरि-शिरसीति यावत् । गगनगङ्गोर्मिः-दिव्यगङ्गायाः स्रोत इव । स्फुटं-निरर्गलं यथा तथा । पततु-प्रसरतु । इदं च पद्यम्

" कलिक्षोभोन्मीलत्क्षितिकलुषकूलङ्कषजवै-
रनुच्छेदैरेतैरवटतटवैषम्यरहितैः ।

किञ्च,

> इयत्कृतं केन महाजगत्यामहो महीयः सुकृतं जनेन ।
> पादौ यमुद्दिश्य तवापि पद्यारजस्सु पद्मस्रजमारभेते ॥ २३ ॥

---

प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे
विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ॥" इति
"निरुन्ध्युः के विन्ध्याचलविकटसन्ध्यानटजटा-
परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥" इति च

श्रीवेदान्तदेशिकैः श्रीदयाशतके सङ्कल्पसूर्योदये च प्रतिपादितं पद्यद्वयं युगपत् स्मारयति ॥ २२ ॥

इयदिति । महाजगत्यां-अतिपृथुलेऽस्मिन् पृथिवीतले । केन जनेन-मदृते केन वा पुरुषान्तरेण । इयत्-एतावत्परिमितम् । महीयः-सुमहत् । सुकृतं-श्रेयस्करं कर्म । कृतं-आचरितम । न केनाप्यनुष्ठितं स्यादित्याशयः । अहो इति विस्मये । पुराकृतस्य सुमहतः स्वसुकृतस्य पचेलिममुपनतं फलस्वरूपमेवोपपादयति पादावित्यनेन । यं-जीवराजाभिधं मामिति यावत् । उद्दिश्य-लक्ष्यीकृत्य । तवापि-असाधारणप्रभावशालिन्यास्त्वादृश्या अपीति अपिशब्दार्थः । पादौ । पद्यायाः-जनसञ्चारयोग्यस्य मार्गस्य, रजस्सु-धूलिषु । पद्मस्रजं-सरोजकुसुममालाम् । आरभेते-रचयितुम् उद्युञ्जाते । जीवराजस्यावलोकनार्थं पद्भ्यां पथि शिवभक्त्यां समायान्त्यां तत्र पांसुषु पङ्क्तिरूपेण विन्यस्तैः पद्मसदृशयोस्तस्याः पदयोरङ्कैः पदवी क्रमेण पद्ममालयेव चित्रिता विभातीत्युल्लेखः । मदर्थं महाप्रभावेयं महेश्वरभक्तिर्महान्तं पन्थानं पद्भ्यामेव सञ्चरन्ती समागतेत्यालोचितवतो मे पूर्वजन्मकृतं सुकृतं नूनमपरिमितमेव स्यादिति विस्मयस्तिमितोऽहमिति विज्ञापयति जीवराजः । (पद्यमिदं मुम्बापुरीये मुद्रिते कोशे न दृश्यते) ॥ २३ ॥

भक्तिः—देव, भवान्मामनुस्मृत्य बलवदुत्कण्ठितः प्रकृतकार्यविमुखः संवृत्त इति श्रुत्वा तत्रभवन्तं सान्त्वयितुमागतास्मि । संप्रति विज्ञानमन्त्रिमतानुसारेणैव प्रकृतशत्रुविजयाय व्याप्रियस्व । तदनन्तरम्—

निर्जितनिखिलविपक्षं नीरुजपुरसुस्थमपगतातङ्कम् ।
अहमागत्य विधास्ये परमानन्दाब्धिमाप्तकामं त्वाम् ॥ २४ ॥

---

देवेति । माम् अनुस्मृत्य-पूर्वं किञ्चित्कालं विस्मृत्य परस्तात् पुनः-स्मृतिपथं मामानीयेत्यर्थः । (अनुसृत्येति पाठान्तरम् ।) प्रकृतकार्येषु संसृतिमार्गे स्थितवतां गृहस्थधर्मोचितेषु स्नानजपभोजनादिषु दैनन्दिनेषु कर्तव्यकर्मसु, विमुखः-इच्छारहितः । सान्त्वयितुं-सूनृतैर्वचोभिः प्रीणयितुम् । संप्रति-सांसारिकधर्मनिर्वर्तनोचिते समय इति यावत् । विज्ञानमन्त्रिणः-त्रिवर्गसाधनधुरीणस्य सचिवस्य, मतानुसारेण-आशयानुरोधेनैव । प्रकृतशत्रूणां-त्रिवर्गसाधनोचितस्य त्रैधातुकस्य शरीरस्य प्रत्यर्थिभूतानां यक्ष्माद्यामयानाम्, विजयाय-निषूदनाय । व्याप्रियस्व-बद्धपरिकरः सोत्साहं प्रयतेथाः । तदनन्तरं-यक्ष्मादिशत्रुनिबर्हणात् परम् । किं भविष्यतीत्याह—

निर्जितेति । निर्जिताः निखिलविपक्षाः-अशेषशात्रवः येन तम् । अत एव निर्गता रुजाः-शारीरा व्याधयः यस्मात् तत्, तच्चैतत् पुरं-शरीराख्यं नगरं च नीरुजपुरं तस्मिन् सुखेन स्थितं-सुस्थम् । अपगत आतङ्कः-आधिः यस्य तम् । आधि व्याधिभ्यां रहितम्, अत एव नीरोगे देहे सुखेन स्थितम् । त्वाम् । (नीरुजमुरुसुस्थम् इति पाठान्तरम् ।) अहं-भक्तिः । अनन्तरम् आगत्य । परमानन्दस्य-भगवद्भक्त्युपबृंहितब्रह्मानुभवरूपानन्दस्य, अब्धिमिवाब्धि-परमानन्दनिधिमिति यावत् । तथा चाप्तकामं-अधिगतजीवन्मुक्तिरूपपरममनोरथम् । विधास्ये-करिष्ये । अद्य विज्ञानमन्त्रिणः साहाय्येन नीरोगो भूत्वा त्रैवर्गिकाणां

राजा—(सप्रश्रयम्)परमनुगृहीतोऽस्मि । इदं तु प्रार्थये—

या प्रीतिरविवेकानामिति न्यायात् सदा मम ।
हृदयान्मापसर्प त्वं प्रसीद करुणानिधे ॥ २९ ॥

भक्तिः—तथा भवतु । (स्मृतिं प्रति) अयि वत्से एतत् त्वदायत्तम् ।

---

धर्माणां निर्वर्तनानन्तरं ज्ञानशर्मणः साहाय्येन मत्संस्तवेन चापवर्गिकं परमं श्रेयः प्राप्स्यसीत्युक्तं भवति । असौ श्लोकार्थः प्रायेण—

"प्रशान्तारातिरगमद्विवेकः कृतकृत्यताम् ।
नीरजस्के सदानन्दे पदे चाहं निवेशितः ॥"

इति प्रबोधचन्द्रोदयोक्तं श्लोकार्थमनुसरति ॥ २४ ॥

**या प्रीतिरिति** । "या प्रीतिरविवेकानाम्" इति न्यायात्-श्रीविष्णुपुराणोक्तां तादृशीं नीतिमनुसृत्येत्यर्थः । मम हृदयात् । सदा त्वं मापसर्प । मदीये मनसि सर्वदा सन्निहिता भवेति भावः । करुणानिधे-भक्तिदेवि । प्रसीद-यथा सन्ततं मम हृदयान्नापयासि तथा मयि प्रसन्ना भव । आप्तकामं त्वां विधास्य इत्यनुग्रहानन्तरं त्वामिदमेव प्रार्थय इति भावः । विष्णुपुराणे वचनमिदमेव दृश्यते—

"या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्मापगच्छतु ॥" इति ।

अविवेकिनां पृथग्जनानां शब्द-स्पर्श-रूप-रस-गन्धाख्येषु प्राकृतेष्विन्द्रियार्थेषु यादृशी दुर्निवारा प्रीतिः सर्वदा संभवति तादृशी भवद्विषये भक्तिरूपा प्रीतिर्मम हृदये समुद्भूय, ततः कदाचिदपि सा तस्मान्नापगच्छत्विति प्रह्लादप्रार्थनेयम् ॥२९॥

**तथेति** । तथा भवतु त्वदभिमतानुरोधेन मयि तेऽविच्छिन्ना प्रीतिर्भवतु । वत्से-स्मृते । एतत्-जीवराजस्य मानसात् भक्तिविषयकप्रीत्या अनपसरणमित्यर्थः ।

**स्मृतिः**—भअवदि, अवहिदह्मि । [भगवति, अवहितास्मि ।]

**भक्तिश्रद्धे**—विजयी भव । (इति निष्क्रान्ते ।)

**राजा**—(सोत्कण्ठम्) कथं भगवती गतवती । (स्मृतिं प्रति) सखि, सर्वदा हृदि संनिहिता भव ।

**स्मृतिः**—तह । [तथा] (इति निष्क्रान्ता ।)

(प्रविश्य)

**दौवारिकः**—देव, एसो अमच्चो भुत्तवन्तेण विदूसएण अणुगदो आअच्छदि । [देव एष अमात्यो भुक्तवता विदूषकेणानुगत आगच्छति ।]

(ततः प्रविशति मन्त्री विदूषकश्च ।)

**मन्त्री**—किं भोः, साधु भुक्तं भवता ।

**विदूषकः**—देवीए बुद्धीए साहुपडिवेसणं किदं जहमणोरहं उदरं पूरिअम । [देव्या बुद्धया साधुपरिवेषणं कृतं यथामनोरथमुदरं पूरितम् ।]

---

त्वदायत्तं-त्वदधीनं भवति; सन्ततस्मरणस्य स्मृत्यधीनत्वात् । अवहितास्मि-यथा जीवो भक्तिं नैरन्तर्येण स्मरति तथाहं तन्मनोमार्गे सर्वदा सन्निहिता भवामीत्यर्थः । भक्ति-श्रद्धे उभे च स्वप्रस्थानावसरे विजयी भवेति राज्ञे मङ्गल-माशासाते । ("विजयी भवतु । इति निष्क्रान्ते" इति स्थाने भक्तिः-तथा भवतु । इति निष्क्रान्ता इत्यसमीचीनः पाठः क्वचिद्दृश्यते ।)

सखीति । भक्तेरिव जीवराजस्यापि स्मृतिः सखी भवतीति मन्तव्यम् । अनयोरुभयोरपि स्मृत्या सह विद्यमानं सख्यमेव खलु साहचर्यमनयोः सर्वदा संदधाति । हृदि-हृदयाख्ये पुण्डरीकपुरे । निर्गते विदूषकेण सह विज्ञानशर्मणि, न हि राजा वीतव्यवसायो न वा रङ्गस्थलं शून्यं भवितुमर्हति । अतः पुनस्त-योरागमनपर्यन्तं भक्ति-श्रद्धा-स्मृतीनां राज्ञा सह यादृच्छिकसमागम-संलापव्यतिक-

(सहर्षं संस्कृतमाश्रित्य)

पृथ्वायामि वितत्य गारुडमणिश्यामं कदल्या दलं
 शाल्यन्नं घृतपक्वफाणितमयापूपैः सहात्रार्पितम् ।
धन्या एव हि सूपपायसमधुक्षीराज्यदध्यन्वितं
 नानाशाकयुतं फलैश्च मधुरैरेवं सदा भुञ्जते ॥ २६ ॥

---

रात्मकं संघटनं कविना मध्ये व्यधायि । देव्येति । साधु परिवेषणं-अन्नाद्याहारस्य भोजनपात्रेऽर्पणम् । मनोरथमनतिक्रम्य यथामनोरथम् ; यथेष्टम् ।

पृथ्वायामीति । पृथु-विस्तृतम् । आयामि-दीर्घम् । गारुडमणिः-मरकतमणिः, तद्वच्छ्यामं अतीव हरितवर्णम् । कदल्या दलं-कदलीपत्रम् । वितत्य-भूतले प्रसार्य । (पृथ्वायामि वितत्येत्यस्य स्थाने भूमौ साधु वितत्येति पाठान्तरम् ।) अत्र-अस्मिन् कदलीपत्रे । घृते पक्वाः-भर्जिताः, फाणितमयाः-इक्षुरसोत्पन्नमत्स्यण्डीप्रायाः, अपूपाः-पिष्टकाख्या गोधूमपिष्टकृता भक्ष्यविशेषाः तैः सह । "इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः । स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया" इति फाणितलक्षणम् । (फाणितमथापूपैरिति न समञ्जसः पाठः ।) तथा सूप-पायस-मधु-क्षीर-घृत-दधिभिरन्वितम् । नानाविधैः शाकैः वार्ताक-कदली-पटोल-कूष्माण्डादिभिः, युतम् । किंच मधुरैः । फलैः-आम्र-कदली-पनस-द्राक्षादिभिश्च सह । अर्पितं-पूर्वोक्तकदलीदले परिवेषितम् । शाल्यन्नं-कलमतण्डुलपाचितमोदनम् । एवं-यथाहमद्य मृष्टतया सप्रमोदमभ्यहृतवान् तथेति यावत् । धन्याः-सुकृतिन एव हि । सदा-प्रत्यहम । भुञ्जते-अभ्यवहरन्ति । मादृशस्य तु मन्दभाग्यस्य मृष्टान्नमेतादृशं कादाचित्कतया सकृदुपलभ्यते, धन्यानामन्येषां तु प्रत्यहमीदृशमेवाढ्यमन्नमयत्नलब्धं भवतीति तत्राप्यात्मनो मौर्ख्यानुगुणं तृप्त्यभावं किञ्चित् सूचयति ॥ २६ ॥

मन्त्री—भुक्तवतोऽप्येवमिहादरश्चेत् किमुत बुभुक्षितस्य । (राजानमुपसृत्य) विजयतां देवः । देवानुज्ञया सर्वेऽपि सामन्ता यथार्हं संभाविताः । अयमपि वटुराकण्ठमभीप्सिताभ्यवहार्येण भोजितो देव्या । तद्देवेनापि स्नान-पूजन-भोजनादिविधिर्निर्वर्त्यताम् ।

राजा—तर्ह्यत्रैवावस्थीयतां भवता । अहमपि प्रकृतमाह्निकं निर्वर्त्यागच्छामि ।

(इति दौवारिकेण सह निष्क्रान्तः ।)

(नेपथ्ये)

अभ्यक्तस्नापिताङ्गः शुचिवसनधरो जप्यमन्त्रान् जपित्वा
देवानभ्यर्च्य भुक्त्वा घुमघुमितवपुश्चन्दनैश्चन्द्रमिश्रैः ।
रज्यत्ताम्बूलपूर्णाननसरसिरुहो रम्यमारामभागं
साकं देव्यैष राजा प्रविशति सुलभो यत्र दोलाविहारः ॥२७॥

---

भुक्तवत इति । भुक्तवतः-मृष्टान्नेन तृप्तिमधिगतस्यापि । इह-एतादृशे भोजनविषये । एवं-धन्या एव एवं सदा भुञ्जत इति पूर्वोक्तरीत्या । आदरश्चेत्-लालसता विद्यते चेत् । बुभुक्षितस्य-क्षुधा बाधितस्य । किमुत-किमु वक्तव्यम् । मृष्टान्नाभ्यवहारानन्तरमपि भक्ष्य-भोज्येष्वेव तृप्तिरहिता तृष्णा तवेति विस्मितोऽभवन्मन्त्री । देवानुज्ञया-प्रभोराज्ञया । यथार्हं-तत्तद्योग्यतानुसारं यथा तथा । संभाविताः-संमानिताः । अयमपि वटुरिति विदूषकमुदरंभरिमुद्दिश्य सावज्ञो निर्देशः । अभ्यवहार्येण-भोजनेन । प्रकृतम् आह्निकं-अद्य मध्याह्नोचितं स्नान-पूजादिकं अनुष्ठेयं कृत्यजातम् ।

अभ्यक्तेति । यवनिकायाः पश्चाद्भागे विद्यमानैः कुशीलवैर्नृपसेवकैरुच्यमानरीत्याभिधीयमानं ख्यापनमिदम् । एष राजा । अभ्यक्तानि तैलादिभिर्विलिप्तानि,

मन्त्री—(आकर्ण्य) यत्र महाराजस्तिष्ठति तत्रैव गच्छावः । (इति विदूषकेण सह परिक्रामति ।)

---

तानि च तानि स्नापितानि चेति विशेषणोभयपदकर्मधारयः; प्रथमं तैलादिभिरनुलिप्तानि, ततश्चाद्भिः सम्यक् स्नापितानीत्यर्थः; तथाविधानि अङ्गानि यस्य तथाभूतः सन् । तथा शुचिनी-धौते, वसने-परिधानोत्तरीये धत्त इति शुचिवसनधरः सन् । जप्यान्-तत्कालजपार्हान् मन्त्रान्-पञ्चाक्षरादीन् । जपित्वा । अथ देवान्-शिवादीरिष्टदेवताः । अभ्यर्च्य-संपूज्य । देवताभ्यो विधिवन्निवेदनानन्तरं भुक्त्वा-स्वयमप्यभ्यवहृत्य । (भुक्त्वेति स्थाने भक्त्येति पाठान्तरम् ।) एवं माध्यन्दिनमाह्निककृत्यं क्रमशो निर्वर्त्य । चन्द्रमिश्रैः-सिताभ्राख्यकर्पूरप्रवरसंमिलितैः । चन्दनैः-चन्दनद्रवैः । घुमघुमितं-अतीव सुरभीकृतं वपुः-शरीरं यस्य तथाविधः सन् । रज्यता-अरुणवर्णमुत्पादयता, ताम्बूलेन-पूगैला-लवङ्ग-जात्यादिवासितनागवल्लीमृदुलदलेन । पूर्ण-गर्भितम् , आननसरसिरुहं-कमलसदृशमास्यं यस्य तथाविधश्च सन् । शृङ्गारवेषालङ्कृत इति भावः । देव्या-बुद्ध्या साकम् । देवीसहितस्य खलु संप्रत्यादृतस्य शृङ्गारवेषस्य साफल्यमुपनमेत् इत्यभिप्रायः । यत्र-यस्मिन् प्रदेशे । दोलाविहारः-प्रेङ्खोलिकाक्रीडनम् । सुलभः-प्रहर्षोत्पादकरीत्या समुपलभ्यः । तादृशं रम्यं-सर्वथा मनस्समाकर्षकम् । आरामभागं-उद्यानप्रदेशम् । प्रविशति । निर्वर्तितमाध्याह्निकविधिः, आगृहीतावर्जनीयोज्ज्वलवेषः सुखविहारेण कालं कमपि यापयितुं कान्तया मनोहरमाराममायाति महाराजः ॥ २७ ॥

**आकर्ण्येति** । नेपथ्यान्तः पठितं राज्ञ आरामविहारागमनसंबन्धिविषयमाकर्ण्येत्यर्थः । तत्रैव-उद्यान एव । आवामुभावपि गच्छावः । (गच्छाम इति पाठान्तरम् ।)

(ततः प्रविशति देव्या सह राजा ।)

**राजा**—देवि, पश्य पश्य रामणीयकमारामस्य ।

क्रीडच्चिक्कीरदन्तक्षतविवरगलन्नालिकेराम्बुधारा-
संपूर्णावालपुष्यत्फलडहुकदलीदाडिमीमातुलुङ्गा ।
संपुष्यत्पूगपालीपरिमलमिलितोत्फुल्लमालत्युदञ्च-
त्सौरभ्याघ्राणलभ्यश्रमशमपथिका सेयमारमसीमा ॥ २८ ॥

---

रम्यमारामभागं प्रविशति राजेति पूर्वमुक्तम्; तमेव रामणीयकप्रकारं विवृणोति **क्रीडच्चिक्कीरेति** । सा-यत्र राजा देव्या सह प्रविशति सा । इयं-इतः पुरो दृश्यमाना । आरामसीमा-उद्यानभागः । क्रीडन्तो ये चिक्कीराः-काष्ठमार्जाराः, चमरपुच्छा वा; अणिल् इति द्राविड्याम्; काष्ठमूषिका इति च केचित्; वेश्मनकुला इति चापरे; (क्रीडच्चिक्रीड इति पाठे-क्रीडन्तः चिक्रीडाः काष्ठकुट्टकाख्याः खरदीर्घचञ्चुवन्तः पक्षिणः) तेषां दन्तक्षतैः-दशनकुट्टनजनितच्छेदैः; कृतेभ्यो विवरेभ्यः-द्वारेभ्यः; गलन्त्यः-प्रस्रवन्त्यः; या नालिकेराम्बुधाराः, ताभिः संपूर्णैः आवालैः-आलवालैः, पुष्यन्ति-सम्यगभिवृद्धानि, फलानि येषां ते; तथाविधाः डहवः-लकुचवृक्षाः, कदल्यः-रम्भातरवः, दाडिमाः-बीजपूरविटपाः, मातुलुङ्गाश्च यस्यां सा । नालिकेरवृक्षाणामतिप्रशस्तमहाफलसंपूर्णानां निरवधिकत्वम्, अपरेषां जम्बीर-दाडिमादिफलपादपानां प्राचुर्यं चानेन सूचितं भवति । तथा संपुष्यतां-सपुष्पकेसरमुपचीयमानानाम्, पूगानां-क्रमुकतरूणाम्, याः पाल्यः-पङ्क्तयः, तासां परिमलेन मिलितं-संयुक्तम्, उत्फुल्लमालतीभ्यः-सम्यग्विकसितजातिकुसुमेभ्यः, उदञ्चत्-उद्गच्छत् यत् सौरभ्यं-सुगन्धः, तस्य आघ्राणेन-नासेन्द्रियकृतास्वादेन, लभ्यः-प्राप्यश्चासौ श्रमशमः-श्रमपरिहारश्च आघ्राणलभ्यश्रमशमः; तथाविधः पथिकः-पान्थजनः यस्यां सा । परितः पुष्पितानां पूगतरूणां वाटीभ्यः समुद्भवतः सौरभ्यस्य, तत्रैव समन्ततः समुत्फुल्लेभ्यो

देवी—मलअपवणचलिदतरुलदापुप्फगन्धा दिसासु विसप्पंति । इदो तदो परिब्भमंतो भमरा कलं कूअंदि । [मलयपवनचलिततरुलतापुष्पगन्धा दिशासु विसर्पन्ति । इतस्ततः परिभ्रमन्तो भ्रमराः कलं कूजन्ति ।]

राजा—युक्तमाह भवती ।

कुरवककलिका विलोकमाने तरुणपिके मृदु गायति द्विरेफे ।
नटति किल मुहुः कृतोपदेशा मलयमहीध्रभवेन मारुतेन ॥ २९ ॥

---

मालतीकुसुमेभ्यस्तदानीमेव समुद्गच्छतः परिमलबाहुल्यस्य च युगपदाघ्राणनेन सुदूरमार्गगमनसमुत्पन्नं परिश्रमं पथिकजनाः स्वयमिहोपशमयन्तीति भावः । एवमियमारामसीमा दृश्यते । सुतरां घ्राणतर्पणचणस्य सौगन्ध्यप्रसारेण प्रथमतः सामान्येन, परिणतानां स्वादुफलानां विविधानां वितरणेनानन्तरं विशिष्य च वीतश्रमान् पथिकान् वितनोत्यारामवीथिरिति वर्णितं भवति ॥ २८ ॥

उद्यानस्य मनोहरत्वमन्यदपि देवी निर्वर्णयति **मलअपवणेति** । मलयपवनेन-मलयाचलोत्पन्नेन मन्दमारुतेन, चलितानां तरु-लतानां-कुसुमितशाखिनां वल्लीनां च पुष्पगन्धाः-सुमनसां सौरभ्याणि । भ्रमराः कलं-मनोहरं यथा तथा । कूजन्ति । अनेन श्रोत्रेन्द्रियाह्लादकरत्वमपि सूचितम् । **युक्तमिति** । भवती यदाह तत् युक्तं-यथार्थमेवेति स्वकीयेन उल्लेखेन नृप उपष्टम्भयति ।

**कुरवकेति** । कुरवककलिकात्र नर्तकीत्वेन वर्ण्यते । कुरवकस्य-रक्तसहचरविटपिनः, कलिका-मञ्जरी । कस्यचिद्रागिणो नर्तनलालसा तरुणीति च ध्वनिः । मलयमहीध्रभवेन-मलयपर्वतोत्पन्नेन । मारुतेन-दक्षिणानिलेन । लयादिलास्यक्रियारूपकलाप्रवर्तने प्रसिद्धात् सन्तानात् समुत्पन्नेन नटधुरीणेनेति च गम्यते । मुहुः-असकृत् । कृतोपदेशा-यथाविधि नर्तनकलायां विहितशिक्षा सती । द्विरेफे-भ्रमरे । मृदु-मन्द्रं यथा तथा । गायति-नर्तनलयानुरोधेन स्वनन् श्रवणसुखमापादयति सति । तरुणपिके-नवे शृङ्गाररसानुभवयोग्ये वयसि विद्यमाने कोकिले ।

देवि, सर्वतश्चारय चारुसरोरुहदलस्मयमुषी चक्षुषी ।

कन्दर्पागममन्त्रपाठमुखरे पुंस्कोकिले कानन-
श्रीपाणिग्रहमङ्गले सति मधोर्देवस्य दीप्तौजसः ।
वह्नौ पाटलकान्तिपल्लवमये स्मेरः प्रसूनोत्करः
प्रक्षिप्तस्य मतिं न किं वितनुते लाजव्रजस्याधुना ॥ ३० ॥

---

विलोकमाने सहृदयभूतप्रेक्षकत्वेन पुरस्तात् स्थितवति । नटति-नृत्यति । किलेत्युत्प्रेक्षायाम् । देव्या निर्दिष्टानां मलयपवन-तच्चलितलताविटप-भ्रमरकूजनादीनां संगीतसामाजिकत्वं प्रकल्प्य राजा स्वयमुद्यानभूमौ दृश्यमानं रामणीयकं सुदूरमुल्लेखेनानेन पोषयति स्म ॥ २९ ॥

**देवीति** । सर्वतः-आरमभूमिमभितः । चारूणां-मनोहराणाम्, सरोरुहदलानां-रक्ताम्भोजपत्राणाम्, स्मयमुषी-सुषमोपजनितगर्वापहारशीले; विकसितारविन्दशोभामपि स्वचारुतयातिरिच्य विराजेते इति भावः । तवेति शेषः । चक्षुषी । चारय-प्रसारय । दृश्यतामन्यश्चोद्यानस्य सुषमातिशय इत्यर्थः ।

तामेव सुषमां पुनर्विवृणोति **कन्दर्पागमेति** । देवस्य-प्रस्तुतकालाध्यक्षस्य । दीप्तौजसः-वीर्यतेजोभ्यामुज्ज्वलत्स्वरूपस्य; तारुण्यश्रिया भ्राजमानस्य सुन्दरपुरुषस्येव स्थितस्येति भावः । मधोः-ऋतोर्वसन्तस्य । काननश्रिया-कमनीयारामलक्ष्म्या; तदाख्यया सुन्दर्या सहेत्यर्थः; पाणिग्रहमङ्गले-उद्वाहाख्यशुभ-कर्मणि । सति-निर्वर्तमाने । पुमान् कोकिलः पुंस्कोकिलः, तस्मिन्; पुरोहितस्थानीये । कन्दर्पागमः-कामशास्त्रम् तदेवागमः, तत्संवन्धिनां मन्त्राणां-कामोद्दीपककूजनरूपमन्त्राणां पाठेन-उच्चारणेन, कूजनेनेति यावत्, मुखरे-शब्दायमाने सति । (तन्त्रपाठमुखरे इति पाठान्तरम् ।) पाटलकान्तिपल्लवमये-अरुणवर्णविशिष्टकिसलयात्मके । वह्नौ-होमाग्नौ । विद्यमान इति शेषः । स्मेरः उत्फुल्लः । प्रसूनोत्करः-श्वेतकुसुमानामुच्चयः । प्रक्षिप्तस्य-उद्वाहावसरे वह्नौ हुतस्य । लाज-

किञ्च—

मन्दारवकुलचम्पककुरवकसहकारमञ्जरीलोलः ।
अलिनिकरः केलिश्लथवनलक्ष्मीकेशपाश इव लसति ॥ ३१ ॥

---

व्रजस्य-होमद्रव्यभूतलाजाञ्जलिनिकरस्य । मतिं-भावनाम् । अधुना-अद्यास्माभिर्निरीक्षणावसरे । किं न वितनुते-अपि नाम नोत्पादयति । अद्धा वितनुत एवेत्यर्थः । अत्र विवर्धमानो वसन्तकालाख्यो राजा सौन्दर्यमनोहरो नववरः; कान्त्या समुज्ज्वलन्ती काननश्रीरेव कमनीया कान्तापेक्षिणी नववधूः; पल्लवास्वादनादिपुष्टः पुंस्कोकिलः परिणयनिर्वोढा पुरोहितः; प्रतिपदं तादृशपरभृतकृतं रुतमेव पाणिग्रहणमन्त्रः; पुष्पसमयप्रभावात् पुष्यत्पादपेषु परितः प्रवृद्धः पाटलवर्णः पल्लवसमूह एव परिणयसमयोचितो होमाग्निः; विटपिषु वीरुत्सु च विकसितः सुधाधवलः सुमनस्समूह एवोद्वाहहोमोपयोगी लाजाञ्जलिः; एवमिहोद्यानश्रीवसन्तयोरुद्वाहविधिः सर्वाङ्गीणः साधु संप्रवर्तत इति रसिकेन राज्ञा वर्णितं भवति ॥ ३० ॥

**मन्दारवकुलेति** । न केवलमुद्वाहदशैव परं तु वनलक्ष्मी-वसन्तयोः समुपनता रतिविलासावस्था चोद्यानश्रीप्रेक्षकैर्विभाव्यत इति सूचयति किञ्चेति । मन्दारः रक्तकेसराख्यः पारिभद्रः, वकुलः-मधुपुष्पाख्यः केसरतरुः, चम्पकः-भ्रमरातिथित्वेन प्रसिद्धः स्वर्णपुष्पः, कुरवकः-रक्तकुसुमः सैरेयकः, सहकारः-आम्रः, एतेषां मञ्जरीषु-कुसुमस्तबकेषु, लोलः-आसक्तः, तासु सुखं संचरमाण इति भावः । अलिनिकरः-मधुकरसमूहः । केल्यां-वसन्ताख्येन कान्तेन सह क्रियमाणायां मदनक्रीडायाम्, श्लथः-इतस्ततः ससंभ्रमविभ्रमवशाच्छिथिलीभूतः, वनलक्ष्म्याः-आरामश्रियः, केशपाशः-कबरीभार इव । लसति-प्रतिभाति । विभिन्नजातीयेषु विटपिषु विकसितानां विविधवर्णानां कुसुमपुञ्जानां मध्ये मधुचूषणाय समन्तात् भ्रमन्तो भ्रमरगणाः काननश्रियः कान्तेन वसन्ताख्येन सरभसं क्रीडनसमये बलाद्विशिथिलस्य विकीर्णविविधकुसुमोत्करविशिष्टस्य कबरीभारस्य शोभाभ्रममाविर्भावयंतीति भावः ॥ ३१ ॥

**देवी**—पेक्खदु भवम् । [पश्यतु भवान् ।]

किअमाले टिट्टिभओ रसालरुक्खम्मि कोइलो वसइ ।
णीवविडवे सिहण्डी जंबूसिहरे सुओ एसो ॥ ३२ ॥

[कृतमाले टिट्टिभको रसालवृक्षे कोकिलो वसति । नीपविटपे शिखण्डी जम्बूशिखरे शुक एषः ]

**विदूषकः**—(उपसृत्य) जेदु वअस्सो । देवि, सोत्थि भोदीए । [जयतु वयस्यः । देवि, स्वस्ति भवत्यै ।]

**मन्त्री**—देव, विजयी भव । देवि, जयतु भवती ।

**राजा**—अत्र निषीदतु वयस्यः । इहास्यताममात्येन ।

**मन्त्री**—(उपविश्य, उद्यानभूमिमभितो विलोक्य) देव, आश्चर्यमाश्चर्यम् ।

---

किञ्च तत्तत्समीहितानुरोधेन विविधेषु वृक्षेषु स्वच्छन्दं विहरतो विहङ्गमान् विलोक्य मुदितमना देवी च मनाक् तदवस्थानं निर्वर्णयति **किअमाल इति** । कृतमाले-कर्णिकारवृक्षे । एष टिट्टिभकः-कोयष्टिकाख्यो रक्तवर्णचूडावान् पक्षी । वसति-कुसुमितस्य तस्य पादपस्य वर्णप्रकर्षेणावर्जितः तस्योपरि सकौतुकमास्ते । तथा रसालवृक्षे चूतवृक्षे । एष कोकिलो वसति । रसालवृक्षेषु तत्पल्लवाद्यास्वादनरतः कोकिलो वसन्ते विहरेदिति प्रसिद्धोऽयं विषयः । कालिदासोऽप्याह "चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज" (कुमार. ३-३२) इति । नीपविटपे-कदम्बवृक्षशाखायाम् । एष शिखण्डी-मयूरः । स्वभावतो मेघदर्शनोत्सुको मयूरः ; नीपवृक्षश्च प्रावृषि पुष्पोपचितः प्रवर्धते ; अत एव मेघागमप्रिय इत्यपि नीपो व्यवह्रियते । "मेघागमप्रियो नीपः प्रावृषेण्यः कदम्बकः" इति राजनिघण्टुः । नीपमयूरयोरुभयोरपि मेघागमप्रियत्वरूपसमानगुणस्य सद्भावाच्छिखण्डिनो नीपवृक्षे निवासः सूचितः । अत एव मेघसंपर्कात् कदम्बतरूणां कुसुमाभिपूर्णत्वं मेघसंदेशेऽपि "त्वत्संपर्कात् पुलकितमिव प्रौढपुष्पैः कदम्बैः" इति वर्णितम् । तथैव जम्बूशिखरे-जम्बूवृक्षस्य विटपाग्रे । एष शुको वसति । शुको जम्बूफलप्रिय

इहोद्याने तादृग्पशुपतिदयासादितमहा-
महिम्नस्ते सेवारसपरवशाः सर्वत इमे ।
यथास्वं पुष्यन्तो युगपदृतवः संनिदधते
प्रसङ्गादत्राहं कतिचन वदाम्यार्तवगुणान् ॥ ३३ ॥

---

इति लोकप्रसिद्धः । अत एव शुकप्रियेति च जम्ब्वा नामान्तरम् । "जम्बूस्तु सुरभिपत्रा . . . . शुकप्रिया मेघमोदिनी नवाह्वा" इति राजनिघण्टुः । (सुओ एक्को-शुक एक इति पाठान्तरम् ।) कृतमालः शिशिरे, रसालो वसन्ते, जम्बू-नीपादयो वर्षासु च पल्लविताः कोरकिताश्च प्रवर्धन्त इति प्रसिद्धं प्रकृतिधर्म-मुल्लङ्घ्य सर्वर्तुगुणाः समकाल एव संप्रति प्रादुरभवन्निति सविस्मयं देवी प्रदर्शयति राज्ञे 'पश्यतु भवान्' इति ॥ ३२ ॥

देव्या संग्रहेणोक्तं विस्मयावहं रमणीयालोकमरण्यदेशावस्थानमेव पुनः स्वयं स्वमनोधर्मानुरोधेनान्यथापि विशिनष्टि विज्ञानशर्मा देवेत्यादिना । (देवेति संबोधनं क्वचित् पुस्तके नास्ति ।)

किं तदतिशयेनाश्चर्यस्थानमिति निरूपयति **इहोद्यान** इति । इहोद्याने-अत्रारामे । तादृश्या-'तदनु मयि प्रसादाभिमुखः' इति, 'ध्यानेन ते प्रसन्नोऽस्मि' इत्यादिभिश्च तृतीयाङ्कोक्तगुणसंपत्तिसहितया, पशुपतिदयया-महेश्वर-कृपया, आसादितः-प्राप्तः, महामहिमा-प्रभावातिशयः येन तस्य । ते-राज्ञः । सेवायां-परिचर्यायां यो रसः-विशेषाभिरुचिः, तत्र परवशाः । ईशानस्येदृश-मनुग्रहम् ओषधीशस्येतावतीं प्रीतिं च साधु साधितवतो भवतः प्रभावातिशयं प्रसमीक्ष्याहमहमिकया त्वदुपचरणाय समुत्सुकाः सन्त्येते ऋतव इति भावः । इमे-पुरतः पादप-लता-गुल्मादिषु पुष्यत्पल्लव-कोरक-पुष्पादिरूपेण प्राप्तोदयाः । ऋतवः-वसन्तादयः षट् कालभेदाः । सर्वतः-अभितः । युगपत्-एकदैव । यथा-स्वं-स्वमनतिक्रम्य यथास्वम् । तत्तत्कालानुरूपगुणप्राग्भाराविरोधेनेत्यर्थः । पुष्यन्तः-पौष्कल्येन वृद्धिमधिगच्छन्तः । (पुष्प्यन्त इति पाठान्तरम् ।) संनिधदते-भवदुप-चाराय भक्त्येवात्राविर्भवन्ति । "युगपदृतुगणस्य संनिधानं वियति वने च

**राजा**—अवहिताः शृणुमस्तावत् । (पुरो विलोक्य) मन्त्रिन्, पश्य पश्य—

स्फुटकुटजमन्दहासा कदम्बमुकुलाभिरामरोमाञ्चा ।
नीलाम्बुदकुचविगलद्घनपुष्पा विहरतीव वनलक्ष्मीः ॥ ३४ ॥

---

यथायथं वितेने" इति यथा किरातार्जुनीये वर्णितं (१०-१८) तथा वियत् उद्यानं च विचित्रेण वसन्तादिसकलर्तुगणेन युगपदाविर्भूतेन विलक्षणम् ऋतुसमवायजं कमव्यवस्थाव्यतिकरं स्वयमधिजगामेति भावः । अत्र-इह; अस्मिन् सन्दर्भे इति यावत् । अहम् । प्रसङ्गात्-एतत्सन्दर्भानुरोधेनेत्यर्थः । कतिचन आर्तवगुणान्-केषांचन ऋतूनां कांश्चित् स्वाभाविकान् गुणान् । वदामि-वक्ष्यमाणरीत्या ते कथयामि । भवदुपासनासन्तुष्टस्य पशुपतेः कृपामहिम्नैव विविधा ऋतव एवं संभूय भवतः सेवार्थं समुपस्थिताः, नान्यदत्र कारणमिति ज्ञापयति राजानं विवेकी विज्ञानशर्मा ॥ ३३ ॥

**अवहिता इति** । अवहिताः-विहितावधानाः । पश्य पश्येति द्विरुक्तिः काननोद्देशस्य कालविशेषोत्पन्नासाधारणरामणीयकताया दर्शने महान्तं महाराजस्यादरातिशयं द्योतयति ।

**स्फुटकुटजेति** । वनलक्ष्मीः-आरामश्रीः; तदाख्या कामिनीति च व्यङ्ग्यार्थः । स्फुटः सम्यग्विकसितः, कुटजः-गिरिमल्लिका; गिरिमल्लिकाकुसुममिति यावत्; स एव मन्दहासः-मधुरस्मितं यस्याः सा । तथा कदम्बमुकुलाः-तदानीमेव कोरकिता नीपतरोः पुष्पाङ्कुराः, त एव अभिरामः-आह्लादोत्पादकत्वाद्दर्शनीयत्वाच्च मनोहरः, रोमाञ्चः-हर्षजं रोमहर्षणं यस्याः सा । नीलाम्बुदः-जलभरितः कृष्णमेघः, स एव कुचः, तस्मात् विगलन्ति ससंभ्रमं क्रीडनेन स्वयं श्लथमानानि, घनपुष्पाणि-जलधरपतिताः सलिलासारा एव घनपुष्पाणि-वक्षोजधृतमालायाः सुबहुलकुसुमानि यस्याः सा । विहरति-क्रीडतीव । वनलक्ष्मीनाम्न्यां कामिन्यां वर्षाकालाख्येन कान्तेन सप्रहर्षं विहरन्त्यां तत्कालप्रफुल्लानि गिरिमल्लिकाकुसुमानि तस्याः सानन्दोद्भूतस्य मन्दहासस्य शोभाम्, प्रावृट्प्रभावेनाङ्कुरिताः कदम्बतरुकुड्मलाः तस्या देहे हर्षप्रकर्षाविर्भूतस्य रोमहर्षस्य श्रियम्, जल-

**मन्त्री**—राजन्, तर्हि वर्षा एताः। पित्तसंचयोऽत्र भवति। एवं हि ऋतुचर्यां भिषजो भाषन्ते।

**राजा**—कथमिव।

**मन्त्री**—

शंसन्ति भाद्रपदमाश्वयुजं च वर्षा-
स्तास्वोषधिप्रचुरता तरुणाल्पवीर्याः।
वार्यप्रसन्नमसुमत्सु च शीतवाता-
विष्टेषु तत्र शिखिनोदयते विदाहः ॥ ३९ ॥

---

भरितपृथुलजलधरश्च तस्यास्तारुण्यसमयसमुज्जृम्भितस्य घनस्तनभारस्य विभ्रमम्, अम्बुदात्तस्मात् अनक्रन्निपतन्तो धवलाः सलिलासाराः सलीलं शरीरान्दोलनेन विहारसंभ्रमवशात् स्तनाभोगात् समन्तात् प्रशिथिलानां प्रसूनानां शोभां-चावहन्निति पद्यस्यास्य भावः ॥ ३४ ॥

**तर्हीति**। तर्हि-एवं चेत्; कुटज-कदम्बादीनां कुसुमोद्गमः, नीलाम्बुद-वर्षयोराविर्भावश्च यतः समुपनतस्तत इत्यर्थः। एता वर्षाः-वर्षर्तोरेष प्रादुर्भावः - वर्षाशब्दो नित्यं बहुवचनान्तः। अत्र-ऋतावस्मिन्। पित्तस्य संचयः-पित्तस्य स्वस्थाने वृद्धिः; "चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु। विपरीतगुणेच्छा च" इति पित्तस्य संचयलक्षणम्। पित्तस्य प्रधानं स्थानं च नाभिः। ऋतुचर्या-वर्षर्तुसमुचितं वृत्तम्। भिषजः-वैद्यशास्त्रकर्तारः। वैद्यशास्त्रानुरोधेनैवात्र ऋतवश्च विभज्यन्त इत्यपि अनेन सूचितं भवति। कथमिव-केन प्रकारेण ते भाषन्त इत्यर्थः। (कथमिवेति स्थाने तत्कथं ब्रूहि इति पाठान्तरम्।)

**शंसन्तीति**। भाद्रपदं-नभस्यमासम्। आश्वयुजं-आश्विनमासम्। सौर-मानेन तौ कन्यातुलामासौ। तौ द्वौ मासौ च वर्षाः-वर्षर्तुत्वेन शंसन्ती-त्यर्थः। सामान्यतः श्रावण-भाद्रपदयोर्मासयोर्वर्षर्तुत्वव्यवहारो लोके। "सिंह-

स एव पित्तसंचयमापादयति ।

---

कन्ये स्मृता वर्षाः'' इति शार्ङ्गधरः, ''नभोनभस्यौ जलदागमः स्यादिषोर्जकाभ्यां शरदं वदन्ति'' इति नरहरपण्डितश्च श्रावण-भाद्रपदयोरेव वर्षर्तुत्वं वदतः। आचार्यवाग्भटस्य मतमपि ऋतुचर्याध्यायतस्तदेवेति सुविदितम्। सत्यप्येवं सुश्रुतस्तु—यस्य मतमनुसृत्येह कविनाभिहितम्—''भाद्रपदाश्वयुजौ वर्षाः'' इत्येवाह। किञ्च ''भानोर्मकरसंक्रान्तेः षण्मासा उत्तरायणम्। कर्कटादेस्तथैव स्यात् षण्मासा दक्षिणायनम्'' इति सूर्यसिद्धान्तीयवचनानुरोधेन मकरसंक्रमणादारभ्य षण्णां मासानाम् उत्तरायणत्वेन, तस्य च मासषट्कस्य वैद्यके कालगुणानुगुण्येनादानकालत्वेन, तथैव कर्कटकादारभ्य षण्णां मासानां दक्षिणायनत्वेन, तस्य मासषट्कस्य वैद्यके विसर्गकालत्वेन च व्यवहारो विद्यते। तदनुसृत्य मकरमासादारभ्य द्वयोर्द्वयोर्मासयोर्गणनेन सति ऋतुषट्के विभक्ते, कन्यातुलामासयोः-अर्थात् भाद्रपदाश्वयुजयोः-वर्षर्तुत्वं संघटते। किञ्च वर्षागुणाः सर्वेऽपि विश्वगिह देशे व्यक्तमाश्वयुजे विलोक्यन्ते। अतोऽत्र 'भाद्रपदमाश्वयुजं च वर्षाः' इति यदभिहितं तदुपपन्नमेव। तासु-वर्षासु। ओषधिप्रचुरता-ओषधिसमूहानामुपचयः संभवतीत्यर्थः। ''वर्षासु वारुणो वायुः सर्वसस्यसमुद्गमः'' इति सङ्ग्रहे वाग्भटः। सस्यशब्द ओषधिवाची। किञ्च ता ओषध्यः तरुणाः-नवोत्पन्नाः, अजातसारा इति यावत्; अत एव अल्पवीर्याः। तरुणाल्यवीर्यौषधिविशिष्टा वर्षा इत्यर्थः। (सुदृशोऽल्पवीर्या इति पाठो न समंजसः।) वारि-तत्काले नदीतटाककूपादिषु विद्यमानं सलिलम्। अप्रसन्नं-कलुषं भवति। ''भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा'' इत्यष्टाङ्गहृदयम्। असुमत्सु-प्राणिषु। शीत-वाताविष्टेषु-कालस्वभावोत्पन्नेन शैत्येन, अतिशीतलशीकरनिकरवाहिना वायुना, वर्षर्तौ प्रकृत्यैव प्रकोपमधिगच्छता वातदोषेण चाक्रान्तेषु सत्सु; प्राणिषु तैरभिभूतेष्वित्यर्थः। ''वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे। सतुषारेण मरुता सहसा शीतलेन च।'' इति च वाग्भटः। (वार्य-

राजा—शरदि कथम् ।

मन्त्री—

मासौ शरत् कार्तिकमार्गशीर्षौ तत्राभ्रकार्श्ये सति पङ्कशोषः ।
विलायितः पित्तचयोऽर्कभासा स पैत्तिकं व्याधिकुलं प्रसूते ॥३६॥

---

प्रसन्नमिति स्थाने वीर्यं प्रसन्नमिति पाठस्त्वसाधुः ।) तत्र-तस्मिन् काले । शिखिना-शारीरेणाग्निना । विदाहः-दग्धपाकः । (विहार इति च क्वचिदपपाठो दृश्यते ।) उदयते-जायते । पूर्वोक्तास्तरुणाल्पवीर्या मलिना वार्षिका ओषध्यादयः प्राणिनां शरीरमाविश्य विदाहमुपजनयन्तीति भावः । विदाहलक्षणं च-"विदाहि द्रव्यमुद्गारमम्लं कुर्यात्तथा तृषाम् । हृदि दाहं च जनयेत् पाकं गच्छति तच्चिरात्" इति । इति शंसन्ति-भिषजो भाषन्ते । राज्ञा 'कथमिव' इति पृष्टस्य विषयस्य विज्ञानशर्ममन्त्रिणा एवमुत्तरमभिहितम् । अत्र कविना प्रोक्तस्य विषयस्य सुश्रुतवाक्यं प्रमाणं भवति । तद्यथा-"तत्र वर्षासु ओषधयस्तरुण्योऽल्पवीर्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते" इति । तदानीमपामोषधीनां च विदग्धत्वात् ताः "पित्तसंचयमापादयन्ति" इति च सुश्रुतः । (सू. अ. ६.) । ऋतुविभागे विद्यमाना विशेषा अन्येऽपि परस्तात् 'हेमन्ते किल', इति पद्यस्य व्याख्यावसरे विव्रियन्ते ॥ ३५ ॥

स एवेति । सः-विदाह एव । पित्तसंचयं-पित्तस्य स्वस्थान एव वृद्धिम् । आपादयति-विदधाति ।

**शरदीति** । शरदि कथं-कालस्वभाव. शरदृतौ कीदृशः स्यादिति प्रश्नः ।

तमेव कालं कालस्वभावमपि विवृणोति मन्त्री **मासाविति** । कार्तिक-मार्गशीर्षौ मासौ द्वावपि । शरत् शरदृतुत्वेन व्यवह्रियेते इत्यर्थः । आश्वयुज-कार्तिकयोः सत्यपि ग्रन्थान्तरेषु शरदृतुत्वेन व्यवहारे तस्यान्यथात्वं पूर्वोक्तेनैव

**राजा**—हेमन्ते कीदृशो रोगः ।

**मन्त्री**—श्रूयताम् ।

हेमन्तः पौषमाघाविह भवति बलं वीर्यमप्योषधीनां
स्निग्धाश्चापः प्रसन्ना भृशगरिमभृतो याः पिबन्त्यङ्गभाजः ।

---

हेतुनात्रापि प्रसज्यते । "कार्तिकमार्गशीर्षौ शरत्" इति (सू. अ. ६) सुश्रुतः । तत्र-शरदि । अभ्रकार्श्ये-मेघजनितवर्षस्य स्वल्पतमत्वे सति; विरत-वर्षत्वादित्येवार्थः । पङ्कशोषः-सलिलक्लिन्नमृदां शुष्कीभावः । पित्तचयः-वर्षासु पित्तस्योपनतः संचयः; वर्षर्तौ संचितं पित्तमिति यावत् । अर्कभासा-सूर्यस्य तत्कालस्वभावतः प्रसन्नेन कियता तिग्मेन च तेजसा । विलायितः-अतीव द्रवत्व-मापादितः; पित्तस्य विलयनमेव पित्तचयस्य विलयनमित्यत्रोच्यते । पित्तस्य विलायितत्वादेव, तत् स्थानान्तरं प्राप्नोति; अर्थात् पित्तं प्रकुप्यतीति यावत् । "वर्षादिषु च पित्तस्य" इति पित्तस्य वर्षासु चयावस्था, शरदि प्रकोपावस्था च प्रकृतिसिद्धा खलु । सः-विलायितः पित्तचयः; प्रकुपितं पित्तमित्यर्थः । पैत्तिकं-पित्तदोषसम्बन्धि । व्याधिकुलं-अम्लपित्त-तृष्णा-भ्रम-कार्श्य-विदाहादिरूपरोगनि-वहम् । प्रसूते-जनयति । अत्र च "पित्तसञ्चयः शरदि प्रविरलमेघे वियति, उपशुष्यति पङ्केऽर्ककिरणप्रविलायितः पैत्तिकान् व्याधीन् जनयति" इति सौश्रुतं वाक्यं श्लोकरीत्योदाहृतम् ॥ ३६ ॥

**हेमन्त इति** । पौष-माघौ-मकरकुम्भमासौ । हेमन्तः-हेमन्तर्तुः । "पौष-माघौ हेमन्तः" इति सुश्रुते ऋतुचर्याध्याये । इह-अस्मिन् ऋतौ । ओषधीनां बलं-तृण-वीरुत्तरुप्रभृतीनां काण्ड काष्ठ-शाखादिसंबन्धिदार्ढ्यम् । वीर्यं-उष्ण-शीताद्यात्मको गुणविशेषोऽपि । भवति-संपन्नं भवति । आपश्च हैमन्ताः । प्रसन्नाः-कालस्वभावतः कालुष्यरहिताः । किन्तु स्निग्धाः, अत एव भृशगरिम-भृतः-अतीव गुरुगुणविशिष्टा भवन्ति । वर्षाकालादारभ्य यावदृतुत्रयं वृष्ट्या

मन्दांशुत्वाच्च भानोः सहिममरुदुपस्तम्भिताङ्गेषु देहि-
ष्वेषु स्नेहाद्विदिग्धाद्भवति हिमभराच्छ्लेष्मणः संचयश्च ॥३७॥

---

शीतवातादिभिश्च भूतलस्य शान्ततापत्वात् , सोमस्य चाधिगताधिकबलत्वात् मधुराम्ललवणरसानां स्निग्धानामभिवृद्धिः स्वयमुपजायते, यतो द्रव्याणि सर्वाण्यद्भिः सह स्नैग्ध्यं गुरुत्वं च सुतरामधिगच्छन्ति । "सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः । मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले । स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः" इति च वाग्भटः । याः-भृशं स्निग्धाः गुर्व्यश्चापः ताः । अङ्गभाजः-प्राणिनः । पिबन्ति । एषु-एतादृशेषु ; तेष्विति स्थाने एष्विति प्रयोगः । ये प्राणिनः तादृशीरपः पिबन्ति तेषु देहिषु प्राणिषु । भानोः-सूर्यस्य । मन्दांशुत्वात्-किरणपातस्य मन्दीभूतत्वाद्धेतोश्च । सहिमेन-तुषारसहितेन, मरुता-अतीव शीतस्पर्शेन वायुना, उपस्तम्भितानि-स्तब्धीकृतानि अङ्गानि येषाम् तथाविधेषु सत्सु । विदिग्धात्-धातुषूपलिप्तात् । स्नेहात् । भृशगुरूणां स्निग्धानामपामुपसेवनेन समुत्पन्नैः स्नैग्ध्यगुणैः सर्वेषामपि धातूनां प्रदिग्धत्वादिति भावः । श्लेष्मणः स्निग्धस्य उपलेप एव सुश्रुते प्रोक्तः ; आपश्च अविदग्धा इत्यपि निर्दिष्टम् । (अतः स्नेहाद्विदग्धादिति पाठस्तु न साधुः ।) हिमभरात्-अतिनिबिडस्य तुषारचयस्य च सद्भावादित्यर्थः । श्लेष्मणः संचयश्च भवति । एष च श्लेष्मचयः प्रायो हेमन्तस्यावसाने शिशिरस्यारम्भे च संभवतीत्यन्ततो मन्तव्यम् ; "श्लेष्मणः शिशिरादिषु" इति कफसंचयस्य शिशिरर्तोः समुचितकालत्वेन सर्वत्राङ्गीकृतत्वात् । शिशिरश्च हेमन्तेऽन्तर्भवतीति व्याख्यानेनाग्रे ज्ञातं भविष्यति । अस्य च विषयस्य "ता एवौषधयः कालपरिणामात् परिणतवीर्या बलवत्यो हेमन्ते भवन्ति, आपश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यश्च ; ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनाम् अविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः संचयमापादयन्ति" इति सौश्रुतं वचनं प्रमाणम् ॥ ३७ ॥

**राजा**—कदा पुनरयं श्लैष्मिकान् व्याधीन् जनयति ।

**मन्त्री**—फाल्गुन-चैत्रमासरूपे वसन्ते; यतोऽर्करश्मिप्रविलायितः श्लेष्म-संचयोऽस्मिन् ऋतौ भवति । एवं च—

निस्सारा रौक्ष्यभाजो दधति च लघुतामोषधीनां समूहाः
सर्वे ते ग्रीष्मसंज्ञां भजति किल ऋतौ ज्येष्ठवैशाखरूपे ।
तस्मित् सूर्यप्रतापग्लपिततनुभृतां लाघवाच्चापि रौक्ष्या-
ज्जन्तूनां पीयमानं जनयति सलिलं संचयं मारुतस्य ॥ ३८ ॥

---

**कदेति** । अयं-श्लेष्मसंचयः । श्लैष्मिकान् व्याधीन्-श्लेष्मप्रकोपसमुद्भवान् रोगान् । **फाल्गुनेति** । फाल्गुनचैत्रमासरूपे-मीनमेषमासद्वयात्मके । वसन्ते-तदाख्ये ऋतौ । "फाल्गुन-चैत्रौ वसन्तः" इति ऋतुचर्यायां सुश्रुतः । श्लेष्मसंचयः-संचितः कफ इत्यर्थः । अस्मिन् ऋतौ-वसन्ते । अर्करश्मिप्रविलायितः-किञ्चिदिव तीक्ष्णैः सूर्यकिरणैः सुतरां द्रवीकृतः । भवतीति शेषः । अत एव प्रकुपितो भवतीति भावः । पूर्वस्मिनृतौ समुत्पन्नः श्लेष्मसंचयः अस्मिन् वसन्तर्तौ यतोऽर्करश्मिप्रविलायितः प्रकुपितो भवति अतः श्लैष्मिकान् व्याधीन् जनयतीति राज्ञः प्रतिवचनं दत्तम् । "स संचयो वसन्तेऽर्करश्मिप्रविलायित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति" इति सौश्रुतं प्राकरणिकं वाक्यम् । **एवं चेति** क्रमप्राप्तमानन्तरिकं ग्रैष्ममृतुस्वभावमपि प्रस्तौति ।

**निस्सारा इति** । ज्येष्ठवैशाखरूपे-मिथुनवृषभमासद्वयात्मके । ग्रीष्मसंज्ञां भजति । ऋतौ-वैशाखज्येष्ठात्मके ग्रीष्माख्ये ऋतावित्यर्थः । ते-पूर्वं वर्षादिषु ये बलतो वीर्यतश्च प्राप्तसारा अभूवन् तादृशा इत्यर्थः । ओषधीनां समूहाः सर्वेऽपि । निस्साराः-सत्त्वहीनाः; सौम्यगुणैर्विहीना इति यावत् । अत एव रौक्ष्यभाजः-अपगतस्निग्धगुणाः । लघुतां-निस्सारत्वरौक्ष्यत्वादिसमुचितां गुरुत्वभिन्नामवस्थाम् । दधति च । कालस्वभावतः काननोद्यानादिषु विद्यमानानां विविधवृक्षलता-

स संचयः प्रावृषि शीतवातवर्षैरितो वातिकरोगकारी ।
क्लिन्नाङ्गभाजां पयसैव नित्यं प्रकोपहेतुस्त्रिकसंचयस्य ॥ ३९ ॥

---

तादीनामोषधिवर्गाणां तेजोरूपः सारः सवितृकिरणैः परुषैरपह्रियत इति वाग्भटादयश्च वदन्ति । यथा—"दिवाकरकराङ्गारनिकरक्षपिताम्भसः । प्रवृद्धरोधसो नद्यश्छायाहीना महीरुहाः । विशीर्णजीर्णपर्णाश्च शुष्कवल्कलताङ्किताः । आदत्ते जगतस्तेजस्तदादित्यो भृशं यतः" इति संग्रहे वाग्भटः । तस्मिन्-ग्रीष्मर्तौ । सूर्यस्य प्रतापेन-अत्युग्रेण प्लोषरूपेण तापेन, ग्लपिताः तापोपशोषिताः, यास्तनवः-देहाः, ता बिभ्रतीति सूर्यप्रतापग्लपिततनुभृतः, तेषाम् । जन्तूनां-प्राणिवर्गाणाम् । सलिलं पीयमानं-तैरास्वाद्यमानं जलम् । लाघवात्-गुणतो भारतश्च लघुत्वात् । रौक्ष्यात्-स्नैग्ध्यराहित्यादपि च । मारुतस्य-वातदोषस्य । संचयं-स्वस्थाने वृद्धिम् । जनयति । रूक्षा लघ्व्यश्चौषध्यः, आपश्च तथाविधाः समगुणं वातं देहिनां तथाविधे शरीरे वर्धयन्तीति भावः । वायुस्तावत् प्रकृत्या शीतः । कथमेतस्य ग्रीष्मे सुतरामुष्णेन विरुद्धगुणेन वृद्धिः स्यादित्याक्षिप्ते, रौक्ष्य-लाघव-वैशद्याद्यैर्भूरिभिः समानगुणैः "विरुद्धगुणसंयोगे भूयसाल्पं हि जीयते" इति प्रमाणेन वायोश्चयोऽत्र संपद्यते । इदं च पद्यम् "ता एवौषधयो निदाघे निस्सारा रूक्षा अतिमात्रं लघ्व्यो भवन्ति । आपश्च ता उपयुज्यमानाः सूर्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वात् वैशद्याच्च वायोः संचयमापादयन्ति," इति सुश्रुतवाक्यान्यनुरुणद्धि ॥ ३८ ॥

**स संचय इति** । स संचयः-वातदोषस्य संचयः । प्रावृषि-तदाख्ये ग्रीष्मस्यानन्तरिके ऋतौ । वर्षर्तोरेव प्रावृडिति च सामान्यतो व्यवहारः । वैद्यके तु प्रावृडिति प्रत्येकमृतुरेकः परिगण्यते । अस्य च विवरणमग्रतो दृश्यताम् । शीतवातेन शीतेन वर्षेण च ईरितः-प्रकोपितः सन् । वातिकरोगकारी-आयामापतानक-पार्श्वशूलादीन् वातदोषप्रकोपजनितान् रोगान् करोतीति वातिकरोगकारी । भवतीति शेषः । किञ्च नित्यं-सर्वदापि; सर्वेष्वपि ऋतुष्विति भावः । पयसा-निरवधिकेन जलेनैव । क्लिन्नाङ्गभाजां-आर्द्रीभूतावयवतां प्राणिनाम् । पूर्वोक्तः स दोषसंचय एव त्रिकसंचयस्य-दोषत्रयसंचयस्य । (त्रयसंचयाय इति पाठान्त-

**राजा**—कौ मासौ प्रावृट्।

**मन्त्री**—आषाढ-श्रावणौ। तथा भिषग्भिरुच्यते।

**राजा**—कदा पुनरेषामुपशमः।

**मन्त्री**—सोऽप्येतेषां ज्ञातव्य एव स्वामिना। तद्यथा—

हेमन्ते किल पैत्तिकामयशमो ग्रीष्मे कफोद्यद्रुजः
शान्तिर्वातिकरोगशान्तिरुदयेद्वर्षात्यये केवलम्।
एवं षड्टतुषु स्वभावजतया व्याख्यायि तुभ्यं मया
पित्तश्लेष्मनभस्वतां सह चयेनापि प्रकोपः शमः॥ ४० ॥

---

रम्।) प्रकोपहेतुः-संचितानां दोषाणां तदवस्थातः स्थानान्तरप्राप्तिरूपस्य प्रकोपस्य कारणं भवति। "स संचयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितौ वातिकान् व्याधीन् जनयति। एवमेष दोषाणां संचयः प्रकोपहेतुरुक्तः" इति सुश्रुतः॥ ३९॥

**कौ मासाविति**। कौ मासौ प्रावृडिति प्रश्नस्य आषाढ-श्रावणौ इत्येतदुत्तरम्। "आषाढ-श्रावणौ प्रावृट्" इति ऋतुचर्यायां सुश्रुतः। प्रावृडिति न प्रत्येकमस्ति कश्चिदृतुः, कथमेष संपद्यत इति पृष्टे तत् समाधत्ते तथेति। भिषग्भिः तथोच्यते; प्रावृडिति संज्ञया कश्चिदृतुः वैद्यशास्त्रज्ञैरेव पृथक् व्यवह्रियत इत्यर्थः। **कदेति**। एषां-पूर्वनिर्दिष्टानां प्रकुपितानां दोषाणामित्यर्थः। उपशमः-स्वस्थानप्राप्तिरूपा समावस्था। ऋतुभेदानां प्रकृतीः तदनुरुध्य चयप्रकोपप्रशमावस्थामधिगच्छतां दोषाणां स्वभावांश्च परिशील्य वैद्यशास्त्रज्ञैरेवमेषा कालव्यवस्था शास्त्रेऽस्ति परिकल्पिता। **सोऽपीति**। एतेषां-प्रकुपितदोषाणाम्। सः-उपशयोऽपि। स्वामिना-राज्ञा। ज्ञातव्य एव। तद्यथेति तेषामुपशमप्रकारमेवानन्तरं विशिनष्टि।

**हेमन्त इति**। हेमन्ते। पैत्तिकामयानां-पित्तजरोगाणाम्, शमः-समावस्थाप्राप्तिः। भवतीति शेषः। किलेति संभावनायाम्। तथा ग्रीष्मे। कफेन

उद्यद्रुजः-श्लेष्मणा समुद्भवतो रोगस्य। रुज इति जात्येकवचनेन श्लेष्मोद्भवाः सर्वेऽपि रोगा गृह्यन्ते। शान्तिः-प्रशमः। वर्षात्यये-प्रावृड्वर्षात्वेन व्यवह्रियमाणस्य ऋतुद्वयस्यापगमे केवलम्; शरद्गताविर्थः; प्रावृषि वातकोपः स्यादिति पूर्वस्मिन् पद्ये प्रतिपादितत्वात्, तदनन्तरमेव वर्षासु वातस्योपशमो भवेद्वेति संशयनिवारणार्थं न केवलं प्रावृषः किन्तु वर्षाणामपि विरामानन्तरमेव शरदि संप्राप्ते तदुपशम इति निर्धारणायावधारणार्थकः केवलमिति शब्दः प्रयुक्तः। एवं-पूर्वोक्तप्रकारेण। मया-मन्त्रिणा। षड्तुषु-वर्षा-शरद्धेमन्त-वसन्त ग्रीष्म-प्रावृडाख्येषु। स्वभावजतया-कालप्रकृत्या; तत्तत्कालानुगुणशीतादिगुणतो न तु चिकित्सादिभिरित्यर्थः। पित्त-श्लेष्म नभस्वतां-वात-पित्त-कफानाम्। चयेन सह। प्रकोपः तथा शमोऽपि; दोषाणां त्रयाणामपि शम-प्रकोप-प्रशमप्रकारः कीदृश इति। तुभ्यं-राज्ञे। व्याख्यायि-यथाशास्त्रं विवृतमिति विषयमुपसंहरति। अत्र च "तत्र पैत्तिकानां व्याधीनामुपशमो हेमन्ते, श्लैष्मिकाणां निदाघे, वातिकानां शरदि स्वभावत एव। त एते सञ्चय-प्रकोपोपशमा व्याख्याताः" इति सुश्रुतवाक्यम्।

अथात्र ऋतुविषयाणामुपसंहारावसरे **ऋतुविभागविषये विद्यमानान् विभिन्नान् मतभेदान्** विशिष्य निरूपयामः। चैत्रवैशाखौ वसन्तः, ज्येष्ठाषाढौ ग्रीष्मः, श्रावण भाद्रपदौ वर्षाः, आश्वयुज कार्तिकौ शरत्, मार्गशीर्षपौषौ हेमन्तः, माघफाल्गुनौ शिशिर इति ज्यौतिषिकमतानुसारेण ऋतुषट्कस्य लौकिकोऽपि व्यवहारः सर्वत्र प्रचलति। "शिशिरः पुष्पसमयो ग्रीष्मवर्षाशरद्धिमाः। माघादिमासयुग्मैः स्यू ऋतवः षट् क्रमादमी" इति भावमिश्रश्च तमेव सामान्यं क्रममनुसरन् ऋतुविभागं कृतवान्। पुनः "गीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ। सिह्मकन्ये स्मृता वर्षास्तुलावृश्चिकयोः शरत्। धनुर्ग्रहौ च हेमन्तो वसन्तः कुम्भमीनयोः" इति वर्षर्तोर्भिन्नः प्रावृडिति तत्समानधर्मा ऋतुरपरः परिगृहीतः, शिशिरश्च निरस्तस्तेन। एवं प्रावृडाख्यं वर्षर्तुसमानगुणविशिष्टमृतुमन्यं निर्देष्टुं "गङ्गाया दक्षिणे देशे वृष्टेर्बहुलभावतः। उभौ मुनिभिराख्यातौ प्रावृड्वर्षाभिधावृतू" इति हेतुरपि तेन प्रत्यपादि। एवं देशविशेषव्यवस्थां शीतोष्णवर्षाव्यवस्थामप्यनुरुध्य शिशिरस्य त्यागः प्रावृषः संयोजनं चाकारीति मन्तव्यम्। अन्यत्र च "भूयो वर्षति पर्जन्यो गङ्गाया दक्षिणे तटे। अतः प्रावृट् च वर्षाश्च ऋतू तत्र प्रकल्पितौ। तस्या एवोत्तरे देशे हिमद्विन्ध्यसंकुले। भूयः शीतमतस्तत्र हेमन्त-

शिशिरावुभौ" इति वचनैः हेमन्तर्तोः सदृशया शिशिरबाधया समाकुलिते गङ्गाया उत्तरदेशे हेमन्तसमानधर्मा तदानन्तरिकः कालः शिशिरर्तुत्वेन व्यवह्रियत इत्युक्तं भवति। वृद्धजीवकीयतन्त्रापरनामधेये काश्यपसंहिताग्रन्थे "द्वादशमासाः संवत्सरः पञ्चर्तवः" इति श्रुतिवाक्यानुरोधेन "तस्मात् पञ्चैव खलु ऋतवोऽपि, तदनुपपत्तेर्नास्ति षट्त्वमिति" इति विषयं प्रस्तूय, वैद्यके ऋतुषट्कस्य विभागो दोषचयादिहेतुकरसोत्पादक्रमस्य संबन्धमावहतीति कृत्वा "अत्रोच्यते रसार्थमेषां षट्त्वं रसविमाने प्रोक्तम्" इति चाभिहितम्। (हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तव इति श्रौतं मतमिति वदन्ति।) वैद्यके चादान विसर्गाख्ययोः रसादानरसविसर्गरूपप्रकृतिसिद्धकार्यविधायिनोः दक्षिणोत्तरायनयोर्विभागे विधीयमाने, पूर्वमयनं वर्षाशरद्धेमन्ता इति, उत्तरमयनं च शिशिरवसन्तग्रीष्मा इति प्रत्येकं त्रिधा विभज्यत इति ऋतुषट्कं तस्याशितीयाध्याये चरकः पर्यगणयत्। अथ स एव चरको दुष्टानां प्रकुपितानां वा दोषाणां तत्तत्काले यथा प्रकृतिदोषजा रोगा नोद्भवेयुः तथा देहसंशोधनविधिं मनसि निधाय "हेमन्तो ग्रीष्मो वर्षाः प्रावृट् शरत् वसन्तः" इति शिशिरमपास्य प्रावृषं पुना रोगभिषग्जितीयाख्ये विमानस्थानाध्याये परिगृहीतवान्। कालस्वभावमनुसृत्य लौकिकव्यवहरानुरोधेन सुश्रुतश्च ऋतुचर्याध्याये प्रथमतः षड्तूनेवं विशिनष्टि— "द्विमासिकमृतुं कृत्वा षड्तवो भवन्ति। ते शिशिर-वसन्त-ग्रीष्म-वर्षा-शरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः। मधुमाधवौ वसन्तः। शुचिशुक्रौ ग्रीष्मः। नभोनभस्यौ वर्षाः। इषोर्जौ शरत। सहस्सहस्यौ हेमन्त इति। त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः कालप्रविभागकरत्वात् अयने द्वे भवतो दक्षिणमुत्तरं च" इति। दोषाणामुपचय-प्रकोप-प्रशमनिमित्ता एते ऋतुविभागा अन्यथैव क्रियन्त इति तस्मिन्नेवाध्याये वाक्यैरानन्तरिकैरेव सुश्रुतेनैवमभिधीयते—"इह तु वर्षा-शरद्धेमन्त-वसन्त-ग्रीष्म-प्रावृषः षड्तवो भवन्ति दोषोपचयप्रकोपोपशमनिमित्तम्। ते तु भाद्रपदात् येन द्विमासिकेन व्याख्याताः।" इत्यादिना। अनेनैवाशयेन शार्ङ्गधरश्च "चयकोपशमा यस्मिन् दोषाणां संभवन्ति हि। ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात्। ग्रीष्मे मेषवृषौ प्रोक्तौ प्रावृण्मिथुनकर्कयोः। सिंहकन्ये स्मृता वर्षास्तुलावृश्चिकयोः शरत्। धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः" इति शिशिरं विहाय प्रावृड्तुमुपात्त

अपि च—

रजनीमुखार्धरात्रप्रत्यूषा नक्तमहनि पूर्वाह्णः ।
मध्याह्नोऽपराह्णो वर्षाद्याः षट् प्रकीर्तिता ऋतवः ॥ ४१ ॥

---

वान् । एवं च हेमन्त-ग्रीष्म-वर्षा इति प्रधानास्त्रयो ऋतवः संशोधनमधिकृत्य प्रोक्ताः, ततः प्रावृट्छरद्वसन्ता इति त्रयः साधारणा ऋतवश्चाभिहिताः । तथा च चरकः—"हेमन्त-ग्रीष्म-वर्षाश्चेति शीतोष्णवर्षलक्षणास्त्रय ऋतवो भवन्ति, तेषामन्तरेष्वितरे साधारणास्त्रयः प्रावृट्छरद्वसन्ताः" इति रोगभिषग्जितीये, शिशिरं विहाय प्रावृषो ग्रहणरूपं ऋतुभेदनिर्वहणं रसबलोत्पादनिमित्तकमिति च ज्ञेयम् । अनयोरुभयो ऋतुविभागक्रमयोः पूर्वक्रम एवेहोपात्तः कविना ॥ ४० ॥

न केवलं वसन्तादिषु ऋतुष्वेव पूर्वोक्तरीत्या दोषाणां सांवत्सरिकं चय-प्रकोपादिरूपपरिवर्तनं जायते, किन्तु समयेष्वपरेष्वपि संभवतीति निर्दिशति **अपिचेति** । केषु कालेष्वित्याकाङ्क्षायामाह **रजनीमुखेति** । अस्मिंश्च श्लोके एकैकस्मिन्नपि दिने क्रमशः संभवतः षड्तुगुणान्, दोषाणां प्रत्यहमुद्भवन्तं चय-प्रकोप-प्रशमावस्थाक्रमं च संक्षेपतः प्रदर्शयति । नक्तं-रात्रिवेलायाम् । रजनीमुखं-प्रदोषसमयः सायं सन्ध्या च, अर्धरात्रः-निशीथश्च, प्रत्यूषः-प्रभातकालश्च-रजनीमुखार्धरात्रप्रत्यूषाः । एवं त्रयो भागाः । तथा अहनि-वासरे । पूर्वाह्णः, मध्याह्नः, अपराह्ण इति पृथक् त्रयो भागाः । एते षड्विधा अहोरात्रस्य कालभागाः क्रमेण वर्षाद्याः षट् ऋतवः-वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृडाख्याः षट् कालविशेषाः । प्रकीर्तिताः-वैद्यशास्त्रानुरोधेन कालस्वरूपज्ञैः प्रोक्ताः । एवं च सायं समये वार्षिकस्य, अर्धरात्रे शारदस्य, उषसि हैमन्तस्य, पूर्वाह्णे वसन्तस्य, मध्याह्ने ग्रीष्मस्य, अपराह्णे प्रावृषश्च लक्षणं क्रमादुपलक्षयेत् । "वयोऽहोरात्रि भुक्तानां तेऽन्तमध्यादिगाः क्रमात्" (अष्टाङ्ग. सू. १-८) इति विधिमनुसृत्य अह्नः पूर्वभागो वातस्य, अह्नो मध्यभागः पित्तस्य, अह्नोऽन्तिमभागः कफस्य च वृद्धिकालः । तथा रात्र्याः पूर्वमध्यमान्तिमकाला वातपित्तकफानां वृद्धिकाला भवन्ति । एष च विषयो वक्ष्यमाणं सौश्रुतं वाक्यं प्रमाणीकृत्य प्रवृत्तः । यथा—"तत्र पूर्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्य अपराह्णे प्रावृषः प्रदोषे वार्षिकं

एष्वपि पित्तश्लेष्मवातानां संचय-प्रकोपोपशमाः प्राग्वदेव ज्ञातव्याः ।

**राजा**—अस्त्वेतत् । दौवारिक, आन्तःपुरिकं जनं प्रवेशय ।

**विदूषकः**—किं उक्कण्ठिदो भवं दोलाविहारस्स । [किमुत्कण्ठितो भवान् दोला विहाराय ।]

**राजा**—स्मारितं भवता । तथैव क्रियते । मन्त्रिविन्यस्तसमस्तकार्यभरस्य मम विहारादृते कोऽन्यो व्यापारः ।

**मन्त्री**—देव्या सह दोलामधिरोहतु महाराजः । दौवारिक, पद्ममुखीं चन्द्रमुखीं च चेटीमानय ।

**दौवारिकः**—तथा । (इति निष्क्रम्य चेटीभ्यां सह प्रविशति ।) (राजा देवी च दोलाधिरोहणं नाटयतः ।)

---

शारदमर्धरात्रे प्रत्युषसि हैमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्ण-वर्षलक्षणं दोषोपचयप्रकोपशमैर्जानीयात्" इति । (सू. १९) । एतावता च "चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु । वर्षादिषु तु पित्तस्य श्लेष्मणः शिशिरा-दिषु" इत्युक्तरीत्या ऋतुस्वभावसूचनपूर्वकं वातपित्तकफानां तत्तदृतुषु चय-प्रकोपप्रशमांश्च राज्ञे मन्त्री सम्यक् न्यवेदयत् ॥ ४१ ॥

एष्वपीति । एषु-अहोरात्रस्य पूर्वोक्तरीत्या विभक्तेषु षट्सु कालेष्वपि । पित्तश्लेष्मवातानां संचय-प्रकोपोपशमाः । प्राग्वदेव-पूर्वं ऋतुविवरणे प्रतिपादितरी-त्यैव । रजनीमुखे पित्तस्य संचयः, अर्धरात्रे प्रकोपः, प्रत्युषसि चोपशमः । अर्धरात्रे कालमहिम्ना पित्तप्रकोपो ज्ञेयः । एवमेव श्लेष्मणः प्रत्युषसि चयः, पूर्वाह्णे प्रकोपः, मध्याह्ने चोपशमः संभवति । तथा वातस्य मध्याह्ने चयः, सायं प्रकोपः, अर्धरात्रे चोपशमः संपद्यते । एवं कालगुणान् अनुसृत्य दिनचर्यायाम् ऋतुचर्यायां च प्रवर्तनीयमिति राज्ञे सूचनाय सर्वमिदमिहाभिहितम् । **अस्त्वेतदिति** । एतत्-ऋतुचर्यादिविषयविवरणमित्यर्थः । अस्तु तिष्ठतु ; अलमित्यर्थः । आन्तःपुरिकं-अन्तःपुरे विद्यमानम् ; प्रियाजनमिति यावत् । (जनमिति स्थाने जनान्तरमिति पाठान्तरम् ।)

मन्त्री—(चेट्यौ प्रति) गायन्त्यौ दोलामान्दोलयतं भवत्यौ ।

प्रथमा—जअइ महुतुंदिलगुणो सुरहिसरो महुरकम्मुओ वीरो ।
जस्स खु विजअपताआ सामारुणवामदक्खिणावअवा ॥ ४२ ॥

[जयति मधुतुन्दिलगुणः सुरभिशरो मधुरकामुर्को वीरः ।
यस्य खल्वपि जयपताका श्यामारुणवामदक्षिणावयवा ॥]

---

गायन्त्याविति। आन्दोलयतं-प्रेङ्खोलयतम् ; इतस्ततः संचालयतमित्यर्थः। (दोलामिति शब्दः क्वचित् पुस्तके नास्ति ।)

जअइ इति । राजदम्पत्योः सरसदोलाविहारवेलानुकूलं रत्युज्जृम्भणहेतुं श्रृङ्गाररसाधिदैवतं कामदेवमनेन पद्येनोपवर्णयति । मधुना तुन्दिलः-उदरंभरिः मधुतुन्दिलः-मधुपः, भ्रमर इति यावत्; स एव गुणः-मौर्वी यस्य सः। सुरभिशरः-सुगन्धपर्यायो वसन्तकालपर्यायो वा सुरभिशब्दो लक्षणया पुष्पेऽप्यारोप्यतेऽत्र; पुष्पबाण इत्यर्थः। मधुरः-रक्तेक्षुः स एव कार्मुकः-धनुः यस्य सः। वीरः-अतिसुकुमाराणामप्येवंविधायुधानां साहाय्येन शमदमादिनियमितमनोधर्माणां महायोगिनामपि वामलोचनानां सान्निध्येन कामपरवशत्वमुत्पाद्य मनस्संक्षोभकरणसमर्थत्वात् शौर्यवान् मन्मथ इत्युच्यते। तादृशस्य तद्वीर्यस्य परां काष्ठामेव विशदयत्युत्तरार्धेन यस्येति। यस्य-वीरस्य मन्मथस्य। जयपताका-विजयध्वजः। श्यामारुणस्य-नीललोहितस्य, कालीरुद्रात्मकस्य परमेश्वरस्येति यावत्; तस्यैव श्यामारुणौ-कृष्णलोहितवर्णौ; वामश्च दक्षिणश्च वामदक्षिणौ; तौ च तौ अवयवौ च वामदक्षिणावयवौ; श्यामारुणौ वामदक्षिणावयवौ यस्याः सा। अपि खलु इति प्रसिद्धार्थे। अस्य वीरस्य विजयध्वजः खलु अर्धनारीश्वररूपतया विवर्तत इति विश्वविदितो वृत्तान्तः। पताका च प्रायो विविधवर्णविशिष्टवस्त्रादिभिर्निर्मीयते; अस्य च विचित्रा विजयपताका तु वामतः श्यामा दक्षिणतश्चारुणवर्णेत्यपि गम्यते। सामान्यतः पद्येनानेन, विशिष्य वीरशब्देन, श्यामारुणवामदक्षिणावयवेति परस्परसंघटितावयवयोः पार्वतीपरमेश्वरयोर्निर्देशेन

**विदूषकः**—(सकोपम्) आः दासीए पुत्ति, बालिसा खु तुमम्। जह अत्थबोहो ण होदि तह पज्जं पढिदम्। [आः दास्याः पुत्रि, बालिशा खलु त्वम्। यथार्थबोधो न भवति तथा पद्यं पठितम्।]

**राजा**—(विहस्य) वयस्य, जयति भ्रमरगुणः पुष्पबाण इक्षुचापो मन्मथो यस्यार्धनारीश्वररूपा विजयपताकेति पद्यार्थः।

**विदूषकः**—(सशिरःकम्पम्) जुज्जइ। [युज्यते।]

**द्वितीया**—कैरवणिद्दाभंगे चओरतिह्णाणिवारणे अ पडू।
सो को वि जअइ देव्वो पेक्खंतणिडालपुरुसमौलिमणी॥ ४३॥
[कैरवनिद्राभङ्गे चकोरतृष्णानिवारणे च पटुः।
स कोऽपि जयति देवः पश्यन्निटालपुरुषमौलिमणिः॥]

---

च सङ्कल्पसूर्योदये विलोक्यमानान् वर्णनविशेषान् इमान् साधु कविरयं संगृहीतवानिति ज्ञायते—

"करधृतललितेक्षुधन्वनो मे भ्रमरगुणार्पितपुष्पमार्गणस्य।
मरुदनलशरोऽपि मेरुधन्वा क्षणमतिलङ्घितशासनः कथं स्यात्॥" इति,
"वरतनुतया वामो भागः शिवस्य विवर्तते।" इति,
"सुभगपरुषैर्मदस्त्रैः कीलितमन्योन्यकवचितैकार्धम्।
किं न विदितं भवत्या किमपि मिथः स्यूतजीवितं मिथुनम्॥" इति च।

एवं कामस्य वीरायितवर्णनद्वारा राजदम्पत्योः काममुमामहेश्वरयोरिव सार्वकालिकं वियोगाभावं विशेषानुरागं चाशास्ते पद्ममुखी नाम प्रथमा चेटी॥ ४२॥

**सकोपमिति**। अर्थबोधः-पद्यस्य तात्पर्यावगमः। यथा न भवेत् तथा पद्यं पठितम्। अर्थानवबोधादेव विदूषकस्य सकोपत्वम्। (पद्यमिति पदं क्वचित् पुस्तके नास्ति।) पद्यस्यार्थं राजा विवृणोति जयतीत्यादिना।

द्वितीया चेटी गायति **कैरवेति**। राजदम्पत्यो रत्युद्दीपनहेतुं सुधांशुं एषा सुभगेन पद्येन तत्प्रभावसूचनपूर्वकं वर्णयति। कैरवाणां-कुमुदकुसुमानाम्,

विदूषकः—वअस्स, एदस्स पज्जस्स मए अत्थो वण्णीअदि । [वयस्य, एतस्य पद्यस्य मयार्थो वर्ण्यते ।]

राजा—कथमिव ।

विदूषकः—कैरवविआसआरी चओरतित्तिआरी भअवं तस्स तिणेत्तस्स सिहामणी चन्दो जअइ त्ति । [कैरवविकासकारी चकोरतृप्तिकारी भगवान् तस्य त्रिनेत्रस्य शिखामणिश्चन्द्रो जयतीति ।]

मन्त्री—सम्यगुक्तः पद्यार्थो भवता ।

विदूषकः—(सगर्वम्) पुव्वपज्जस्स वि मह अत्थबोहो जादो जेव्व । वअस्सेण अत्थो वण्णीअदि वा ण वे त्ति मए तुह्णिं ठिदम् । [पूर्वपद्यस्यापि ममार्थबोधो जात एव । वयस्येनार्थो वर्ण्यते वा न वेति मया तूष्णीं स्थितम् ।]

---

निद्राभङ्गे-विकासने । पटुः-निपुणः । तथा चकोराख्यानां शीतलचन्द्रमरीचिनिर्गतनीहारशीकरैरेव स्वपिपासापनोदनतत्पराणां पक्षिणां तृष्णाया निवारणे च पटुः । पश्यच्च तत् निटालं च पश्यन्निटालम्, पश्यन्निटालेन सहितः पुरुष इति मध्यमपदलोपिसमासः; त्रिलोचन इति यावत्, तस्य मौलिमणिः-शिवस्य शिरोभूषणत्वेन प्रकाशमानः । सः-शिवेनापि शिरसा ध्रियमाण इति तथा प्रसिद्ध इत्यर्थः । कोऽपि देवः-पुरतो महिलाजनस्य महतामपि मनस्संधुक्षणशीलः काम इवापरः शृङ्गारप्रवर्तकोऽपूर्वो देवताविशेषः । जयति-राजदम्पत्योः शृङ्गाररसस्योत्तेजकत्वेन विराजते । एवं देव्या सहितस्य राज्ञो डोलाधिरोहणप्रमोदं प्रवर्धयितुं दम्पत्योरनुरागमुद्दीपयितुं च शृङ्गाररसाधिदेवतात्मकौ कामदेवसोमदेवौ स्वकीयाभ्यां सरसाभ्यां गीताभ्याम् चेटीभ्यामुपवर्णितौ ॥ ४३ ॥

वअस्सेति । वयस्येति राजानं प्रति संबोधनम् । (अस्मिन् वाक्ये विद्यमानौ वअस्स इति, मए इति शब्दौ देवनागरलिपिमुद्रितपुस्तके मुम्बापुरीये न स्तः ।)

**मन्त्री**—(विहस्य) कः सन्देहः ।

**विदूषकः**—अमच्च, किं उवहससि मम् । एदं सुणोदु भवम् । वाणरीए विअ मह घरिणीए वि अणक्खरा एव्व वाआ । ताए वि मह अत्थबोहो होइ । [अमात्य, किमुपहससि माम् । एतच्छृणोतु भवान् । वानर्या इव मम गृहिण्या अपि अनक्षरैव वाक् । तस्या अपि ममार्थबोधो भवति ।]

(सर्वे हसन्ति ।)

(नेपथ्ये वैतालिकौ)

**प्रथमः**—गन्धेन स्फुटकैरवाकरभुवा विष्वग्विकर्षन्नलीन्
स्वच्छन्दं दिवसावसानपिशुनो मन्दानिलः स्पन्दते ।
भावी नौ विरहाधिरित्यविदितेऽप्यन्तः शुचा स्थीयते
कोकेन प्रियया सहैकनलिनीनालाधिरूढेन च ॥ ४४ ॥

---

**अमच्चेति** । हसनपूर्वकं "कः सन्देहः" इति अमात्योक्तं वचनं सोल्लुण्ठनमिति ज्ञात्वा किं मामुपहससीति पृच्छति । स्वस्य परच्छन्दावबोधे शक्तिर्विद्यत इति विस्रम्भमुत्पादयितुं विद्वद्विडम्बकोऽयं विदूषको दृष्टान्तमुपन्यस्यति एदं सुणोदु इति । वानर्या इव-स्वरूपेण वाचा च वानरस्त्रीसमगुणाया इति भावः । मम गृहिण्याः-मत्पत्न्याः । वाक् अनक्षरैव-स्पष्टाक्षरोच्चारणरहितं किमपि शब्दमात्रपर्यवसायि मुखस्फुरणमेव निशम्यतेत्यर्थः । तस्याः-तादृशानक्षराया वाचोऽपि, अर्थबोधो मम भवति । किमुत साक्षरस्यास्य पद्यस्येति भावः । (धरणीए विअ मह घरणीए अनक्खराए वाआए वि—धरण्या इव मम गृहिण्या अनक्षराया वाचाया अपि इति पाठस्त्वसाधुः ।)

**गन्धेनेति** । दिवसावसानस्य-सायंकालस्य, पिशुनः-सूचकः । मन्दानिलः-मन्दमारुतः । स्फुटानि-विकसितानि यानि कैरवाणि-कुमुदपुष्पाणि, तेषामाकरः सरः, तस्मात् भवतीति स्फुटकैरवाकरभूः, तेन । उत्फुल्लकुमुदकासारादाविर्भूय प्रसर्पतेति यावत् । गन्धेन-कैरवकुसुमानामामोदेन । अलीन्-मधुकरान् । विष्वक्-

द्वितीयः—मोक्तुं तापमिव प्रतीचिजलधौ मज्जत्ययं भानुमान्
राग: कोऽपि विजृम्भते घनपथे चित्ते वधूनामपि ।
आर्द्रागाः कुपितामुपासिसिषते कान्तां विलासी जनो
भक्त्या कर्मठभूमिदेवपरिषत् सन्ध्यां च सायन्तनीम् ॥४६॥

---

समन्ततः । विकर्षन्-आमोदानुभवार्थमाकर्षन् सन् । स्वच्छन्दं-निरर्गलं यथा तथा । स्पन्दते-प्रसरति । प्रियया-कान्तया चक्रवाक्या सह । एकनलिनीनालं-एकमेव मृणालकाण्डम्, अधिरूढेन । प्रियया सह डोलामिव विहारार्थं कमल-नालमधिश्रित्यैकत्र स्थितवतेति यावत् । कोकेन-चक्रवाकपक्षिणा । नौ-आवयोः; चक्रवाकदम्पत्योरित्यर्थः, विरहाधिः-परस्परवियोगजन्या मनोव्यथा । भावी-नाति-चिरादेव रात्रौ भविष्यतीति । चक्रवाकमिथुनानि शर्वर्यां नैव मिथः संगच्छेयुरिति विषयः कविसमयसिद्धः । अविदिते-शर्वर्याः तदानीमनुपनतत्वात् भाविविरहशोके तावता चाज्ञातेऽपि; वस्तुतः परस्परवियोगजे दुःखे तदानीमनुपनतेऽपीत्यर्थः । अन्तः-मनसि । शुचा-व्यथया; नातिचिरादाविर्भविष्यता विरहवेदनाविशेषेणा-ज्ञातमेवान्तः समुद्भूतेनेत्यर्थः; दुःखाविष्टेन मनसा सहेति यावत् । स्थीयते । अनेन सायं समयः समागत इत्युक्तं भवति । अनेन च संप्रति दोलामेकामधि-तिष्ठतो राजदंपत्योरपि शिवप्रसादात् मुक्तिमधिगमिष्यतोर्भावी वियोगश्च सूचितो-ऽभूत् ॥ ४४ ॥

द्वितीयो वैतालिकश्च सूर्यास्तमयं वर्णयति मोक्तुमिति । अयं-पश्चिमदिगन्ते दृश्यमानः । भानुमान्-सूर्यः । प्रतीचिजलधौ-पश्चिमसमुद्रे । तापं-स्वशरीरे मध्याह्ने समुपजातम् अपरिमितं दाहम् । मोक्तुमिव-जलधिनिमज्जनेन निर्वापयितुमिव । मज्जति-अधस्तात्तिरोधत्ते । कोऽपि रागः-शोणितवर्णः, अन्यत्र अनुरागश्च । घनपथे-पश्चिमे नभसि । वधूनां-कामिनीनाम् । चित्ते-मनस्यपि । विजृम्भते-विवर्धते । आकाशे सायन्तनः पाटलवर्णः, युवतीनां चित्ते (सन्निहितत्वा-द्विहारानुकूलस्य रात्रिकालस्य) भर्तृविषयकोऽनुरागश्च युगपदभिवर्धत इत्यर्थः ।

**मन्त्री**—अहमपि सन्ध्योपासनार्थं गच्छामि ।

**विदूषकः**—अहं वि । [अहमपि ।]

**राजा**—अहमप्यन्तःपुरमेव गच्छामि । दौवारिक, पुरतो मार्गमादर्शय ।

(इति निष्क्रान्ताः सर्वे ।)

। इति चतुर्थोऽङ्कः ।

---

आर्द्रागाः-तदात्व एव कान्ताविषये कृतनवापराधः । कृतेन नवापराधेन मानिन्या मनसि समुत्पन्नस्य संक्षोभस्य प्रशमावकाशश्च नाभूदिति भावः । विलासी जनः-रसिकजनः । कुपितां-प्रणयकोपयुक्ताम् । कान्तां-प्रियाम् । उपासिसिषते-अनुनयादिभिः अनुकूलां कर्तुमुद्युङ्क्ते । कर्मठाः-वैदिककर्मानुष्ठानतत्पराः, ये भूमिदेवाः-ब्राह्मणाः, तेषां परिषत्-समूहः । सायन्तनीं सन्ध्यां च । भक्त्या । उपासिसिषते-उपासितुमिच्छति । सायं समयः समुपनत इति यावत् । वैतालिकद्वयेन पठितं (गन्धेन, मोक्तुं इति) पद्यद्वयमिदं विद्यापरिणयेऽपि तृतीयाङ्कस्यान्ते प्रयुक्तमास्ते ॥ ४९ ॥

**अहमपीति** । सन्ध्योपासनार्थं-सायं समये द्विजैः कर्तव्यस्य सन्ध्यावन्दनादिकर्मणोऽनुष्ठानार्थम् । (दौवारिक, पुरतो मार्गमादर्शय इति वाक्यं मुम्बापुरीयपुस्तके नास्ति ।)

इति वैद्यरत्नबिरुदाङ्कितेन, आयुर्वेदभूषण-आयुर्वेदाचार्येत्याद्युपाधिभाजा मेल्पाक्कम् पण्डित दुरैस्वाम्यय्यङ्गार्महोदयेन मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायाम्

**चतुर्थोऽङ्कः** ।

---

# पञ्चमोऽङ्कः

(ततः प्रविशति धावंधावं मत्सरः ।)

**मत्सरः**—(विचिन्त्य)

जीवे साधयितुं रसं पशुपतेर्ध्यानस्य सिद्धौ स्थिते
तद्विघ्नाचरणाय षट् प्रणिहिताः कामादयः पाण्डुना ।
ते गत्वापि वयं परैरभिभवं प्राप्ता यथा पूर्वजाः
पञ्चापि व्यगलन्नहं च चकितः षष्ठः पलाय्यागतः ॥ १ ॥

इतःपरं किं करोमि मन्दभाग्यः ।

---

अथ महानुभावायाः शिवभक्त्याः प्रसादेन प्राप्तया साम्बस्य शिवस्य करुणया रस-गन्धकादीनामधिगमरूपं पूर्वाङ्कोपक्षिप्तं जीवराजस्यानुकूलं कथासन्दर्भं सूचयन्, जीवराजमन्त्रिकृतानां नीरोगतासम्पादनरूपाणामुद्यमानाम् उपरोधाय प्रवृत्तिमतां जीवप्रतिपक्षयोधानां संमन्त्रणादिरूपं भावि कथावस्तु च सूचयितुं पञ्चमाङ्कस्यादौ पात्रत्रयप्रयोज्यं शुद्धविष्कम्भमारभते ततः प्रविशतीति । शुद्धविष्कम्भस्य लक्षणं तृतीयाङ्के निरूपितम् । धावंधावं-अनुस्यूतेन जवात् ससंभ्रमं च धावित्वा इत्यर्थः; वीप्सायां द्विर्भावः । (धावं धावमिति स्थाने धावन् इति पाठान्तरम् ।) मत्सरः-परसंपत्तिद्वेषः । "मत्सरोऽन्यशुभद्वेषः" इत्यमरः । एतच्च मानसदोषरूपं मत्सराख्यं पात्रं राजयक्ष्मणः परिवारेऽन्तर्भूतम् । विचिन्त्य-इतः पूर्वं निर्वृत्तं परपक्षोपनतं सङ्कटं समालोच्येति यावत् ।

**सङ्कटप्रकारमेव विवृणोति जीवे साधयितुमिति** । जीवे-जीवराजे । रसं-

यक्ष्मपक्षध्वंसोपयोगिरसौषधवर्गम् । साधयितुं-व्याधिसमूहसंहारशक्तिसंपन्नत्वेन संपाद्य संस्कृत्य सज्जीकर्तुम् । तत्कार्यमुद्दिश्येति भावः । पशुपतेः-शिवस्य । ध्यानस्य सिद्धौ-निदिध्यासनरूपसिद्ध्यधिगमोपाय इति यावत् । स्थिते-उद्युक्ते सति । " शुद्धान्तःकरणेन सन्ततपरिध्यातार्ककोटि " इति तृतीयाङ्के (श्लो २८) प्रतिपादितपद्योक्तप्रकारेण निर्विकल्पसमाधिना निटिलेक्षणे निभृतासक्तचित्ते सतीति भावः । तद्विघ्नाचरणाय-तद्ध्यानसिद्धिविघातोद्यमाय । जीवकार्यस्यैवं विघ्नमाचरितुमेव द्वितीयाङ्कस्यावसाने राजनियोजितेन कासेन " कर्णे एवमिव " इति पाण्डोरुपजापः कृत इति, ततश्च यक्ष्मामात्यः पाण्डुरपि " तदहमिदानीं कार्यशेषं निर्वर्त्य प्रकृतकार्यार्थं संनह्यामि " इत्युक्त्वा, मत्सरप्रभृतिभिः " भेदो राज्ञस्तस्य तैस्तैरुपायैः शक्यः कर्तुं ज्ञानशर्मोपजापैः " (द्वि. श्लो. ४०) इति पद्योक्तप्रकारादिना जीवराजपरिवारवर्गमध्ये विविधमुपजापं विधातुकामः कामादीन् अचोदयदिति च ज्ञातव्यम् । पाण्डुना । षट् कामादयः—काम-क्रोध-लोभ-मोह-मद-मत्सराख्याः षट् मानसाः शत्रवः । प्रणिहिताः-प्रणिधित्वेन नियमिताः । ते वयं-तथा पाण्डुना सविस्रम्भं प्रणिहिताः कामादयो वयम् । " यच्चञ्चलं प्रकृत्या विषयेषु मनो निसर्गदुर्दान्तम् । तत्कामादिभिरेतैः भेदयितुं शक्यते शनकैः " (द्वि. श्लो. ३९) इति जीवराजाधीनस्य मनसो भेदनाय पूर्वं पाण्डुना प्रणिहिता वयं षडपि सखायः । गत्वापि-शात्रवकुलं प्रविश्यापि । परैः-विज्ञानशर्मप्रभृतिभिर्विद्विड्भिः । अभिभवं प्राप्ताः-पराभूताः सन्तः । पूर्वजाः-ज्येष्ठाः कामादयः । पञ्चापि । यथा व्यगलन्-शत्रुमध्यात् यथा निभृतं निर्गताः । तथेत्यध्याहार्यम् । षष्ठः मत्सराख्यः अहं च । पलाय्य । चकितः-उद्विग्नः सन् । आगतः-शत्रुमध्यान्निर्गत्यायातः । मन्त्रिमहाराजयोः तत्परिवाराणां च मनोद्वारा कैश्चनोपजापादिभिरुपायैर्भेदविधानाय प्रवृत्तो मत्सरोऽपि विज्ञानशर्मप्रभृतीनां मतिविभवैर्वित्रस्तो द्रुतगतिः स्वयूथसमीपमागत इत्यर्थः ॥ १ ॥

इतःपरमिति । इतःपरं-एवं परपक्षात् कान्दिशीकत्वप्राप्त्यनन्तरम् । किं करोमि मन्दभाग्यः-दुर्भगोऽहं किंकर्तव्यतामूढोऽस्मीत्यर्थः ।

किं पाण्डोर्निकटं व्रजामि धृतिमानेवं कृते भ्रातृभि-
स्तस्याग्रे कथमस्तकार्यनिकरः संदर्शयिष्ये मुखम् ।
राजानं यदि वानुवर्तितुमये किं राजतन्त्रेऽमुना
पृष्टे चोत्तरयामि हन्त शरणं कं वा करिष्येऽधुना ॥ २ ॥

---

किंकर्तव्यताविषये संजातचञ्चलः स्वस्योपनतां विह्वलतामेव विवृणोति **किं पाण्डोरिति** । धृतिमान्-कथंचित् धैर्यमवलम्बमानः । पाण्डोः निकटं किं व्रजामि । भ्रातृभिः-मदीयज्येष्ठसहोदरैः कामक्रोधादिभिः; काम-क्रोध-मद-मत्सरादीनामुत्पत्ति-स्थानमेकमेव; अतोऽभिधीयते भ्रातृत्वमेतेषाम् ; "किमुच्यत एकमुत्पत्तिस्थान-मिति, ननु जनक एवास्माकमभिन्नः" इति कामो न केवलं रजस्तमोमयानां रागद्वेषादीनाम् स्वस्य च, अपि तु विवेकादीनां सात्त्विकानामपि समानपितृकत्वं प्रबोधचन्द्रोदये (१ अं. विष्कम्भे) रतिं प्रति कथयति । मनसः समुत्पन्नानामे-तेषां गुणानां कामस्य ज्येष्ठत्वं च "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्" इति श्रुतिप्रतिपादितम् । एवं कृते-पूर्वोक्तरीत्या स्वामिनियुक्तकार्यं व्यर्थीकृत्य कान्दिशीकत्वेन तैः प्रतिनिवृत्ते सति । अहमपि अस्तकार्यनिकरः-विधूतविविधराजकार्यः सन् । तस्य पाण्डोः । अग्रे-पुरतः । मुखं कथं संदर्श-यिष्ये । विहतराजकार्यभरो दुर्भरापराधी नाहमुत्सहे मन्त्रिणः पुरतो मुखं दर्शयितुमपीति भावः । यदि वा-अथवा । राजानं-राजयक्ष्माणमेव । अनुवर्तितुं-अनुनयेनावर्ज्य प्रसादयितुम् । अये-प्रयते । अत्र चकारस्य अनु इत्यर्थश्च ; अथेति यावत् । अमुना-अथानेन राज्ञा । राजतन्त्रे-तन्नियुक्तराजकार्यनिर्वहणविषय इति यावत् । पृष्टे-अप्याज्ञप्तं कार्यं निर्वर्त्य सफलः समागतोऽसीति तेनानुयुक्ते सति । किम् उत्तरयामि-कीदृशमुत्तरं वदेयम् । अधुना-एतादृशे सङ्कटावसरे समुपनत इत्यर्थः । कं वा शरणं करिष्ये-कं वा रक्षितारमन्विष्य गमिष्यामि । हन्तेति

तत् सर्वथा नास्ति मे दैवानुकूल्यम् । (विचिन्त्य) भवतु । वनमेव गत्वा तपश्चरणेनात्मानं कृतार्थयामि । यतः—

अश्रान्तप्रवहत्तुषारतटिनीशीतालुशातोदरी-
सङ्घायासगृहीतशोषितसमित्संवर्धिताग्नित्रयाः ।
प्रालेयाचलकाननोटजगता विप्रास्तृतीयाश्रमे
स्थित्वापुः कति वाञ्छितानि तपसामाश्चर्यया चर्यया ॥ ३ ॥

---

विषादे । अगतिकोऽभवमिति विषादपीडितो वीतोत्साहो विमृशति किंकर्तव्यताविषयम् ॥ २ ॥

तदिति । वनगमनादृते नास्त्यन्या गतिरिति विचिन्तनेन निर्धारयत्यन्ततः । कुत इति चेत् , यत इति चिन्तितमर्थं सोपपत्तिकं समर्थयति ।

अश्रान्तेति । कति विप्राः-कतिसङ्ख्याका द्विजाः । तृतीयाश्रमे-वानप्रस्थाश्रमे । स्थित्वा ; वानप्रस्था भूत्वेति यावत् । प्रालेयाचलस्य-हिमालयस्य, काननेषु स्थितानि उटजानि-पर्णशालाः, तद्गताः-तेषु निवसन्तः सन्तः । तथा, अश्रान्तं यथा तथा प्रवहन्त्यः-नैरन्तर्येण निष्यन्दमानाः, याः तुषारतटिन्यः-हिमजलमय्यः स्रोतस्विन्यः ; ताभिः-तासां संपर्कादिति यावत् , शीतालवः-शैत्यमसहमानाः ; शीतशब्दात् तदसहनार्थे मत्वर्थीयोऽलुच्प्रत्ययः ; "शीतोष्णतृप्रेभ्यस्तन्न सहते" (५-२-१२२) इति वार्तिकम् ; तादृश्यो याः शातोदर्यः-कृशोदर्यः तरुण्यः, तासां सङ्घेन-बह्वीभिस्तापसजनशुश्रूषायामाहितश्रद्धाभिः वनवासिवनिताभिरिति भावः, आयासेन-अतीव श्रमावहयत्नेन, गृहीताः-संपादिताः, ततः शोषिताश्च याः समिधः-इध्मानि, ताभिः संवर्धितं-शुष्केन्धनसङ्घातसंयोगवशात् सम्यक् प्रज्वालितम् , अग्नित्रयं-दक्षिणाग्निः, गार्हपत्याग्निः, आहवनीयाग्निरिति त्रयोऽग्नयः तेषां

समाहारोऽग्नित्रयम्, यैस्ते। "उद्वेजयत्यङ्गुलिपार्ष्णिभागान् मार्गे शिलीभूतहिमेऽपि यत्र" (कुमारसंभवे १-११) इत्युक्तरीत्या दुस्सहशीतबाधाजनकानि सर्वत्र निरन्तरं प्रवहन्ति हिमोदकमयानि स्रोतांस्यपि समुल्लङ्घ्य वन्याभिर्वनिताभिः सुमहत्क्लेशमप्यविगणय्य सश्रद्धमुपनीतैः संशोषणपक्वीकृतैः इन्धनैरुज्ज्वलितस्य त्रेताग्नेर्मध्ये निदिध्यासनादिना पूतात्मान इति भावः।

"त्रेताग्निधूमाग्रमनिन्द्यकीर्तेस्तस्येदमाक्रान्तविमानमार्गम्।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा॥"

इति श्रीरघुनन्दनोऽपि (रघुवंशे. १३-३७) त्रेताग्निधूमस्यातिपावनत्वं तत्स्पर्शतः स्वात्मनश्च कृतार्थत्वमभिशंसति। तथा त्रेताग्निमध्ये निवसन्तस्ते वानप्रस्थाः। आश्चर्यया-तृणपर्णजलवातादीन् अशित्वा वर्षातपजनितदुस्सहक्लेशानपि तृणाय मत्वा मध्येवह्नि नैरन्तर्येण निभृतं निष्ठामाश्रित्य स्थितत्वात्, निखिलमनोरथानामपि वितरणक्षमत्वाच्च स्वरूपतो विस्मयावहया। तपसां चर्यया-कायिकवाचिकमानसिकानां त्रिविधानां देहस्योत्कटक्लेशसहनहेतूनां मोक्षपर्यन्तविविधफलप्राप्त्युपायभूतानां चेन्द्रियनिग्रहरूपधर्माणामनुष्ठानेन। वाञ्छितानि-अभिलषितानर्थान्। आपुः। कतिशब्दो वाञ्छितानीतिपदेन द्वितीयान्तत्वेन चान्वेतुमर्हति। अथवा विप्रा इति कर्तृपदस्य प्रथमान्तविशेषणत्वेन च, वाञ्छितानीति कर्मणो द्वितीयान्तविशेषणत्वेन च काकाक्षिन्यायेन कतिशब्दोऽयमुभयत्र योजनामर्हति।

"तपसो हि परं नास्ति तपसा विन्दते महत्।
तपसा क्षीयते पापं मोदते तपसा दिवि॥
तपसा प्राप्यते ज्ञानं तपसा प्राप्यते यशः।
आयुराप्नोति तपसा सौभाग्यं रूपमेव च॥
तपसा धर्मनिष्ठोऽयं परं धाम प्रपद्यते।
ज्ञान-विज्ञानसंपन्नस्तपसा विन्दतेऽखिलम्॥"

इति मत्स्यपुराणोक्तरीत्या यथावदनुष्ठितानि तपांसि तत्तदभीष्टफलान्यशेषाण्यपि यत्सत्यं सेत्स्यन्तीति भावः॥ ३॥

(पुरो विलोक्य)

समन्तादालोके सवितुरुपगच्छत्युपशमं
गुरोर्दिष्ट्या लब्धे महत इव सेवापरिचये ।
तमः सर्वामुर्वीं स्थगयति खलानामिव मतिं
तदस्यामत्यर्थं न भवति विवेकः सदसतोः ॥ ४ ॥

---

समन्तादिति । दिष्ट्या-भाग्यवशात् । लब्धे-प्राप्ते । महतो गुरोः-सर्वतोमुखज्ञानवत आचार्यस्य । खलानामिति पदम् अत्राप्यन्वेति; खलानां-दुर्जनानाम् । सेवापरिचये-यथावदनुशीलितशुश्रूषाभ्यास इव; दुर्जनैरनुशीलिताचार्यसेवाभ्यासप्रकारवदिति यावत् । सवितुः-सूर्यस्य । आलोके-प्रभायाम् । समन्तात्-सर्वतः । उपशममुपगते-तिरोधानमधिगते सति । सर्ववस्तूनाम् आलोकशक्तिप्रदान् आलोकान्-प्रभाः प्रददात्येष पूषेति अर्थद्वयद्योतनायात्र आलोके इति शब्दः प्रयुक्तः । लौकिकालौकिकतत्त्वार्थानाम् अवलोकनक्षमत्वं महाभिज्ञस्य गुरोः परिचयवशात् यथा संपद्यते तथा भास्वतो भाभिः पृथिव्यां पदार्थजातस्यावलोकनक्षमत्वमपि प्रकल्पते प्राणिवर्गस्येति भावः । परिहृतमहाचार्यपरिचयस्य पामरस्य लोकज्ञानमिव, अन्तर्हितप्रभाकरस्य प्रजासमूहस्यापि तत्तद्वस्तुविवेचन-दर्शनशक्तिरपि स्वयमवलुप्यत इति भावः । एवं गते किं भवतीत्याहोत्तरार्धेन । तमः-तमोगुणः, अविद्येति यावत् । खलानां-दुर्जनानां अविवेकिनां वा । मतिं-बुद्धिमिव । तमः-अन्धकारः । सर्वामुर्वीं अशेषामपि भुवम् । स्थगयति-आच्छादयति । तत् -तस्माद्धेतोः । अस्यां उर्व्याम् खलानां मतौ च । सदसतोः द्रव्याद्रव्ययोः सद्विषयासद्विषययोः कृत्याकृत्ययोश्च । विवेकः-विमर्शपूर्वकं ज्ञानम् । अत्यर्थं न भवति । अत्र अत्यर्थमिति पदमतीवावश्यकमिति वक्ष्यमाणैः कालिदासवाक्यैः अवगम्येत । जगति तमसाभिव्याप्ते चेतनाचेतनपदार्थयोः, पदार्थैः शून्याशून्यस्थलयोश्च विद्यमानो भेदविषयः सर्वथा

तथापि पश्यतो मम द्वाविव पुरुषौ गृह्येते । (कतिचित् पदानि गत्वा निपुणं निरूप्य) हन्त, सकिङ्करः कुष्ठोऽयमागच्छति । स्वजनेनाप्यनेनाहमिदानीं संभाषणाय जिह्रेमि । तदस्य दर्शनं परिहरणीयम् । मार्गोऽपि न दृश्यते निलीय गन्तुम् । भवतु, अत्रैव स्थाणुतामवलम्ब्य तिष्ठामि । गते चैतस्मिंस्त्वरितपदं व्रजेयम् । (इति तथा स्थितः ।)

---

न दृष्टिगोचरो भवति; तथैवाज्ञानतिमिरान्धस्य च पुंसो नैव सदसतोस्तत्त्वविचारे मतिः प्रसरतीति प्रकृतिसिद्धमिदं वस्तुतत्त्वम् ।

"यामिनीदिवससन्धिसंभवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरङ्कुशं दिक्षु दीर्घनयने विजृम्भते ॥
नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरौघवेष्टितो गर्भवास इव वर्तते निशि ॥
शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हृतान्तरम् ॥"

इति त्रिभिः पद्यैः कालिदासेन (कुमार. ८–५५, ५६, ५७) पठितं वर्णनप्रकारं कविरेष पद्येनैकेन साधूपपादितवान् । तत्रापि तृतीयपद्यं विशिष्यात्र हृदयङ्गमतया पद्यस्यास्यार्थमनुकरोतीति सूचनमर्हति ॥ ४ ॥

**तथापीति** । तथापि पश्यतः-एवमन्धतमसेन व्याप्तेऽपि जीवलोके वस्तूनि कथंचिदवलोकयतः । मम । द्वौ पुरुषाविव गृह्येते-पुरुषद्वयं मद्दृष्टिगोचरं भवतीवेत्यर्थः । (द्वावपि पुरुषौ इति पाठस्तु असमीचीनः ।) कतिचित् पदानि गत्वा-तयोः किंचित् समीपं गत्वेति यावत् । निपुणं निरूप्य-अतिकृच्छ्रेण सुसूक्ष्मदृष्ट्या निरीक्ष्य । अयं कुष्ठः-पाण्डोर्योधेष्वन्यतमः । अनेन-कुष्ठेन । स्वजनेन-स्वयूथ्येनापि । इदानीं-शत्रुसविधात् सभयं पलाय्य प्रतिनिवर्तनावसरे; अस्यां गर्हणीयायामवस्थायामिति भावः । **मार्गोऽपीति** । अन्धकाराच्छादितत्वात् निलीय

(ततः प्रविशति किङ्करेणानुगम्यमानः कुष्ठः ।)

**कुष्ठः**—(सदृष्टिक्षेपम्) किमिदं दृश्यते, पश्य ।

**किङ्करः**—(सान्द्रे तमसि न्यञ्चितपूर्वकायः पश्यन्)

पश्यामि न करचरणं न चात्र पश्यामि चलनमपि किञ्चित् ।
वैशिष्ट्यमूर्ध्वतायाः पश्यामि स्थाणुरयमतो भवति ॥ ९ ॥

---

गमनोपयोगी मार्गोऽपि नोपलभ्यत इति यावत् । स्थाणुताम् अवलम्ब्य-निश्चलस्तम्भस्वरूपम् आसाद्य । तिष्ठामि-स्तम्भवत् तिष्ठामीत्यर्थः । गते-मामुल्लंघ्यान्यतो कुष्ठे याते सति ।

**सदृष्टिक्षेपमिति** । आकस्मिकतया गाढे तमसि पुरतः पदार्थस्य कस्यचन समुपस्थितस्य अञ्जसा सविस्मयं क्रियमाणं दर्शनं दृष्टिविक्षेपः । किमिदं-इह पुरतः दृश्यते वस्तु किं तत् । न्यञ्चितपूर्वकायः-पूर्वः कायस्य पूर्वकायः-शिरः कण्ठवक्षसः पूर्वकाय इति नाम ; न्यञ्चितः-अवनतः पूर्वः कायः येन सः ; तथाभूतः सन् । सम्यक् यस्य कस्यचनावलोकनाथ तिमिरावृतेषु प्रदेशेषु पुरतः शिरसः प्रवर्तनम् अवनमनं च सामान्यतः क्रियते ।

पुरतः स्थितस्य वस्तुनः स्वरूपं निर्वर्णयति **पश्यामीति** । करौ च चरणे च करचरणम् ; प्राण्यङ्गत्वादेकवद्भावः । न पश्यामि ; करचरणकर्णादयोऽवयवा न दृश्यन्ते । अत्र-अस्मिन् आपाततो दृश्यमाने वस्तुनि । किञ्चित् चलनमपि न च पश्यामि । निश्चलं निरवयवं च किमप्येतत् । किमप्यत्र स्थूलं वस्तु तिष्ठतीति भावः । ऊर्ध्वतायाः-प्रांशुत्वस्य । वैशिष्ट्यं-असाधारणताम् । पश्यामि-स्थिरं प्रांशुं च कमपि पदार्थमवलोकयामि । अतो हेतोः । अयं-पुरस्ताद्विद्यमानः पदार्थः । स्थाणुः-स्तम्भः । भवति-दारुमयः कोऽपि स्थाणुरेव स्यात् नान्य इति स्वानुमानं सूचयति किङ्करः । अङ्घ्रिद्वयमन्योन्यमायोज्य, मध्यकायेन करावपि सम्यगायोज्य निष्कम्पतया स्थितत्वात् स्थाणुत्वभ्रान्तिरुत्पन्ना ॥ ९ ॥

कुष्ठः—भद्र, वदन्ति खल्वेवं नीतिशास्त्रविदः—

"आक्रान्ते रिपुभिः पुरेऽन्नसलिलादीनामभावाद्बहि-
स्तान्यानेतुमशब्दकल्पितपदन्यासास्तमस्यागताः ।
संप्राप्ते सति संनिधिं परिजने द्राग्बिभ्रतः स्थाणुतां
लीनत्वं दधतोऽथवाधिसरणि स्वं साधयन्तीप्सितम्" ॥६॥ इति ।

---

भद्रेति । एवं-वक्ष्यमाणप्रकारेण । नीतिशास्त्रविदः-राजनीतिप्रभृतिषु प्रवीणाः ।

आक्रान्त इति । रिपुभिः-शत्रुभिः । आक्रान्ते-अभियोगेनागत्याभिव्याप्ते । पुरे । अन्नसलिलादीनां-जीवनोपयोगिनां भोजनपानाद्यर्हाणामशेषाणामपि पदार्थानाम् । अभावात् । नदीतटाक सरःप्रभृतयो जलाशयाः प्रायो नगराद्बहिरेव विद्येरन्; आहारोपयोगिनो ब्रीहितण्डुलादयो धान्यराशयश्च वणिग्भिरपरैश्च पुरस्य बहिःप्रदेशेभ्य एवानीय पुरवासिभ्यो विनियुज्यन्ते; पुरस्यान्तः प्रवेशमार्गेषु रिपुभिराक्रम्य समन्ततः प्रतिरुद्धेषु प्रजानामन्तर्नगरं स्थितानामन्नपानाभावरूपा दुरवस्था सत्यं समुद्भवेत् । तानि-अन्नसलिलादीनि । आनेतुं-नगरस्यान्तः सामर्थ्यात् संपाद्योपनेतुम् । तमसि-अन्धकारे । अशब्दं यथा तथा कल्पिताः-निक्षिप्ताः, पदन्यासाः-चङ्क्रमणसमयापादितचरणविन्यासाः यैस्ते । तथा आगताः-प्राप्ताः । नगरजना इति शेषः । द्राक्-झटिति, आकस्मिकतयेति यावत् । परिजने-अनुयायिजने यस्मिन् कस्मिंश्चित् । संनिधिं-अन्तिकम् । संप्राप्ते-समायाते सति । स्थाणुतां द्राक् बिभ्रतः-सपदि स्तम्भवत्तिष्ठन्त इत्यर्थः । द्राक्शब्दस्यैवमुभयत्रान्वयः । अथवा-अन्यप्रकारेण । अधिसरणि-मार्गस्य मध्ये । लीनत्वं-क्वचित्तिरोहितत्वम् । दधतः-आश्रित्य स्थितवन्तः । स्वम् ईप्सितं-स्वाभिलषितं कार्यम् । साधयन्ति-निष्पादयन्ति । इति नीतिशास्त्रविदो वदन्तीति पूर्ववाक्येनान्वयः ॥ ६ ॥

अतः सम्यङ्निरूपय ।

(किङ्करो गत्वा मत्सरं हस्ते गृह्णाति ।)

**मत्सरः**—(स्वगतम्) मम खल्वशाब्दिकीयमवस्था संप्राप्ता । यद्यहं शब्दं कुर्याम्, ततः कण्ठस्वरेण मां जानीयुः; तस्मादविकटं प्रविष्टेन मलिम्लुचेन गृहीत उरभ्र इव तूष्णीमासिष्ये । (इति हस्तं धुनोति ।)

**किङ्करः**—चोर, दृढं गृहीतोऽसि । वृथा ते हस्तधूननम् । (कुष्ठं प्रति) आवुक, पुरुषः पुरुषः । गृहीत एष दृढं मया ।

**कुष्ठः**—सफलो मे तर्कः । दृढबद्धमेनमत्रैवानय ।

---

**अत इति** । अतः-उक्तरीत्या कपटचेष्टितशीलत्वाच्छत्रुजनानाम् । सम्यक् निरूपय-पुरतः स्थितं पदार्थं निपुणं परिशोधय । **ममेति** । अशाब्दिकी-शब्दं करोतीति शाब्दिकः, 'शब्ददर्दुरं करोति' इत्यनेन ठक्; ततो ङीप् शाब्दिकी; न शाब्दिकी अशाब्दिकी । इयम् अशाब्दिकी अवस्था-शब्दकरणानर्हावस्था; वाचंयमत्वावस्थेति यावत् । (माशब्दकीयमवस्थेति पाठस्तु न साधुः ।) तस्मात्-जातपरिचयैः कुष्ठादिभिः स्वयमेवाभिज्ञातः स्यादिति शङ्कितत्वाद्धेतोः । अविकटं-रोमभूयिष्ठानामजानां बृन्दम् । प्रविष्टेन । मलिम्लुचेन-चोरेण । गृहीतः-गले बलाद्गृहीतः । उरभ्रः-रोमभूयिष्ठाज इव । "एडकोऽप्युरणो मीढ उरभ्रो रोमशोऽप्यविः" इत्युभयत्र वैजयन्ती । तूष्णीम् आसिष्ये-अशाब्दिकीमवस्थाम् अङ्गीकृत्य स्थास्यामि । **कुष्ठं प्रतीति** । आवुक-तात । नाठ्येषु जनक आवुक इत्याहूयते । पुरुषः पुरुष इति कविकृता हास्योक्तिः । (गृहीत एवेति पाठान्तरम् ।) **सफल इति** । मे तर्कः-आक्रान्ते रिपुभिरिति पद्योक्तरीतिक ऊहः । सफलः-परमार्थतः फलितः । दृढबद्धं-न तु केवलं दृढगृहीतम् । अत्रैव-यत्राहमस्मि

किङ्करः—एहि रे चोर, एहि। रक्तकरवीरमालामामुच्य कण्ठे त्वां संभावयामि। अहो तव तपःप्रभावः। यत इदानीं गङ्गाचन्द्रादिपरिकरं विनापि शूली भविष्यसि।

मत्सरः—(स्वगतम्) दग्धो मनोरथो मे बत चिन्तितमन्यदापतितम्।
(हर्षमभिनीय) मोक्ष्याम्यथवा शोकाद्देहवियोगेन भाविना दैवात्॥७॥

---

तत्रैव। एहीति। कण्ठे। रक्तकरवीरमालां-हयमारकवृक्षस्य चण्डकाख्यस्य रक्तवर्णैः कुसुमै रचितां मालाम्। आमुच्य-बध्वा। संभावयामि-गौरवयामीति काक्वा परिहासोक्तिः। दण्डितस्य वध्यस्य पुरुषस्य कण्ठे करवीरमालायोजनं प्राक्कालिकमाचरणम्।

"अंसेन बिभ्रत् करवीरमालां स्कन्धेन शूलं हृदयेन शोकम्।
आघातमद्याहमनुप्रयामि शामित्रमालब्धुमिवाध्वरेऽजः" इति॥

मृच्छकटिके (१०–२१)। गङ्गा-चन्द्रादिरूपं परिकरं-परिच्छदम्। विनापि। शूलीरुद्रः अन्यत्र शूलवान्, शूलारोहणवानित्यर्थः।

दग्ध इति। मे मनोरथः-जीवकार्यविघ्नाचरणोद्यमविषयकोऽभिलाषः। दग्धः-विहतः। चिन्तितम् अन्यत् आपतितं-चिन्तितम् अन्यथा परिणतमित्यर्थः। अथवा "नास्ति मे दैवानुकूल्यम्" इति यत् तदेव अन्यत्-ईप्सिताद्विपरीतम। तत् आपतितम्। बतेति खेदे। अनुक्षणमेव चिन्तान्तरस्य चित्ते स्फुरितत्वात् हर्षस्याभिनयः। अथवेति अस्थाने खिन्नत्वं सूचयति। खेदापेक्षया हर्षस्यैवाद्यावसर इत्याह मोक्ष्यामीत्यनेन। दैवात्-भाग्यवशात्। भाविना-राजदण्डत्वेन भविष्यता। देहवियोगेन-मरणेन। शोकात् राजशासनानिर्वर्तनोत्पन्नात् दुःखात्। मोक्ष्यामि। अतो नैष शोकस्यावसर इति भावः। अत्र पूर्वार्धेन मनोरथभङ्गोत्पन्नः शोकः, उत्तरार्धेन मनस्यनुपदमेव मत्सरस्योपनतो देहवियोगाद्दुःखविनाशहेतुको हर्षश्च क्रमेण प्रकटीक्रियते॥ ७॥

(किङ्करो बलान्मत्सरमाकृष्य कुष्ठनिकटं गमयति ।)

**कुष्ठः**—भद्र, दीपिकासमीपमानय, क एष इति पश्यामि । साधारणश्चेन्मोक्ष्याम एनम् ।

**किङ्करः**—आर्य, ज्ञातचर इव दृश्यते । (इति दीपिकासमीपमानयति ।)

**कुष्ठः**—(निरूप्य) अहो रूपमिदं मत्सरस्यैव लक्ष्यते । वेषस्तु कापालिकस्य । तथाहि—

भस्मानुलेपधवलीकृतसर्वगात्रः
श्वेतां वहन् शिरसि नारकपालमालाम् ।
एकेन शूलमितरेण दधत् कपालं
हस्तेन तिष्ठति पुरो मृगचर्मवासाः ॥ ८ ॥

---

**साधारण इति** । साधारणः-उदासीनो जनः, निरपराधीत्यर्थः । मोक्ष्यामः-स्वच्छन्दगमनाय विसृक्ष्यामः । अहो इति विस्मये । रूपं-स्वाभाविकी आकृतिः । वेषः-वर्णरचना-वस्त्रधारणादिभिः परिकल्पितं कृत्रिमं रूपम् ।

वेषस्तु कापालिकस्यैवेति यदुक्तं तदेव विवृणोति **भस्मानुलेपेति** । भस्मनाम् अनुलेपेन-श्मशानभसितानाम् उद्धूलनेन, धवलीकृतं सर्वगात्रं यस्य सः । श्वेताम् । नराणामिमानि नाराणि-मानुषाणि, कपालानि-खर्पराः, तैः कृतां मालाम् । शिरसि वहन् । एकेन हस्तेन । शूलं-तदाख्यमायुधम् । इतरेण हस्तेन । कपालं-करोटिं च । दधत्-वहन् । मृगचर्म-कृष्णाजिनं वासः यस्य सः । एतादृशवेषविशिष्टः सन् । एष इति शेषः । पुरः ममाग्रतः । तिष्ठति । कापालिकस्य स्वरूपं च प्रबोधचन्द्रोदये वर्णितमेवम्—

"नरास्थिमालाकृतचारुभूषणः श्मशानवासी नृकपालभोजनः ।
पश्यामि योगाञ्जनशुद्धचक्षुषा जगन्मिथो भिन्नमभिन्नमीश्वरात् ॥" (३-१२)

भवतु । एवं संबोधयामि । सखे, कीदृशीयमवस्था ते संप्राप्ता ।

**मत्सरः**—(आत्मगतम्) हन्त ज्ञातोऽस्म्यनेन मन्दभाग्यः । ज्ञातस्याधुनात्मापलापोऽनुचितः । (प्रकाशम्) सखे, तस्यैवेयं दशा दैवहतकस्य ।

**कुष्ठः**—(किङ्करं प्रति) भद्र, सखायं मे मत्सरः । तन्मुञ्चैनम् ।

(किङ्करस्तथा करोति ।)

**कुष्ठः**—सखे मत्सर, कथं गृहीतवती भवन्तमपि कापालिकतापिशाची ?

---

तथा तत्रैवानन्तरमेव "अलेले कावालिअ णलात्थिमुण्डमालाधारिअ कीलिसो तुह्म धम्मो—अरेरे कापालिक नरास्थिमुण्डमालाधारक, कीदृशस्तव धर्मः" इति च कापालिकस्वरूपमस्ति सूचितम् । भस्मोद्धूलनादिवेषवशात् साक्षात् परमशिव इव परिदृश्यस इति च मिथ्या प्रशंसात्मको भावः सूचितः ॥ ८ ॥

भवत्विति । एवं संबोधयामि-अनेन प्रकारेणाहूय भणामि । (एवमिति स्थाने एनमिति पाठः । एनं-सखायं नामग्रहणपूर्वकमेव ।) ते । कीदृशी ते इयमवस्था संप्राप्ता-अतिविरुद्धमिदं शोचनीयं वेषतो रूपान्तरसंग्रहणं तवोपनतमित्यर्थः । (सखे मत्सर इति संबोधनं क्वचित् ।) हन्तेति । राजनियोगनिर्वहणे भग्नोद्यमस्य, अत एव जीवितान्मरणमेव वरमिति कुष्ठादीनां हस्तात् प्रतीक्षितस्वजीवितान्तस्य स्वात्मनो याथार्थ्यं कुष्ठेन ज्ञातमभूदिति समुपनतेनाशाभङ्गेन चिन्तयति हन्त ज्ञातोऽस्मि मन्दभाग्योऽनेनेति । आत्मापलापः-स्वरूपयाथार्थ्यनिह्नवः । तस्य दैवहतकस्य-दुर्दैवस्यैव । इयं दशा-एतादृशी अवस्था ; दुःखोत्पादनशीलेन दैवेनैवैतदवस्थान्तरं मे समुपनतमिति भावः । सखे मत्सरेति । कपालेन-नृकरोट्या चरति अभ्यवहारादिकं करोतीति कापालिकः वामाचारिविशेषः ; तस्य भावः कापालिकता ; सैव पिशाची । भवन्तमपि-तस्मिन्निहितं प्रीत्यतिशयं सूचयति अपिशब्दः । बलवन्तं भवादृशमपीति वा । कथं गृहीतवती । धीरः सन् त्वमपि कथमिमं

मत्सरः—सखे, सत्यमाह भवान् कापालिकतापिशाचीति, या खलु मामाकृष्य मरणसुखात् दुरवस्थामिमां प्रापितवती ।

कुष्ठः—सुखं मरणमप्येवंविधं तव भविष्यति ।

संगतिः स्वजनेनापि कथं ते दुर्दशापदम् ॥ ९ ॥

(मत्सरस्तूष्णीमधोमुखस्तिष्ठति ।)

---

कापालिकधर्मरूपं कापथम् अङ्गयकार्षीरिति पृच्छतीति भावः । (कथं गृहीता भवता कापालिकतापिशाचिका इति पाठान्तरम् ।) कापालिकधर्मस्य नीचत्वम् कृष्णमिश्रस्य वक्ष्यमाणवचनेन सम्यक् प्रकाशितम् । यथा—"कापालिकः—अरे क्षपणक ; धर्मं तावदस्माकमवधारय—

मस्तिष्कान्तवसाभिपूरितमहामांसाहुतीर्जुह्वतां
वह्नौ ब्रह्मकपालकल्पितसुरापानेन नः पारणा ।
सद्यः कृत्तकठोरकण्ठविगलत्कीलालधारोज्ज्वलै-
रर्च्यो नः पुरुषोपहारबलिभिर्देवो महाभैरवः ॥ (प्रबोध ३-१३)

सत्यमाहेति । कापालिकतायाः पिशाचीत्वं सङ्गतमेवेति स्वानुभूतफलतो निर्दिशति । पिशाची तु पुमांसं सुखात् बलादाकृष्य दुःखे निपातयेत् ; तथैव कापालिकतापि मरणसुखात् उपनतादाकृष्य मित्रमध्यपातनरूपं कष्टमुत्पादितवतीति मत्सरोऽभिप्रैति । इमां दुरवस्थां-मित्रहस्तप्राप्तिरूपां कृच्छ्रां वैक्लव्यदशाम् ।

सुखमिति । एवंविधं-पूर्वं किङ्करोक्तरीत्या संभावितम् । मरणम् । कथं तव । सुखं भविष्यति । मरणप्राप्तिं कस्मात् कारणेन सुखं कलयसि । स्वजनेन-स्वकीयसुहृज्जनेन बन्धुजनेन वा । संगतिः समागमश्च । ते-तव । दुर्दशायाः-दुःखानुभवरूपदुरवस्थायाः, पदं आस्पदम् । भवतीत्येतदपि कथम् । तथा स्वजनेन संप्रति संगमं च केन हेतुना दुःखं भावयसि । तव मनोधर्मस्तु कथमेवं लोकविरुद्धो भवतीति कुष्ठः पृच्छति ॥ ९ ॥

कुष्ठः—सखे,

न वदसि किमुत्तरं मे कथय कथयितुं क्षमं यदि तवेदम् ।
श्रुत्वा विचारयिष्ये त्रपयालं ते भिया चालम् ॥ १० ॥

मत्सरः—सखे, मम किमुपरोधेन । किमन्यद्वनगमनादृते कर्तव्यम् ।

कुष्ठः—कापालिकताद्य कुतः कुतस्तरां ते वनगमनम् ।
मत्सरः—सख्युपरोधेऽरिकृते सर्वं संभाव्यतेऽभिमानजुषाम् ॥ ११ ॥

---

न वदसीति । मे मम; मया पृष्टस्य विषयस्येति यावत् । उत्तरं किं न वदसि कुतो न किमपि प्रत्युत्तरयसि । तव । इद-मया पृष्टस्योत्तरम् । कथयितुम् । यदि क्षमं उचितं भवति चेत् । तर्हि कथय । श्रुत्वा-त्वदुच्यमानं क्लेशकारणं समाकर्ण्येति भावः । विचारयिष्ये-त्वत्सङ्कटपरिहारोपायम् आलोचयिष्ये । ते तव । त्रपया-लज्जया । अलम् । भिया-राजदण्डनादिकं भवेदिति भयेन चालम् । परममित्रस्य मम सविधे लज्जाया भयस्य वा नैवास्त्यवकाश; भयस्थानपरिहारमपि सुहृद्भूत्वाहं विधास्ये; अतः सर्वं सविस्रंभं मत्पुरतः कथ्यतामिति भावः । (त्रपया चालं भिया चालम् इति च पाठः) ॥ १० ॥

ममेति । उपरोधेन निर्बन्धेन । किं किं फलम् । वनगमनादृते किमन्यत् कर्तव्यं-कापालिको भूत्वा महारण्यं गन्तव्यमिति यथा मया निश्चित्तं तद्विना न मे गत्यन्तरमस्तीति भावः ।

कापालिकतेति । अत्र पूर्वार्धेन कुष्ठकृतः प्रश्नः, उत्तरार्धेन मत्सरकृतमुत्तरं चाभिधीयेते । अद्य । कापालिकता-कापालिकवेषवत्त्वम् । कुतः-किमर्थमङ्गीकृता । ते-तव । वनगमनं च । कुतस्तरां-कापालिकतापरिग्रहादपि बलवत्तरचित्तसंक्षोभसंसूचकम् अरण्यगमनकर्म च किमर्थं निश्चितमिति भावः । तस्योत्तरमाह मत्सरः सख्युपरोध इति । अरिकृते शत्रुभिर्विहिते । सखीनां-सुहृदाम्, उपरोधे सति

**कुष्ठः**—किं शत्रुषूपजापार्थं प्रवृत्ताः सखायस्ते निरुद्धाः ।

**मत्सरः**—अथ किम् ।

**कुष्ठः**—कथय, स कीदृशो वृत्तान्तः ।

**मत्सरः**—(स्वगतम्)

कथयामि किं रहस्यं पर्यालोचितममात्यवर्येण ।
उपजापस्य कथं वा जातामाकाशचित्रितामरिषु ॥ १२ ॥

अथवा तपसितुमिच्छन् सख्युः कुष्ठस्य गोपयामि यदि ।
तद्द्रोहस्य न किं स्यादुत्थानाय स्वहस्तदानमिदम् ॥ १३ ॥

---

कारागृहनिरोधे । अभिमानजुषां-मानिनाम् । सर्व-संन्यसनं वनगमनं मरणमिति समस्तमपीति सूचयति सर्वमिति पदम् । संभाव्यते-संघटत एव । नात्र किमपि चित्रमिति भावः ॥ ११ ॥

**किमिति** । शत्रुषु उपजापार्थं-शत्रुजनमध्ये भेदकल्पनार्थम् ।

**कथयामीति** । स्वगतम्-मत्सर एवमात्मन्यालोचयति । अमात्यवर्येण-पाण्डुना । पर्यालोचितं—"एवं राजमन्त्रिणोर्विरोधेन विश्लिष्टे प्रकृतिमण्डलेऽचिरादेव हस्तगता महाराजस्य यक्ष्मणो जयलक्ष्मीः" इति द्वितीयाङ्के यदभिहितं तद्रीत्या चिन्तितम् । रहस्यं-विविक्ते विचार्योक्तं वृत्तम् । किं कथयामि-कथं वदेयम् । राजरहस्यस्य प्रकाशनं महते खल्वनर्थाय प्रकल्पत इति चिन्तयति । अथ अरिषु-शत्रुषु । उपजापस्य-शत्रुमध्यविहितभेदोपायस्य । जातां-उपनताम् । आकाशचित्रितां-नभसि विहितचित्रलेखात्मकदशां वा । आकाशे चित्रविन्यासस्याशक्यत्वात् तत्सदृशत्वमेतेषाम् उपजापोद्यमस्येत्यभिहितम् । इमामवस्थां च कथं कथयामि । परिहसनीया खलु तादृशी मत्सरादीनां निष्फलोद्यमोत्पन्ना सैषावस्थेति भावः ॥ १२ ॥

**अथवेति** । अथवा-तस्य रहस्यस्य चोपजापभङ्गस्य च प्रकाशनमनभिलषन् । तपसितुं-तपस्तप्तुम् । इच्छन् । सख्युः-कुष्ठस्य । तद्रहस्यादिकं यदि

अत इदानीं सर्वमस्मै निवेदयामि । यदयमपि तस्य पाण्डोर्विश्वासस्थानमेव । (प्रकाशम्) सखे, तवाप्यकथनीयं नाम किमस्ति । श्रूयताम् ।

**कुष्ठः**—कथय कथय ।

**मत्सरः**—

विज्ञानप्रहितेन राजहतकेनास्मन्निसर्गद्विषा
यावत् साधयितुं रसं कथमपि ध्यानस्य सिद्ध्या क्रमात् ।
स्वच्छन्देन च पुण्डरीकनगरीं गत्वा मनोद्वारतः
साम्बस्यैव महेश्वरस्य दृढया भक्त्याऽऽप्रसादात् स्थितम् ॥ १४ ॥

---

गोपयामि-तस्माच्चेत् प्रच्छादयामि । तर्हि इदं-एतत् रहस्यप्रच्छादनकर्म । तद्द्रोहस्य-मित्रद्रोहस्य । उत्थानाय-उद्गमाय । (उत्थानाय इति स्थाने आस्थानाय इति पाठान्तरम् । तदा तद्द्रोहस्य आस्थानाय सम्यक् स्थितये इत्यर्थः ।) स्वहस्तदानं-सहायार्थं मदीयमेव करावलम्बनम् । किं न स्यात् । अहमेव मित्रद्रोहरूपस्य पापस्य पात्रं भवेयमिति यावत् । "मित्रद्रोही कृतघ्नश्च ये च विश्वासघातकाः । महापातकिनस्ते हि" इति महापातकिषु मित्रद्रोहिण एव प्रथमगणितत्वात् तादृशमसत् कर्म कथं विधेयमिति च शङ्कते ॥ १३ ॥

**अत इति** । अतः-मित्रसविधे रहस्यगोपनस्यानुचितत्वाद्धेतोः । इदानीं-एतदन्तिके रहस्योद्घाटनस्य समुचितेऽस्मिन् समये । (इदानीं इति पदं क्वचित् पुस्तके नास्ति ।) अयं-कुष्ठोऽपि । पांडोः विश्वासस्थानं-पाण्डोर्विस्रम्भपात्रं यतो भवति तस्मात् वृत्तान्तमशेषमपि कुष्ठाय ज्ञापयामीति यावत् । (कुष्ठः-कथय कथय इति वाक्यं क्वचित् पुस्तके नास्ति ।) कथय कथयेत्याम्रेडनं रहस्योदन्तश्रवणे त्वरातिशयं कौतुकं च सूचयति ।

**विज्ञानेति** । विज्ञानप्रहितेन-विज्ञानशर्ममन्त्रिचोदितेन । "शक्यं तत् खलु पुण्डरीकनगरं गन्तुं मनोद्वारतः" इति प्रथमाङ्के तच्चोदनप्रकारः पठनीयः ।

तदिदमाकर्ण्य मन्त्रिणा पाण्डुना, एतस्य विघ्नाचरणं मनसः पारतन्त्र्यं विना नोपपद्यत इति, तदर्थं कामादयः षडेव प्रभवन्तीति, त एव वयं प्रेषिताः। अस्माभिश्च तत्र सखिस्नेहवशादङ्गीकृतं मनसः पारतन्त्र्यकरणम्।

कुष्ठः—ततस्ततः।

---

अस्मन्निसर्गद्विषा-आजन्मनः शारीरं मानसं च रोगवर्गं द्विषता। राजहतकेन दुष्टनृपेण; स्वानभिमतगुणयुक्तत्वात् हतकेनेति गर्हणम्। क्रमात्-अनुष्ठानपरम्पराक्रमेण। ध्यानस्य सिद्ध्या-निदिध्यासनादिप्राप्तपरमशिवसाक्षात्काररूपफलेन। कथमपि-येन केनापि प्रबलेन प्रयत्नेन। रसं-पारदम्; रसेन्द्रसाधितौषधान्तराण्यपि रसशब्देन सूच्यंते। साधयितुं अधिगन्तुम्। स्वच्छन्देन-स्वैरप्रवृत्तिमतेति राजहतकेनेत्यस्य विशेषणम्। मनोद्वारतः-प्रथमाङ्कोक्तरीत्या दहराकाशमार्गेण। पुण्डरीकनगरीं गत्वा च। दृढया-अचञ्चलया। भक्त्या-शिवभक्त्या साकम्; मनसा स्थिरावलम्बितां भक्तिं पुरस्कृत्येति भावः। साम्बस्य-परमेश्वरीसहितस्यैव। "शम्भोर्वीर्यं रसो नाम शर्वाण्या नाम गन्धकः। ताभ्यामेव प्रसन्नाभ्यां तौ ग्राह्याविति मे मतिः।" (१-३९) इति तयोरुभयोः युगपत्प्रसादेनैव रसगन्धकयोरवाप्तिः स्यादिति निर्धारणाय एव शब्दः प्रयुक्तः। महेश्वरस्य। आप्रसादात्-अनुग्रहप्राप्तिं यावत्। स्थितं-पुण्डरीकनगरे शिवयोर्ध्यानमाचरन् यथेच्छं स्थितम्। निदिध्यासनसिद्ध्याः, दृढभक्त्याश्च यावदावश्यकं मनसः स्थैर्यं तावदपि जीवराजस्याभूदित्यभिहितमासीत्॥ १४॥

**तदिदमिति**। एतस्य-ध्यानकर्मणः। मनसः पारतन्त्र्यं-विषयपरतन्त्रत्वम्। विना। विघ्नाचरणं नोपपद्यते-प्रत्यूहकरणं न संघटते। इति। तदर्थं-मनसः पारतन्त्र्यविधानार्थम्। कामादयः षट्—काम-क्रोध-लोभ-मद-मत्सर-द्वेषाख्यः षड्वर्गः। प्रभवन्ति-समर्था भवन्ति। इति मत्वेति यावत्। त एव

मत्सरः—ततश्च तेष्वहमेको मन्दभाग्य इमां दुरवस्थामनुभवामि ।

कुष्ठः—अथ कामस्य कावस्था ।

मत्सरः—सखे, किं कथयामि मन्त्रिहतकस्य दुर्बुद्धिविलसितम् ।

श्रुत्वा पित्तकफात्मपङ्गुयुगलस्पष्टोपजापं तथा
हृद्रोगस्य विमोचनं च सचिवः स्वात् किङ्कराद्विस्मितः ।
(आकाशे लक्ष्यं बध्वा)
पाण्डो साधु भवान् यदेव परमेशाराधने साधनं
चेतः स्थैर्यवदुद्यतस्तदरिणा तद्भेत्तुमित्यब्रवीत् ॥ १९ ॥

---

वयं कामादयस्त एव षट् । तत्र-तस्मिन् कर्मणि । सखिस्नेहवशात् मैत्रीजनितप्रीति वशात् । काम क्रोधादीनां कालाद्बहोः संसृतिसंचरणजनितानादिवासनावशात् मनसा सह दुष्परिहरा विद्यते महत्यासक्तिः, तस्माद्धेतोरिति भावः । कामादिभिरभिभूतं मनः स्वपक्षस्य प्रातिकूल्यमाचरेदिति वस्तुतत्त्वं विज्ञानशर्मणा विविच्यालोचितपूर्वमेव । दृश्यतां प्रथमाङ्के "सर्वस्मिन् विषये" (३२) इति पद्यं तद्व्याख्यानं च । काम-क्रोधादिषु मनसः स्वभावतो विद्यमानो दुरुच्छेद आसक्तिविशेषः "हा पुत्रकाः क्व गताः स्थ । दत्त मे प्रियदर्शनम् । भो भोः कुमारकाः राग-द्वेष-मद-मात्सर्यादयः परिष्वजध्वं माम्" इत्यादिप्रकारेण प्रबोधचन्द्रोदये कामादीनां विनाशश्रवणानन्तरं (तत्र पात्रीभूतेन) मनसा क्रियमाणस्याक्रोशस्य वर्णनावसरे (५ अङ्के) कीदृश इति सम्यगवगम्येत ।

**ततश्चेति** । तेषु-कामादिषु । मन्दभाग्यः-प्रभुनियोगमनिष्पाद्यैव, अपरेषां स्वसुहृदामत्ययमवगम्य च स्वस्य सुतरां भग्नमनोरथत्वात् मन्दभाग्यत्वम् । **किं कथयामीति** । मन्त्रिहतकस्य-दुरात्मनो विज्ञानशर्मणः । दुर्बुद्धिविलसितं-विज्ञान-

शर्मणो मतिनैपुण्यप्रयोगम् ; तद्बुद्धिकौशलप्रवृत्तेः स्वेषां महानर्थकरत्वात् तस्मिन् दुर्बुद्धित्वं मत्सरेण साक्रोशमारोपितम् ।

मन्त्रिणो विज्ञानशर्मणो बुद्धिविलसितप्रकारमेव मत्सरो विशदयति श्रुत्वेति। सचिवः विज्ञानशर्मा । पित्त कफात्मपङ्गुयुगलस्य-पित्तरूपेण कफरूपेण च देहाख्ये पुरे विद्यमानस्य पङ्गुद्वयस्य, स्पष्टोपजापं "पुण्डरीकपुरे मन्त्रिप्रेरितः परमेश्वरम् । आराद्धुं गतवान् राजा मनोद्वारेण तिष्ठति" इति, "शत्रुनिरुद्धे च पुरे परिसर्पाशङ्कया नगरगुप्त्यै । नागरिकशिक्षणमिति प्रावोचन्मां तदानीं ते" इति च द्वितीयाङ्के कर्णमूलेन पाण्डवे कथितरीत्या पङ्गुयुग्मेन सुव्यक्तमाविष्कृतं मन्त्रभेदनम् । तथा-तद्रीत्यैव स्वपक्षीयानां प्रतारणपूर्वकं कृतमित्यर्थः । हृद्रोगस्य-तन्नाम्नः प्रतिपक्षचारपुरुषस्य । विमोचनं-"चार एवायं, दत्ताभयोऽयमिति मन्त्रिणे निवेद्य कथंचिन्मोचयितव्यः" इति तृतीयाङ्के नागरिकोक्तरीत्या विहितं मोचनं च। स्वात्-स्वकीयात् किङ्करात्-तृतीयाङ्के शुद्धविष्कम्भसूचितात् भृत्यात् । श्रुत्वा । विस्मितः-वयमेवं किल विप्रलब्धा इत्याश्चर्यपरवशः सन् । विस्मितः किमकरोदिति वदति आकाश इति । आकाशे लक्ष्यं बध्वेत्यस्य विवरणं द्वितीयाङ्के ३१ श्लोकात् पूर्वतनस्य वाक्यस्य व्याख्याने दृश्यताम् । स च सचिव आकाशे लक्ष्यं बध्वा, वक्ष्यमाणरीत्या अब्रवीत् । पाण्डो तन्नामकयक्ष्ममन्त्रिन् । यदेव चेतः-यत् मन एव । (यदैव इति पाठो न साधीयान् ।) परमेशस्य-ईश्वरस्य, आराधने-उपासने । स्थैर्यवत्-अचाञ्चल्यमधिगतं सत् । साधनं-अस्मन्नृपस्योपायभूतम् । भवतीति शेषः । तत्-तदेव चेतः । तदरिणा तस्य-चेतसः अरिणा-अरिषड्वर्गेण । भेत्तुं-क्षुद्रेषु विषयेष्वासक्तिमुत्पाद्य अस्मत्पक्षतो निवारयितुमित्यर्थः । भवान् उद्यतः-त्वं प्रवृत्तोऽसि । साधु-सम्यगिति सहेलनं गर्हगर्भितं वचनम् । दुष्टान् कामादींश्चारान् संप्रेष्य अस्मत्कटके कपटवृत्तिं विधाय परमेश्वराराधने नः साधनभूतस्य चेतसो भेदनाय छिद्रमाचरसि यत् तत् साध्विति भावः । तत् अरिणा इति भिन्नं पदं वा । अरिणा भेत्तुं उद्यत इति यत् तत् साध्विति तदानीमन्वयः । (तद्भोक्तुम् इति-पाठे तत् मनः अरिणा भोक्तुं-अनुभवितुम् ; अरिसात्कर्तुमिति यावत् ।) ॥ १९ ॥

इतः परमपि स बुद्धिमान् पाण्डुर्मम रसौषधरूपसेनासंधानव्यापृतताम्, तां राज्ञ एकाकिताम्, मनसश्चञ्चलतां च निरूप्य प्रबलांस्तद्भेदिनः कामादीन् प्रेरयिष्यतीति मत्वा किङ्करमुखेनैव स्वनागरिकाय विचाराय नगरपर्यटनमपहाय तत्रैव कामादिभेदने सावधानेन स्थेयमिति विज्ञानमन्त्रिणा समादिष्टम्।

कुष्ठः—ततो विचारेण किं कृतम्।

मत्सरः—तेन च तत्सदृशबुद्धिना कामः कामपि योगकलामुत्पाद्योपजापेन ध्यानविषयतामापादितः।

---

इतःपरमिति। बुद्धिमान्-चतुरः। स पाण्डुः। मम-विज्ञानशर्मणः। रसौषधानि-रसेन स्वतन्त्रेण रसस्य संयोगेन च निर्मितानि भेषजानि; तद्रूपा सेना-यक्ष्यादिरोगनिवहरूपविरोधिसैन्यनिषूदनक्षमं सैन्यम्, तस्याः संधाने-समावेशने, व्यापृततां-उद्युक्तताम्। राज्ञः-जीवस्य। ताम् एकाकितां-पाण्डोश्चारपुरुषैर्दृष्टपूर्वां विविक्ताम् अवस्थितिम्। "यच्चञ्चलं प्रकृत्या" इति पूर्वोक्तप्रकारेण मनसो विद्यमानं चञ्चलस्वभावं च। निरूप्य-सम्यगालोच्य। तद्भेदिनः-तस्य मनसो भेदनकुशलान्। प्रबलान्-मनस आवर्जनविषये सुतरां बलिष्ठान्। कामादीन् प्रेरयिष्यति-चोदयिष्यति। इति मत्वा-पूर्वमेवालोच्य। विचाराय-तन्नाम्ने। नागरिकाय-नगररक्षकाधिकारिणे। पदार्थविशेषाणां पुरुषाणां च विमर्शपूर्वकं स्वभावपरिशीलनोपयोगी यो गुणः स विचारः, स एवात्र नागरिकपात्रमावहति। विज्ञानमन्त्रिणा स विचारः कामक्रोधादीनां भेदने-निरसने-कामादीनाम् उपजापनाशने वा॥

तेन चेति। तस्य-विज्ञानशर्मणः, सदृशबुद्धिना-समानधीविशिष्टेन। योगकलां-निदिध्यासनरूपां कामनिवारणे विशिष्य शक्तिमतीं कामपि विद्याम्।

कुष्ठः—हा कामस्यापि परिणतिः । अथ क्रोधस्य को वृत्तान्तः ।

मत्सरः—कमपि प्रदर्श्य दोषं विचारहतकेन सोऽपि च क्रोधः ।
अस्मास्वेव प्रत्युत झटिति परावृत्तिमेव नीतोऽभूत् ॥ १६ ॥

कुष्ठः—हा क्रोध, त्वमपि सखीनेवाभिद्रोग्धुं प्रवृत्तः । अथ लोभः कथम् ।

मत्सरः—यादृशः कामः ।

कुष्ठः—साधु लोभ सखे साधु सम्यग्व्यवसितं त्वया ।
यादृशीं प्रापितोऽवस्थां कामस्त्वमपि तादृशीम् ॥ १७ ॥

अथ दम्भः क्व ।

---

ध्यानविषयताम् आपादितः-ध्यानस्य विषयीकृतः ; कामः किंकर्तव्यतामूढश्चिन्तानिमग्नोऽभूदिति भावः । यद्वा परमेश्वरविषयकध्यानेन जीवकृतेन कामो विलयमगमदिति वा । हेति । कामस्यापि परिणतिः-तद्दशापरिणामः ; तादृशी शोचनीया बभूवेति भावः ।

कमपीति । स च क्रोधोऽपि । विचारहतकेन-अस्मद्विषये पापमाचरता बस्तुतत्त्वविमर्शविचक्षणेन विचारेण । कमपि दोषं-अस्मदुपरि यं कंचित् दोषम् । प्रदर्श्य-आविष्कृत्य । प्रत्युत-वैपरीत्येन । झटिति । अस्मासु-यक्ष्मपक्षीयेष्वेव । परावृत्तिं-प्रतीपवृत्तिमन्तमेव । नीतोऽभूत् । विनैव विलम्बं विचक्षणेन विचारेण क्रोधोऽपि यक्ष्मपक्षे क्रोधवान् यथा भवेत् तथा दोषमस्मासूद्भाव्यास्माकमेव विरोधीकृत इति भावः ॥ १६ ॥

यादृश इति । यादृशः कामस्तथैव लोभोऽपि विज्ञानशर्मादिवशं गत्वा विनष्ट इत्यर्थः । अनेन चास्मत्समीहितविरुद्धमेव फलमुपनतमिति तात्पर्यम् ।

साध्विति । कामो यादृशीम् अवस्थाम् अरिभिः प्रापितः, त्वमपि दशां तादृशीमेव प्रापितः । अतः शत्रूणां वशंवदीभवितुं त्वया यत् व्यवसितं तत् ,

मत्सरः—उपजप्तोऽपि बहुधा तैरस्माकं स केवलम् ।
सौहार्दमनुरुन्धानः शस्त्रघातं हतोऽजनि ॥ १८ ॥

कुष्ठः—धन्योऽसि दम्भ, धन्योऽसि, यतः सख्युरनृणतां गतोऽसि । अथ कथय किमध्यवसितं मदेन ।

मत्सरः—मदस्तु निगृह्य कारागारे स्थापितः ।

कुष्ठः—कुतः ।

मत्सरः—निर्गते च पुण्डरीकनगराद्राजनि नर्मकर्मण्येनमुपयोक्ष्यामह इति ।

---

हे सखे, लोभ, सम्यक् वर्तते । साधु साध्विति कुष्ठः सोल्लुण्ठनं लोभमप्यधिक्षिपति । लोभस्याध्यवसितं न कथंचिदपि आत्मकक्षीयैः स्पृहणीयमिति फलितोऽर्थः ॥ १७ ॥

उपजप्त इति । तैः-शत्रुभिः । सः-दम्भः । बहुधा-विविधैरुपायैः । उपजप्तोऽपि-कपटप्रबन्धैर्भेदं प्रापितोऽपि । अस्माकं-यक्ष्मपक्षीयाणाम् । सौहार्दं-आजानसिद्धां मैत्रीम् । केवलमनुरुन्धानः-तदेकपरतया अनुवर्तमानः । (उपरुन्धान इति पाठान्तरम् ।) अभूदिति शेषः । अत एव शस्त्रघातं-शस्त्रैर्हत्वा शस्त्रघातम् । "करणे हनः" इति णमुल् । हतोऽजनि-मारितोऽभूत् । शत्रूपदेशानां नैकविधानाम् अवशंवदत्वात् अरिभिः स शस्त्रेण व्यापादित इति भावः ॥ १८ ॥

धन्य इति । सख्युः-तन्मित्रभूतस्य पाण्डोः यक्ष्मणो वा । यतः । अनृणतां गतोऽसि । विश्वसनीयसौहार्दानुकूलतया शत्रुमध्यगतोऽपि प्रागल्भ्यमवलम्ब्य मित्रद्रोहमकुर्वत् प्राणांस्त्यक्त्वा निर्व्यलीकमानृण्यम् आविष्कृतवानसीति भावः । अत एव सुतरां धन्योऽसीति सूचयितुं धन्यशब्दस्य द्विरुक्तिः । कुत इति । कारागृहे मदः कुतः स्थापितः । कामादिषु अस्मदीयेष्वन्यतमेषु काममुपजापादिभिरावर्ज्य वशीकृतेषु, कतिपयेषु च हतेषु, कुतो मदः केवलं बन्दीकृत इति प्रश्नस्याशयः । (कुत इति स्थाने तत इति पाठो न समीचीनः । ) निर्गत इति ।

कुष्ठः—मत्सर, एवं स्थिते शत्रुमण्डलादेक एव त्वं कथं निर्गतोऽसि ।

मत्सरः—शृणु तावत् । न हि मम स्वेच्छया ततो निर्गमो जातः । यतो रससिद्ध्यनन्तरं संनद्धे च सैन्ये, इममेव मत्सरम् अत्रत्यवृत्तान्तहारिणं करिष्याम इति निगृह्य स्थापितोऽस्मि ।

कुष्ठः—तर्हि सखे, तवागमनमिदानीं तत्र रससिद्धिं सेनासंनाहं च सूचयति ।

मत्सरः—एवमेतत् । समनन्तरमेव,

राज्ञः संनिधिमृच्छ भद्र कथय त्वं पाण्डुमाविष्कुरु
स्वामिप्रीतिमुपेहि मन्त्रकलनाकौशल्यमप्यश्लथम् ।
मा ग्लासीरिति मास्तु भीतिरिति मामुक्त्वा चमूनायकान्
नामग्राहमपि प्रदर्श्य नगरान्निस्सारितोऽहं शनैः ॥ १९ ॥

---

पुण्डरीकनगरात् राजनि निर्गते-ध्यानसिद्धिमधिगत्य बहिरागते सति । तस्य नर्मकर्मणि-विनोदहेतौ नर्मसचिवव्यापारे । तं क्रीडनकवत् उपयोक्ष्यामह इति तेषामाशयः; तदर्थमेव स कारागारे निबद्धः । शृण्विति । न हि मम स्वेच्छया ततो निर्गमः-नाहं स्वातन्त्र्येण शत्रुमण्डलादपक्रान्तः । (निर्गमः संभाव्यत इति पाठान्तरम् । तथा निर्गमः कथंचिदपि नोपपद्यत इत्यर्थः ।) अत्रत्यवृत्तान्त-हारिणं-जीवपक्षीयाणां रससिद्धिरूपस्य यक्ष्मपक्षहननक्षमसेनासन्नाहरूपस्य च वृत्तान्तस्य यक्ष्मसविधे वाहकम् । मामेव ते रिपवः स्वयुद्धदूतमकल्पयन्निति भावः ।

तैः कथमेष मत्सरो विमुक्त इति विशदयति समनन्तरमेवेति । समनन्तर-मेव-तैः सर्वेषामपि युद्धकृत्यानां सम्यक् सज्जीकरणानन्तमेव । राज्ञ इति । भद्रेति सोपहाससंबोधनम् । त्वम् । राज्ञः संनिधिं-त्वदीयनृपस्यैव सविधम् । ऋच्छ-यथेच्छमितो गच्छ । पाण्डुं-युष्मत्सचिवं च । कथय-अस्मदुद्यममखिलमपि ब्रूहि । स्वामिप्रीतिं-तव प्रभुविषयिकं विश्वासं च । आविष्कुरु-चारत्वेन शत्रुकटकम्

कुष्ठः—प्रज्ञोन्मदः स सचिवस्तदनर्थो भविष्यति ।
गत्वा निवेद्यतां राज्ञे मन्त्रिणेऽहं निवेदये ॥ २० ॥

मत्सरः—तप्स्यमानं तपः सख्युरविकीर्त्यमिदं तव ।

कुष्ठः— फलिष्यति तपः किं ते न चेत् सख्यमजीगणः ॥ २१ ॥

---

आविश्य तदीयवृत्तान्तमशेषमपि ज्ञात्वा स्वामिनियोगानुरोधेन प्रतिनिवृत्तोऽहमिति विज्ञापयन् विषयतत्त्वं विशदयन् प्रभुप्रीतिमपि प्राप्नुहीत्यर्थः । अश्लथं-निरर्गलम् अवितथं वा । मन्त्रकलनाकौशल्यं-राजनीति-युद्धनीतिप्रभृतीनां समालोचन-निर्वहणकलासु तव विद्यमानं वैदग्ध्यमपि । उपेहि-प्राप्नुहि । मा ग्लासीः-इतः परं क्वचिदपि विषये मास्तु तव श्रमः । इति । भीतिरपि मास्तु-अस्मत्सविधाद्वा अस्मद्विषयकोदन्तादीनां त्वत्स्वामिसविधे निवेदने वा मास्तु ते किञ्चिदपि भयम् । इति च । माम् उक्त्वा । चमूनायकान्-विज्ञानशर्मणः कटके विद्यमानान् आयोधनधुरन्धरान् सेनाध्यक्षान् । नामग्राहं-एकैकस्य च नामनिर्देशपूर्वकम् । प्रदर्श्य-भीषणबल-वीर्यसंपन्नान् सम्यक् तान् निर्दिश्यापि । नगरात्-जीवस्य पुरात् । शनैः-मद्गुणानां मच्छक्तेः मत्प्रवृत्तेश्च सम्यगवगमानन्तरं क्रमेण सावधानतयेत्यर्थः । निस्सारितः-तैरेव गच्छत्वेष वराक इति सोपहासम् औदासीन्येन निष्कासितोऽभवमिति भावः ॥ १९ ॥

**प्रज्ञोन्मद इति** । स सचिवः-विज्ञानशर्मा मन्त्री । प्रज्ञया उन्मदः-उद्भटः; प्रज्ञाबलेन अतीव उद्धतो भवतीति यावत् । तत्-तस्माद्धेतोः । अनर्थः-महत् संकटम् । भविष्यति । तस्मात् गत्वा-इतो यात्वा । राज्ञे-यक्ष्मणे । त्वयेति शेषः । निवेद्यतां-विषय एष विज्ञाप्यताम् । अहं गत्वा । मन्त्रिणे निवेदये-वृत्तान्तमखिलं पाण्डवे सचिवाय च कथयामि ॥ २० ॥

**तप्स्यमानमिति** । तव सख्युः-त्वन्मित्रभूतस्य मम । इदं तप्स्यमानं तपः-अद्य ते उत्तरीत्या इतः कर्तुमुद्दिष्टं मदीयं तपःकर्म । अविकीर्त्यं-न कथ-

ग्लानिर्मनसस्तपसे प्रवर्तयति शक्तिमन्तमपि पुरुषम् ।
अग्लानिस्तस्य यदि क्रमात्तदस्यापि साधयति कार्यम् ॥ २२ ॥

तस्मादग्लानिरेव क्रियताम् ।

**मत्सरः**—का गतिः । (इति कुष्ठेन किङ्करेण च सह निष्क्रान्तः ।)

। शुद्धविष्कम्भः ।

---

नीयम् । सुहृद्भूत्वा तपसे मत्कृतमिदम् अध्यवसितं मन्त्रिसविधे त्वया न वक्तव्यमिति भावः । अस्योत्तरार्धेन कुष्ठः प्रतिवदति फलिष्यतीति । सख्यं-मैत्रीम् । न अजीगणश्चेत्-न गणयसि यदि; मैत्रीपरिपालनानुकूलं किमपि साहाय्यकरणमवश्यमिति धर्ममगणयन् गत्यन्तरमजानन् त्वदिच्छानुरोधं यदि तपसे प्रवर्तस इति भावः । ते तपः किं फलिष्यति-तादृशेन तपसा किं साधयिष्यसि; न किमपि फलिष्यति; अतः स्वामिकार्ये नैराश्यं ते मास्त्विति, तपसे तवोद्यमो न साम्प्रतमिति चाभिप्रेतं भवति ॥ २१ ॥

आशाभङ्गादिभिर्जाता धैर्यच्युतिर्महतेऽनर्थाय, तपश्चरणं च न तत्प्रतीकाराय स्यादिति तत्त्वमुपदिशति ग्लानिरिति । मनसो ग्लानिः-मनोव्यथा । शक्तिमन्तं-अभिलषितकार्यनिर्वहणक्षममपि । पुरुषम् । तपसे-चान्द्रायणादिव्रताचरणाय; वैराग्यमवलम्ब्य वनं गत्वा मुनिधर्मानुष्ठानायेति यावत् । प्रवर्तयति-प्रेरयति । मनोधैर्यहानिरेव तस्य कारणमिति भावः । प्रातिलोम्येन तस्य-तस्यैव पुरुषस्य, अग्लानिः-मनःक्लेशाभावः; धीरतेति यावत् । यद्यस्ति । तत्-अग्लानित्वम् । अस्य-पुरुषस्य । क्रमात्-कालक्रमेण । कार्यं-अभीप्सितं कर्म । अपि साधयति-तन्मनोधैर्यमेव शनैः प्रत्युत तत्कार्यसाधनाय प्रकल्पत इत्यर्थः । (क्रमाहतस्यापि इति पाठे कालरीतिवशात् भग्नप्रयत्नस्यापि इत्यर्थः ।) ॥ २२ ॥

**तस्मादिति** । अग्लानिरेव क्रियतां धैर्यमेवावलम्ब्यतामित्यर्थः । **शुद्धविष्कम्भ इति** । शुद्धविष्कम्भस्य लक्षणं तृतीयाङ्कारम्भे निरूपितम् ।

(ततः प्रविशति पाण्डुः कुष्ठश्च ।)

**पाण्डुः**—(सामर्षम्)

अग्राह्यमल्पमतिभिः सचिवस्य तस्य
वैयात्यमूर्जितमहो किमिति ब्रवीमि ।
यः प्रेषयन् किमपि तादृशवाचिकं द्रा-
गुन्मस्तकं निजमसूचयदूष्मलत्वम् ॥ २३ ॥

जीवसमाधिभङ्गाय प्रेषितेषु कामादिष्वपि तथाभूतेषु, भक्तिमूला खल्वेतस्याभिमतसिद्धिरिति तद्विघाताय प्रेषितो व्याक्षेपो नाम गूढचारः । स गतोऽपि तत्सख्या श्रद्धयापहतो व्यर्थयत्नोऽभूत् । किमतः प्रतिविधातव्यम् ।

---

**पाण्डुरिति** । विज्ञानशर्मणो वैदग्ध्य-धैर्यादीनां मत्सरद्वारा तत्सन्दिष्टवार्तायाश्च श्रवणेन पाण्डोः सामर्षत्वम् । तत्प्रकारमेव वक्ष्यमाणपद्येन प्रतिपादयति ।

**अग्राह्यमिति** । अहो इति विस्मये । तस्य सचिवस्य-विज्ञानशर्मणः । अल्पमतिभिः-मितप्रज्ञैः । अग्राह्यं-ज्ञातुमशक्यम् । ऊर्जितं-अतिबलवत्, अप्रधृष्यमिति यावत् । वैयात्यं-प्रागल्भ्यम् । "धृष्टे धृष्णग्वियातश्च प्रगल्भः प्रतिभान्विते" इत्यमरः । किमिति ब्रवीमि-तत्सामर्थ्यम् एतादृशमिति वक्तुमपि नाहं प्रभवामीति भावः । कुत इति चेत्-यः-विज्ञानशर्मा । किमपि-एवमनिर्वचनीयपराक्रमस्य प्रभावस्य च प्रकटकम् । तादृशवाचिकं-तथाविधोर्जस्वलार्थवद्वार्ताम् । द्राक् झटिति; अस्मदप्रतीक्षितमेवेति यावत । प्रेषयन्-अस्मत्प्रणिधिमुखेनैवास्मभ्यं प्रहिण्वन् । उन्मस्तकं-अतिमात्रोद्रिक्तम् । निजं आत्मीयम् । ऊष्मलत्वं-शौर्योपेतं बलम् दौष्ट्यं च । असूचयत्-ज्ञापयति स्म ॥ २३ ॥

**जीवेति** । कामादिष्वपि तथाभूतेषु-जीवस्य मनस्समाकर्षणधुरंधरेषु केषुचन शत्रुवशंगतेषु, केषुचन च मारितेषु सत्सु । एतस्य-जीवस्य । अभिमतसिद्धिः-

**कुष्ठः**—मम त्वेवं प्रतिभाति—

मन्त्रिणामूष्मलत्वं हि पश्यद्भिः प्रतिमन्त्रिभिः ।
शौर्येण प्रतिकर्तव्यं तथा चेदुचितं भवेत् ॥ २४ ॥

**पाण्डुः**—मैवं वादीः । यतः परस्य मन्त्रशक्तिः स्वस्य मन्त्रशक्त्यैव प्रतिहन्तव्या । यथा खलु शास्त्रविद आचक्षते—"यो यादृशेन साधनेन प्रहरति स तादृशसाधनेनैव प्रतिहन्तव्यः" इति । अतो मन्त्रकृतं संविधानमुपायान्तराभावे शौर्येण प्रतिक्रियतामित्यन्तिममिदमौपयिकम् । अहमिदानीं तदुचितं प्रतीकारमालोचयामि ।

---

शिवयोः प्रसादप्राप्तिरूपा सिद्धिः । व्याक्षेपः-प्रतिबन्धः, अन्तरायो वा । "अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्" इति अभिलषितकार्यसिद्धेः व्याक्षेपो विघात इति कालिदासेन च सूचितम् । अतो जीवस्याभिमतसिद्धिमूलभूताया भक्त्या विघाताय व्याक्षेपः प्रभवतीति तमेनं पाण्डुर्जीवपुराय प्राहिणोत् ।

**मन्त्रिणामिति** । मन्त्रिणां-प्रत्यर्थिसचिवानाम् । ऊष्मलत्वं-पौरुषम् । पश्यद्भिः-अन्वक्षम् अवलोकयद्भिः । प्रतिमन्त्रिभिः-तद्विपक्षामात्यैः । शौर्येण हि-तादृशेनैव पौरुषेण । हिशब्दोऽत्रावधारणार्थे । प्रतिकर्तव्यं-प्रतिविधेयम् । तथा चेत्-तथा कृतं चेत् । उचितं भवेत्-उपपन्नं स्यात् । "कृते च प्रतिकर्तव्यम्" इति खलु सार्वत्रिकी नीतिः । एवं मम तु प्रतिभातीति पूर्ववाक्येनान्वयः "विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्" इति माघोक्तनीत्या शत्रौ शौर्यप्रदर्शनमेव सर्वथा समुचितमिति सूचितं भवति ॥२४॥

कुष्ठस्याशयं प्रतिक्षिपति **मैवमिति** । परस्य-शत्रोः । मन्त्रशक्तिः-प्रभुमन्त्रोत्साहाख्यासु अन्यतमेयं गूढविषयविमर्शशक्तिः, या च षाड्गुण्यचिन्तनरूपा । **स्वस्य मन्त्रशक्त्या**-तथाविधयात्मनो मन्त्रशक्त्यैव । प्रतिहन्तव्या-शत्रुकृता

**कुष्ठः**—आलोचयतु भवान् ।

आकर्णयिष्यति यदा वृत्तान्तमिमं स मत्सरमुखेन ।
दीपितरोषो हृदये देवोऽपि समागमिष्यति तदैव ॥ २९ ॥

तस्य पुरस्तादायत्तमुपायं सफलीकरिष्यामः ।

**पाण्डुः**—अस्त्वेवम् । भवानवहितस्तिष्ठतु ।

**कुष्ठः**—तथा । (इति निष्क्रान्तः ।)

**पाण्डुः**—कः कोऽत्र भोः ।

(प्रविश्य)

**गलगण्डः**—आर्य, आज्ञापय करणीयम् ।

**पाण्डुः**—भद्र, अपथ्यतां प्रवेशय ।

---

मन्त्रशक्तिर्विफलीकार्या । औपयिकं-उपायम् । उपाय एव औपयिकम्; विनयादित्वात् स्वार्थे ठक् ह्रस्वत्वं च । तदुचितं प्रतीकारं-वैरिकृतमन्त्रशक्तिप्रतिहननानुकूलमुपायम् ।

**आकर्णयिष्यतीति** । स देवः-यक्ष्मराजोऽपि । इमं वृत्तान्तं-विज्ञानशर्मप्रेषितां वार्ताम् । मत्सरमुखेन-कुष्ठसविधादितःपूर्वं गतवतो मत्सरस्य द्वारा । यदा आकर्णयिष्यति तदैव-तदुत्तरक्षण एव । हृदये दीपितरोषः-पूरोत्पीडं मनस्युद्गतं क्रोधवेगमसहमान इत्यर्थः । समागमिष्यति-अत्रायास्यति । तावता भवताप्यालोच्य कोऽपि निर्धार्यतामुपाय इति भावः ॥ २९ ॥

**तस्येति** । तस्य-राज्ञः । पुरस्तात्-सन्निधौ । आयत्तं निर्धार्य सज्जीकृतम् । उपायं-मन्त्रशक्तिरूपं साधनम् । सफलीकरिष्यामः-सा च मन्त्रशक्तिर्यथा फलवती स्यात् तथा करिष्यामः । **अस्त्विवति** । अवहितः-शत्रुप्रवृत्त्यवगमे स्वपक्ष-

**गलगण्डः**—(निष्क्रम्य पुनस्तया सह प्रविश्य) आर्य, इयमपथ्यता। कटक-सीमनि देवः प्राप्त इति वल्लभपालो विज्ञापयति।

**पाण्डुः**—(अपथ्यतां प्रति, अपवार्य) अयि, त्वं कच्चिन्महति रहस्ये राजकार्ये नियोजयितव्यासि।

**अपथ्यता**—अवहिदह्मि। [अवहितास्मि।]

**पाण्डुः**—जीवं प्रविश्य तमपथ्येष्वाहार-विहारादिषु नियोजय।

**अपथ्यता**—तह। [तथा।] (इति निष्क्रान्ता।)

**पाण्डुः**—(पुरोऽवलोक्य) अये, देवः प्राप्तः। गलगण्ड, गच्छाग्रतः।

---

रक्षणकृत्येषु च कृतावधानः। **गलगण्ड इति।** गलगण्डश्च पाण्डोर्दौवारिकः। **भद्रेति।** अपथ्यतां-अहितताम् अनायुष्यतां वा, या किल पथ्यस्य विपरीतफलदायिनी क्रिया। "आत्मनीनं तु पथ्यं स्यादायुष्यं च हितं च तत्" इति पथ्यविषये धन्वन्तरिनिघण्टुः। सा चात्र स्त्रीपात्रेष्वन्यतमा। **आर्येति।** इयम् अपथ्यता-इहागता सा अपथ्यतेति यावत्। (इयमपथ्यता इति क्वचित् कोशे नास्ति।) कटकसीमनि-नगरस्य पर्यन्तभूमौ सेनानिवेशप्रदेशपर्यन्त इति वा। प्राप्तः-पूर्वनिर्दिष्टरीत्या मत्सरमुखादाकर्णितशत्रुकृतसन्नाहः सपदि पाण्डु-सविधमागत इति मन्तव्यम्। वल्लभपालः-राज्ञो विस्रम्भपात्रं तद्वल्लभः कश्चित् सेवकः।

**अपथ्यतामिति।** अपवार्य-करेण स्वमुखं पिधाय सरहस्यम्। (रहस्ये इति पदं क्वचित् पुस्तके नास्ति।) अवहितास्मि-कृतावधाना श्रोतुं सज्जास्मि। **जीवमिति।** जीवं प्रविश्य-जीवराजशरीरम् आविश्य। अपथ्येषु आहार-विहारेषु—"मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम्। विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम्॥ अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम्। त्रीण्य-

(ततः प्रविशति राजयक्ष्मा मत्सरश्च ।)

**पाण्डुः**—(प्रणम्य) राजन्, कथमेतत् ।

तन्वत् पुनःपुनरपि भ्रुकुटिं ललाटे
निस्सीमनिःश्वसितमुच्चलिताधरोष्ठम् ।
देवस्य शंसति मुखाम्बुजमन्तरङ्गे
रूढां रुषा रिपुजने सहसैव चिन्ताम् ॥ २६ ॥

**राजयक्ष्मा**—पाण्डो, विजने प्रासादे समुपविश्य सर्वं बोधयिष्यामि ।

**पाण्डुः**—गलगण्ड, प्रासादमार्गमादेशय ।

---

प्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा" इति वाग्भटादिभिः प्रतिपादिताः समशनाध्यशनविषमाशनादिरूपेषु अहितेषु अशनेषु, वेगनिरोधाकालनिद्रादिरूपेषु विहारेषु च । नियोजय-संधुक्षयेत्यर्थः ।

**राजन्निति** । कथमेतत्-कुत एतादृशं ते मुखवैकृतम् ।

विकृतिमत्त्वमेव स्वयमेवाभ्यूह्य पाण्डुः सहेतुकं विवृणोति **तन्वदिति** । राजन् । ललाटे पुनःपुनरपि भ्रुकुटिं-भ्रुवोराकुञ्चनम् । तन्वत्-कुर्वत् । निस्सीमं-अपरिमितम्, निःश्वसितं श्वासकर्म यस्य तत् । अधरश्च ओष्ठश्च तयोस्समाहारः अधरोष्ठम्; उच्चलितं बलवत् प्रकम्पमानम् अधरोष्ठं यस्य तत् । देवस्य-प्रभोस्तव । मुखाम्बुजम् । रिपुजने रुषा-शत्रुवर्गे क्रोधेन । अन्तरङ्गे-मनसि । सहसैव-सपदि । रूढां-बलवदुत्थिताम् । चिन्तां-मनोव्यथाम् । शंसति-विनैव वाचं निवेदयति । कथमेतदिति पूर्ववाक्येनान्वयः ॥ २६ ॥

**पाण्डो इति** । विजने-एकान्ते । प्रासादे । सर्वं बोधयिष्यामि-अशेषमपि-ज्ञापयिष्यामि । विविक्ते स्थले खलु राजरहस्यं विशिष्य युद्धरहस्यं वीतशङ्कं विचारणीयं भवतीति तथोक्तम् ।

**गलगण्डः**—इत इतो देवः ।

**पाण्डुः**—(विलोक्य) राजन्, आरुह्यतामयम्—

श्रीकण्ठक्षितिधरशृङ्गभङ्गदायी
प्रासादः शिखरविराजिहेमकुम्भः ।
सोपानैः स्फटिकमयैः सुखेन गम्यो
रम्योऽयं भवति कलस्वनैः कपोतैः ॥ २७ ॥

(सर्वे प्रासादारोहणं नाटयित्वोपविशन्ति ।)

**राजयक्ष्मा**—पाण्डो, किं न त्वया श्रुतो मत्सरात् परवृत्तान्तः ।

---

**श्रीकण्ठेति** । शिखरविराजिहेमकुम्भः-हिरण्मयकलशेन प्रोज्ज्वलच्छृङ्गभागः । अत एव श्रीकण्ठक्षितिधरः-कैलासगिरिः, तच्छृङ्गस्य-तच्छिखरभागस्य, भङ्गदायी-स्वकीयया शोभया परिभवमुपजनयन्ती । अयं प्रासादः-सौधः । रजतमयत्वात् कैलासः केवलं आपादशिखरं श्वेतः; एष प्रासादस्तु स्वतः सुधामयत्वात्, स्फटिकमयैः सोपानैरलङ्कृतत्वात्, सुतराम् उज्ज्वलत्स्वर्णमयशिखरेण सहितत्वाच्च कैलासशृङ्गादपि अधिकतरं शोभत इत्युत्प्रेक्ष्यते । स्फटिकमयैः सोपानैः सुखेन गम्यः-तादृशसोपानानां समश्लक्ष्णगुणविशिष्टत्वात् सुखावहमारोहणं भवतीत्युच्यते । कलः-आमन्द्रमधुरः, स्वनः कण्ठस्वरो येषां तैः । कपोतैः-गृहपारावतैः । रम्यः-मनोहरः । रौप्यवदुज्ज्वलद्धवलिम्ना, तेजस्विना कनकमयेन शिखरेण च दर्शनमनोहरः, स्निग्धैः स्फाटिकैः सोपानैः गमनमनोहरः, कलरवानां कपोतानां निःस्वनैः श्रवणमनोहरश्चायं प्रासादो दुःखितमपि सुखयतीति भावः ॥ २७ ॥

**पाण्डो इति** । परवृत्तान्तः-शत्रुसम्बन्धिनी वार्ता । **श्रुत इति** । कुष्ठमुखादेव परवृत्तान्तः श्रुतः, न तु मत्सरात् । विशेषतः श्रोतुमिच्छामि-मत्सर

**पाण्डुः**—श्रुतः कुष्ठमुखादेव । विशेषतः श्रोतुमिच्छामि ।

**राजयक्ष्मा**—पाण्डो, श्रूयतां मत्सरमुखात् । ततः समुचितं प्रतीकारं विधास्यसि । मत्सर, कथय ।

**मत्सरः**—श्रूयताम् ।

संनद्धैः पुररक्षणे परिगतं प्राणादिभिः पञ्चभि-
स्तत्तद्देशगतैश्च यन्त्रनिचयैस्तद् दुष्प्रवेशं पुरम् ।
रन्ध्रान्वेषितया कथं कथमपि प्राप्ताः स्म देवाज्ञया
यत्रान्तर्मुखतामुपेत्य नियतं जीवस्तपोऽतप्यत ॥ २८ ॥

---

एव शत्रुकटकात् साक्षात् सर्वमपि विदित्वा, विज्ञानशर्मणो वचनानि च स्वतः श्रुत्वा समागत इति तदभिहितरीत्या शत्रुवृत्तान्तमशेषमपि जिज्ञासुरेवमाह । (श्रुतं कुष्ठमुखात् पुरवृत्तम्; तं विशेषतः श्रोतुमिच्छामि इति पाठान्तरं नातीव समीचीनम् ।) श्रूयतामिति । समुचितं प्रतीकारं-यथार्हं प्रतिविधानम् । (श्रूयताम् इति पदं क्वचित् पुस्तके नास्ति ।)

**संनद्धैरिति** । पुररक्षणे-शरीराख्यनगरस्य परिपालने । संनद्धैः-जागरूकतया कृतपरिकरैः । पञ्चभिः प्राणादिभिः-नाम धामादिविवरणपूर्वकं वक्ष्यमाणैः प्राणादिभिः पञ्चभिर्वायुभिः । परिगतं-समन्ततो व्याप्तम् । तत्-पुरम् । तत्तद्देशगतैः-तत्तदवयवसन्निवेशानुकूलतया प्रयुक्तैः; अन्यत्र तत्तद्देशसंस्थानसमुचिततया विन्यस्तैः । यन्त्रनिचयैः-वक्ष्यमाणार्शो-भगन्दरादियन्त्र-शस्त्राणां समूहैश्च; अन्यत्र पुर-दुर्गादिरक्षणोपयोगिभिः-निस्त्रिंश-प्रास-चापायोघन-शक्तिप्रभृतिभिः आयुधगणैश्च । दुष्प्रवेशं-अतिप्रयासेन प्रवेशयोग्यं भवति । (यत्ननिचयैरिति पाठस्त्वसाधुः । इहोक्तानां प्राणादिवायूनां यन्त्राणां च वक्ष्यमाणवाक्ये राजयक्ष्मकृतानुयोगानुरोधेन मत्सरो विषयविवरणं करिष्यति न तु यत्ननिचयानाम् । किञ्च निर्णयसागरीयपस्तके यत्नानि कीदृशानि इति यन्त्रशब्दस्थाने यत्नशब्दो नपुंसक-

**राजयक्ष्मा**—मत्सर, के ते प्राणादयः कतिविधाः कुत्र गताः किंनामधेयाश्च। कानि च तानि यन्त्राणि कीदृशानीति च सकलमपि सप्रकारमावेदय।

**मत्सरः**—हृदयसततावासः प्राणो महाबलविक्रमः
सकलमपि तद्यस्यायत्तं पुरं सपरिच्छदम्।
कलितनिलयोऽपानो मूलस्थले हितकृद्विभो-
र्वसति च समानाख्यो गुल्मे बली घनशूलभृत्॥ २९॥

---

त्वेनापभ्रंशतया मुद्रितम्।) देवाज्ञया-प्रभोस्तव निदेशेन। कथं कथमपि-पुररक्षकान् वायून् यन्त्रादीनि च महता प्रयत्नेनातिक्रम्य। रन्ध्रान्वेषितया-कापट्येन छिद्रगवेषणोपायेनेति यावत्। प्राप्ताः स्म-तत् पुरं प्राविशाम। राजाज्ञायाः कथमपि अनुल्लङ्घयत्वादिति भावः। यत्र-यस्मिन् पुरे। जीवः-जीवराजः। अन्तर्मुखतां-दहराकाशाभिमुखत्वम्। उपेत्य। नियतं-अचञ्चलं यथा तथा। तपोऽतप्यत-तपश्चरन् बभूव॥ २८॥

**मत्सरेति**। (मत्सरेति संबोधनं क्वचित् पुस्तके नास्ति। तथा सकलमपीति पदं च नास्ति।) सप्रकारं-प्रतिनियतभेदविवरणपुरस्सरम्। (यन्त्रानीति पाठस्त्वसाधुः।)

राजयक्ष्मकृतप्रश्नक्रमेण प्रथमतः प्राणादिवायूनां स्थानादीन् विवृणोति **हृदयेति**। प्राणः-प्राणो नाम वायुः। महाबलविक्रमः-देहधारण-प्राणरक्षणादिकर्मणाम् आवश्यकेन बलेन वीर्येण च संपन्नः। स च हृदयसततावासः-सर्वदा हृदय एव कृतस्थितिः। तत् पुरं-पूर्वनिर्दिष्टं जीवराजस्य देहात्मकं नगरम्। सपरिच्छदं-अङ्गप्रत्यङ्गैः सहितम्। नगरपक्षे सर्वोपकरणैः सकलपरिजनपरिवारैश्च समन्वितम्। सकलमपि। यस्य-हृदयस्य। आयत्तं-अधीनम्। भवतीति शेषः। प्राणवायुर्हृदयमधितिष्ठन् सर्वेषामपि बाह्यानामान्तराणाम् अङ्गानां प्रत्यङ्गानां च नियन्ता रक्षकश्च भवतीत्यर्थः। "हृदि प्राणः" इति सामान्यतः

किञ्च—कण्ठोपकण्ठे निवसन्नुदानः करोत्यकुण्ठां किल राजभक्तिम् ।
व्यानस्तु सर्वत्र चरन् पुरेऽस्मिन् करोति जीवे सकलानुभूतिम् ॥ ३० ॥

---

प्राणस्य हृदयमेव प्रधानं स्थानमिति यद्यपि व्यवह्रियते तथापि सुश्रुतादिभिः तस्य वक्त्रसंचरणं विशिष्यास्तीत्यभिहितम् । "वायुर्यो वक्त्रसंचारी स प्राणो नाम देहधृक् । सोऽन्नं प्रवेशयत्यन्तः प्राणांश्चाप्यवलम्बते ।" इत्यादिवचनस्य वक्त्रे संचारित्वमेव प्राणस्य, स्थानं तु तस्य हृदयमेवेति वस्तुगत्या तात्पर्यम् । शार्ङ्गधरश्च हृदयमेव प्राणवायोः स्थानमित्यभिदधाति । अपानो नाम वायुरन्यः । मूलस्थले-गुदप्रदेशे ; नगरपक्षे-मूलबलं यत्रास्ति तादृशे दुर्गे । कलितनिलयः-अधिगतावासः सन् ; अन्यत्र तत्राधिकृत इति च । विभोः-तदीयस्य राज्ञः । हितकृत्-मलादीनां बहिर्निष्कासनादिना स्वास्थ्यरूपं पथ्यमाचरन् ; अन्यत्र मूलबलरक्षणात्मकं राजहितमाचरन् । वर्तते । "वृषणौ नाभिमेढ्रं च वस्त्यूरू वङ्क्षणौ गुदम् । अपानस्थानयन्त्रस्थः शुक्रमूत्रशकृन्ति सः । सृजत्यार्तवगर्भौ चापानः स्थानस्थितो यदि" इति चक्रदत्तः । बली-अन्नपचने विशेषशक्तिमान् ; अन्यत्र बलिष्ठः । घनशूलभृत्-विकृतावस्थायां बलवत्कुक्षिशूलादिसङ्कटोत्पादकः ; अन्यत्र दृढशूलायुधधारी । समानाख्यो वायुश्च । गुल्मे-आन्त्रे, पक्वामाशययोर्मध्ये । "आन्त्रं पुरीतत् गुल्मश्च" इति राजनिघण्टुः, अमरकोशश्च । वसति-वर्तते । "आमपक्वाशयचरः समानो वह्निसंगतः । सोऽन्नं पचति तज्जांश्च स्वस्थानां विविनक्ति हि । गुल्माग्निसङ्गातीसारप्रभृतीन् कुरुते गदान्" इति सुश्रुतः । विभोः हितकृदित्येतत् वाक्यत्रयेऽप्यन्वेति । "मलाशये चरेत् कोष्ठे वह्निस्थाने तथा हृदि । कण्ठे सर्वाङ्गदेशेषु वायुः पञ्चप्रकारतः । अपानः स्यात् समानश्च प्राणोदानौ तथैव च । व्यानश्चेति समीरस्य नामान्युक्तान्यनुक्रमात् ।" इति च शार्ङ्गधरः ॥ २९ ॥

पूर्वश्लोकोक्तावशिष्टं वायुद्वयं विवृणोति **कण्ठोपकण्ठ** इति । कण्ठोपकण्ठे-कण्ठदेशस्यान्तः । निवसन्-तत्प्रदेशं नियमेन स्थानीकृत्य तिष्ठन् । उदानः-

शल्यानि यानि किल देहभृतां शरीरे
नानाङ्गकेषु महतीं प्रथयन्ति बाधाम् ।
तेषां समुद्धरणकर्मणि साधनानि
यन्त्राणि कानिचन संघटितानि तत्र ॥ ३१ ॥

---

तदाख्यो वायुः । अकुण्ठां-अप्रतिहताम् । राजभक्तिम् । करोति किल ; अव्याहत-राजभक्त्यनुरोधेन तत्प्रदेशे स्थित्वा सावहिति पुररक्षणकर्म निर्वर्तयति । किलेति संभावनायाम् । "उदानः कण्ठदेशस्थः" इति निघण्टुः । "उदानो नाम यस्तूर्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिविशेषोऽभिप्रवर्तते" इति च सुश्रुतः । व्यानः-तदाख्यो वायुस्तु । अस्मिन् पुरे-देहे । सर्वत्र चरन्-अशेषेषु धातुषु चावयवेषु च संचरन् । जीवे-जीवराजे ; तद्विषय इति यावत् । सकलानुभूतिं-जीवस्य सुखासिकाया निराबाधनिवासस्य चावश्यकं सकलमप्यानुकूल्यम् । करोति । "व्यानः सर्वशरीरगः" इति निघण्टुः । "कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः । स्वेदासृक्स्रावणश्चापि पञ्चधा चेष्टयत्यपि" इति सुश्रुतः ॥ ३० ॥

**शल्यानीति** । अनेन कानि च यन्त्राणीति यक्ष्मकृतद्वितीयप्रश्नस्योत्तरमाह । देहभृतां-प्राणिनाम् । शरीरे । नानाङ्गकेषु-विविधेष्ववयवेषु । यानि किल शल्यानि-शरीरस्य अननुकूलानि धातुषु अवयवेषु वा कृतस्थानानि वस्तूनि । "शल्यं नाम विविधतृण-काष्ठ-पाषाण-पांसु लोह-लोष्टास्थि-वाल-नख-पूयास्रान्तर्गर्भप्रभृतीनि" इति सुश्रुतः । तानि महतीं बाधाम् प्रथयन्ति-रुजां विविधात्मना सुतरामुत्पादयन्ति । शरादीनि शस्त्राण्यपि शरीरमाविष्टानि शल्यान्येव । "शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं तापादन्तश्शल्य इवासीत् क्षितिपोऽपि" इति रघुवंशेऽपि शरीरबाधाजनकं मनोबाधाजनकमिति शल्यस्य द्वैविध्यं सुष्ठु निर्दिष्टमास्ते । (९-७५.) तेषां-तथा शरीरबाधावहानां बाणाग्रसदृशानां शारीरमानसिकभेदेन द्विविधानामपि विविधानां शल्यानाम् । समुद्धरणकर्मणि-शरीराद्ध-

यानि किल—

अर्शोभगन्दरमुखस्य रुजां गणस्य
क्षाराग्निशस्त्रपरियोजनमङ्गरक्षाम् ।
वस्त्यादि कर्म घटिकादि च कार्यजातं
कुर्वन्त्यपायरहितानि च तत्र तत्र ॥ ३२ ॥

---

हिरपनयनकार्ये । साधनानि-उपकरणभूतानि । यन्त्राणि-अनन्तरं वक्ष्यमाणस्वरूपाणि उपकरणानि । कानिचन । तत्र-तस्मिन् पुरे । संघटितानि-सज्जीकृतानि सन्ति । "मनश्शरीरबाधाकराणि शल्यानि; तेषामाहरणोपायो यन्त्राणि" इति, "तानि च स्वस्तिकयन्त्राणि, संदंशयन्त्राणि, तालयन्त्राणि, नाडीयन्त्राणि, शलाकायन्त्राणि, उपयन्त्राणि चेति षट्प्रकाराणि" इति, "यन्त्रशतमेकोत्तरम्, अत्र हस्तमेव प्रधानतमम्" इति च सुश्रुतः । इतरे विशेषा अग्रतः पठनीयाः ॥ ३१ ॥

यन्त्राणामुपयोगांश्च संगृह्णाति यानि किलेत्यादिना । यानि किल-यन्त्राणि । अर्श इति । अर्शः-गुदाङ्कुराख्यो रोगः; भगन्दरः-परिणता गुदजा पिडका; "अपक्कां पिडकामाहुः पाकप्राप्तं भगन्दरम्" इति वाग्भटेन प्रतिपादितम् उत्तरस्थाने । तन्मुखस्य-अर्शोभगन्दरादिकस्य । रुजां गणस्य-शल्यवद्बाधाकराणां व्याधीनां समूहस्य । क्षाराः-अपामार्गाद्योषधिजाः तुत्थटङ्कणादिखनिजाश्च प्रतिसारणार्हास्तीक्ष्णा लवणविशेषाः; दुष्टानां त्वङ्मांसादीनां क्षरणात्-तत्तत्स्थानेभ्योऽपनयनात् क्षारा इत्युच्यन्ते; अग्निः-दुष्टत्वङ्मांसेषु ग्रन्थ्यादिरोगेषु च दाहकर्मणि तप्तशलाकादिभिः प्रयोज्यमग्निकर्म; शस्त्राणि-ग्रन्थ्यर्बुद-विद्रधि-मूढगर्भप्रभृतीनां दारण-भेदनाद्यर्थमुपयुज्यमानानि शल्यकर्माख्यचिकित्सोपयोगीनि मण्डलाग्र करपत्र-कर्तरीप्रभृतीनि आयुधानि; तेषां परियोजनं-प्रयोगम् । कुर्वन्ति । क्षारप्रयोगस्य, अग्निदाहप्रयोगस्य, शस्त्रप्रयोगस्य च अनुकूलानि भवन्ति यान्युपकरणानि तानि यन्त्राणीत्युच्यन्ते । शल्याहरणरूपाणि, छेदन-पाटनादिरूपाणि कर्माणि येषामुपयोगेन क्रियन्ते तानि शस्त्राणि ।

किं च,

विस्तीर्णानि नवद्वयाङ्गुलपरीणाहानि कण्ठे परं
संनद्धानि च कीलकैः सुघटितैर्मूलेऽङ्कुशाभानि च ।
पर्यन्तेषु पुनर्मसूरसदृशाकाराणि तिष्ठन्त्यहो
तत्र स्वस्तिकनामकानि कतिचिद्यन्त्राणि घोराणि च ॥ ३४ ॥

---

भीषणं-भयावहं मुखं यस्य तत् । तत् यन्त्रं हि । भल्लूकवक्त्रं-भल्लूकमुख-यन्त्रम् । यत् कङ्कस्य-लोहपृष्ठाख्यस्य क्षुद्रगृध्रस्य, तुल्यम् आननं यस्य तत् । तत् यन्त्रमेव । कङ्काननामकं कङ्कमुखाभिधम् । प्रतिभयं-भयावहम् यन्त्रम् । यत्-यन्त्रमपि । ध्वाङ्क्षस्येव-वायसस्येव, अतितीक्ष्णम्-उभयतोऽग्रतश्च सुतरां तीक्ष्णधाराविशिष्टम् आननं यस्य तत् । तदेव काकमुखं नाम यन्त्रं भवति । इत्थमेष च वाग्भटेन संगृहीतो विषयः—''तुल्यानि कङ्कसिंहार्क्षकाकादिमृगपक्षिणाम् । मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च'' इति ॥ ३३ ॥

**विस्तीर्णानीति** । किं च । तत्र-तस्मिन् देहाख्ये पुरे । कतिचित्-कानिचन । स्वस्तिकनामकानि घोराणि-भयावहानि । यन्त्राणि च । विस्तीर्णानि-तत्र तत्र वितत्य स्थापितानि । सन्तीति शेषः । किं भूतानि तानि । नवद्वयाङ्गुलपरीणाहानि-वैशाल्येन अष्टादशाङ्गुलपरिमितानि; तावदायतानीति भावः । कण्ठे-ग्रीवास्थाने परम् । न त्वन्यत्रेति परशब्दप्रयोजनम् । सुघटितैः-बलवत्संयोजितैः । कीलकैः-लोहकण्टकैः । संनद्धानि-सम्यक् निबद्धानि च । मूले-त्सरुभागे । अङ्कुशाभानि-आकारतः सृणिनामकायुधवदानतानि । पर्यन्तेषु-पार्श्वाग्रभागेषु । मसूरसदृशाकाराणि-मसूरधान्यवत् वर्तुलमसृणस्वरूपाणि । पुनरित्यवधारणार्थे । तिष्ठन्ति-पुरभेत्तृशत्रुनिषूदनार्थं तत्र तत्र स्थापितानि सन्ति । अहो इति भयविस्मय-सूचकमव्ययम् । ''अष्टादशाङ्गुलायामान्यायसानि च भूरिशः । मसूराकार-पर्यन्तैः कण्ठे बद्धानि कीलकैः । विद्यात् स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ।'' इत्येष वाग्भटसंगृहीतो विषयः, यमनुरुध्य वचनमिदं प्रवृत्तम् ॥ ३४ ॥

तान्येव सुदृढान्यस्थिलग्नशल्यापकर्षणम् ।
कुर्वन्ति स्वस्तिकाख्यानि यन्त्राणि हि शरीरिणाम् ॥ ३९ ॥

अपि च,

एकानेकमुखान्यपि नाडीयन्त्राणि सूक्ष्मसुषिराणि ।
स्रोतोगतशल्यानां दर्शनचूषणविधौ समर्थानि ॥ ३६ ॥

---

स्वस्तिकयन्त्राणामुपयोगमाह तान्येवेति । तानि-पूर्वोक्तलक्षणविशिष्टानि । स्वस्तिकाख्यानि-स्वस्तिकनाम्ना प्रसिद्धानि । सुदृढानि-अतिदृढतया निर्मितानि । यन्त्राण्येव । शरीरिणां-अन्तर्गतशल्यैरभिपीड्यमानानां देहिनाम् । अस्थिषु लग्नानां-निविष्टानाम् , शल्यानां-बाणाग्रादिरूपपीडाकराणां वस्तूनाम् , अपकर्षणं वहिर्बलादानयनम् । कुर्वन्ति । अत्र सुश्रुतः—"तत्र स्वस्तिकयन्त्राणि अष्टादशाङ्गुलप्रमाणानि सिंह-व्याघ्र-वृक-तरक्ष्वृक्ष-द्वीपि-मार्जार-शृगाल-मृगैर्वारुक-काक-कङ्क-कुरर-चास-भास-शशघात्युलूक-चिल्लि-श्येन-गृध्र-क्रौञ्च-भृङ्ग-राजाञ्जलिकर्णावभञ्जन-नन्दीमुखमुखानि मसूराकृतिभिः कीलैरवबद्धानि मूलेऽङ्कुशवदावृत्तवारङ्गाणि अस्थिविनष्टशल्योद्धरणार्थमुपदिश्यन्ते" इति । मसूरदलाकारत्वं सुश्रुतादिभिरभिहितरीत्या ग्रीवाबद्धकीलकानामेव न तु यन्त्राग्रभागानामिति ज्ञातव्यम् ॥ ३९ ॥

एकेति । एकमुखानि अनेकमुखानि च ; कानिचन एकमुखयुक्तानि अपराणि कानिचन अनेकमुखयुक्तानि । सूक्ष्माणि सुषिराणि-अन्तर्द्वाराणि येषां तानि । तथाविधानि नाडीयन्त्राण्यपि-तन्नाम्ना प्रसिद्धानि यन्त्राण्यपि । अन्तस्सुषिरविशिष्टत्वादेव नाड्य इति यन्त्राणाममीषां नाम । एतानि च स्रोतोगतानां-मुखादिद्वारमाविश्य स्थितानाम्, शल्यानाम् । स्रोतांसि बाह्यानि आन्तराणि चेति समान्यतो द्विधा । यथा वाग्भटे—"स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् । स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।" इत्येतानि बाह्यस्रोतांसि ।

एवमादिभिर्बहुविधैर्यन्त्रनिवहैरन्यैरपि परिगुप्ततया दुर्गममपि पुरं कथंचन प्रविश्य मनसः पारतन्त्र्यकरणाय वयं यावदितस्ततः संचरितुं प्रवृत्तास्तावदेव विज्ञानविधेयेन विचारनाम्ना नागरिकहतकेन परिज्ञाताः ।

**पाण्डुः**—ततस्ततः ।

**मत्सरः**—ततः कामादिषु तत्र तादृशीं दुरवस्थां प्रपन्नेष्वहमेक एव हतभाग्यतया वैरिवशंगतस्तत्कृतमवमानजातमशरणतया सहमानस्तदीयभटैरितस्ततो विकृष्यमाणस्तदुदितवाचिकमपि निशमयंश्चारवधविमुखै-

---

"जीवितायतनान्यन्तस्स्रोतांस्याहुस्त्रयोदश । प्राणधातुमलाम्भोन्नवाहीनि" इति चान्तस्स्रोतांसि त्रयोदश । दर्शन-चूषणयोः नाडीगतसुषिरद्वारा निरीक्षणकर्मणः तद्द्वारा स्रोतोगतशल्य-दोषादीनामाकर्षणकर्मणश्च विधौ प्रयोगे । समर्थानि-अतीवोपयुक्तानि यानि तान्यपि तत्र सज्जीकृतानि सन्तीत्युक्तं भवति । "नाडीयन्त्राणि सुषिराण्येकानेकमुखानि च । स्रोतोगतानां शल्यानामामयानां च दर्शने । क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च" इति वाग्भटोक्तो विषयोऽत्र सूचितो भवति ॥ ३६ ॥

**एवमिति** । अन्यैरपि बहुविधैः यन्त्रनिवहैः—चतुर्विंशत्या स्वस्तिकयन्त्रैः, सन्दंशयन्त्रद्वयेन, तालयन्त्रद्वयेन, विंशत्या नाडीभिः, अष्टाविंशत्या शलाकाभिः, पञ्चविंशत्या उपयन्त्रैरपीति भावः । परिगुप्ततया-परितो सावहिति रक्षिततया । मनसः पारतन्त्र्यकरणाय-जीवराजेन साकं मनसो विद्यमानस्यानुकूल्यस्य विभेदनाय । वयं परिज्ञाताः—पाण्डुप्रहिताः प्रणिधय इति प्रत्यभिज्ञाताः । **ततःकामादिष्विति** । अशरणतया-गत्यन्तराभावात् । तदुदितवाचिकं-तैरादिष्टां वार्तामपि । कुतो नाम तैर्यूयं न हता इति प्राप्तावसरं प्रश्नं समाधत्ते चारवधविमुखैरिति । चारवधस्यानौचित्यतया तैरस्मद्वधे वैमुख्यं प्रदर्शितम् । प्रज्वलता अवमानाग्निना-मानभङ्गरूपमानसोत्थितवह्निना सुतरां तापमधिगतः ।

स्तैरेव कृपया विमुक्तः, प्रज्वलदवमानाग्निसंतप्यमानः स्वजनमुखावलोकने कृतलज्जतया क्वचन विजनकाननसीमनि कठोरतपश्चर्यया विनिपातिततनुर्भर्तुरानृण्यं भजेयमिति पुरान्निस्सरन्, अन्तरा सकिङ्करेण कुष्ठेन संदष्टो देवपादमूलं प्रापितः। इत्येतदवसानं प्रवृत्तेः श्रुत्वा देवः प्रमाणम्।

**राजयक्ष्मा**—कुमार, श्रुतं खलु निरवशेषमस्य मुखात्। किमत्र प्रतिविधेयम्।

**पाण्डुः**—(विचिन्त्य) देव, किमन्यत्।

सन्तु यन्त्राण्यनेकानि सन्तु वा सैनिकाः परे।
त्वत्कोपाग्नौ पतङ्गत्वं भजेरन्निति मे मतिः॥ ३७॥

---

विनिपातिता-प्रक्षिप्ता, तनुः-स्वशरीरं येन सः। कठोरतपश्चर्यया हतशरीरमिदं क्वचिद्विमुञ्चन्निति भावः। "माजीवन् यः परावज्ञादुःखदग्धोऽपि जीवति। तस्याजननिरेवास्तु जननीक्लेशकारिणः" इति माघवचनमिहानुसन्धेयम्। (संदष्टः इति पदं क्वचित् पुस्तके नास्ति।) प्रवृत्तेः-अस्मद्वृत्तान्तस्य। इत्येतदवसानं-इत्येतावत् पर्यन्तम्। श्रुत्वा देवः प्रमाणं-आमूलादशेषमपि वृत्तमुक्तमासीत्; इतःपरं महाराजेन पाण्डुना वा यत् कर्तव्यं तत् क्रियतामिति भावः। किमन्यत्-वक्ष्यमाणविषयादृते किमन्यदस्ति कर्तव्यमिति यावत्।

**सन्त्विति**। अनेकानि-पूर्वोक्तरीत्या बहुविधानि। यन्त्राणि-स्वस्तिकादीनि। सन्तु-भवन्तु नाम। परे-तदितरे; यन्त्रापेक्षया चापरे पुररक्षणप्रवणाः सैनिका वा सन्तु। तावता किं नः क्षतमित्याशयेनाह **त्वदिति**। त्वत्कोपाग्नौ-त्वदीयक्रोधवह्नौ। पतङ्गत्वं-शलभत्वम्। तानि ते चेति शेषः। भजेरन्-प्राप्नुयुः। यथा शलभाः स्वयमग्नेरभिभवाय तद्वीर्यं स्वेषां फल्गुत्वं चाजानानास्तदुपरि निपतेयुः, तथा क्षुद्रा एते शत्रवश्च तवानिवार्यवीर्ये कोपाग्नौ निपतन्तु नाम; पतङ्गानामिव भवच्छत्रुसैनिकानां यन्त्राणां च सङ्ख्यया सुबहुत्वं तव नूनम-

**राजयक्ष्मा**—पाण्डो, सत्यमेव ; किं कालविलम्बेन । सर्वथा प्रविश्यान्तः-कोशागारम्—

शस्त्रेण सर्वमपि खण्डश एव कृत्वा
गृध्रव्रजाय निखिलं बलिमर्पयामि ।
येनौदनो दिविषदां विकलीकृतोऽभूत्
किं तस्य मे भयममी कितवा विदध्युः ॥ ३८ ॥

---

किञ्चित्करमिति भावः । सहस्रशः शलभाः पावक इव तावके क्रोधाग्नौ वैरिवरूथिन्यो निपत्य निधनमधिगच्छेयुः । इति मे मतिः-इति मे प्रतिभातीत्यर्थः । यक्ष्मणि प्रकामं देहस्यान्तः प्रकुप्य प्रवृद्धे, तानि यन्त्राणि ते च विज्ञानशर्मणः सैनिकाश्च (धातुक्षयात्) विहतमूला विह्वला विनष्टाश्च भवेयुरिति निदानतत्त्वमिह निरूपितमिति ज्ञेयम् । अतो धैर्यमवलम्ब्य शत्रुनिषूदनाय किमपि समयोचितं कर्तव्यमिति रोगराजं पाण्डुः प्रोत्साहयति ॥ ३७ ॥

**सत्यमेवेति** । यदुक्तं त्वया मद्वीर्यं प्रति तत् सत्यमेव । किं कालविलम्बेन-शत्रुनिधने कालहरणं काममापदे प्रकल्पत इति यावत् । एष च माघेनाभिहितां नीतिमिमां ज्ञापयति विषयः । यथा—"विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्" इति । सर्वथेत्यादिकं श्लोकेनानन्तरिकेणान्वेति ।

**शस्त्रेणेति** । अन्तःकोशागारं-पुराख्यस्य पुरुषदेहस्य कोष्ठादीनामन्तः-प्रदेशम् । शत्रुभूतस्य राज्ञो जीविताधारभूतं द्रव्यनिधातं कोशगृहमपीति व्यज्यते । प्रविश्य-अहमाविश्य । सर्वथा-सर्वप्रकारेणापि ; बहुधेति यावत् । सर्वमपि-समस्तमपि भागम् । शस्त्रेण-यक्ष्मव्याधिरूपेण मण्डलाग्रादिशस्त्रेभ्योऽपि क्रूरतरेण मत्स्वरूपाख्येन निशितेनायुधेन । खण्डश एव कृत्वा-बहुधा शकलीकृत्य । निखिलं-तथा शकलीकृतं शत्रोरङ्गसमूहं सकलमपि । (विपुलम् इति पाठान्तरम्)

अपि च,

अमृतनिधिरयं यः सोऽपि मत्पीडितः सन्
न विसृजति मदीयव्याधिनाद्यापि कार्श्यम् ।
निजविकटजटालीकाननस्थापितस्य
प्रभवति स महेशोऽप्यस्य किं पूरणाय ॥ ३९ ॥

---

गृध्रव्रजाय-गृध्राख्यानां शवमांसभक्षकानां पक्षिणां समूहाय । बलिं अर्पयामि-आहारत्वेन ददामि । राजयक्ष्मणा बलवताभिभूतस्य प्राणिदेहस्य तादृशी दुरवस्था सामान्यतः संभवतीति भावः । स्वस्य तथा करणे विद्यमानाम् ऐतिहासिकीं शक्तिम् उदाहरत्युत्तरार्धेन येनेत्यादिना । येन-यक्ष्मणा मया । दिविषदां-देवानाम् । ओदनः-आहारभूतोऽमृतांशुः । "कलाः षोडश सोमस्य शुक्ले वर्धयते रविः । अमृतेनामृतं कृष्णे पीयते दैवतैः क्रमात्" इति देवीपुराणादिषु देवैः सोमस्य सुधामयीनां षोडशकलानां क्रमेण पानं प्रतिपादितम् । विकलीकृतः-कलारूपैरङ्गैः क्षीणीकृतः । अभूत् । सोमस्याङ्गेषु येन क्षयस्समुत्पादितः । तस्य-तादृशमहिमवतः । मे-मम । अमी कितवाः-एते धूर्ता वराका वा । किं भयं-कीदृशं भयम् । विदध्युः-कुर्युः । यद्वा भयं किं विदध्युः-ममापि भयमेते वराकाः कुर्युः किम् । आनन्तरिकपद्यस्य व्याख्यापि विशेषस्यावशिष्टस्यावगमाय विलोक्यतां नाम ॥ ३८ ॥

**अमृतनिधिरिति** । अपि चेत्यत्रान्वेति । अपि च योऽयम् अमृतनिधिः-चन्द्रः । विद्यत इति शेषः । सोऽपि मत्पीडितः- मया राजयक्ष्मणा बलवदभिभूतः सन् । अद्यापि । मदीयव्याधिना-यक्ष्मरोगेण । (मदीयेनाधिनेति पाठे मदीयेन मदुपजनितेन; यक्ष्मरोगाक्रान्तत्वात् समुपनतेनेति यावत् । आधिना-बलवदामयोपस्थितमनोऽभिघातेन इत्यर्थः ।) कार्श्यं-क्षैण्यम् । न विसृजति । अद्यापि प्रतिमासं कृष्णप्रतिपदारभ्य पञ्चदश दिनानि यावत् प्रत्यहं कार्श्यमभिप्रपद्य मदभिघातजं दुःखं न त्यजति । सः-मद्विजयाय जीवेनोपास्यमानमहिमविशिष्टः ।

हन्त हन्त,

स ददाति नाम गिरिशो रसमेतेषामुपासनपराणाम् ।
लब्धेनैतेनास्मानेते नाम प्रशमयन्ति ॥ ४० ॥

---

महेशः-परमेश्वरोऽपि । निजस्य-आत्मनः, विकटे-अतिविशाले, जटालीकानने-जटाजूटाख्ये विपिने, स्थापितस्यापि-सुखं निवेश्य रक्षितस्यापीत्यर्थः । अस्य-मयाभिभूतस्य चन्द्रस्य । पूरणाय-सर्वदापि यथा अविकलितमण्डलः प्रकाशते तथा करणाय; तस्य पुष्ट्युत्पादनायेति यावत् । प्रभवति किं-स महेशोऽपि तत्र किमीशो भवति । नैवेति भावः । "गुरुणा तमवध्यातं भार्यास्वसमवर्तिनम् । रजोऽन्धमबलं दीनं यक्ष्मा शशिनमाविशत् ॥ यस्मात् स राज्ञः प्रागासीद्राजयक्ष्मा ततो मतः" इति राजयक्ष्मणा चन्द्रोऽभिभूत इति विषये चरकादयः ॥ ३९ ॥

पूर्वोक्तरीत्या स्वादृतचन्द्रलेखायाः पोषणपूरणयोरसमर्थं पुरारिमपि आत्मरक्षणाय जीवराजः शरणमधिगच्छतीति विस्मितमनाः परिहसति तस्य प्रवृत्तिं हन्त हन्तेति । विस्मयास्पदत्वमेव सहेतुकं समर्थयति स ददातीति । सः-यः स्वाश्रितस्य चन्द्रमसो यक्ष्मोपहतानां कलानां पुनः पूरणे कालेनैतावताप्यक्षमः तादृश इत्यर्थः । गिरिशः-महेश्वरः । उपासनपराणां-ध्यान-पूजादिभिस्तदर्हणासक्तानाम् । एतेषां-जीवादीनाम् । रसं-पारदादिकम् । ददाति नाम-अपि नाम दातुं शक्नोतीति साकूतं पृच्छति । नामेति कुत्सार्थे । "नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने" इत्यमरः । लब्धेन-तथा केवलसङ्कल्पमात्रेण प्राप्यत्वेन निश्चितेनेत्यर्थः । एतेन-काल्पनिकेन रसेन । एते-अस्मत्परिपन्थिनः । अस्मान्-यक्ष्मादीन् । प्रशमयन्ति-परिहरन्ति नाम । अत्रापि नामेति परिहासार्थे । कालाद्बहोः स्वाश्रितस्य सर्वदा स्वमूर्ध्ना धृतस्य कृशाङ्गस्य तपस्विनः शशिनः पोषणे पूरणे चाक्षमोऽयं स्वयं महेशोऽपि कथंतरां कथायामपि मन्निरसनोचितं बलमेतेभ्यः प्रभविष्यति दातुमिति परिहसन्, स्वपक्षस्य बलं परपक्षस्य तदभावं च यक्ष्मा समर्थयत्यनेन ॥ ४० ॥

(विहस्य) अहो विचारचातुरी विज्ञानहतकस्य । (आकाशे) अरे विज्ञानहतक,

आश्रित्य यं सततमुत्पतसि स्मयेन
निर्वापयामि तमहं सहसैव जीवम् ।
पश्चाद्विनङ्क्ष्यति भवानपि चाश्रयस्य
नाशान्न सिध्यति किमाश्रयिणोऽपि नाशः ॥ ४१ ॥

---

**अहो** इति । विज्ञानहतकस्य विचारचातुरी-विषयविमर्शनैपुण्यम् । अहो-विचित्रं भवति । आकाशे-आकाशे लक्ष्यं बध्वेत्यर्थः । (आकाश इति निर्णयसागर-कोशे नास्ति ।)

विज्ञानशर्मणो विचारचातुर्यस्य विदलने स्वयमहमपि प्रभवामीति स्ववीर्यं ख्यापयति **आश्रित्येति** । अरे विज्ञानहतक । यं जीवं-जीवराजम् । आश्रित्य-आधारत्वेनासाद्य । सततं-सर्वदापि । स्मयेन-गर्वेण । उत्पतसि-वल्गसि । इह "चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः" (२-२२) इति मुद्राराक्षसीयं राक्षसस्य वचनमिदं स्मारयति । तं-जीवम् । अहम् । सहसैव-कालातिपातं विनैव । निर्वापयामि-प्रमशामि ; देहान्निर्वासयामीत्यर्थः । पश्चात्-आश्रयभूतस्य जीवशरीरस्य पर्यवसानानन्तरमिति यावत् ; जीवस्य कदाचिदपि नाशाभावात् । भवान्-विज्ञानशर्मापि । विनङ्क्ष्यति-स्वयमेव नाशमधिगमिष्यति । अर्थान्तरन्यासेन तदेव समर्थयति आश्रयस्येति । आश्रयस्य-आधारभूतस्य वस्तुनः । नाशात् । आश्रयिणः-तदवलम्ब्य स्थितस्य द्रव्यस्यापि । नाशः । न च सिध्यति किं-अपि नाम स्वयमेव न निष्पद्यते ; सिध्यत्येवेत्यर्थः । एवमेव "तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि" इति मुद्राराक्षसे राक्षसवाक्यम् । विज्ञानस्य जीवशरीराश्रितत्वात् । आश्रयभूतशरीरनाशे विज्ञाननाशस्यापि समनन्तरमेवायुतसिद्धत्वं प्रसिद्धम् । पुरुषमेष रोगः तरसाक्रम्य स्वयमनुलोमतः प्रतिलोमतश्चावरणादिदोषबलात् धातूनां बहुधा क्षयमुत्पाद्य विनाशयेदिति वैद्यकमतमप्यनुसंदधाति पद्यमिदम् ॥ ४१ ॥

कः कोऽत्र भोः । शस्त्रं शस्त्रम् । (इत्युत्थातुमिच्छति ।)

पाण्डुः—ननु संनिहितमेव शस्त्रम् । तथापि देव, किञ्चिद्विज्ञापयामि ।

राजयक्ष्मा—श्रोतव्यं तर्हि ।

पाण्डुः—अस्त्येवायमन्तिमः प्रकारः । अपि तु,

त्रिषूपायेषु सत्स्वन्त्यो न युक्त इति तान्त्रिकाः ।
उपायमिममेवातो मनो मे प्रयुयुक्षते ॥ ४२ ॥

---

कः क इति । पाण्डोरुत्तेजकवचसा, स्वकीयया च मनोरथकल्पनया, स्ववैरिकृतानामायोधनसन्नाहानां श्रवणेन च सपदि संधुक्षितः संक्षुब्धमानसश्च यक्ष्मा संनिहितवस्त्ववलोकनेऽप्यक्षमः सन् ससंभ्रममाक्रोशति शस्त्रं शस्त्रमिति । आनयेति शेषः । (शस्त्रशब्दस्याम्रेडनं क्वचित्पुस्तके नास्ति ।) नन्विति । शस्त्रं संनिहितमेव-समीपत एव विद्यत इति पाण्डुस्तस्य विगतस्मृतित्वं विबोधयति । तथापि-सत्यपि संनिहिते शस्त्रे । (देवेति संबोधनं क्वचिन्नास्ति ।) किञ्चित्-शस्त्रग्रहणादृते किमप्युपायान्तरम् । (राजयक्ष्मा—श्रोतव्यं तर्हि इति वाक्यमपि पुस्तके क्वचिन्नास्ति ।) तर्हि तदुपायान्तरं श्रोतव्यं-अवश्यं श्रोतुमिच्छामीत्यर्थः । अस्तीति । अयं-एष शस्त्रग्रहणरूपदण्डाख्यः । अन्तिमः प्रकारः-चतुर्थोपायः । अस्त्येव-उपायान्तरेषु सत्सूपहतफलेषु नूनमन्ततोऽस्माकमेष विद्यत एवेत्यर्थः । अपि तु-तदन्तिमोपायव्यतिरेकेणेति यावत् ।

त्रिष्विति । त्रिषु-सामदानभेदाख्येषु । उपायेषु-राजतन्त्रेषु । सत्सु-प्रयोज्यत्वेन विद्यमानेषु । अन्त्यः-अन्तिमत्वेन स्थितो दण्डोपायः । न युक्तः-प्रयोक्तुमनर्हः । इति तान्त्रिकाः-राजनीतिविदः । वदन्तीति शेषः । “सामैव प्रथमं श्रेष्ठं दानं तु तदनन्तरम् । सर्वदा भेदनं शत्रोर्भेदनं प्राणसंशये” इति शुक्रनीत्यादिषु विहितत्वात् । अतो हेतोः । इमं-आत्मना आलोचितम् । उपायमेव । मे मनः । प्रयुयुक्षते-प्रयोक्तुमिच्छति ॥ ४२ ॥

राजयक्ष्मा—कोऽयमुपायः ।

पाण्डुः—(कर्णे) एवमिव ।

राजयक्ष्मा—भवतु तथा । अस्त्येवैतदनन्तरकर्तव्यं विस्फूर्जितम् ।

पाण्डुः—देव, मार्गश्रम इव दृश्यते । सिद्धं च सर्वं शयनादि ।

राजयक्ष्मा—त्वमपि स्वकार्येऽवहितस्तिष्ठ । अहमपि भुक्त्वा निद्रास्थानं गच्छामि ।

(इति निष्क्रान्ताः सर्वे ।)

इति पञ्चमोऽङ्कः ।

---

कोऽयमिति । क एष त्वदुद्दिष्टः सदुपायः । कर्णे इति । कर्णस्यान्तिके अतीव निगूढं यथा तथा । एवमिव-एतत्प्रकारेणेति राजरहस्यं तत्कर्णे कथयति । (एवमेवम् इति पाठान्तरं न सम्यक्) भवत्विति । भवतु तथा-यथा त्वयोपक्षिप्तं तथैव क्रियतामिति यावत् । एतत्-स्वेनादिष्टं शस्त्रग्रहणकर्म । विस्फूर्जितं-आयोधनोत्क्षिप्तप्रहरणग्रामजनितनिर्घोषविजृम्भणात्मकम् । अनन्तरकर्तव्यं-पाण्डूपदिष्टोपायप्रयोगस्यानन्तरं तस्मिन्निष्फले सति प्रयोज्यम् । अस्त्येव-अस्मदिच्छानुरोधं कर्तुमस्त्येव सर्वदा सज्जमित्यर्थः । (विस्फूर्जितमिति मुम्बापुरीपुस्तके नास्ति ।) देवेति । शयनादि-आदिशब्देन मार्गश्रमपरिहारोचितानि स्नानोदकान्नपानादीनि च विवक्षितानि । त्वमपीति । त्वमपि स्वकार्ये त्वदुद्दिष्टे शत्रुशमनोपयोगे सदुपाय इति यावत् । अवहितस्तिष्ठ-अप्रमत्ततया यथोचितमात्तयत्नो भव ।

इति वैद्यरत्नबिरुदाङ्कितेन, आयुर्वेदभूषण-आयुर्वेदाचार्याद्युपाधिभाजा मेल्पाक्क पण्डित दुरैस्वाम्ययङ्गार्महोदयेन मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायां

**पञ्चमोऽङ्कः ।**

# षष्ठोऽङ्कः

(ततः प्रविशति कर्मणा सह कालः ।)

कालः—वत्स कर्मन्, जीवस्य राज्ञः पुरबाधनार्थं यक्ष्मराजमन्त्रिणा पाण्डुना प्रयुक्तान् रोगरूपान् भटान् प्रतियुध्य जेतुं विज्ञानमन्त्रिणा नियुक्तं सरसं तत्प्रतिभटजातं किं करोतीति जिज्ञासते मे हृदयम् ।

---

इतः पूर्वं यक्ष्मादिपात्रैः ततःपूर्वं जीवराजादिभिश्च प्रदर्शितरीत्या दृष्टस्य, जीवराज-यक्ष्मपक्षीयैः प्रारब्धस्य, साक्षाददृश्यस्य समरस्य च, ज्ञानशर्माख्यस्यामात्यान्तरस्योपजापादिफलत्वेन स्पष्टमेतावता केनापि पात्रेणाप्रदर्शितस्य, अत एव नष्टस्य च बीजाख्यस्य कथांशस्य अविच्छेदेन निरूपणमभिसन्धाय कालकर्मणोः संलापद्वारा गर्भसन्धिं साङ्कमारभते ततः प्रविशतीत्यादिना । "गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः" इति गर्भसन्धिलक्षणम् । कर्म तावत् पुरुषैरनुपदमनुष्ठीयमानं पुण्य-पापात्मकम्; तच्च पूर्वकर्म प्रारब्धकर्मेति द्विधा । नित्यादिभेदेन तस्य त्रैविध्यमपि कविरेव वक्ष्यति । अर्थात् कर्मविपाकात्मकस्यापि प्रस्तावस्य प्राप्तावसरत्वात् स च विषय उपक्षिप्यतेऽत्र । कर्मणां धर्माधर्ममूलकानामिह लोके रोग-भोगादिरूपाणि, अमुत्र च स्वर्ग-नरकादिरूपाणि सुखदुःखावहानि फलानि संभवन्तीति, ये किल महारोगाः कुष्ठक्षयापस्मारादयस्ते हि नाम कर्मविपाकप्रतिपादकशास्त्ररीत्या महापातकसंभवा इति चामनन्ति

**कर्म**—भगवन्, सर्वानुस्यूतस्य तव किं नामाविदितमस्ति ।

**कालः**—भवानपि तादृश एव । महान् खलु तव प्रभावः । तथा हि—

शास्त्रज्ञाः । शोभनानि कर्माणि सुखारोग्यहेतूनीह लोके, अपरत्र च स्वर्गापवर्गहेतूनि भवन्तीति मत्वा कर्मणोऽस्मिन्नाटके पात्रत्वप्राप्तिः । कालेन हि निदानं रोगत्वेन, रोगश्च साध्यासाध्यादिरूपत्वेन, प्रयुज्यमानमौषधादिकमपि रोगपरिहारशक्तिमत्त्वेन च परिणमति; तस्मान्निदानादिकमपि कालमपेक्षते; अतोऽत्र निमेषाहोरात्रसंवत्सरादिरूपः कालश्च पात्रत्वेन घटितः । सुश्रुतश्च- "कालो हि नाम भगवान् स्वयम्भूरनादिमध्यनिधनः । अत्र रसव्यापत्संपत्ती जीवितमरणे च मनुष्याणामायत्ते" इति तस्य प्राधान्यं वैद्यके प्रतिपादितवान् ।

**वत्सेति** । कालापेक्षया कर्मणः कनीयस्त्वं प्रकृतिसिद्धम्; कालस्य सर्वापेक्षयानादित्वात्; अतः स वत्सेति कर्माख्यं पुरुषरूपमभिप्रपन्नं पात्रं संबोधयति । अस्मिन्नङ्के जीवमन्त्रिणा विज्ञानशर्मणा, यक्ष्मणा, पाण्डुना च प्रयुक्तानां योधानां पारस्परिक आयोधनप्रकारः काल-कर्मणोः संलपनमुखेन विव्रियते । (प्रतियुधा इति पाठान्तरम् । प्रतियुधा-प्रतियुद्धेन ।) सरसं-रसेन पारदेन सहितम् । तस्य-पाण्डुमन्त्रिणो यक्ष्मराजस्य च, प्रतिभटजातं-विविधरससौषधरूपप्रतियोधकुलम् । **भगवन्निति** । "कालो हि नाम भगवान्" इति सुश्रुतादिभिः प्रतिपादित्वात् कालमिह भगवन् इति कर्मपुरुषः संबोधयति । तव-कालस्य । सर्वानुस्यूतस्य-सर्वत्र सर्वदा अव्यवहितत्वेनाभिव्याप्तस्य । अत एव "स सूक्ष्मामपि कलां कलीयत इति कालः । संकलयति कलयति वा भूतानीति कालः" इति सुश्रुतः कालस्य सूक्ष्मसूक्ष्मकलांशव्यापित्वमभिप्रेत्य व्युत्पत्तिमपि न्यदर्शयत् । सर्वजनानां बहिरन्तश्चाभिव्याप्य विद्यमानत्वात् प्रत्यक्षीकृतविश्वव्यापारस्य कालस्य सर्वदा किं नाम न विदितम् । सर्वं त्वमेव सम्यगवगच्छसीति यावत् । **भवानिति** । भवानपि-कर्मापि । तादृशः-सर्वज्ञ एव । कर्मणश्च सर्वज्ञत्वादिप्रभावाः शास्त्रसिद्धाः ।

त्वामाज्ञातमनुग्रहाय जगतां देवी विधत्ते श्रुति-
र्लोकः साधयतीप्सितं भवदनुष्ठानादिहामुत्र च ।
किं चायं समनुष्ठितेन भवता चित्तस्य शुद्धिं गत-
स्तत्त्वं वेदितुमात्मनः प्रभवति श्रुत्यन्तसंदर्शितम् ॥ १ ॥

---

कर्मणः प्रभावमेव विशदयति त्वामिति । देवी-महाप्रभाववती । श्रुतिः-वेदः । त्वां-कर्म । जगतां-सर्वप्रजानाम् । अनुग्रहाय-श्रेयस्समुत्पादनाय । आज्ञातं-तस्या आज्ञाधारकम् । विधत्ते-कल्पयति । लोकस्य श्रेयस्साधनकर्म श्रीमत्या श्रुत्या कर्मायत्तीकृतमिति यावत् । "कर्म ब्रह्मोद्भवं विद्धि" इति खलु गीतं भगवता । (गीता. ३-१९) ब्रह्मेति वेद इह विवक्षितः । वेदात् तदाज्ञारूपेण जगतः प्रवर्तनार्थमिदं कर्म प्रवृत्तम् । कर्म ब्रह्मोद्भवमित्यस्य व्याख्यावसरे "जगच्चक्रप्रवृत्तिहेतुर्हि कर्म," इति, "ब्रह्म-वेदः, स उद्भवः प्रकाशको यस्य तत् कर्म ब्रह्मोद्भवं विद्धि" इति श्रीशङ्करभाष्यम् । किञ्च "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । एवं त्वयि नान्यथोऽस्ति न कर्म लिप्यते नरे" इत्यादयश्च श्रुतिगिरोऽत्रानुसन्धेयाः । लोकः-जनः । भवतः-कर्मणः, अनुष्ठानात्-निर्वर्तनात् । इह-अस्मिन् लोके । अमुत्र-परस्मिन् लोके च । ईप्सितं-अभिप्रेतार्थम् । साधयति-अधिगच्छति । "ब्राह्मे मुहूर्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः" इत्यारभ्य, "हिंसा स्तेयान्यथाकामं पैशून्यं परुषानृते । संभिन्नालापव्यापादमभिध्यादृग्विपर्ययम् । पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत । न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत । त्रिवर्ग-शून्यं नारंभं भजेत्तं चाविरोधयन्" इत्यादिभिः, "इत्याचारः समासेन यं प्राप्नोति समाचरन् । आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान्" इत्यन्तेन च वाग्भटादिभिरुपदिष्टानां वैद्यकोचितानामन्येषां च सत्कर्मणामनुष्ठानेन, तदितरेषां त्यागेन चायुरारोग्यादिवृद्धिरूपम् ईप्सितमैहिकसुखं मानवाः प्राप्नुनन्ति । इह शरीरपोषणादिकमपि कर्मणैव सिध्यति; न ह्यकर्मणा—"शरीरयात्रा पि च

अपि च,

त्वं नित्यनैमित्तिककाम्यभेदात् स्थित्वा त्रिधानेकफलानि दत्से।
इन्द्रत्वमिन्द्रस्य विधेर्विधित्वं हरेर्हरित्वं च फलं त्वदीयम् ॥२॥

---

ते न प्रसिद्ध्येदकर्मणः" इति खलु भगवतापि प्रोक्तम । नित्यनैमित्तिकादिकर्मणां श्रुतिस्मृतिविहितानां यथावदनुष्ठानेन स्वर्गापवर्गात्मकम् आमुष्मिकमपि अभीप्सितं श्रेयः प्राप्येतेति "कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः। जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्" इति, "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति च श्रीगीताशास्त्रादिभिश्च यदुपदिष्टं तदिह निर्दिष्टम्। "ज्ञानयोगिनामग्रेसराः जनकादयो राजर्षयोऽपि कर्मयोगेनैव संसिद्धिमास्थिताः" इति श्रीगीताभाष्यादिषु कर्मणैवामुष्मिकं श्रेयः साधयितुं शक्यत इति खलु आचार्या आचक्षते। (त्वामज्ञातम् इति पाठो न संगतः।) न केवलमेतावत्, किंतु लोकोत्तरं परमात्मदर्शनरूपं परमं श्रेयः प्राप्तुमपि कर्मैव साधनमिति सूचयति **किंचेति**। अयं-लोकः। अनुष्ठितेन-यथावदाचरितेन। भवता-कर्मणा। यथाविधि श्रौतस्मार्तकर्मानुष्ठानेनेति यावत्। चित्तस्य-अन्तःकरणस्य। शुद्धिं गतः-सात्त्विकगुणाधिष्ठानभूतपरिशुद्धावस्थां प्राप्तः सन्। श्रुत्यन्तसंदर्शितं-वेदान्तप्रतिपादितम्। (त्रय्यन्तसंदर्शितम् इति पाठन्तरम।) आत्मनः-जीवात्मनः परमात्मनश्च। तत्त्वं-याथातथ्यम; यथार्थस्वरूपमिति भावः। वेदितुं-अवगन्तुम्। प्रभवति समर्थो भवति। शुद्धेन मनसा कृतेन निदिध्यासनादिकर्मणा हि नाम नारदादयो मुनिवराः, अपरे च ध्रुव-प्रह्लादादयः सत्त्वनिष्ठाश्च परमात्मानं प्रत्यक्षीकर्तुं प्राभवन् इति भावः ॥ १ ॥

कर्मणः सुतराममेयः प्रभाव इति पुनर्वर्णयति **अपिचेति**। तत्प्रकारमाह **त्वमिति**। त्वं-कर्म। नित्यनैमित्तिककाम्यभेदात्-नित्यकर्मनैमित्तिककर्मकाम्यकर्मप्रकारेण। त्रिधा स्थित्वा-त्रैविध्यमधिगत्य। नित्यनैमित्तिककाम्यकर्माणि पूर्वमेव व्याख्यातानि। (अङ्क १-श्लो-६,). अनेकफलानि-ऐहिकामुष्मिक-

कर्म—आर्य, अवाङ्मनसगोचरस्तव महिमा ।

सुमतिभिरनुमेयस्त्वं सहस्रांशुगत्या
भवति भवदधीनं मद्विधानं जनानाम् ।

(सविनयम्) भगवन्, किमन्यद्ब्रवीमि,

परिणमयसि पुंसां दातुमर्थात्मना मां
त्वयि कृतिमति षोढा विक्रियन्ते च भावाः ॥ ३ ॥

---

श्रेयस्साधनरूपाणि बहुविधानि फलानि । दत्से-दिशसि । "अपत्यविजयैश्वर्य-स्वर्गार्थं यत् प्रदीयते । क्रियते चापि काम्याख्यं कर्म तद्धर्मचिन्तकैः" इत्यादिरूपान् अभीप्सितार्थान्; काम्यादिकर्मानुष्ठातृभ्यः कर्मैव फलवितरणदक्षं भवतीति भावः । न केवलं सामान्यफलं परं तु महेन्द्रत्वादिपदप्राप्तिरपि कर्मणैव घटत इत्याह इन्द्रत्वमित्यादिना । इन्द्रस्य-अमराणामधिपस्य । इन्द्रत्वं-तत्स्थानम् । विधेः-ब्रह्मणः । विधित्वम्; इत्येतदादिकम् आधिपत्यम् ऐश्वर्यं च । त्वदीयं फलं-तत्तदनुष्ठितस्य पुण्यकर्मणः परिणामरूपमेव ।

"ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥"

इत्यभियुक्तैरभिहितरीत्या कर्मणस्तव प्रभाव एव मूर्तित्रयमुखेनापि लोकनिर्वहण-कर्मणि सर्वथा प्रभवतीति भावः ॥ २ ॥

**आर्येति** । तव-कालस्य । महिमा । अवाङ्मनसगोचरः-वाचा वक्तुम् अशेषतो, मनसा चिन्तितुमपि अशक्यत्वात् वाक्पथस्य मनःप्रवृत्तेश्च दूरग इत्यर्थः ।

वाक् च मनश्च वाङ्मनसे, तयार्गोचरो न भवतीति अवाङ्मनसगोचरः ; अचतु-रेत्यादिना अच्प्रत्ययान्तो निपातः ।

कालस्य महिमानमेव विवृणोति सुमतिभिरित्यादिना । त्वं-कालः । सहस्रांशुगत्या-सूर्यगत्या करणेन । सुमतिभिः-कालज्ञैरभिज्ञैः । अनुमेयो भवसि । तव रूपं न प्रत्यक्षं किन्तु सूर्यगत्या सम्यगनुमानगम्यः । जनानाम् । मद्विधानं-कर्मात्मनो मम निर्वर्तनम् । भवदधीनं भवति-कालाधीनं भवति । प्रात-स्सन्ध्यासायंसन्ध्यादीनां नित्यानाम्, नैमित्तिकादीनामन्येषां च कर्मणाम-नुष्ठानं कालाधीनं हि विद्यते । किञ्च "उदिते जुहोति अनुदिते जुहोति समयाद्युषिते जुहोति" इत्यादिनैगमिकविधिपूर्वककर्मणां सूर्योदयास्तमयादि-कालाधीनत्वमपि विवक्षितमनेन । वक्तव्यस्य अवशिष्टविषयस्य मध्ये विनय-निभृतत्वप्रकटनं तस्य सविनयमित्यनेन वाक्येन सूचयित्वोत्तरमर्धं पद्यस्य प्रारभते । कालं विहाय नालं मया पदचलनमपि कर्तुमिति सूचयति किमन्य-द्ब्रवीमीति । पुंसां-कर्तॄणाम् । मां-पुरुषकर्तृककर्मात्मकं माम् । दातुं-फलरूप-त्वेनार्पयितुम् । अर्थात्मना-फलरूपत्वेन । परिणमयसि-फलरूपत्वं मे वितरसीति यावत् ।

"उप्तं स्थले फलति कालवशेन बीजं तप्तं तपः परिणमत्यपि कालयोगात् ।
कालेन नीरमपि वारिदतामुपैति कालः प्रभुः सकलकर्मफलस्य पाके ॥"

इत्येवं रीत्या कविभिरपरैरभिहितस्तत्त्वार्थ एवात्रापि कविना संगृहीतः । त्वयि-काले । कृतिमति-तत्तदृतुसम्बन्धीनि कार्याणि कुर्वति सति । भावाः-स्थावरजङ्गमाः पदार्थाः । षोढा विक्रियन्ते-वसन्तादिषडृतूनां शीतो-ष्णादिधर्मानुगुण्येन स्थावरजङ्गमात्मकप्राणिनां पदार्थान्तराणां च स्व-रूपाणि गुणाश्च तत्तदुचितमवस्था भेदमधिगच्छन्तीत्यर्थः । यद्वा भावाः-पदार्थाः । त्वयि-काले । कृतिमति-पदार्थपरिपाकरूपकर्मण्यायत्ते सति । षोढा-उत्पत्ति-स्थिति-वृद्धि-परिणाम-ह्रास-नाशाख्यषट्प्रकारतया । विक्रियन्ते-विकारं प्राप्नुवन्ति च ॥ ३ ॥

किञ्च,

त्रैधं जनः शंसति वर्तमानं भूतं भविष्यन्तमहं पुनस्त्वाम् ।
ऐकध्यमापन्नमखण्डरूपमाधारमेषां जगतामवैवि ॥ ४ ॥

निमेषकाष्ठे च कलाक्षणौ च मुहूर्तरात्रिंदिवपक्षमासान् ।
भवत्तनू ऋत्त्वयने तथाब्दं युगं च मन्वन्तरमित्यवैमि ॥ ५ ॥

---

कालस्य विभुत्वमन्यथापि विशिनष्टि त्रैधमित्यादिभिः । जनः । त्वां-कालम् । वर्तमानं-प्रस्तुतकालम् । भूतं-अतीतकालम् । भविष्यन्तं-भाविकालम् । एवं रीत्या त्रैधं-त्रिप्रकारत्वेन । त्रिशब्दात् धा इत्यस्य "द्वित्र्योश्च धमुञ्" इत्यनेन धमुञ्, ततः स्वार्थे डः, एवं त्रैधम् इति रूपम् । शंसन्ति-व्यवहरन्ति । "कालस्तु त्रिविधो ज्ञेयोऽतीतोऽनागत एव च । वर्तमानस्तृतीयस्तु" इति पौराणिका अपरे च जनाः कालस्य त्रैविध्यं वदन्ति । अहं-कर्म तु । ऐकध्यं-एकत्वम् । आपन्नं-प्राप्तम् । अत एव अखण्डरूपं-वर्तमानादिभेदरहितम् एकाकारम् । एषां जगतां-अस्मत्पुरतो दृश्यमानानां सर्वेषामपि लोकानाम् । त्वाम् । आधारं-आश्रयम् । अवैमि । जगदुदयस्थितिलयादीनां कालः कारणमिति भावः । "कालः कलयते विश्वं तेन कालोऽभिधीयते । कालस्य वशगाः सर्वे देवर्षिसिद्धकिन्नराः ॥ कालो हि भगवान् देवः स साक्षात् परमेश्वरः । सर्गपालनसंहर्ता सोऽखण्डः सर्वतोमुखः" इत्येवमादिभिः प्रमाणैः पुराणादिषु प्रसिद्धः कालस्य प्रभावोऽत्र सूचित इति ज्ञेयम् ॥ ४ ॥

न केवलं कालस्य तवैकध्यं न वा त्रैविध्यम् अपि तु वैविध्यमपि जानेऽहमिति विशिनष्टि निमेषेति । तवेति शेषः । निमेषः-लघ्वक्षरोच्चारणमात्रः कालो निमेषः; पञ्चदश निमेषाः काष्ठा । कला-त्रिंशत्काष्ठात्मकः कालः । त्रिंशत् कलाः क्षणः । मुहूर्तः-काष्ठात्रयसहितविंशतिकलात्मकः कालः । रात्रिंदिवं-त्रिंशन्मुहूर्तपरि-

मितोऽहोरात्ररूपः कालः । पक्षः-पञ्चदश दिनानि । मासः-पक्षद्वयात्मकः । मुहूर्तश्च रात्रिन्दिवं च पक्षौ च मासश्चेति विग्रहः ; रात्रिश्च दिवा च रात्रिंदिवम् ; अचतुरविचतुरेत्यादिना रात्रेः मान्तत्वम् ; दिवा इत्यस्य अजन्तत्वं च । ऋतुः-मासौ द्वौ । अयनं-ऋतुभिस्त्रिभिः भवत्ययनमेकम् । ऋतुश्च अयनं च ऋत्वयने । ऋतुषट्कम् अयनद्वयं च भवत्तनू-भवतो देहौ । ऋत्वयने भवच्छरीरत्वेन विद्येते इत्यवैमीत्यर्थः । (भवत्तनूभृत्त्वयने इति पाठान्तरम् ।) तथा । अब्दः-वर्षः यश्चायनद्वयात्मकः तम् । कृत-त्रेता-द्वापर-कलिभेदेन युगं चतुर्धा । मन्वन्तरं-४,३२०,००० मानवाब्दपरिमितः कालः स्वायम्भुवादिभिश्चतुर्दशमनुभिः पृथगधिकृतः । मनोः अन्तरम् अवधिः अस्मिन्निति मन्वन्तरम् । "एवं चतुर्युगाख्यानां साधिका ह्येकसप्ततिः । कृतत्रेतादियुक्तानां मनोरन्तरमुच्यते" इति लिङ्गपुराणम् । एवं परमसूक्ष्मनिमेषप्रमाणादारभ्य अपरिमेयदैर्घ्यविशिष्टमन्वन्तरावधिकं यथा भवान् कालपरिमातृभिर्बहुधा भवति विभक्तःतथाविधमपि त्वाम् अवैमीत्यर्थः । वैद्यके च "तस्य संवत्सरात्मनो भगवानादित्यो गतिविशेषेण निमेष-काष्ठा-कला-मुहूर्ताहोरात्रपक्ष-मास-र्त्वयन-संवत्सर-युगप्रविभागं करोति । तत्र लघ्वक्षरोच्चारणमात्रो निमेषः । पञ्चदश निमेषाः काष्ठा । त्रिंशत्काष्ठाः कला । विंशतिकलो मुहूर्तः कलादशभागश्च । त्रिंशन्मुहूर्तमहोरात्रम् । पञ्चदशाहोरात्राणि पक्षः । स च द्विविधः शुक्लः कृष्णश्च । तौ मासः । द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति । अयने द्वे भवतो दक्षिणमुत्तरं च । अयने द्वे युगपत् संवत्सरो भवति । ते तु पञ्च युगमिति संज्ञां लभन्ते ।" इति सौश्रुतः कालविभागक्रमः । अमरकोशीयकालविभजनं तु किञ्चित् व्यत्यस्तमास्ते । तद्यथा—"अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कला । तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् । ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च । पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ । द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः । अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः । मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् । मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः" इति । (मन्वन्तरमप्यवैमीति च पाठः ।) ॥ ९ ॥

कालः—तदिदानीं पाण्डु-विज्ञानमन्त्रिभ्यां युद्धाय नियुक्तानां भटानां विक्रमविलासान् अवलोक्य चक्षुषी कृतार्थयिष्यावः। पाण्डुना खलु जीवराजे प्रयुक्तो भविष्यतो रोगस्य पुरोभावी बुभुक्षाजनको भस्मकरोगः। तद्गृहीतो राजेति जानामि।

---

तदिदानीमिति। तत्-अङ्कारम्भे प्रथमवाक्योक्तरीत्या जीव-यक्ष्मबलयोर्युद्धस्यारब्धत्वादिति यावत्। विक्रमस्य-पराक्रमस्य, विलासान्-निर्वर्तनप्रकारान्। चक्षुषी कृतार्थयिष्यावः-नेत्रानन्दमनुभवावः। "तदिह राम-रावणरणावलोकनरसश्चिरान्निवृत्तोऽपि नियतिवृत्त्या पुनरिदानीमस्माकं प्रादुर्भविष्यति, यदिह महामोह-डम्भ-दर्पादयो विवेक-व्यवसायादिभिर्योत्स्यन्ते" इति सङ्कल्पसूर्योदये (८ अङ्के) नारद-तुम्बुरुभ्यां प्रस्तुतो विवेकमहामोह युद्धविषयविवरणप्रकारः, तयोर्युद्धावलोकनसमुद्भूतकुतूहलविशेषश्चात्रादृतः। जीवराजे प्रयुक्तः-जीवराजस्यास्कन्दनाय प्रेरित इत्यर्थः। भविष्यतो रोगस्य पुरोभावी-पूर्वरूपात्मकः। भस्मकरोगः-भस्मकाख्यो व्याधिः। बुभुक्षाजनकः-महाशनेनापि दुर्निवारजाठराग्नेः प्रवर्तकः। राजा-जीवः। तद्गृहीतः-तेन भस्मकेन आसादितः। इति जानामि; ज्ञायते भस्मको जीवमाक्रम्य पीडयतीति भावः। (भस्मको नाम रोगस्संगृहीतो राज्ञा इति जानामि, तद्दर्शनेन-आवां यथा न विद्युः इति असाधुः पाठः।) मात्रामतीत्योग्रत्वं प्रपन्नो विकृतो जाठराग्निरेव भस्मक इत्युच्यते। तथा च चरकः—"नरे क्षीणकफे पित्तं कुपितं मारुतानुगम्। स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति। तदा लब्धबलो देहं विरुजेत् सानिलोऽनलः। अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः। पक्त्वा चान्नं ततो धातून् शोणितादीन् पचत्यपि। ततो दौर्बल्यमातङ्कान् मृत्युं चोपनयेन्नरम्। भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति। तृट्कासमूर्छा अत्र स्युर्व्याधयोऽत्यग्निसम्भवाः॥" इति।

आवां यथा न विद्युः सर्वेऽपि दिवि स्थितावुच्चैः ।
उभयेषामपि युद्धं पश्यावः संलपावश्च ॥ ६ ॥

किञ्च, ज्ञानशर्मणोपजापितोऽपि राजा भूयो विज्ञानशर्मणा प्रत्यावृत्य पर्यवस्थापितः ।

कर्म——भगवन्, कीदृशो ज्ञानशर्मण उपजापः ।

कालः——वत्स, श्रूयताम् ।

तत्तत्कार्यविशेषसाधनविधावुक्त्वेतिकर्तव्यतां
जीवस्यास्य विभोः स्वकीयपृतनासंनाहमालोकितुम् ।
निष्क्रान्ते सचिवे कदाचन भजत्येकाकितां राजनि
श्रुत्वा तत्समयं तदन्तिकभुवं स ज्ञानशर्मा ययौ ॥ ७ ॥

---

इतःपरं स्वाम्यां किं कर्तव्यमित्याह आवामिति । आवामिति शब्दः प्रथमा-द्वितीयाद्विवचनान्तत्वेनात्र द्विधा पठनीयः । सर्वेऽपि जनाः । यथा आवां-नौ । न विद्युः-आवयोरत्र स्थितिं न जानीयुः । तथेति शेषः । दिवि-नभसि । उच्चैः-उन्नतप्रदेशे । आवां द्वावपि; आवामित्यत्र कर्तृपदम् । स्थितौ सन्तौ । उभयेषां-जीव-यक्ष्मपक्षीयाणां कक्षिद्वयस्थितानां योधानामपि । युद्धम् । पश्यावः । संलपावश्च-युद्धे प्रवर्तमानान् विषयानुद्दिश्य विस्रम्भालापं कुर्वश्च । (सर्वेऽपि तथा दिवि स्थिता उच्चैः इति पाठे—सर्वे मनुजा अपि, तथा उच्चैः दिवि स्थिताः-देवाश्च यथा आवां न विद्युः, तथा नभसि स्थित्वेति व्याख्या) ॥ ६ ॥

किञ्चेति । न हि जीवस्य बाह्यशत्रवः केवलं किन्तु तस्यान्तःकलहहेतुभूतं बलवत् पुरुषान्तरमप्यास्त इति किञ्चेत्यादिना प्रस्तौति । ज्ञानशर्मणा-अपवर्गसाधकोपायोपदेष्ट्रा सचिवेन । उपजापितः-वक्ष्यमाणप्रकारेण त्रैवर्गिकोद्यमे भेदबुद्धिमुपकल्पितोऽपि । राजा-जीवः । विज्ञानशर्मणा । भूयः प्रत्यावृत्य पर्यवस्थापितः-स्वयं प्रत्यागत्य त्रैवर्गिककर्मानुष्ठाने यथापूर्वं नियोजितः ॥

अनन्तरं तमायान्तमवलोक्य दूरादेव—

अथ सुचिरवियोगात् संदिहानः सखित्वे
किमपि विवशचेता निर्भरैर्हर्षभारैः ।
कथमपि समुदश्रुर्बाष्पसंरुद्धकण्ठो
वचनमिदमवोचन्मत्तहंसस्वरेण ॥ ८ ॥

---

ज्ञानशर्मकृतोपजापप्रकारं विवृणोति तत्तदित्यादिना । अस्य-स्वस्य विज्ञानशर्मणः । विभोः-प्रभोः जीवस्य । "वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजना" इति रघुवंशे (८-३१) अजस्य प्रभुत्वार्थे विभुशब्दोऽस्ति प्रयुक्तः । इतःपरं सोऽहमिति पद्ये जीवराजं अनेनैव प्रभ्वर्थकविभुशब्देन ज्ञानशर्मा संबोधयति । तस्य तस्य कार्यविशेषस्य-विविधस्य राज्यतन्त्रकृत्यस्य, साधनविधौ-निर्वहणक्रमे । इति कर्तव्यतां-यथोचितकर्तव्यप्रक्रियाम् । उक्त्वा-उपदिश्य । स्वकीयपृतनायाः-स्वाधिकारे विद्यमानायाः सेनायाः, संनाहं-युद्धोद्यमम् । आलोकितुं-स्वयमेव द्रष्टुम् । सचिवे-विज्ञानशर्ममन्त्रिणि । निष्क्रान्ते-पुरान्निर्गते सति । राजनि-जीवे । कदाचन-कस्मिंश्चन विज्ञानशर्मणोऽसान्निध्यसमये । एकाकितां-विविक्तावस्थितिम् । भजति सति; राज्ञि विजने कदाचिद्विद्यमाने सतीति यावत् । तत्समयं श्रुत्वा । सः-उक्तपूर्वः । ज्ञानशर्मा । तस्य-जीवस्य, अन्तिकभुवं-समीपम् । ययौ । समुचितं समयमभिवीक्ष्य ज्ञानशर्मा स्वाभिमतहितोपदेशाय राजानमुपससादेति यावत् ॥७॥

अनन्तरमिति । आयान्तं-स्वान्तिकमागच्छन्तम् । तं-ज्ञानशर्माणम् । जीवराज इति शेषः । दूरादेव अवलोक्य । वचनमिदमवोचदिति समनन्तरपद्यवाक्येनान्वयः ।

अथेति । अथ-ज्ञानशर्मणो दर्शनानन्तरम् । जीवराजः । सुचिरवियोगात्-अतिदीर्घकालात् पूर्वमेव परित्यक्तपरस्परपरिचयत्वात् । सखित्वे-तस्य मित्रत्वे । संदिहानः-अधिगतसंशयः सन् । संपूर्वकदिहधातोः शानचि संदिहान इति

'चेतश्शीतलतामुपैति नयने विस्तारिणी कौतुका-
न्निर्मर्यादमुदेत्यमानिव तनौ कोऽप्यन्तरानन्दथुः ।
बाहू मां परिरम्भणे त्वरयतस्त्वां वीक्ष्य कस्त्वं सखे
पुण्यैः पूर्वकृतैश्चिरान्मम दृशोः पन्थानमारोहसि' ॥ ९ ॥

---

रूपम् । किमपि-अनिर्धारणीयेन केनापि हेतुनेति भावः । विवशश्चेताः-मनसः पारतन्त्र्यमापन्नः; अनिर्वचनीयेन केनचन सूक्ष्मेण कारणेन समाकृष्टान्तःकरणः सन्निति भावः । निर्भरैः-समधिकैः । हर्षभारैः-उपबृंहितप्रमोदैः । कथमपि-अनिच्छन्नपीत्यर्थः । समुद्गतानि-शक्तिमतिक्रम्य स्वयमेवोद्भूतानि, अश्रूणि यस्य सः । बाष्पसंरुद्धकण्ठः-आनन्दबाष्पस्य समुद्भूतस्य अनिग्राह्यतया नितरां गद्गदोपरुद्धगलः सन् । अत एव मत्तहंसस्वरेण-मदयुक्तहंसस्य कण्ठध्वनिसदृशेन स्वरेण । इदं वचनं तमवोचत् । स एष सन्दर्भः शाकुन्तले स्वयमनुतापेन दुष्यन्तेनाभिधीयमानम्

"कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥"

इति प्रथमतः स्मृतिपथात् सर्वथापगतं ततः प्रत्यवगतं विषयं(९-३२)स्मारयति॥८॥

जीवेनाभिहितं यत् तदुदाहरति चेत इति । सखे । त्वां वीक्ष्य-अद्यैव भवन्तमवलोक्य । चेतः-मदीयं मनः । शीतलतां-सुखसौहित्यमित्यर्थः । उपैति-प्राप्नोति । कौतुकात्-अपूर्वस्य सहजसुहृद आकस्मिकावलोकनेन समुत्पन्नकुतूहलवशात् । नयने मम विस्तीर्णे-स्वयमेव ममाक्षिणी विकासमधिगते । कोऽपि-अनालोच्यहेतुकः । आनन्दथुः-आनन्दः । अन्तः-मनसि । अमानिव-पर्याप्तमवकाशमलभमान इव । मातीति मान् नकारान्तः प्रयोगः; ततो नञि अमान् । तनौ-मद्देहे । निर्मर्यादं-निरवधिकं यथा तथा । उदेति-उद्भवति । (उपैतीत्यपि पाठः ।) निरवधिकमुत्पद्यमाने परमानन्दपूरे न केवलं मम मनः, परं तु सर्वाङ्गैः

कर्म—ततस्ततः ।

कालः—ततोऽसौ जीवस्य वचनमिदमाकर्ण्य ज्ञानशर्माकथयत् —

'सोऽहं जीव विभो चिरन्तनसखस्ते ज्ञानशर्मा तथा
प्राणेष्वन्यतमो मुहुस्तव हिताकाङ्क्षी च सर्वात्मना ।
विज्ञानस्य कुमन्त्रितैः परवति त्वय्यव्यवस्थस्थितौ
शान्तस्त्वन्नगराद्विरक्तहृदयः प्रास्थामनास्थावशात्' ॥ १० ॥

---

सह अहमेव निमज्जामीवेति भावः । बाहू-मद्भुजावपि । परिरम्भणे-तवाश्लेषे । मां त्वरयतः-तत्कर्मणि सुतरां संधुक्षयतः । अतः कस्त्वं-को वा भवान्, यं वीक्ष्य साम्प्रतमहमेवं विवशः प्रमुदितश्च भवामि । पूर्वकृतैः पुण्यैः-पूर्वजन्मनि विहितैः सुकृतैः । चिरात्-कालाद्बहोरदृष्टचर इव द्योतमानस्त्वमिति भावः । मम दृशोः पन्थानमारोहसि-मद्दृष्टिगोचरो भवसीत्यर्थः । अतः कस्त्वमिति ज्ञातुमहमतीव कुतुक इति भावः ॥ ९ ॥

अथ ज्ञानशर्मण उत्तरमाह **सोऽहमित्यादिभिः** षड्भिः पद्यैः । जीवविभो-जीवराज । अहं सः-कालाद्बहोस्तव मन्त्रिपदमास्थितः । ज्ञानशर्मा नाम । ते-तव । चिरन्तनसखः-प्राचीनसुहृत् । "राजाहस्सखिभ्यष्टच्" इति सखि-शब्दस्य टच् प्रत्ययान्तत्वे अदन्तत्वम् । तथा तव । मुहुः-पदे पदे; कृच्छ्रेषु केषुचिदुपनतेष्विति यावत् । सर्वात्मना च-अशेषप्रकारेणापि । हिताकाङ्क्षी-श्रेयःप्रार्थकः । प्राणेषु-प्राणाधारभूतेषु जनेषु पदार्थेषु वा । अन्यतमः; सर्वथा तव विस्रम्भपात्रं मित्रं मन्त्री चासमिति भावः । तर्हि का कथा भवतः कालेनैतेन अतिदीर्घेण, येनाहं त्वां स्मर्तुमप्येवमशक्नुवानः त्वदीयमित्रत्वे संशयाविष्टः समभवम् इति पृष्टे तस्योत्तरमाह **विज्ञानस्येति** । विज्ञानस्य-त्रैवर्गिकमन्त्रिणो विज्ञानशर्मणः । कुमन्त्रितैः-दुरुपदेशैः । परवति-अपहतस्वातन्त्र्ये । त्वयि-जीव-राजे । अव्यवस्थिता-सदसद्विचाररहिता, स्थितिः-अवस्था यस्य तस्मिन्; तथा

संप्रति हि,

'दुस्सामाजिकबोधनैः कुपदवीसञ्चारमासेदुष-
स्तेनापज्जलधौ निराश्रयतया राज्ञो वृथा मज्जतः ।
ब्रूते यो न हितं वचोऽप्रियमपि स्पष्टं निगृह्याग्रहात्
स्वामिभ्यः स तु बुद्धिमत्पशुरिति प्राप्नोति मन्त्री प्रथाम्' ॥ ११ ॥

---

त्वय्यनवस्थितकार्यव्यापृते सतीत्यर्थः । शान्तः-मदीयमन्त्रिधर्मात् स्वयमेव निवृत्तः सन् । विरक्तहृदयः-तव धर्मोपदेशे निरीहया जातमनोरथभङ्गः सन् । अनास्थावशात्-तदानीमुत्पन्नौदासीन्यवशात् । त्वन्नगरात्-तव राजधानीभूतात् अस्माद्देहात् । प्रास्थां-वहिरगमम् । एष एव भवत्पुरान्निर्वासमधिगतस्य मे वृत्तान्तः ॥ १० ॥

किमद्य तव पुनरिहागमनकारणमुपनतमित्यत्राह **संप्रतीत्यादिना** । संप्रति हि-सांप्रतं को विशेषः समुपनत इत्युक्ते वदामीति भावः । तमेव विशेषं विवृणोति **दुस्सामाजिकेति** । दुस्सामाजिकस्य-दुर्मन्त्रिणः, बोधनैः-दुरालोचनैः । कुपदवीसञ्चारं-अनुचितमार्गप्रवृत्तिम् । आसेदुषः-अधिगतवतः । तेन-तत्कारणेन । आपज्जलधौ-बहुविधक्लेशरूपबलवत्कल्लोलबहुले संसाराख्यविपदर्णवे । निराश्रयतया-शरणवितरणयोग्यसाहाय्याभावतया । वृथा-विषयतत्त्वमज्ञात्वैवेति भावः । मज्जतः-तत्र निपत्य पारं गन्तुमपारयन् दुःस्थितस्य । राज्ञः-स्वकीयप्रभोः । तादृशदुरवस्थामनुभवति स्वस्वामिनीति यावत् । यः-मन्त्री । स्वामिभ्यः-तादृशेभ्यः स्वकीयप्रभुभ्यः । हितं वचः-तच्छ्रेयस्करम् उचितमुपदेशम् । अप्रियमपि-विषयतत्त्वानभिज्ञतया तस्य चित्तोद्वेजकावहत्वेन द्योतितमपि । आग्रहात्-अभिनिवेशवशात् । स्पष्टं-अप्रियत्वेन भासमानोऽपि नूनमाप्तोपदेशः कल्याणोदर्काय प्रकल्पेतेति विषयतत्त्वोद्बोधनपुरस्सरं निस्संशयं यथा तथेत्यर्थः । निगृह्य-बलवन्निर्बध्यापि । न ब्रूते-नहि तमुपदिशति । सः-तथाविधो मन्त्री तु । बुद्धिमत्पशुः-मतिविभवयुक्तो मृग इति । प्रथां-प्रसिद्धिम् । प्राप्नोति । अप्रियस्य च पथ्यस्य वक्ता मन्त्री प्रशस्यत इति भावः ॥ ११ ॥

अतः किल,

> ‘विज्ञानशर्महतकस्य वृथा कुमन्त्रै-
> र्घोरामिमां सुमहतीं गतमापदं त्वाम्।
> आकर्ण्य देव हितवागुपदेशहेतो-
> रद्यान्तिकं तव गतोऽस्म्यनृणो बुभूषुः’ ॥ १२ ॥

कर्म—ततस्ततः।

कालः—ततश्च राजा सरलप्रकृतितया “सखे ज्ञानशर्मन्, चिरेण दृष्टोऽसि। त्वत्तोऽपि मे श्रेयस्सम्पादकः कोऽन्योऽस्ति। तत् कथय प्रस्तुतोचितं हितम्” इति तमन्वयुङ्क्त।

---

**विज्ञानशर्मेति**। अतः किल-किलेति संभावनायाम्। देव-प्रभो। विज्ञानशर्महतकस्य-संसृतिसुखे प्रलोभं प्रदर्शयतोऽत एव दुष्टस्य विज्ञानशर्मणः। कुमन्त्रैः-दुर्बोधनैः। वृथा-निरर्थकमेव। घोरां-बहुविधदुःखबहुलसंसृतिदवदहननिपातहेतुत्वादतिभयावहाम्। सुमहतीं-सङ्कटसंपूर्णस्य संसारसमुद्रस्य दुस्तरत्वात् अतिविशंकटाम्। आपदं-संसृतिसरणिसञ्चरणरूपां विपदम्। गतं-प्राप्तम्। त्वाम्। आकर्ण्य-ज्ञानशर्मणा मया विवशेन परित्यक्तत्वात् प्रमत्तैर्जाल्मैः सुदूरमुत्पथे समाकृष्य जीवराजः संप्रत्यगाधे दौर्गत्यान्धकूपे बलादेव निपातितो दुःखमास्त इति कर्णाकर्णिकया ज्ञात्वेति भावः। अद्याहम् अनृणः-मदीयात् निर्व्यलीककृतज्ञमन्त्रिकृत्यरूपादृणाद्विमुक्तः। बुभुषुः-भवितुमिच्छुः। हितवाचां-अनुकूलार्थवद्वचसाम्, उपदेशहेतोः। तवान्तिकं गतोऽस्मि। सूनृतैस्तवापद्विमोचनाशंसैव ममाद्य त्वत्सविधागमनस्य प्रयोजनं नान्यदिति भावः।

> “पापान्निवारयति योजयते हिताय गुह्यं निगूहति गुणान् प्रकटीकरोति।
> आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥”

इत्येषा सद्भिरादृता सत्सचिवसंबन्धिनी नीतिरिहोदाहृतेति मन्तव्यम् ॥ १२ ॥

**कर्म—**ततस्ततः ।

**कालः—**ततो ज्ञानशर्मा राजानमुपह्वरे स्वैरमित्थं बोधयामास—

'शश्वन्नश्वरमेव विश्वविदितं पापप्ररोहस्थलं
मेदोमज्जवसास्थिमांसरुधिरत्वग्रोमरूपं वपुः ।
एतस्मिन्मलमूत्रभाण्डकुहरे हेये मनीषावतां
दुःखे न्यायविदो विमोहमिह के तन्वन्ति नन्वन्तिभे '॥ १३॥

---

**ततश्चेति** । सूनृतस्य वचसः सपदि श्रवणाङ्गीकरणाभिमुख्यं राज्ञो विद्यत इति द्योतयितुं सरलप्रकृतितयेति निर्दिष्टम् । प्रस्तुतोचितं-एतत्कालोचितम् । हितं-श्रेयस्करमुपदेशम् । **ततो ज्ञानशर्मेति** । उपह्वरे-विजने प्रदेशे । स्वैरं-निश्शङ्कं यथा तथा । बोधयामास-हितमुपदिदेश । उपह्वरे स्थितिरेव निश्शङ्कबोधनस्य सौकर्यमकल्पयदिति भावः ।

उपदेशप्रकारमाह **शश्वदिति** । वपुः-अस्मच्छरीरम् । नश्वरं-नाशशीलम् । पापानां-दुष्कृत्यानाम् । प्ररोहस्थलं-उत्पत्त्यभिवृद्ध्योः समुचितो देशः । आस्तामिदं हेतुद्वयमपि; प्रत्यक्षतो विविच्य परिशील्यमाने महज्जुगुप्सावहमिदं वपुरिति चाभिप्रेत्याह **मेद इत्यादिना** । मेदः-देहान्तःस्थितस्नेहधातुः, मज्ज-अस्थ्नामन्तर्विद्यमानः सुषिरपूर्णः षष्ठो धातुः, वसा-मांसस्नेहः; अस्थि, मांसम्, रुधिरं-रक्तम्, त्वक्-चर्म, रोमाणि एतान्येव रूपं यस्य तत्; केवलं गर्हणीयमेदोमज्जादिभिरेव निर्मितमित्यर्थः । "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता" इति सुश्रुतः । (रोमकूपमिति पाठे रुधिरत्वग्रोम्णां कूपवत् स्थितमित्यर्थः ।) इति नाहं वदामि, किन्तु एवमेव विश्वविदितं-लोकप्रसिद्धमिदं गर्हणीयत्वं देहस्य । एतस्मिन्-एतादृशे जुगुप्सावहे वपुषि । मलमूत्रयोर्भाण्डस्य-तद्विशिष्टभाजनस्य कुहरमिव कुहरं-मलकोष्ठादिकं यस्य तस्मिन् । अत एव

किञ्च,

'जगत्प्रोतं यस्मिन् विविध इव सूत्रे मणिगणः
समस्तं यद्भासा तदपि च विभाति स्फुटमिदम् ।
अखण्डानन्दं यन्निरवधिकसच्चित्सुखमयं
निराकारं यत्तत्त्वमसि परमं ब्रह्म न परः' ॥ १४ ॥

---

मनीषावतां-विवेकिनाम् । हेये-सर्वथा कश्मलभूयिष्ठत्वात् गर्हणीये । दुःखे-दुःखावहे दुःखस्वरूपे वा । अन्तिमे-अधमवस्तुनि । इह-अस्मिन् मर्त्यलोकेऽपि । के न्यायविदः-वस्तुतत्त्वविमर्शशीला विवेकिनः के वा । विमोहं-प्रमोहं चित्तवैक्लब्यजनितमासङ्गमिति भावः । शश्वत्-मुहुः । ननु तन्वन्ति । नन्विति परिप्रश्ने । यद्वा विमोहं-वपुरिदं हेयम् उतोपादेयं वेति व्यामोहं के न्यायविदो ननु तन्वन्ति । विवेकिनामपि सकृत् संभाव्यते मोहो न त्वनुपदमिति स्पष्टीकर्तुं शश्वदित्युक्तम् । इदं पद्यम्

"वर्ष्मेदं सप्तधातुत्रिविधमलमयं योनियुग्मप्रसूतं
चातुर्विध्योपपन्नस्थिरचरविविधाहारसारात्मकं च ।
इत्थंत्वेऽनन्तदोषाकर इति मुनिभिर्घोषिता योषिदाख्या
मीमांस्या मांसरेतोरुधिरकफवसानिर्मिता चर्मभस्त्रा ॥"

इति सङ्कल्पसूर्योदयपद्यस्य (८-६३) विषयमर्थतोऽनुसरति ॥ १३ ॥

पूर्वपद्येन गर्हणीयवस्त्वाभासरूपत्वं वपुषो निरूप्य, तत् हेयमिति च ज्ञापयित्वा, पद्येनानेन जीवराजस्य उपादेयं स्वात्मतत्त्वं चावबोधयति **किञ्चेति**। (किञ्चेति क्वचित् कोशे नास्ति ।) तल्लोकतत्त्वमेव विवृणोति **जगदिति** । यस्मिन्-ब्रह्मणि। सूत्रे। विविधः-आकृत्या वर्णेन च बहुविधः। मणीनां-मुक्ताप्रवालादिमणीनाम्, गणः-स्तोम इव । जगत्-जङ्गमस्थावरात्मको विविधो लोकश्च । प्रोतं-अनुस्यूतम् ; ग्रथितमिति यावत् । अनेन "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।

'तत्तादृशः सुखघनस्य निरञ्जनस्य सर्वात्मनापि ननु हेयतरे पुरेऽस्मिन्।
विज्ञानशर्मवचनैर्विपरीतवृत्तेर्मन्ये न युक्त इव ते ममताभिमानः' ॥१९॥

---

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति गीतावचनमनुस्मारितम्। यद्भासा-यस्य ब्रह्मणो ज्योतिषा। यत्-यत् तादृशजगद्रूपम्। स्फुटं-प्रव्यक्तं यथा तथा। इदं विभाति-प्रत्यक्षतयास्मत्पुरतः संदृश्यते। तदपि-तथा दृश्यमानं जगदपि। एतद्वाक्यम् "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतिमुपपादयति। यत्-ब्रह्म। अखण्डानन्दं-केवलानन्दमयम्। निरवधिकं-अनन्तम्, सत्-सत्यम्, निरवधिकं च तत् सत्यं चेति विशेषणोभयपदकर्मधारयः; निरवधिकं च-सच्च तत् चित्-ज्ञानं च, सुखं-निर्वृतिश्चेति निरवधिकसच्चित्सुखम्; तन्मयम्; सान्द्रानन्तज्ञानानन्दस्वरूपमिति यावत्। यच्च-ब्रह्म। निराकारं-रूपरहितम्, निर्गुणं वा। तत्-यथोक्तरीतिकम्। परमं ब्रह्म। त्वमसि-जीवात्मकस्त्वमेव तत् परब्रह्म भवसि। न परः-नान्यो भवसि त्वम्। (न पुमानिति पाठे न मनुष्यः, किन्तु परब्रह्मासीत्यर्थः।) "तत्त्वमसि श्वेतकेतो" इति विषयोऽत्र सूचितं ज्ञेयम्।

"यस्माद्विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते
भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः।
शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं
द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम्॥"

इति प्रबोधचन्द्रोदयस्य पद्यार्थः (६-१०) समुद्धृतोऽत्र ॥ १४ ॥

इतःपरम् इतिकर्तव्यताम् उपदिशति तत्तादृश इति। अद्वैतसिद्धान्तानुरोधेन प्रत्यग्ब्रह्मणोरैक्यमभिसन्धाय पुनर्जीवात्मानं बोधयति सुखघनस्येत्यादिना। सुखघनस्य-सान्द्रानन्दमयस्य। "आनन्दरूपममृतं यद्विभाति" इति श्रुतेः। निरञ्जनस्य-निर्मलस्य, अपहतपाप्मनो वा। "निरञ्जनः परमं साम्यमुपैति" इति च श्रुतिः। ते-तव जीवात्मनः। विज्ञानशर्मणो वचनैः-दुरुपदेशैः। अद्य विपरीत-

इत्यादिभिर्बहुविधैरुपपत्तिपूर्वै-
स्तैस्तैर्वचोभिरथ तेन रहः प्रयुक्तैः ।
कोषे बले रिपुवधे च बभूव सद्यो
जीवो विरक्तहृदयो विगताभिमानः ॥ १६ ॥

---

वृत्तेः-क्रमविरुद्धकार्ये प्रवृत्तस्य सतः । सर्वात्मना-'शश्वन्नश्वरमेव' इत्युक्तरीत्या सर्वप्रकारेणापि । हेयतरे-गर्ह्यत्वेन सुतरां परित्यागयोग्ये । अस्मिन् पुरे-एतच्छरीराख्ये नगरे । तत्तादृशः-तपश्चरण-रससंपादनादिभिः शत्रुवधाय महोद्यमविधानरूपः । ममताभिमानः-ममेदमित्याग्रहः । न युक्त इव मन्ये-सर्वथा न समुचित इत्यभिप्रैमि । इवशब्द इह एवार्थे । नन्विति प्रश्ने । अहंताया ममतायाश्चानर्थत्वं श्रीमच्छङ्कराचार्यः "अहं ममेति त्वमनर्थमीहसे परार्थमिच्छन्ति तवान्य ईहितम्" इति प्रतिपादयत्युपदेशसहस्र्याम् । (१९–२) । भावानाम् अनित्यताभावनमतिविशेषाभाव एव ममताया मूलमिति क्वचित् अभिप्रेत्य श्रीकृष्णमिश्रश्च जीवात्मनो मोहकलुषत्वमेवमेव (४–६) सविस्मयं वर्णयति—

"शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावली-
निर्मुक्तेऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति ।
निस्सारे मृगतृष्णिकार्णवजले श्रान्तोऽपि मूढः पिब-
त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥" इति ।

अस्य च स्वतस्सिद्धशुद्धामलानन्दरूपस्य जीवस्य "अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरा मन्त्रिण उपदेष्टारश्च" इत्यादिभिः कादम्बर्याम् अभिहितरीत्या महानर्थोदर्काणामर्थानामुपदेशाय दुर्मन्त्री विज्ञानशर्मा प्राप्त इति ज्ञानशर्मणा संप्रत्युपदिष्टम् ॥ १९ ॥

राज्ञः सरलप्रकृतित्वमेव निरूपयति इत्यादिभिरिति । अथ-उक्तरीत्योपदेशानन्तरम् । जीवः-राजा जीवात्मा । तेन-ज्ञानशर्मणा । रहः-एकान्ते, असन्नि-

कर्म—भगवन्, इत्थं ज्ञानशर्मणोपजप्तस्यापि जीवस्य राज्ञः कथमधुना रिपुवधे प्रवृत्तिः।

कालः—श्रूयताम्। इत्थं ज्ञानशर्मा राज्ञो रहस्युपजापं कुर्वन् सेनासन्निवेशादागतस्य विज्ञानशर्मणो वचनमाकर्ण्य नेतःपरमिह स्थातव्यमिति राजानमामन्त्र्य जगाम।

---

हिते विज्ञानशर्मणीति यावत्। प्रयुक्तैः-सम्यगुपदिष्टैः। बहुविधैः उपपत्तिपूर्वैः-विविधैर्हेतुविशेषपुरस्कृतैः। इत्यादिभिः-निर्दिष्टपूर्वैस्तदितरैश्च। तैस्तैर्वचभिः-विश्वसनीयैः प्रामाणिकैरुपदेशैः। (एतैर्वचोभिरिति च पाठः) कोषे-धनागारे। बले-सेनापरिच्छदे। रिपुवधे-शत्रूणां विनाशकृत्ये च। सद्यः-तदुपदेशाकर्णनानन्तरमेव। विगताभिमानः-आसक्तिरहितः। किञ्च विरक्तहृदयः-विषयेष्वपरेषु चाशेषेषु मनसि संजातवैराग्यश्च। बभूव। स्वयं निर्मलस्वभावो जीवः; इतः पूर्वमेव ज्ञानशर्मणः सहपरिचयवशात् प्राप्तसंस्कारश्चाभूत्। अतः सकृत् कृतश्च सदुपदेशः सद्य एव तन्मनसस्समावर्जनाय प्राकल्प्यतेति भावः। "अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखमुपदेशगुणाः" इति खलु वदन्त्यभियुक्ताः॥ १६॥

श्रूयतामिति। उपजापं-उपांशूपदेशम्। सेनासन्निवेशादागतस्य विज्ञानशर्मणो वचनमाकर्ण्य-चमूसमूहस्य निवासस्थानात् मन्त्री विज्ञानशर्मा प्रतिनिवृत्त इति वार्तां श्रुत्वेत्यर्थः। इतःपरं नेह स्थातव्यं-विज्ञानशर्मण आगमनानन्तरम् अत्र राज्ञः सविधे स्थितिर्न युक्तेति यावत्। आमन्त्र्य-अनुमतिं लब्ध्वा (न नः परिमिहेति पाठे परं-इतःपरम्; इह नः न स्थातव्यं-अस्माकं न स्थातुं योग्यमित्यर्थः।)

कर्म—ततस्ततः ।

कालः—ततश्च निष्क्रान्ते ज्ञानशर्मणि, प्रविश्य विज्ञानशर्मा राजानमालोक्य, 'अये, किमयमपूर्व इव राजा पुरादिषु परित्यक्ताभिमान इव दृश्यते । तद्बहुधा ज्ञानशर्मणोपजापितः स्यात् । भवतु । सर्वमिदं स्वयमेव व्यक्तीभविष्यति' इति राजसमीपं गतः ।

कर्म—ततस्ततः ।

कालः—राजा च तमालोक्य सावहित्थस्तमनुसरन्निव सादरमपृच्छत्—'मन्त्रिन्, कथय कीदृशः पुरवृत्तान्तः परवृत्तान्तश्च' इति ।

कर्म—ततस्ततः ।

कालः—इति राज्ञा समाज्ञप्तो नयज्ञो मन्त्रिशेखरः ।
प्रत्युत्तरं तदादत्त प्रज्ञावज्ञातवाक्पतिः ॥ १७ ॥

---

तद्बहुधेति । बहुधा-प्रायेण बहुप्रकारेण वा । इदं सर्वं-सकलमपीदम् उपजापवृत्तम् । स्वयमेव-अस्मन्निर्बन्धं विनैव । राजेति । तं-विज्ञानशर्माणम् । सावहित्थः-गुप्ताभिप्रायः सन् । तं-सचिवम् । अनुसरन्-अनुवर्तमान इव । सादरं-यथापूर्वं स्वकीयगौरवदर्शनपुरस्सरं यथा तथा । पुरवृत्तान्तः-देहाख्यनगरस्य योगक्षेमविषयः । परवृत्तान्तः-शत्रुपक्षीयो युद्धोपक्रमादिव्यापारः ।

इतीति । इति-पूर्वोक्तरीत्या । राज्ञा-जीवेन । समाज्ञप्तः-सादरं ज्ञातवृत्तान्तस्य निवेदनाय संदिष्टः । नयज्ञः-व्यवहारकुशलः । मन्त्रिशेखरः-प्रधानमन्त्री । तदा-राजकृतप्रश्नोत्तरक्षण एव । प्रज्ञया-स्वकीयप्रतिभया, अवज्ञातः-तिरस्कृतः, वाक्पतिः-बृहस्पतिः येन तथाभूतः सन् । प्रत्युत्तरम् अदत्त-प्रत्युत्तरं दत्तवान् । दाञ् धातोरात्मनेपदि लुङि अदत्तेति रूपम् । अतिप्राज्ञत्वादेष सचिवश्च सावहित्थ एव यथापूर्वं राजानमनुसरन्निव प्रस्तुतकार्ये तं संधुक्षयन्नेव वक्ष्यमाणरीत्या प्रत्यवोचदिति भावः ॥ १७ ॥

'स्वायत्तं पुरमेव नः समजनि स्वामिन् भवच्छासनात्
तत्तद्देशनिविष्टयन्त्रनिचयव्यापारसंरक्षितम् ।
निर्दग्धा भवतः प्रतापमहसा नूनं पतङ्गा इव
प्रत्यर्थिप्रकरा भवेयुरधुना नामावशेषाः क्षणात्' ॥ १८ ॥

---

स्वायत्तमिति । स्वपक्षरक्षणं परपक्षनिषूदनमिति द्वे कार्ये सुसचिवसाहाय्येन निष्पादनीये ; तत्रोभयत्रापि स्वेषामानुकूल्यं समुपनतमिति श्लोकेनानेन निर्दिशति । पूर्वार्धेन स्वपक्षरक्षणसंबन्धी वृत्तान्तः प्रस्तूयते । स्वामिन्-राजन् । भवच्छासनात् -भवत एवाज्ञया । औत्सुक्यस्य उत्साहस्य चोत्तेजनाय भवच्छासनादित्युक्तम् । तत्तद्देशेषु-तेषु तेषु आवश्यकेषु दुर्गादि स्थानेषु, निविष्टानां-स्थापितानाम् , यन्त्राणां-चाप-करवाल-द्रुघण-भिन्दिपाल-परशु-प्रास-लोहनाडी-वह्नियन्त्रप्रभृतीनां प्रहरणानाम् , निचयस्य-समूहस्य, व्यापारैः-प्रयोगाद्युद्यमैः, संरक्षितं-सम्यग्गुप्तम् । पुरमेव-नगरं सर्वमपि । नः-अस्माकम् । स्वायत्तं-स्वाधीनम् । परैर्दुष्प्रवेशं यथा तथा सर्वथाप्यस्माकं स्वाधीनं समजनीति यावत् । शरीरपक्षे तत्तद्देशेषु-तेषु तेषु शरीरावयवेषु, निविष्टानां-शल्यतन्त्राभिज्ञैः प्रयुक्तानाम् , यन्त्राणां-पूर्वोक्तस्वस्तिक-संदंशादियन्त्राणाम् , निचयस्य, व्यापारेण-प्रयोगवैखर्या, संरक्षितं-अर्शोभगन्दरादिव्याधिभ्यः कण्टकादिशल्येभ्यश्च यथोचितं सम्यगभिरक्षितम् । (पत्रनिचयेति पाठो न साधुः ।) पुरमेव-अशेषं शरीरमपि । नः स्वायत्तं-आमयादिजनितपीडादिरहितं सत् सर्वात्मना स्वाधीनम् । समजनि । नीरोगं सुदृढं च समभवदित्यर्थः । अधुना-पुरस्य नीरोगत्वप्राप्त्या सुरक्षितत्वात् इतःपरमिति यावत् । भवतः-जीवराजस्य । प्रतापमहसा-अभिनवोत्पन्नोर्जस्वितया ओजश्शक्त्या च । ज्ञानशर्मोत्पादितचित्तवैकल्यापनोदनपूर्वकं जीवस्य त्रैवर्गिकविषये प्रोत्साहसंधुक्षणायैव 'भवतः प्रतापमहसा' इति शत्रुपराभवविषये जीवस्य प्रामुख्यत्वमभिहितं कुशलेन मन्त्रिणा । प्रत्यर्थिप्रकराः-शत्रुसमूहाः । पतङ्गाः-ज्वलननिपतितशलभा इव । क्षणात् । निर्दग्धाः-सम्यग्दग्धाः सन्तः । नामैव

कर्म—ततस्ततः ।

कालः—इत्याकर्ण्य राजा ज्ञानशर्मवचोऽनुस्मरन्नुभयोर्मतयोरपि दोलायमानमानस इतिकर्तव्यतामव्यवस्यन्नित्थमाक्षेपमुखेन व्याजहार—

'निसर्गतो ये रिपवो हि रोगा वातादिभिस्तज्जनकैः समन्तात् ।
अधिष्ठितेऽस्मिन् कुटिलैः प्रकृत्या स्वायत्तता हन्त कथं पुरे नः'॥ १९॥

---

अवशेषं येषां ते; नष्टा इत्यर्थः । भवेयुः । नूनमिति निश्चये । शत्रवश्च संप्रति नष्टप्राया इति भावः । उत्साहजनकतादृशभूतार्थव्याहृत्या भूतपूर्वं पुराभिमानादिकं पुनर्नवीक्रियेतेति समालोच्य प्राज्ञेन मन्त्रिणा जीवराजाय विषयतत्त्वमिदमासीद्विज्ञापितम् ॥ १८ ॥

**इत्याकर्ण्येति** । इति-विज्ञानशर्मणः पूर्वोक्तवचनप्रकारेण । आकर्ण्य । ज्ञानशर्मणो वचः-सूनृतभाषितम् । अनुस्मरन् । उभयोः-ज्ञानशर्म-विज्ञानशर्मभ्यामभिहितयोः । मतयोः-अभिप्राययोः । दोलायमानं-पक्षद्वयेऽप्याकृष्टम्, मानसं यस्य सः । उभयस्याप्याशयस्य समञ्जसत्वप्रतीत्या द्वैधीभूतमनस्क इति यावत् । इतिकर्तव्यतां-कतरदनयोः कर्तव्यमिति विषयम् । अव्यवस्यन्-निश्चेतुमपारयन् । 'उभयकूलसमस्थितशाद्वलभ्रमगतागतखिन्नगवीदशाम्' अनुभवन्निति भावः । आक्षेपमुखेन-विज्ञानशर्मणो मते विप्रतिषेधसूचनद्वारा । व्याजहार-उत्तरमदात् ।

स्वपक्षरक्षणं सम्यक् साधितमिति यदुक्तं विज्ञानशर्मणा तस्याक्षेपं प्रथमतः प्रस्तौति **निसर्गत इति** । नः-शरीरिणाम् । ये रोगाः । निसर्गतः-स्वभावत एव । रिपवः-शरीरविनाशहेतवः । "शारीर-मानसागन्तुभिर्व्याधिभिर्विविधवेदनाभिघातोपद्रुतान् सनाथानप्यनाथवद्विचेष्टमानान् विक्रोशतश्च मानवान् अभिसमीक्ष्य मनसि नः पीडा भवति" इति सुश्रुतोक्तरीत्या विविधबाधानाम् अन्ततो देहविनाशस्य च हेतुभूतत्वात् रोगा नराणां निसर्गवैरिण इत्युक्तम् ।

किञ्च,

'संरक्ष्यते निजवशंवदसैनिकेन
यः पाण्डुना विमतखण्डनपण्डितेन ।
सोऽयं प्रतापपरिदग्धपुरे विसर्पन्
जेयः कथं कथय संप्रति राजयक्ष्मा' ॥ २० ॥

---

तज्जनकैः-तेषां रोगाणामुत्पादकैः; तेषां सहायत्वेन स्थितैः पितृभिरपि सहेति-चार्थः। अपन्थानमिति वक्ष्यमाणश्लोके आत्मजेष्वपीति प्रयोगेण अयमर्थः समर्थनीयः। किञ्च प्रकृत्या-स्वभावत एव-कुटिलैः-परस्परोपघातकत्वेन स्वयमनृजुभिः। वातादिभिः-वातपित्तकफैः। "दोषा एव हि सर्वेषां रोगाणामेककारणम्" इति, "रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः। विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥ सस्नेहमुष्णं तीक्ष्णं च द्रव्यमम्लं सरं कटु। विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥ गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः। श्लेष्मणः प्रशमं यान्ति विपरीतगुणैर्गुणाः" इति च वातादय एव रोगजनका इत्यस्य, ते च दोषाः प्रकृत्यैव विपरीतगुणविशिष्टा इत्यस्य च क्रमेण प्रमाणानि। (कुटिलैः प्रवृत्त्या इति पाठे स्वस्वकर्मतः कुटिलस्वभावैः इत्यर्थः।) तैः-वातादिभिः। समन्तात्-सर्वतश्च। अधिष्ठिते-आश्रिते। "ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः" इति वातादीनां सर्वशरीराधिष्ठितत्वं प्रसिद्धम्। तादृशे पुरे-शरीराख्येऽस्मिन् नगरे। नः कथं स्वायत्तता-स्वायत्तं पुरमेव नः समजनीति यत्त्वयोक्तं तत् कथं प्रसज्यत इति पृच्छति। हन्त-वस्तुतत्त्वे संप्रत्येवं विद्यमाने भवद्वचनं मम विस्मयावहं भवतीति भावः ॥ १९ ॥

निर्दग्धा भवतः प्रतापमहसेति परपक्षनिबर्हणं प्रति यदुक्तं तदप्यतिसंशयास्पदमित्याह **संरक्ष्यत इति**। किञ्च-संकटान्तरमप्यस्तीति यावत्। निजवशंवदाः-स्वप्रीति-प्रतापादिना सर्वथा स्वस्य अधीनाः, स्वाज्ञानुवर्तिन इत्यर्थः, सैनिकाः-सेनानिविष्टा योधा यस्य तेन। (वशंवदसेवकेन इत्यपि पाठः।)

कर्म—ततस्ततः ।

कालः—इति राज्ञो वचनमाकर्ण्य विज्ञानशर्मा समञ्जसयुक्तिकं वचनमुदीरयामास । 'राजन्, श्रूयताम्—

'वातादिजा यद्यपि सर्वरोगास्तथापि तानेव विनाशयन्ति ।
यथारणेर्वह्निरुदर्चिरुद्यन् दहत्ययत्नादरणिं तमेव' ॥ २१ ॥

---

अत एव विमतानां-विरोधिनाम्, खण्डने-निहनने, पण्डितेन-कुशलेन । पाण्डुना । यः-राजयक्ष्मा । संरक्ष्यते-सम्यक् गोप्यते । सः-तथा प्रकृत्यैव स्वयं दुर्दमशक्तिसंपन्नः । अयं राजयक्ष्मा । प्रतापेन-स्वकीयेन "क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः" इत्यादिरूपेण धातुशोषणोद्रिक्तेन देहनाशहेतुना वीर्येण, परिदग्धं-समन्ततः प्लुष्टम्, पुरं-शरीराख्यमस्मन्नगरं तस्मिन् । विसर्पन्-सर्वतः स्वपरिवारभूतैः कास-श्वासोरःक्षतादिभिः सह व्याप्नुवानः । संप्रति-अस्यां तीव्र-वेदनाभिपीड्यमानावस्थायाम् । कथं-केनोपायेन । जेयः-स जेतुं शक्यः । कथय-मन्त्रिप्रवरत्वात् मत्सन्देहमीदृशमपनेतुं त्वमेव क्षमः, तस्मात् इह सङ्कटे क उपायस्त्वया चिन्तित इति मे ब्रूहीति पृच्छति ॥ २० ॥

इतीति । समञ्जसं-उपपन्नम्, विवेकिभिरादरणीयमित्यर्थः; युक्तिकं-सहेतुकं च ।

वातादिजा इति । राजन् । श्रूयतां-पुररक्षणविषये तवोत्पन्नं संशयं निवारयामि किञ्चिदाकर्ण्यतामिति भावः । सर्वे रोगाः । यद्यपि वातादिजाः-"विकारजातं त्रीन् दोषान्नातिवर्तते" इति व्याधयः समस्ताश्च यद्यपि वातादिदोषैरेवोत्पन्नाः । तथापि । ते रोगाः । तानेव-त्रिदोषानेव । विनाशयन्ति-व्याधिषु संमूर्छितेषु परिणतेषु चासाध्यत्वेन, दोषाश्चान्ततो धातुभिः सह विलीयन्ते । दृष्टान्तमुखेन सम्यक् तदेव समर्थयति यथेति । अरणेः-अग्निमन्थाख्यदारोः । उदर्चिः-ज्वालामुद्वमन् । उद्यन्-उद्भवन् । वह्निः-अग्निः । तम् अरणि-

'अपन्थानं त्विति न्यायादात्मद्रोहिषु तेष्वमी ।
आत्मजेष्वपि न स्नेहमातन्वन्त्यधुना प्रभो' ॥ २२ ॥

'अतस्तदधिष्ठितमपि पुरं स्वाधीनमेवेति निश्चिनु । किञ्च,

---

मथितं तदेवाग्निमन्थकाष्ठम् । अयत्नात्-विनैवायासम्; अग्नेरुत्पत्त्यनन्तरक्षणात् स्वयमेवेत्यर्थः । यथा दहति; तथा रोगाश्च स्वोत्पादकान् दोषानपि स्वयम् अन्ततो नाशयन्तीति भावः ॥ २१ ॥

कथमेतदित्युक्ते तस्योपपत्तिमाह अपन्थानमिति । प्रभो-राजन् । अपन्थानं तु—"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति" (मुरारिः १-४) इति न्यायात् । तेषु-रोगेषु । आत्मनां-स्वेषां दोषाणाम्, द्रोहिषु-व्यापादकेषु सत्सु । अमी-वातादिदोषाः । अधुना । आत्मजेषु-स्वोत्पन्नत्वेन स्वपुत्ररूपेषु रोगेष्वपि । स्नेहं-प्रीतिम् । नातन्वन्ति-न कुर्वन्ति । आत्मनः-जीवात्मनः, जीवाधारभूतदेहादिति भावः; आत्मन उत्पन्ना वातादयस्त्रयो दोषा रोगाणां हेतुत्वमधिगत्य स्वोत्पत्तिहेतुभूतस्य आत्मन एव द्रोग्धारोऽभवन्; आत्मद्रुहाम् अमीषां दोषाणामपि तदात्मजा रोगा एव द्रोहचिन्तनाय प्रवृत्ताः; अतस्त एते दोषाः पुना रोग-द्वेषिणः संप्रति समभवन्नित्येतत् सांप्रतमेवेति अपन्थानमिति न्यायं प्रादर्शयत् । अतः स्वमूलोत्खाताय प्रवृत्तानां दोषाणाम् अस्मद्विरोधिनां व्याधीनां च समुपन्नतः परस्परद्वेषः संप्रति पुरपरिपालनोद्यतानामस्माकमानुकूल्यायैव प्रकल्पत इति सचिवः सोपपत्तिकं समाधत्ते ॥ २२ ॥

**अत इति** । तदधिष्ठितं-तैर्दोषैः आश्रितमपि; तेषां स्थानत्वेन विद्यमानमपीत्यर्थः । पुरम् । स्वाधीनं-स्वेषाम् अस्माकम् अधीनमेव; अस्मदायत्तमेव । इति निश्चिनु; अत्र ते संशयो मा भूदित्यर्थः ।

'स्वायत्ते नगरे तस्मिन् स्वामिपादप्रसादतः ।
जयश्रियं हस्तगतां जानातु स भवान् क्षणात्' ॥ २३ ॥

कर्म—ततस्ततः ।

कालः—इत्थं मन्त्रिवरवचननिशमनेन किञ्चिदिव निर्वृतचेतसा राज्ञा 'मन्त्रिन्, नियतेऽपि कालेन पुरस्य स्वायत्तत्वे किमनेन फलं पश्यसि' इति पृष्टो मन्त्री कथयामास—

---

स्वायत्त इति । तस्मिन् नगरे-अस्मदीये तस्मिन् पुरे । स्वामिपादस्य-पूज्यस्य प्रभोस्तव, प्रसादतः-अनुग्रहेण; तव वीर्यमहिम्नेति यावत् । स्वायत्ते-अस्मदधीने भवति सति । स भवान्-रसादिलाभात् समधिगतपर्याप्ततादृश-शक्तिमान् भवान् । क्षणात्-शत्रुहननपूर्वकं पुरस्य स्वायत्तीकरणानन्तरमेवेत्यर्थः । जयश्रियं-शत्रुसंहार-पुरपरिपालनजां विजयलक्ष्मीम् । हस्तगतां जानातु-प्राप्तामित्येव अवगच्छतु । (भगवान् क्षणात् इत्यपि पाठः ।) ॥ २३ ॥

इत्थमिति । निर्वृतं-व्याकुलान्निवृत्तम्, किञ्चिदिव सुखितम्, चेतः यस्य तेन । मन्त्रिवरस्य-सचिवोत्तमस्य विज्ञानशर्मणः, वचननिशमनेन-उपदेश-श्रवणेन । ज्ञानशर्मोपजापजनितमनोव्याकुलस्य अपहृतत्वात्, विज्ञानशर्मणो वचनं च न कथंचिदप्यन्यथा भवेदिति विस्रम्भवशाच्च निर्वृतचेतस्त्वम् । तस्य-पुरस्य । स्वायत्तत्वे-अस्मदधीनत्वे । कालेन-कालक्रमेण; कियद्भिर्दिवसैरित्यर्थः । नियतेऽपि-सत्यपि निश्चये । अनेन-पुरस्य वीतसङ्कटस्य स्वायत्तीकरणरूपकार-णेन । किं फलं-श्रेयस्करं कीदृशमुदर्कम् । पश्यसि-जानासि । ज्ञानशर्मोपदेशतो नितरां विपरिवर्तितमनोधर्मस्य जीवराजस्य परिपन्थिपरिहरणपूर्वकं पुरप्राप्तावपि विरक्तिरुत्पन्ना; अत एवं मन्त्रिणं ससंशयम् अनुयुङ्क्ते ।

'पुरस्य दार्ढ्ये योगस्य सिद्धिः सर्वार्थसाधिनी ।
अखण्डानन्दसिद्धिश्च फलं तेनैव जायते' ॥ २४ ॥

**कर्म**—ततस्ततः ।

**कालः**—इत्याकर्ण्य, 'क्षुद्राभिमानेनानेन न भवतीष्टसिद्धिः । प्रत्युत हानिरेव फलम् । अतः स्वयमेव त्यक्तेष्वेतेषु सिद्धैवात्मनो दृढयोग-सिद्धिरखण्डानन्दता च । कुत एतावान् यत्नः' इति वदति राजनि, पुनरपीत्थं समाहितवान् मन्त्री—

---

**पुरस्येति** । पुरस्य-देहाख्यस्य त्वदीयनगरस्य । दार्ढ्ये-स्थैर्ये सति निष्पन्ने । सर्वार्थसाधिनी-सकलश्रेयस्सम्पादयित्री । योगस्य सिद्धिः जायते । एतावता च त्वत्कृतं भगवदुपासनादिरूपं निदिध्यासनं तदानीमेव सिद्धि-मधिगच्छेदिति भावः । तेन-दृढेन शरीरेणैव । अखण्डानन्दसिद्धिः-जीवस्य स्वयाथात्म्यावबोधजनितसान्द्रानन्दानुभवरूपसिद्धिश्च । फलं जायते-फलत्वेन प्रकल्पते । "इति धनशरीरभोगान् मत्वानित्यान् सदैव यतनीयम् । मुक्तौ सा च ज्ञानात्तच्चाभ्यासात् स च स्थिरे देहे ।" इति गोविन्दभगवत्पादैः, "शरीरमाद्यं खलु धर्मसाधनम्" इति कालिदासेन च शरीरदार्ढ्यमेव सकल-श्रेयस्साधनोपकरणमिति यदस्त्यभिहितं तदेवात्र निरूपितम् ॥ २४ ॥

**इत्याकर्ण्येति** । अनेन क्षुद्राभिमानेन-नश्वरशरीरसंबन्धिन्या केवलमल्प-विषयया अनया आस्थया । इष्टसिद्धिः-मुक्तिप्राप्तिरूपं संकल्पितफलम् । न भवति-न सिध्यति । प्रत्युत-परं तु, वैपरीत्येनेत्यर्थः । हानिरेव फलं-अनेन क्षुद्रेण देहाभि मानेन विनिपात एवान्ततः परिपाकः । तथैव खलु—

"भूत्वा कल्पशतायुषोऽम्बुजभुवः सेन्द्राश्च देवासुरा
मन्वाद्या मुनयो महीजलधयो नष्टाः परं कोटयः ।
मोहः कोऽयमहो महानुदयते लोकस्य शोकावहः
सिन्धोः फेनसमे गते वपुषि यत् पञ्चात्मके पञ्चताम् ॥"

'प्रारब्धरहितस्यैवं भवेदेव न संशयः ।
प्रारब्धपरतन्त्रं त्वां ते मुञ्चन्ति कथं पुनः' ॥ २९ ॥

किञ्च,

'श्लथाभिमाने पुरि हन्त देवे क्षोभो भवेत्त्वत्प्रकृतिष्वकस्मात् ।
ततोऽवकाशं प्रतिलक्ष्य सर्वे प्रत्यर्थिनस्ते प्रबला भवेयुः' ॥२६॥

---

इति श्रीकृष्णमिश्रश्च (९-१४) आह । अतः । एतेषु-वातादिषु धातुषु तदधिष्ठितेषु देहेषु च । स्वयमेव त्यक्तेषु-मां विहाय गतेषु । दृढयोगसिद्धिः-या त्वदभिहिता, या अखण्डानन्दता च त्वन्निर्दिष्टपूर्वा । सिद्धैव-स्वयमेव सिध्यतीति यावत् । कुत एतावान् यत्नः-युद्धारम्भादिरूप एतावान् उद्यमः किमर्थमस्माकम् ।

प्रारब्धेति । एवं-स्वयमेव देहे नष्टे संपद्यते दृढयोगसिद्धिः अखण्डानन्दता चेति त्वदुक्तरीत्येत्यर्थः । प्रारब्धरहितस्य-परिक्षीणप्रारब्धकर्मणः पुरुषस्यैव । प्रारब्धं नाम-अनादिसञ्चितेषु आत्मकर्मसु फलभोगायोपहितं कर्म । तस्य क्षय एव मोक्षो भवेत् । न संशयः । प्रारब्धस्य कर्मणः परतन्त्रं-पराधीनम्; प्रारब्धकर्मप्रतिबद्धमित्यर्थः । त्वां पुनः । ते-देहादयः । कथं मुञ्चन्ति । "प्रारब्धं परिभुज्यैव कर्मशकलं" मुक्तिः संभवति नान्यथेति भावः । "नाभुक्त्वा क्षीयते कर्म" इति तत्त्वज्ञा वदन्ति । "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इति भगवता च यद्गीतं तदिह निर्दिष्टम् । "कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्" इति, "अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि" इति च स्वस्वकर्मनिर्वहणं प्रति गीतारम्भे प्रोक्तम् अर्जुनाय भगवदुपदेशं सचिव एष जीवराजाय सूचयति ॥२९॥

देहस्य रक्षणे त्वदालोचितमौदासीन्यं न केवलमामुष्मिकश्रेयसो बाधाकरं परं तु सुतरामैहिकस्यापि सङ्कटावहमिति किञ्चेत्यनेनाह । ऐहिकं कष्टमेव निरूपयति **श्लथाभिमान इति** । देवे-राज्ञि । पुरि-नगरविषये । श्लथाभिमाने-विगलितश्रद्धे भवति सति । हन्तेति तदुदर्कत्वेन भावि महानर्थद्योतकं खेदं सूचयति ।

किञ्च,

'यक्ष्मणि जाग्रति तस्मिन् पाण्डुज्वरसंनिपातपरिवारे ।
देवस्य कथं भविता स्थितिरिह यत्नादपि स्वरूपेण' ॥ २७ ॥

---

त्वत्प्रकृतिषु-तव शरीराख्यपुरे विद्यमानासु वातादिप्रकृतिषु; दोष-धातु-बाह्यान्तरावयवात्मकासु प्रजास्विति यावत् । अकस्मात्-अतर्कितमेव । क्षोभः-विधि-मर्यादादिलङ्घनपूर्वकं महान् कलहः कोलाहलश्च । भवेत् । राज्ञा राज्ये सत्यनादृते निष्पन्ने वा कथमप्यराजके महाननर्थः संपद्यते जनपदस्येति सर्वविदितेयं नीतिः । "अराजके जीवलोके दुर्बला बलवत्तरैः । पीड्यन्ते न हि वित्तेषु प्रभुत्वं कस्यचित्तदा" इति महाभारते । ततः-अनन्तरं ततो हेतोर्वा । ते-तव । सर्वे प्रत्यर्थिनः-क्षुद्रा महान्तश्चाशेषाश्च शत्रवः । अवकाशं-राज्यस्याराजकात्मकं प्रवेशानुकूल्यम् । प्रतिलक्ष्य-निरूप्य । प्रबलाः-अस्मदभिभवयोग्यशक्तिसंपन्नाः । भवेयुः । यद्वा ते प्रत्यर्थिनः-यक्ष्यपाण्डुप्रभृतयः शत्रवः । प्रबला भवेयुः । "स्वशक्त्युपचये केचित् परस्य व्यसने परे । यानमाहुः" (माघ २-५५) इति राजनीत्यनुसारेण प्रकृतिक्षोभरूपं त्वदीयं व्यसनमालोक्य त्वत्परिपन्थिनः त्वत्पुराभियोगाय नूनं प्रवर्तेरन् । अतो नेदं पुरविषयौदासीन्यं ते समुचितमित्युपदिशति ॥ २६ ॥

किञ्च प्रारब्धकर्मपरिक्षीणावधि स्वधर्मान् यथाविध्याचरन् देहपुरेऽत्रावश्यं निवसितव्यम्; यदि त्वया पुरमुपेक्ष्यते तदपि, न कथंचिदपि घटत इत्याह यक्ष्मणीति । किञ्च । पाण्डु-ज्वर-सन्निपाता एव परिवारः यस्य तस्मिन् । तस्मिन्-तव प्रबलवैरिणि । यक्ष्मणि । जाग्रति-देहपुरध्वंसनाय ससन्नाहं जागरूके सति । देवस्य-राज्ञस्तव । इह-अस्मिन् देहपुरे । स्वरूपेण-ज्ञानानन्दमयादिनिजरूपेण सह; अन्यत्र राज्ञः समुचितेन स्वरूपेण सह । यत्नादपि-महतापि प्रयत्नेन । स्थितिः-अवस्थानम् । कथं भविता-केन प्रकारेण भविष्यति; न कथंचिदपि सेत्स्यती भावः । महता रिपुणा वैरानुबन्धे विद्यमाने तदुपेक्षणं न विवेकिना कार्यम् ।

'इममर्थमप्रतिहतया प्रतिभया स्वयमेव विचारयतु देवः' इति ।

**कर्म**—ततस्ततः ।

**कालः**—तत इत्यादीन्यात्मनीनानि वचनान्याकर्णयन् कुतूहलाकुलित-हृदयः समरचत्वरकृतत्वरो मुहुर्मुहुस्तमित्थं प्रशंसन्नवोचत्—

'त्वयि दत्तभरस्य मेऽधुना किं बहुनानेन विचारणश्रमेण ।
भवते ननु रोचते यथा वा यतितव्यं हि तथैव निर्विशङ्कम्' ॥२८॥

---

"विधाय वैरं सामर्षे नरोऽरौ य उदासते । प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्" (माघ. २-४२) इत्येवंरूपो राजधर्मश्चानेन सूचितः ॥ २७ ॥

**इममिति** । इमम् अर्थ-यक्ष्मणीत्यनेनश्लोकनाभिहितं परमार्थम् । स्वयमेव अप्रतिहतया प्रतिभया-मया वा ज्ञानशर्मणा वा व्याकुलीकृतया प्रज्ञया मास्तु किन्तु त्वदीयेनैव व्यामोहरहितया संप्रति समुन्मिषन्त्या मत्येति भावः । देवो विचारयतु-विषयतत्त्वपरिशीनपूपुर्वकं भवान् जानातु । **तत इति** । इत्यादीनि-पूर्वोक्तप्रभृतीनि । (इत्यादीनीति स्थाने इतीत्येव पाठान्तरम् ।) आत्मनीनानि-आत्मने हितानि; आत्मन्शब्दात् हितार्थे खप्रत्ययः । कुतूहलेन-कौतुकेन, औत्सुक्येनेति यावत्, आकुलितं-संधुक्षितम्, हृदयं यस्य सः । जीव इति शेषः । समरचत्वराय-रणाङ्गणाय; रणरङ्गगमनायेत्यर्थः; कृतत्वरः-क्षिप्रगमनमभिलषन् । मुहुर्मुहुरिति मन्त्रिप्रवरोपदिष्टश्रेयस्करकर्मणि समुत्पन्नादरातिशयद्योतकमाम्रेडनम् । प्रशंसन्-अभिनन्दन् । इत्थम् अवोचत् । राजेति शेषः ।

**त्वयीति** । अधुना-प्रबलपरिपन्थिनां निषूदनाय समुपनतेऽस्मिन् समये । त्वयि-सकलराजकृत्यनिर्वहणधुरन्धरे मन्त्रिणि । दत्तभरस्य-निवेशितराज्यकार्य-भारस्य । मे-राज्ञः । बहुना-बहुमुखेन । अनेन विचारणश्रमेण-विमर्शनपूर्वकं विषय-व्यवहारायासेन । किं-किं प्रयोजनम् । तव मम च स वृथायासायैव प्रकल्पे-

**कर्म**—ततस्ततः ।

**कालः**—ततश्च किल 'य एवं देवस्य मनसो व्याकुलीभावः स सर्वोऽपि शत्रूपजाप इति मन्तव्यम् । अतो विज्ञापयामि—तिष्ठतु दार्ढ्यं मद्वचसि' इति राजानं पर्यवस्थाप्य स्वकार्य एव व्याप्रियते ।

**कर्म**—भगवन्, ज्ञान-विज्ञानयोरेकरूपयोरिव सतोः कुत इयान् विरोधः ।

**कालः**—'वत्स,

मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ।
तयोर्विरोध इत्येतत् किमाश्चर्यकरं तव' ॥ २९ ॥

---

तेति भावः । ननु-मन्त्रिम् । भवते-तुभ्यम् । यथा रोचते-तव यदुचितमिति प्रतिभाति । तथैव । निर्विशङ्कं-निस्संशयं यथा तथा; यद्वा निराबाधं यथा तथा । यतितव्यं हि-कर्तव्यमेव । हिरवधारणे । मदीया सर्वापि धूः त्वयि आरोपिता; इतःपरं न कस्मिंश्चिदपि विषये तवान्तरायं कुर्याम्; यथेच्छं निर्वर्त्यतां राजतन्त्रं त्वयेति तं सर्वाधिकारिणमकरोदिति भावः ॥ २८ ॥

**ततश्चेति** । मनसो व्याकुलीभावः-मनःक्षोभः । स सर्वोऽपि व्याकुलीभावविषयः । शत्रूपजापः-त्वद्वञ्चनार्थं वैरिजनकृतः कपटप्रबन्धः । इतः परमपि पुनस्तादृशचित्तक्षोभः प्रभोर्माभूदिति विचिन्त्य राजानं 'तिष्ठतु दार्ढ्यं मद्वचसि' इति पर्यवस्थापयति । स्वकार्ये-राजकृत्ये; युद्धसन्नाहादिकार्ये च । **भगवन्निति** । एकरूपयोः-रूपेण गुणेनार्थेन च समानयोरिव स्थितयोः सतोः । इयान्-परस्परदूषणावधिकः । विरोधः-प्रातिकूल्यम् ।

विरोधस्य हेतुमाह **मोक्षे धीरेति** । मोक्षे धीरिति पूर्वार्धं निघण्टुवचनम् । वत्स-कर्मन् । ज्ञान-विज्ञानयोः को भेद इति बोधयति मोक्ष इति । मोक्षे-मोक्षविषये । धीः-या मतिः, तत् ज्ञानम् । तदेकम् । अन्यत्र-मोक्षशास्त्रा-

श्रुतिश्च भवति—"दूरमेते विपरीते विषूची अविद्या या च विद्येति विज्ञाता" इति ।

कर्म—भवतु नाम तयोर्विरोधः । तदेवान्तरमुपलभ्य क्रियतां च द्विषद्भिरुपजापः । ज्ञानशर्मणा तु स्वामिहितैषिणा विपक्षानुकूलं पुराभिमानशैथिल्यं कथमुपदिष्टम् ।

कालः—न हि विपक्षानुकूलमिति, न च तदीयोपजाप इति वा प्रवृत्तिरेतस्य । किन्तु वस्तुतत्त्वमुपदेष्टव्यमित्येव तस्य स्वभावः ।

---

दन्ययोः । शिल्प-शास्त्रयोः-शिल्पं-चित्रादिकम्, शास्त्रं-शब्दशास्त्र-न्यायशास्त्रादिकम्, तयोः, या धीः तत् विज्ञानम् । इदमन्यत् । एकमनयोरपवर्गसाधनम्, अन्यत् त्रिवर्गसाधनमिति फलितोऽर्थः । तयोः-ज्ञानविज्ञानयोः । विरोधः-परस्परप्रातिकूल्यम् । इत्येतत्-विद्यत इत्येष विषयः । तव-कर्मणः । किम् आश्चर्यकरं-कुतो विस्मयावहं भवति । तयोर्विरोध एव स्वाभाविको धर्म इति भावः ॥ २९ ॥

ज्ञान-विज्ञानयोर्भेदविषये प्रबलतरं प्रमाणान्तरमपि प्रदर्शयति **श्रुतिश्चेति** । **दूरमिति** । एतच्च श्रुतिवाक्यं कठवल्ल्यां द्वितीयवल्ल्यां चतुर्थखण्डे विद्यमानम् । एते-विद्या अविद्या नाम उभेऽपि । दूरं विपरीते-परस्परव्याघातकगुणतो महदन्तरयुक्ते । विषूची-भिन्नगती । या अविद्या-काम्यकर्मात्मिका इति । विद्या-वैराग्यतत्त्वज्ञानमयी इति च । विज्ञाता-प्रसिद्धा । इति-एवंप्रकारा । **श्रुतिश्च** भवति-वेदप्रमाणमपि विद्यते । श्रुतौ या अविद्या विद्येति चाभिहिते त एव विज्ञान-ज्ञाननामभ्यामिह व्यवह्रियेते । (श्रुतिश्च भवति-दूरमेते-इत्येषा वाक्यपङ्क्तिः क्वचित् पुस्तके नास्ति ।) **ज्ञानशर्मणेति** । स्वामिहितैषिणा-जीवराजस्य क्षेमकाङ्क्षिणा । ज्ञानशर्मणा । विपक्षानुकूलं-शत्रुपक्षस्य सुकरतापादकं यथा

ज्ञानमद्वैतसन्मात्रं विपक्षस्तत्र को वद ।
स्वरूपस्थितिरेतस्य स्मारिता पारमार्थिकी ॥ ३० ॥

मूढवद्देहतादात्म्यं राजा न प्रतिपद्यताम् ।
बाधितं तद्दग्धपटन्यायेनास्त्विवति तस्य धीः ॥ ३१ ॥

---

तथा। पुराभिमानशैथिल्यं-स्वदेहात्मकनगरक्षेमावलोकने श्रद्धावैकल्यम्। न हीति। एतस्य-ज्ञानशर्मणः। प्रवृत्तिः-उद्यमः। विपक्षानुकूल्यम् अथवा विपक्षोपजापो वा भवत्विति नाभूत्। किन्तु। वस्तुतत्त्वं-विषयस्य याथार्थ्यम्। उपदेष्टव्य-मित्येव। तस्य-ज्ञानशर्मणः। स्वभावः-तदीयाभिसन्धिरित्यर्थः।

तदुद्दिष्टोपदेशतत्त्वमेव प्रतिपादयति ज्ञानमिति। ज्ञानं-तत्त्वज्ञानं नाम। अद्वैतसन्मात्रं-अद्वैतसत्तामात्रम्; अद्वैतस्थापनपर्यवसायि यत् तदेव ज्ञानम्। तत्र-तादृशविषयतत्त्वबोधन इति यावत्। विपक्षः-विरोध्यनुकूलो विषयः। कः। वद-त्वमेव सम्यगालोच्य ब्रूहि। न कोऽपीति भावः। एतस्य-जीवस्य। पारमार्थिकी-परमपुरुषार्थाय मुक्तिरूपाय हितेति पारमार्थिकी। स्वरूपस्य-आत्मरूपस्य, स्थितिः-यथार्थावस्था। स्मारिता-स्मृतिपथमानीता। ज्ञानशर्मणेति शेषः। "लक्षणं महदादीनां प्रकृतेः पुरुषस्य च। स्वरूपं लक्ष्यतेऽमीषां येन तत् पारमार्थिकम्" इति श्रीधरस्वामी। परमार्थशब्दात् ठक् ङीप् च ॥ ३० ॥

मूढवदिति। राजा-जीवः। मूढवत्-विवेचनशक्तिहीन इव। देहेन-भौतिकशरीरेण, तादात्म्यं-ऐक्यबुद्धिम्; देहात्मनोर्भेदो न विद्यत इत्येवंरूपं भ्रान्तिज्ञानम्। न प्रतिपद्यतां-न प्राप्नोतु। तदात्मन् इत्यस्मात् भावे ष्यञ्। "आत्मास्ति देहव्यतिरिक्तमूर्तिर्भोक्ता स लोकान्तरितः फलानाम्" (प्रबोध. २-१६) इति देहातिरिक्त एवात्मेति ज्ञातव्यम्; तद्विपरीतार्थरूपज्ञानशून्यावस्था मा नाम भूद्राज्ञ इति भावः। तत्-देहतादात्म्यज्ञानम्। देहात्मवादिनां चार्वा-

तदुक्तमभियुक्तैः—

'बाधितं दृश्यतामक्षैस्तेन बाधो न शक्यते ।
जीवन्नाखुर्न मार्जारं हन्ति हन्यात् कथं मृतः' ॥ ३२ ॥

---

काणामिव यदि तादृशं समुद्भवति भ्रान्तिजन्यं ज्ञानं तदपीति यावत् । दग्धपट-न्यायेन बाधितं-प्रतिहतम् । अस्तु । विषयवासनाबलात् देहतादात्म्यबुद्धिरनुवृत्तापि तत्त्वावगमानन्तरं तादृशी मतिः देहाभिमानिता च प्रतिषिद्धा भवत्विति भावः । दग्धस्यापि पटस्य यथापूर्वं सत्यप्यवयवसंस्थाने दृश्यमाने तत्तु न पटकार्य-कारीत्ययमेव दग्धपटन्यायः । एवमेव समुद्भूतेन सदद्वैतज्ञानेन विनष्टमपि देहतादात्म्यज्ञानं विषयवासनावशात् यद्यनुवर्तते तदप्रयोजकं सत् अगणनीयत्वेन पृथक् तिष्ठत्विति भावः । इति-जीव एवं ज्ञाततत्त्वार्थो भवत्विति । तस्य-ज्ञानशर्मणः । धीः-आशय इत्यर्थः । इदमेव तत्त्वम् आत्मोत्पत्तिप्रकरणे उप-देशसहस्र्याम् "अहंधीरियमात्मोत्था वाचारम्भणगोचरा । निषिद्धात्मोद्भवत्वात् सा न पुनर्मानतां व्रजेत्" इति श्रीशङ्करभगवत्पादाः ॥ ३१ ॥

अभियुक्तैः-अभ्यर्हितैः । यदुक्तमेतदधिकृत्य तदाह बाधितमिति । आधितं-अपहतविषयम्; मिथ्याज्ञानमिति यन्निरस्तमभूद्वस्तुतत्त्वज्ञैरित्यर्थः । तत् । अक्षैः-इन्द्रियैः । दृश्यताम्; अबाधितविषयवत् इन्द्रियगोचरत्वेन भासतां नाम । तेन-दर्शनेन, मिथ्याज्ञानेनेति यावत् । बाधः-प्रतिहतो विषयः । न शक्यते-न कार्यकारी भवितुमर्हतीति भावः । (न शङ्क्यत इति पाठान्तरम् ।) सिद्धान्तमिमं दृष्टान्तेन दृढयति जीवन्निति । आखुः-मूषिकविशेषः । जीवन् सन् । मार्जारं न हन्ति-बिडालं न मारयितुं प्रभवति । सत्यामेवं तस्य शक्त्यां मृतः स आखुः कथं मार्जारं हन्ति । मृगतृष्णिकां दृष्ट्वा जलमिति मतिः कस्यचिदासीत; अनन्तरं विषयज्ञः कोऽपि 'तन्नैव सलिलं किन्तु मरीचिकाचलनम; तवेयं भ्रान्तिः' इति

किञ्च,

> ‘मायया बहुरूपत्वे सदद्वैतं न नश्यति ।
> मायिकानां हि रूपाणां द्वितीयत्वमसम्भवि’ ॥ ३३ ॥ इति ।

---

वस्तुतत्त्वमबोधयत् । एवं सलिलत्वज्ञाने बाधितेऽपि मृगतृष्णिकां स पुरुषः पश्चादपि पश्यत्येव । पश्यतु नाम ; तावता न मरीचिकायां तस्यां पुनरपि तस्य जलत्वभ्रान्तिः कथंचिदपि संपद्येत । तस्यां यदा जलत्वेन मिथ्याज्ञानमवर्तत तदानीमेव तां न स पातुं प्राभवत् ; तत् मिथ्याज्ञानमिति सम्यगवगमानन्तरं पुनस्तत्र पानाभिलाषः कथं समुद्भवेत् । अतो वस्तुतो बाधितविषयः पुनरपि यथापूर्वं मिथ्याज्ञानमुत्पादयन् यद्यपि भवतीन्द्रियगोचरस्तथापि स मिथ्याविषय इत्येव मत्वा तिरस्क्रियेत तत्त्वज्ञैरिति भावः ॥ ३२ ॥

**मायये**ति । किञ्च । मायया-मायाशक्त्या । बहुरूपत्वे-आत्मनो बहुरूपत्वे सत्यपि दृश्यमाने । सत्-तथ्यतो विद्यमानम् । अद्वैतं-‘एकमेवाद्वितीयं ब्रह्म’ न द्वितीयमस्ति इत्येवंरूपं निश्चयज्ञानम । न नश्यति-मायाकृतेन ऐन्द्रजालिकात्मकेन अपरिमितव्यापारेण अद्वैततत्त्वं नापगच्छतीति भावः । (सत्यद्वैतं न नश्यति इति पाठान्तरम् ।) मायिकानां-मायात्मकानाम्ः मायया प्रत्यक्षवद्भासमानानामिति यावत् । रूपाणां-वस्तुस्वरूपाणाम् । हि शब्दः प्रसिद्धौ । द्वितीयत्वं-एकातिरिक्तत्वम् । असम्भवि-सम्भवितुं नार्हम् । एकमेवाद्वितीयं ब्रह्म ; न ततोऽन्यदस्ति । अस्माभिरवलोक्यमानं लौकिकं सर्वमपि वस्तुजातं कार्यजातं च मिथ्याज्ञानजन्यम् ; यस्य च मिथ्याज्ञानस्य, जीवनिष्ठाया अविद्याया वा मायैव हेतुरिति तात्पर्यम् । “मायया सर्वशक्तित्वात् अजः सन् बहुधा मतः” (उपदेशसहस्री-१७–७९) इति श्रीशङ्कराचार्याः । “एको देवो बहुधा निविष्टः” (तैत्ति. आ. ३–१४) इति श्रुतिश्च । इति-एवं चोक्तम् अभियुक्तैरिति योज्यम् ॥ ३३ ॥

कर्म— भगवन्, युज्यत एतत्।

कालः—एवं ज्ञानशर्मणोपजप्तोऽपि विज्ञानशर्ममन्त्रिमन्त्रवशात् प्रोत्साहितो राजा यदाचरिष्यति तदालोकयिष्यावहे। (भुवमवलोक्य) कथं विदूषकेण सहायमागच्छति राजा। तर्हि तत्रैव गच्छावः। (इति परिक्रामतः।)

(ततः प्रविशति राजा विदूषकश्च।)

राजा—सङ्ख्यापेततया रसानपि भृशं षट् सेवमानस्य मे
तेष्वेवातिबुभुक्षुता प्रतिमुहुर्हा हा सखे जायते।
एवं व्यापृतिरैच्छिकी मम यतो भुञ्जेऽन्नराशीनतः
पीयन्ते च रसालमाक्षिकदधिक्षीराज्यकुल्या मया॥ ३४॥

---

**भगवन्निति**। एतत्-ज्ञानशर्मणा जीवाय यदुपदिष्टं तदित्यर्थः। युज्यते-उपपन्नमेव भवति। **एवमिति**। ज्ञानशर्मणा। एवम्। उपजप्तोऽपि-उपह्वरे बोधितोऽपि। राजा। विज्ञानशर्ममन्त्रिणो मन्त्रवशात्-बोधनबलात्। प्रोत्साहितः-प्रकर्षेण संधुक्षितः। यत्-भस्मकरोगबाधितः सन् अपथ्यभोजनप्रवृत्तिप्रभृतिकम्। तत्-तादृशं कर्म। आलोकयिष्यामहे। इयन्तं कालं व्योम्न्येव कालः कर्मणा सह सल्लपन् आसीत्; अद्यैव राज्ञश्चान्येषां च व्यवसितिं सम्यक् द्रष्टुम् अवकाशः समजनीति भुवमवलोक्येत्याह। (तर्हीति शब्दो क्वचित् पुस्तके नास्ति।) तत्रैव-यत्र राजा तत्रेति यावत्।

**सङ्ख्यापेततयेति**। सखे-विदूषक। हा हा इत्याश्चर्ये; अनेन चित्तोद्वेगश्च सूचितः। षट् रसानपि-षड्रसविशिष्टानि भक्ष्य-भोज्यादीनीत्यर्थः। सङ्ख्यापेततया-निरवधिकतया। भृशं-प्रमाणतश्च बहु। सेवमानस्य-भुञ्जतः। मे-मम। तेषु-तादृशेष्वेवाहारेषु। प्रतिमुहुः-प्रतिक्षणमपि। बुभुक्षा-भोक्तुमिच्छा। जायते-उपर्युपरि महत्यध्यशने भवत्यतिकाङ्क्षा न तु कार्यान्तर इति एवकारः सूचयति। मम। एवं-उक्तरीत्या। ऐच्छिकी व्यापृतिः-स्वेच्छाप्रवृत्तिः; मन्मनसोऽप्यगोचर

अपि च,

अन्नान्येव निरन्तरं विवृणुतां सर्वाणि सस्यानि भू-
वारि प्रावृषि कोऽपि वर्षतु दधिक्षीरात्मकं वारिदः ।
सर्वोऽयं लवणाम्बुराशिरपि मे दुग्धाम्बुधिर्जायतां
भुञ्जानस्य तथापि हन्त पिबतो न क्षुत्पिपासाशमः ॥ ३९ ॥

---

तया ममाद्यात्यशने बलवती प्रवृत्तिरियमिति भावः । इच्छाशब्दात् ठञ् ङीप् च । यतो भवति । अतो हेतोः । अन्नराशीन्-ओदनसंचयान् । भुञ्जे-अश्नामि । (अत इति स्थाने अहमिति पाठान्तरम् ।) तथा रसालः-इक्षुः तद्रस इति यावत्, माक्षिकं-मधु, दधि, क्षीरम्, आज्यं-घृतम् इत्येतेषां कुल्याः-स्रोतांसि च । मया पीयन्ते । न केवलं पात्रेष्वाहृतानि भोजनानि, चषकादिष्वानीतानि पानानि च मदीयाया महत्या अशनायायाः संशमनायालं भवन्ति, किन्तु राशिरूपाणि भोज्यानि स्रोतःप्रवाहरूपाणि पानद्रव्याणि च मम संप्रति सन्त्यावश्यकानीति, इयं चावस्था मे यादृच्छिकीति, कुतो हेतोरिदमवस्थान्तरमिति च नाहमपि जान इति सविस्मयमाह । पूर्वमेव (९-अङ्के) पाण्डुः " जीवं प्रविश्य तमपथ्येष्वाहार-विहारेषु नियोजय " इति अपथ्यताम् आहूय आदिष्टवान्; पूर्वाङ्कस्यावसाने यक्ष्मणः कर्णे पाण्डू रहस्यं च किमपि न्यवेदयत्; तत्फलमेव राजा संप्रत्यनुभव-तीति ज्ञेयम् । पाण्डुमन्त्रिणः कपटप्रबन्धप्रयोगवशादेव राजा संप्रति भस्मक-रोगेणाभिभूयते । " नरे क्षीणकफे पित्तं कुपितं मारुतानुगम् । स्वोष्मणा पाचक-स्थाने बलमग्नेः प्रयच्छति ॥ तदा लब्धबलो देहं रूक्षयेत् सानिलोऽनलः । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥ पक्त्वान्नं स ततो धातून् शोणितादीन् पचत्यपि । ततो दौर्बल्यमातङ्कं मृत्युं चोपनयेत् परम् ॥ भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति " इति भस्मकलक्षणम् ॥ ३४ ॥

भस्मकरोगप्रवृत्ताम् अमर्यादामेव बुभुक्षां पिपासां च विवृणोति **अन्नान्ये-वेति** । (अस्य पद्यस्य पूर्वम् अपि चेति क्वचित् पुस्तके नास्ति ।) अपि च ।

तदतिशयेन संपादनीयो मम पान-भोजनविधिरिदानीम् ।

विदूषकः—(सहर्षम्) अज्ज एव्व एदं करणिज्जम् । जेण अहं वि एदस्सिं कज्जे तुअ सहाअत्तणे दक्खो होमि । जम्मेण तु विण्णाणेण भवं मिदभोअणम्मि सव्वदा सिक्खीअदि । तेण विण्णत्तो वि तुमं तस्स वअणं मा करेहि । [अद्यैवैतत् करणीयम् । येनाहमप्येतस्मिन् कार्ये तव सहायत्वे दक्षो भवामि । जाल्मेन तु विज्ञानेन भवान् मितभोजने सर्वदा शिक्ष्यते । तेन विज्ञप्तोऽपि त्वं तस्य वचनं मा कुरु ।]

---

भूः-भूमिः । सर्वाणि सस्यानि-समस्तान्यपि व्रीह्यादिधान्यफलानि । अन्नान्येव-सद्य एवोपयोगार्हाणि सिद्धान्नमयान्येव । निरन्तरं-सर्वदापि । विवृणुतां-वर्धयतु । सस्यान्यखिलान्यपि भुवि पक्वान्नत्वेनैव यदि सततमुद्भवन्ति तर्हि सद्य एव तानि महाबुभुक्षोपशान्तये मे प्रकल्पेरन्निति तस्याभिसन्धिः । तथा कोऽपि वारिदः-अनिर्वचनीयप्रभावयुक्तोऽसाधारणो मेघः कश्चित् । प्रावृषि-वर्षर्तौ । दधि च क्षीरं च दधिक्षीरे, तदात्मकं-दधिक्षीरस्वरूपम् । वारि-आपः । वर्षतु-विसृजतु । अयं सर्वोऽपि लवणाम्बुराशिः-इह दृश्यमानो लवणजलात्मको निखिलोऽपि सागरः । दुग्धाम्बुधिः-क्षीरसागरमयः । जायतां-विपरिवर्तताम् । (अपि चेद् दुग्धाम्बुधिरिति पाठान्तरम् ।) वृष्टिरशेषापि उदधिरप्यखिलो यदि क्षीरत्वेन दधित्वेन च सपदि परिवर्तेते तदानीमेव तत्पानेन मे सञ्जाता महतीयमनिवार्यवीर्या पिपासा कथमप्युपशान्तिमधिगच्छेदिवेति भावः । तथा-प्रभूततया । भुञ्जानस्य-तावदन्नम् अनुपदमश्नतोऽपि । तथा-पुष्कलतया पिबतः-तावत् सलिलदधिक्षीरादिकं पानजातं पिबतश्चापि । मम । क्षुत्पिपासयोः-बुभुक्षातृष्णयोः, शमः-शान्तिः । न भवति । हन्तेति विस्मये खेदे च । कथमेषा ममैवमशमनीया जाताशनाया पिपासा चेति ममैवेयमाश्चर्यं दुःखमप्युत्पादयत्यवस्थेति भावः ॥ २९ ॥

**तदिति** । मम पानभोजनविधिः इदानीम् अतिशयेन संपादनीयः-पूर्ववत् मिताहारपानक्रमस्तु नाद्य मे सर्वथा समुचित इत्यर्थः । **विदूषक**

**राजा**—साधु सखे साधु । सम्यगुपदिष्टम् । तथा करिष्ये ।

**कालः**—वत्स, श्रुतं भवता राज्ञो विदूषकस्य च वचनम् ।

**कर्म**—श्रुतमेव । एष राजा पाण्डुना प्रहिताम् अपथ्यताजननीं स्वस्य बहुबुभुक्षां न जानाति; विदूषकोऽप्यजानन्नेवं भाषते ।

**राजा**—कः कोऽत्र भोः ।

**विदूषकः**—सिक्खिदो वि मए किं तुमं पडिऊलकारिणो अमच्चस्स आआरणत्थं दोवारिअं आमंतेसि । [शिक्षितोऽपि मया किं त्वं प्रतिकूलकारिणोऽमात्यस्याकारणार्थं दौवारिकमामन्त्रयसि ।]

---

इति । सहर्ष-राजापि संप्रति अभ्यशने प्रवृत्तः, अतः स्वस्यान्नपानादिकं समधिकमुपलभ्येतेति एष उदरम्भरिर्हृष्यति । एतस्मिन् कार्ये-समधिकान्नपानसंपादनकृत्ये । तेन-विज्ञानशर्मणा । विज्ञप्तोऽपि-मितभोजनमेव कार्यमिति बोधितोऽपि । साध्विति । सम्यगुपदिष्टं-हृद्यमेवाभिहितम्; अन्नपानयोरुत्पन्ना तस्यात्यासक्तिरेव विदूषकस्य दुरुपदेशमपि सदुपदेशमिव ग्राहयत्येवम् । वत्सेति । नृपविदूषकयोः संभाषणमाकाशे स्थित्वाकर्णयन्तौ कर्म-कालौ स्वयमेवं तद्विषये सल्लपतः । (राज्ञो विदूषकस्य च वचनमिति वाक्यं क्वचित् पुस्तके नास्ति) । श्रुतमेवेति । अपथ्यता-अनारोग्यहेतु आहारविहारादिकम्; तस्या जननीं-उत्पादयित्रीम्; अपथ्यताया मातरं च । बहुबुभुक्षां-अमिताशनपानयोरत्यासक्तिम्; बहुबुभुक्षाया अपथ्यतोत्पादकत्वात् सा अपथ्यताया मातृत्वेनात्र व्यपदिश्यते । सिक्खिद इति । शिक्षितोऽपि-मन्त्रिवचनं मा कुर्विति बोधितोऽपि । आकारणार्थं-आह्वानार्थम् । आमन्त्रयसि-आह्वयसि ।

**राजा**—(विहस्य) वयस्य, मा बिभिहि। तव मतमेवानुसरामि।

**विदूषकः**—जइ एव्वं थिरप्पडिण्णो होहि। एतस्स अविह्मरणत्थं वसणंते मए बद्धो गंथी। अहं जेव्व तं आणेमि। [यद्येवं स्थिरप्रतिज्ञो भव। एतस्याविस्मरणार्थं वसनान्ते मया बद्धो ग्रन्थिः। अहमेव तमानयामि।]

(इति निष्क्रम्य अमात्येन सह प्रविशति।)

**मन्त्री**—सति दौवारिके राज्ञा किमर्थं त्वं प्रहितः।

**विदूषकः**—एत्थ कज्जे अहं जेव्व दौवारिओ। [अत्र कार्येऽहमेव दौवारिकः।]

**मन्त्री**—कीदृशे कार्ये।

**कालः**—कर्मन्, मन्त्रिणापि न विज्ञाता औपाधिकी राज्ञो बहुबुभुक्षा।

---

वयस्येति। (विहस्येति क्वचित् पुस्तके नास्ति।) तव मतमेवानुसरामि-मन्त्रिणि समागतेऽपि तवेच्छानुरोधमेव विदधामि। जइ एव्वमिति। स्थिरा-दृढा, प्रतिज्ञा-मन्त्रिणाभिहितेऽपि बह्वन्नपानोपयोगं न त्यजेयमिति वाग्दानं यस्य सः। एतस्य-स्थिरप्रतिज्ञत्वस्य। वसनान्ते-वस्त्राञ्चले। ग्रन्थिः-बन्धनम्। विस्मृतिशीलानां विषयस्य निर्दिष्टस्य कस्यचन प्रबोधनार्थं स्ववस्त्राञ्चले ग्रन्थि-बन्धनं तैः क्रियत इति लोके बहुत्र विद्यत एष आचारः। सतीति। दौवारिकेण करणीये भृत्यकृत्ये केन हेतुना राजा त्वां न्ययुङ्क्तेति जातसंशयः पृच्छति। (दौवारिकं विना किमर्थं त्वन्मुखेन मामाह्वयति इयि पाठान्तरम्।) एत्थ कज्ज इति। अस्मिन् कार्ये। अहमेव दौवारिकः-कार्यस्य स्वाभिमतत्वात् दौवा-रिककृत्यमस्मिन् विषये स्वेनैवोपात्तमिति भावः। कर्मन्निति। राज्ञः-जीवराजस्य। औपाधिकी-शत्रुकृतछलप्रयोगजन्या। बहुबुक्षा। मन्त्रिणापि न विज्ञाता; भहुबुक्षायाः कारणं राजा न जानाति निदूषकश्च न जानातीति खलु कर्मणा पूर्वमुक्तम्; अद्य कालः कर्मणे पुनराह, न केवलं तत्, मन्त्रिणापि पाण्डुकृतेयम

**कर्म**—बाढम् ।

**विदूषकः**—अमच्च, रण्णो दाणिं बहुभक्खणणामहेए उवट्ठिदे कज्जे ।
[अमात्य, राज्ञ इदानीं बहुभक्षणनामधेये उपस्थिते कार्ये ।]

**मन्त्री**—कीदृशी बहुभक्षणता ।

**विदूषकः**—किमण्णम् । बुभुक्खिदो वग्घो विअ सव्वपकिदीणं अह्माणं जीवणं भक्खिदुकामो राआ । मा खु एणं णिवारेहि । जं पलअकालरुद्दो विअ कुविदो चिट्ठदि । [किमन्यत् । बुभुक्षितो व्याघ्र इव सर्वप्रकृतीनामस्माकं जीवनं भक्षितुकामो राजा । मा खल्वेनं निवारय । यत् प्रलयकालरुद्र इव कुपितस्तिष्ठति ।]

---

औपाधिकी बुभुक्षेति न ज्ञातेति । बाढं-एवमेव । अमच्चेति । इदानीम् उपस्थिते-अद्यैव समुत्पन्ने; इतःपूर्वं कदाचिदपि नैषा तस्य संजातावस्थेति भावः । कार्ये-कृत्यविशेषे । तस्य कृत्यस्य नाम निर्दिशति बहुभक्षणनामधेय इति । तस्मिन् कार्ये दौवारिकोऽहमेवेति पूर्ववाक्येनान्वयः । किमण्णमिति । किमन्यत्-अतिबुभुक्षितस्य किमन्यत् कार्यं विद्यत इत्यर्थः । सर्वप्रकृतीनाम् अस्माकम्-तस्य प्रजात्मकानां सर्वेषामप्यस्माकम् । जीवनं-अशनजातमित्यर्थः । भक्षितुकामः । व्याघ्रोऽप्यतिबुभुक्षितो विपिनस्थितान् प्राणिनः सर्वानपि हत्वा अशितुं यतेत । स्वस्य विशेषभोजनलाभं मनसि कृत्वा मा खल्वेनं निवारयेत्याह । कुतो न निवार्यतामित्यस्य कापटिकं कारणं निर्दिशति यदिति । प्रलयकालरुद्र इव-"गते परार्धद्वितये काले लोकक्षयोद्धतः । कालाग्निभस्मसात् कर्तुं करोति भुवनं मतिम् । आत्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः । दहेदशेषं ब्रह्माण्डं स रुद्रः प्रलयोत्थितः" (कौर्मे अ. ४२) इति रीत्या महाबुभुक्षाक्रान्तः कुपितस्तिष्ठति राजेत्याशयः । (पलअकालकुविदरुद्दोविअ-प्रलयकालकुपितरुद्र इवेति पाठभेदः ।)

**मन्त्री**—(विहस्य, स्वगतम्) राज्ञः पानभोजनसंपादने स्वस्यापि तद्भविष्यतीत्येतस्य हृदयम्। (प्रकाशम्) गच्छाग्रतः। अहमप्यागमिष्यामि। (आकाशे दत्तदृष्टिः) किन्न्वेतत् स्यात्।

कार्यान्ववेक्षणविधौ सदसि स्थितेन
येन क्षमाजनि चिरं सहितुं बुभुक्षा।
भुक्त्वा च यस्य कियदप्यशनं नितान्तं
तृप्तिर्भवेत् स कथमीदृशबुद्धिमेति ॥ ३६ ॥

---

राज्ञ इति। गच्छाग्रतः-दौवारिक इव पुरस्ताद्गच्छ। अहमपि तव पश्चादागमिष्यामि। **आकाश इति।** आकाशे दत्तदृष्टिः-आकाशे लक्ष्यं बध्वा। किं नु एतत् स्यात्-अभूतपूर्वस्य अस्यावस्थान्तरस्य किं वा कारणं स्यात्।

**कार्यान्ववेक्षणेति।** कार्याणां-राज्यकृत्यानाम्, अन्ववेक्षणविधौ-परिशीलनादिकर्मणि; बहुविधराज्यकृत्यानां समालोचनार्थमित्यर्थः। सदसि-मन्त्रिसभायाम्। स्थितेन-कार्यधुरानिर्वहणोद्युक्ततया निषण्णेन। येन-जीवराजेन। बुभुक्षा-भोजनकालस्यातिक्रमणेन समुत्पन्ना क्षुदपि। चिरं-दीर्घकालं यावत्। सहितुं-सोढुम्। क्षमा-शक्या। अजनि। दीर्घकालावधि तीव्रामपि क्षुधम् अपरिगणयता येन राज्यकृत्येष्वेव सुमहती श्रद्धा समभूदाहितेत्यर्थः। किञ्च कियदपि-अतिस्वल्पप्रमाणमपि। अशनं-आहारम्। भुक्त्वा। यस्य-राज्ञः। तृप्तिः-क्षुन्निवृत्तिरूपा निर्वृतिश्च। नितान्तं-अतिमात्रम्। भवेत्। मिताहारशीलः सन् परिमितप्रमाणेनाप्यशनेन यः सन्तुष्टो भवेत्। सः-तादृशो नृपः। ईदृशबुद्धिं-बह्वशनं भोक्तव्यमित्येतादृशीम् अस्पृहणीयां मतिम्। कथम् एति-कुतः प्राप्नोति। निर्हेतुकतया नेदमवस्थान्तरमुपनमेत्। भवितव्यं केनचिद्राजानिष्टचिन्तकेनात्रेत्यालोचयति मन्त्री ॥ ३६ ॥

**कालः**—अहं खलु प्राणिनामव्यवस्थितामवस्थां करोमि ।

**कर्म**—बाढम् । अत्यल्पमिदम् । अन्यदप्यचिन्तनीयं त्वद्विलसितमिति जानामि । यत्किल—

दृष्ट्वा दक्षकृतापराधजनितक्रोधोज्झिताङ्गीं सतीं
यः शान्तस्तपसि स्थितः स गिरिशः स्वं प्रत्युपात्तायुधम् ।
कोपोद्घाटितनैटिलेक्षणपुटप्रोद्दामधूमज्वल-
ज्ज्वालाजालविजृम्भणेन सहसा भस्मीचकार स्मरम् ॥ ३७ ॥

---

**अहमिति** । अहं-कालः खलु । प्राणिनां-जीववर्गाणाम् । अव्यवस्थितां-व्युत्क्रमाम् । अवस्थां-स्थितिम् । करोमि । "कालस्य कुटिला गतिः" इति न्यायेन मानवादिजीववर्गस्य विविधसङ्कटमापादयन्ती कालगतिः प्रकृत्यैव कुटिला प्रवर्तत इति भावः । एवं खलु कालप्रभावः प्रतिपाद्यते तत्त्वविद्भिः—

"यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं नेये रजनिदिवसौ लोलयन् द्वाविवाक्षौ
कालः कल्यो भुवनफलके क्रीडति प्राणिशारैः" ॥ इति ।

**बाढमिति** । इदं-अव्यवस्थितामवस्थां करोषीत्येतत् । अत्यल्पं-भवत्कृत्य-प्रभावाणां सुबहूनां मध्ये सुतरामल्पमात्रमेव । (अलमिदम् इति पाठे अपि नामैतावदेवेत्यर्थः ।) त्वद्विलसितं-त्वदीयं वृत्तम् । अन्यदप्यचिन्तनीयं-मनसो दुरवगाहं बह्वन्यदपि विद्यत इति यावत् ।

विविधेषु कालस्य विलसितेषु किञ्चिदिहोदाहरति **दृष्ट्वेति** । यः गिरिशः-रुद्रः । दक्षेण-दक्षप्रजापतिना, कृतो योऽपराधः-स्वकृतयज्ञे रुद्राय हविर्भागाप्रदानरूपागः, तेन जनितेन क्रोधेन-स्वभर्तुरुपजनितावज्ञाप्रादुर्भूत-

दुस्सहमन्युना, उज्झिताङ्गां-योगाग्नौ विसृष्टशरीराम् । सतीं-तन्नाम्नीं दक्षस्य प्रथमपुत्रीम् ईश्वरस्य पूर्वपत्नीम् । दृष्ट्वा-योगाग्निदग्धशरीरामवलोक्य । शान्तः-दक्षाध्वरध्वंसानन्तरं शममधिगतः सन् । तपसि स्थितः-तपश्चचार । स गिरिशः-स एव तपसिस्थितः शिवः । स्वं प्रति-आत्मानं लक्ष्यीकृत्य । उपात्तायुधं-समासादितकुसुमशरात्मकसंमोहनाख्यास्त्रम् । स्मरं-मनोभवं मन्मथम् । कोपेन-तपोविलोपोद्भूतक्रोधेन, उद्घाटिते-उन्मीलिते, नैटिलेक्षणपुटे-ललाटस्थतृतीयलोचनसंपुटे, प्रोद्दामेन-अत्युग्रेण, धूमेन सह, ज्वलतः, ज्वालाजालस्य-अर्चिस्समूहस्य, विजृम्भणेन-अतिप्रबलतयोद्गमेन । सामान्यतः शमावस्थायां संपुटवत् संमीलितं तत्तृतीयं लालाटं नेत्रं महतो मन्योर्वशादेव शिवः कादाचित्कतया स्वयमुन्मीलयतीति प्रसिद्धिः । सहसा-अतित्वरितमेव । भस्मीचकार । पुरा किल सती देवी दक्षप्रजापतेः प्रथमदुहिता दक्षाध्वरे स्वभर्तुर्दक्षकृतामवज्ञामसहमाना योगाग्निना स्वदेहं ददाहेति महाभारते (शान्तिपर्व. २९०-अ.) । अस्मिन् विषये, पार्वतीपरिणयव्यतिकरे कुमारसम्भवे च कालिदास एवमाह—

१. "अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥"
"यदैव पूर्वे जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥
स कृत्तिवासास्तपसे यतात्मा गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वणत्किन्नरमध्युवास ॥"

२. "प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥
हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥
अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥
स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥

**कालः**—(विहस्य) शृणु तावत् ।

मारुतं यः पिबन्नेव महर्षिस्तपसि स्थितः ।
तमहं कुम्भजन्मानं तोयराशिमपाययम् ॥ ३८ ॥

---

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥"

अत्र सहसा भस्मीचकारेति यदुक्तं तदपि वक्ष्यमाणमेव कालिदासवचनं नूनमनुरुणद्धि :—

"क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥" इति ।

शान्त्याः परां काष्ठामवलम्ब्य तपश्चरितव्यमिति ससङ्कल्पं समाधिमास्थितः स महायोगी महेश्वरोऽपि स्वसङ्कल्पस्य सर्वात्मना विपर्यस्ताम् अवस्थां कालेनैवापादितः क्रोधान्धः सन् ससंभ्रममेव मदनं पूर्वमदहत् खलु । प्राणिनां प्रायेण कामपि अव्यवस्थिताम् अवस्थां कालः काममुत्पादयतीत्यत्र नैतस्मान्निदर्शनात् अन्यदावश्यकमिति भावः ॥ ३७ ॥

कालः स्वयमेव बलवदन्यन्निदर्शनमपि दर्शयति **मारुतमिति** । यो महर्षिः-अगस्त्यः । मारुतं पिबन्नेव-वायुभक्षणमेव कुर्वन् । तपसि स्थितः-महत्तपश्चरन् आसीत् । तं कुम्भजन्मानं-कुम्भादुत्पन्नम् अतिह्रस्वं तं मुनिम् । तोयराशि-सागरम् । अहम् अपाययं-वायुभक्षकत्वेन तिष्ठन्तं मुनिवरं सकलसमुद्रजलस्य पातारम् अहमकरवम् । उपोषितस्य वायुमात्राहारमश्नतोऽतिह्रस्वस्य मुनेः अखण्डसमुद्रपानकरणे कालः खलु कारणमासीदिति सूचितम् । अतो महतामपि व्यवस्थावैपरीत्यं काल एव करोतीति च तात्पर्यम् । "संपूज्यमानस्त्रिदशैर्महात्मा गन्धर्वतूर्येषु नदत्सु सर्वशः । दिव्यैश्च पुष्पैरवकीर्यमाणो महार्णवं निस्सलिलं मुनिर्व्यधात्" इति खलु अगस्त्यसंबन्धि समुद्रपानवैभवं वर्णितमस्ति (३-१०५-६) महाभारते ॥ ३८ ॥

मन्त्री—अतिबुभुक्षया राज्ञः किमप्याशङ्कते मे हृदयम्। यदाहुर्नीतिज्ञाः—'अतिबुभुक्षा राज्ञो राज्यच्युतिसूचिका' इति। (राजानं निरूप्य)

शुष्यन्त्या धृतशोषणे रसनया शश्वल्लिहन् सृक्किणी
किञ्चिन्मग्नविलोचनः श्रमजलक्लिद्यत्कपोलालिकः।
आरूढभ्रुकुटीभयङ्करमुखो निःश्वासदूनाधरो
दृष्ट्या कूणितया विलोकयति मामायान्तमेवान्तिके ॥३९॥

(उपसृत्य) जयतु जयतु देवः।

---

अतिबुभुक्षयेति। किमपि-किञ्चिदनिष्टम्। आशङ्कते-'अतिस्नेहः पापशङ्की' इति साधारणेष्वेव समयेषु स्वजनस्य स्वल्पमपि क्लेशमवलोक्य नूनम् आकुलीभावमधिगच्छन्ति आप्ताः; किमुत राज्ञः समुपनते असाधरणेऽस्मिन् अवस्थान्तरे। अतः सचिवः सविचारमास्ते। अतिशयिता क्षुदेव राज्ञो राज्यहानिसूचकं दुर्निमित्तमतिमहदिति सप्रमाणं तत् प्रदर्शयति यदाहुरिति। राजानं निरूप्य-राजानं निर्वर्ण्य।

नृपस्यावस्थामेव वर्णयति शुष्यन्त्या इति। राजेत्यध्याहार्यः। शुष्यन्त्या-पिपासाधिक्येन शोषमधिगच्छन्त्या। रसनया-जिह्वया। धृतशोषणे-अधिगतशोषे। सृक्किणी-ओष्ठस्य प्रान्तभागौ। शश्वत्-मुहुः। लिहन्-आर्द्रीकरणेच्छया जिह्वास्पर्शं वृथैव कुर्वन्। किञ्चिन्मग्ने-ईषदन्तर्गते, विलोचने यस्य सः। बुभुक्षाधिक्येन पिपासातिशयेन च उपयुज्यमानानामन्नपानानां भस्मकरोगवशाद्देहपोषणस्यापर्याप्तत्वाच्च, धातूनां शोषणाच्च क्षीणाङ्गस्य निमज्जनमक्ष्णोः स्वाभाविकमेव। श्रमजलेन-क्लमोत्पन्नस्वेदाम्बुना, क्लिद्यन्तौ-स्विन्नौ, कपोलौ च अलिकं-ललाटं च यस्य सः। आरूढा-ललाटं यावदुच्छ्रिता या भ्रुकुटी-भ्रुवोर्भङ्गः, तया भयङ्करं मुखं यस्य सः। क्रूरव्याधिजनिततीव्रवेदनावशात् समुद्भवद्भ्रुकुटीविक्षेप-

**राजा**—उपविश्यतामिहासने । (इत्यासनं निर्दिशति ।)

**विदूषकः**—देव्व, मए गहिदत्थो किदो अमच्चो । [देव, मया गृहीतार्थः कृतोऽमात्यः ।]

**राजा**—अमात्य, सज्जीक्रियतामनेनोक्तं सर्वमपि ।

**मन्त्री**—किमियमपूर्वा बुद्धिर्देवस्य विजृम्भते ससंरम्भम् ।
ननु कुर्वे यदिदानीमनेन दुर्मेधसा कथितम् ॥ ४० ॥

**विदूषकः**—दाणिं देव्व, तुमं जेव्व मह सरणं, जं कुविदो अमच्चो । [इदानीं देव, त्वमेव मम शरणम्, यत् कुपितोऽमात्यः ।]

---

विकटस्वरूपं मुखमावहतीति यावत् । ओष्ठस्य प्रान्तौ सुतरां क्रान्ताविति पूर्वमुक्तम्; अद्य पुनरधरस्यावस्थां सूचयति निःश्वासेत्यनेन । निःश्वासेन-निरतिशयोष्मणा सह निस्सरता निःश्वासवातेन, दूनः-वैवर्ण्यमधिगतः, अधरो यस्य सः । एवं भूतः सन् । अन्तिके-आत्मनः सविधे । आयान्तं-आगच्छन्तम् । मामेव-अद्यास्य नान्यत्र दृष्टिरित्यर्थः । कूणितया-कियदा-कुञ्चितया । दृष्टया । विलोकयति । अकाण्डे किलास्य नृपस्यावस्थान्तरमिदमद्य समुपनतमिति सविस्मयं विलोकयन्नेव स्वस्यागमनं निरीक्षन्तं राजानमुपसर्पति मन्त्री ॥ ३९ ॥

**उपविश्यतामिति** । (इहासने इति क्वचित् पुस्तके नास्ति । देव इति स्थाने वयस्येति संबोधनं च क्वचिद्दृश्यते ।) अमात्यः-विज्ञानशर्मा । मया गृहीतार्थः कृतः-तवोत्पन्नाया अतिबुभुक्षायाः संबन्धी विषयो मन्त्रिणे ज्ञापितः । अमितस्याशनस्य पानस्य च संपादनावश्यकता च तस्मै मया न्यवेदीत्यर्थः । **अमात्येति** । अनेन-विदूषकेन । उक्तं-अभिहितं सर्वमपि भोजनपानादिकम् ।

**किमियमिति** । देवस्य-प्रभोस्तव । इयं-अद्य प्रत्यक्षीक्रियमाणा । अपूर्वा-अपरिचितपूर्वा । बुद्धिः-अमितान्नपानेच्छारूपा मतिः । ससंरम्भं-सरभसम्,

राजा—अलं चापलेन ।

मन्त्री—तिष्ठ तूष्णीम् । जानामि ते दौष्ट्यम् ।

(विदूषको लज्जितस्तिष्ठति ।)

मन्त्री—(स्वगतम्, विचिन्त्य)

स्यादेतत् किं नात्र पश्यामि हेतुं
राज्ञो न क्षुद्राज्यविभ्रंशचिह्नम् ।
अस्य श्रेयस्सिद्धये बद्धकच्छः
किं नाहं स्यां किं न मे स्वामिभक्तिः ॥ ४१ ॥

---

वस्तुतत्त्वमविमृश्यैवाकस्मिकतयेति यावत् । विजृम्भते-अतिबलवदभिवर्धते । "अतिरभसकृतानां कर्मणामाविपाकात् परिणतिरवधार्या यत्नतः पण्डितेन" इति नीतिरिहानुस्मारिता । इदानीम् । दुर्मेधसा-मूढेन, विपरीतबुद्धियुक्तेनेति वा। अनेन-विदूषकेन । यत्-बह्वन्नपानादिकं सज्जीकर्तव्यमिति यत् । कथितम् । तत्-तादृशमविचारितम् अनर्थावहं कार्यम् । ननु कुर्वे-अपिनामाहं विदध्याम्; नाहं कुर्यामित्यर्थः ॥ ४० ॥

अलमिति । चापलेन-अविमृश्यकारितया । अलं-मास्त्वित्यर्थः । तिष्ठेति । ते दौष्ट्यं-राज्ञोऽनिष्टकार्ये प्रवर्तनात्मकं दौर्जन्यम् । स्वगतमिति । विचिन्त्य-राज्ञः किमस्या दुरवस्थायाः सहसोत्पन्नायाः कारणं स्यादिति मनस्येवालोच्य ।

स्यादिति । एतत्-अद्य राज्ञः समुपनतम् इदमवस्थान्तरम् । किं स्यात्-किमात्मकं भवेत् । अत्र-अस्मिन् बहुबुभुक्षारूपे विषये । हेतुं न पश्यामि-किमपि कारणं न जानामि । राज्ञः-जीवराजस्य । क्षुत्-अद्य समुत्पन्ना बहुबुभुक्षा । राज्यविभ्रंशचिह्नं-राज्यलोपस्य लक्षणम् । न-आकस्मिकतया समुत्पन्नोऽयं विकारो राज्ञो दुर्दशासूचकं दुर्निमित्तं न भवेदिति तर्कयामीति भावः । अस्य-

परं त्वेवं निश्चिनोमि—द्विषद्राजमन्त्रिणा पाण्डुना कृतमिदं वैकृतमिति । भवतु । अस्य चित्तं बहुभक्षणायत्तमन्यत्र व्याक्षिपामि । स एवास्य प्रतीकारः । (प्रकाशम्) प्रासादस्योपरि चलतु देवः । तत्रैव संपाद्यते महती तृप्तिः ।

**राजा**—बाढम् ।

(सर्वे प्रासादाधिरोहणं नाटयन्ति ।)

**विदूषकः**—(सर्वतो विलोकयन्) भो वअस्स किं एदं भासिणीपाआरे अपुव्वं किं वि दीसइ । [भो वयस्य, किमेतद्भासिनीप्राकारेऽपूर्वं किमपि दृश्यते ।]

---

राज्ञः । श्रेयस्सिद्धये-क्षेमाभिवृद्धिनिर्वर्तनाय । अहम् । बद्धकच्छः-सन्नद्धः । किं न स्याम्; अस्य श्रेयस्साधनकर्मण्येव सर्वदाहं सज्जोऽस्मीति भावः । तथा सज्जत्वे च समुचितं हेतुमाह किं न मे इति । मे-मम । स्वामिभक्तिः-राजभक्तिः । किं न-नास्ति किम्; अस्त्येवेत्यर्थः । असाधारणराजभक्तिः सपदि राज्ञः समुत्पन्नस्य सङ्कटस्य निवारणपूर्वकं तस्य श्रेयस्सम्पादनाय स्वयं सचिवोत्तमं समुद्योजयतीति भावः । (राज्ञो नः इति पाठे—नः राज्ञो राज्यविभ्रंशचिह्नं क्षुत्, भवतीति शेषः । अत्र हेतुं न पश्यामि—इत्यर्थः) ॥ ४१ ॥

क्षुदियं न राज्यविभ्रंशचिह्नमित्युक्तम्; तर्हि किमन्यदिदमिति पृष्टे स्वाशयं सोपपत्तिकं निर्दिशति परं त्विति । इदं वैकृतं-राज्ञोऽयं अतिबुभुक्षारूपविकारः । शत्रुसचिवेन पाण्डुना कृतिमिति निश्चिनोमि । अस्य-राज्ञः । बहुभक्षणायत्तं-अत्यशने प्रवृत्तम् । चित्तम् । अन्यत्र व्याक्षिपामि-विषयान्तरेषु व्यापारयामि । विषयान्तरव्याक्षिप्तहृदयस्याहारासक्तिर्विस्मिर्यते इति तस्याशयः । प्रतीकारः-परिहारोपायः । प्रासादस्योपरि-हर्म्यस्योर्ध्वम् । तत्रैव-प्रासादाग्र एव । महती तृप्तिः-महाबुभुक्षाप्रशमनात्मकं संतर्पणम् । अत्र प्रासादशब्देन ऊर्ध्वाङ्गं विवक्षितम्; तदेव शरीराख्यस्य पुरस्य प्रासादो भवितुमर्हति । अन्यत्र मनोव्याक्षेपेण समुपनतविकारप्रतीकारकरणं मन्त्रिण उद्देशः । **भो वअस्सेति** । भासिनीप्राकारे-

राजा—अमात्य, किमिदम् ।

मन्त्री—राजन्, सिध्मक-पद्मक-कण्टकाः ।

विदूषकः—(सभयम्) वअस्स, एदाणं एदे भटा पहारं कुणंति, तदो ते वि अह्माणं उवरि पडिस्संति । ता अण्णदो सिग्घं पलाअणं करेह्म । [वयस्य, एतेषामेते भटाः प्रहारं कुर्वन्ति, ततस्तेऽप्यस्माकमुपरि पतिष्यन्ति । तदन्यतः शीघ्रं पलायनं कुर्मः ।]

---

तन्नाम्नि प्राकारे । शरीरस्योपर्यावरणत्वेन भासिनी (अवभासिनी वा), लोहिता (लोहिनी वा), श्वेता, ताम्रा, वेदिनी, रोहिणी, मांसधरा (स्थूला वा) इति सप्त त्वचो विद्यन्ते; याः खलु शरीराख्यस्य पुरस्य सप्तप्राकारत्वेनात्र निर्दिश्यन्ते; अतो भासिनीनाम्नि प्रथमप्राकार इति विदूषकः प्राह । किमपि अपूर्वं-किमपि विकृतं रूपम् । दृश्यते । किमिदमिति तदेव सविस्मयं जिज्ञासू राजापि पृच्छति । अद्यारब्धम् अत्यशनासक्तस्य नृपचित्तस्यान्यत्राकर्षणरूपेणोपायेन बहुबुभुक्षोपशमकृत्यम् । राजन्निति । सिध्मक-पद्मक-कण्टकनामानोऽस्मच्छत्रवो रोगाश्चर्माश्रिताः । (१) सिध्यमेव सिध्मकम्; कुष्ठान्तर्गतोऽयं व्याधिः । "श्वेतं ताम्रं तनु च यद्रजो घृष्टं विमुञ्चति । प्रायश्चोरसि तत् सिध्ममलाबु-कुसुमोपमम्" इति तल्लक्षणम् । (२) पद्मकमिति पद्मिनीकण्टकाख्यः क्षुद्ररोगो गृह्यते । तस्य च लक्षणम्—"कण्ठकैराचितं वृत्तं मण्डलं पाण्डुकण्डरम् । पद्मिनीकण्टकप्रख्यैस्तदाख्यैः कफवातजम्" इति । (३) कण्टकाख्यः पृथगेकश्चर्मरोगो मृग्यः । पद्मिनीकण्टकाख्यो रोग एव पद्मककण्टकाविति द्विधा विभक्ताविति ज्ञायते । "सप्त त्वचो भवन्ति । तासां प्रथमा अवभासिनी नाम या सर्ववर्णानवभासयति .... सिध्म-पद्मकण्टकाधिष्ठाना" इति सुश्रुतः । वअस्सेति । एतेषां-शत्रुभूतानां रोगाणाम् । भटा एते-सिध्यादयो रोगात्मका इमे योधाः । प्रहारं कुर्वन्ति-प्रतियोद्धॄन् समरे प्रहरन्ति । (अण्णदो इत्यत्र अस्मदो इति पाठान्तरम् ।)

**मन्त्री**—विदूषक, मा भैषीः ।

गुञ्जाफलाग्निलेपः प्रतियोद्धा सिध्म-पद्मयोः समरे ।
एष हरिद्राक्षारः कण्टकहृतये मया प्रहितः ॥ ४२ ॥

**राजा**—सुष्ठु कृतममात्येन ।

**कालः**—गुञ्जाफलाग्निलेपहरिद्राक्षारानौषधविशेषान् प्रहरतो दृष्ट्वा विदूषको बिभेति ।

---

इतःपरं रोगाणाम् औषधानां च प्रवृत्तं परस्परमायोधनं वर्ण्यते । अद्य जीवः शरीरस्यावरणत्वेन विद्यमानं त्वगवयवं निरीक्षन्नास्ते, स एवावयवः शरीराख्यस्य पुरस्य प्राकारत्वेन इह परिकल्प्यते । अतस्त्वग्रोगाणां तदभिहननार्थं प्रयुक्तानाम् औषधानां च प्रवर्तमानं युद्धमेव प्रथमतोऽत्र प्रस्तूयते । रिपवश्च प्रथमं नगरप्राकारमाक्रम्यतं भित्वा च ततः परमेवान्तः प्रवेष्टुं यतेरन् । अतस्त्वग्रूपप्राकाराभिभवोऽद्यारब्धः । **गुञ्जाफलेति** । गुञ्जाफलं चाग्निश्च तयोः-काकणन्तिकाचित्रकयोः, लेपः-तदाख्यमौषधम् । समरे-रोगौषधयोः परस्परं निर्वर्तमाने युद्धे । सिध्मपद्मयोः-सिध्मपद्मकाख्ययो रोगयोः पूर्वनिर्दिष्टयोः । प्रतियोद्धा-तौ प्रत्यभिहत्य युद्धकर्ता । भवतीति शेषः । गुञ्जाचित्रकाभ्यां कृतस्य लेपस्य कुष्ठादिमहारोगाणां त्वगाश्रितानां सामान्यतः परिहारार्थमुपयुज्यमानत्वात् अत्रैतल्लेपः सूचितः । "गुंजाफलाग्निचूर्णं च लेपनं श्वेतकुष्ठजित्" इति रसराजसुन्दरे । गुञ्जाचित्रकयोः कुष्ठहरत्वं भावमिश्रादिभिरप्युक्तम् । कण्टकहृतये-कण्टकाख्यस्य चर्मकीलरोगस्य परिहाराय । एष हरिद्राक्षारः दारुहरिद्रायाः पाचितायाः समुद्भूतः क्षारः । मया प्रहितः-मया प्रयुक्तः । दारुहरिद्रा च कुष्ठकण्ड्वादित्वग्रोगनाशिनी । "तिक्ता दारुहरिद्रा तु कटूष्णा व्रणमेहनुत् । कण्डूविसर्पत्वग्दोषविषकर्णाक्षिदोषनुत्" इति राजनिघण्टुः ॥ ४२ ॥

**सुष्ठ्विति** । अद्याशनविषये समुपनतात् महतो लालसात् स्वस्य चित्तवृत्तिः सर्वात्मना व्यावर्तितेति राजा ज्ञापयति सुष्ठु कृतमित्यमात्यकृत्यस्य व्याधिनिषूदनरूपस्य प्रशंसया । प्रहरतः-औषधकर्तृकोऽयं प्रहारः । (विदूषको ब्रवीतीति पाठान्तरम् ।)

**कर्म**—एवमेतत् ।

**विदूषकः**—अज्ज, को एसो । [आर्य, क एषः ।]

**मन्त्री**—व्यङ्गनामा रोगः ।

अभिमुखमवेक्षमाणं शशरुधिरालिप्ततनुमिमं हन्तुम् ।
तिष्ठति मुखमावृण्वन्मञ्जिष्ठाप्रमुखसाधनो लेपः ॥ ४३ ॥

**विदूषकः**—किं एदं मल्लाणं आजोहणं विअ, जं रत्तप्पवाहो दीसइ ।
[किमेतन्मल्लानामायोधनमिव, यद्रक्तप्रवाहो दृश्यते ।]

---

**एवमिति** । एवमेतत-विदूषको बिभ्यतीत्येतत् तथ्यमित्यर्थः । **व्यङ्गेति** । पुरतो युद्धरङ्गे दृश्यमानो रोगः व्यङ्गनामा-व्यङ्ग इत्यस्य नाम । "क्रोधायास-प्रकुपितो वायुः पित्तेन संयुतः । मुखमावृत्य सहसा मण्डलं विसृजत्यतः । नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्" इति तन्निदानम् ।

व्यङ्गवधमाह **अभिमुखेति** । अभिमुखं यथा तथा **अवेक्षमाणं**-लेपरूपौषधहननार्थं तत्पुरतो दृश्यमानम् । शशरुधिरेणेव आलिप्ता तनुः यस्य तम्; तथा वर्णतो रक्तमिति यावत् । इमं-व्यङ्गम् । हन्तुम् । मञ्जिष्ठाप्रमुखं साधनं यस्य सः; मञ्जिष्ठादिभिर्द्रव्यैः साधित इत्यर्थः । लेपः-लेपनोपयोगि तैलमिति यावत् । मुखं-स्वकीयमास्यम् । आवृण्वन् तिष्ठति-व्यङ्गरोगग्रसनाय स्वकीयमास्यं व्यादाय सज्जो वर्तते; रुग्णस्य मुखमभितः समुत्पन्नं व्यङ्गाख्य व्याधिम् आवृत्य तिष्ठति लेप एष इति च सामान्योऽर्थः । "मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम् । कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत् । नीलिकापिडकाव्य-ङ्गान् लेपनादेव नाशयेत्" इति क्षुद्ररोगाधिकारे बृन्दः । (अभिमुखमवेक्षमाणः शशरुधिरालिप्ततनुः इति प्रथमान्तो लेपविशेषणत्वेन क्वचित् पाठः) ॥ ४३ ॥

**किं एदमिति** । मल्लानां-भटानाम् । आयोधनं-युद्धमिव । विद्यत इति शेषः । यत्-यस्मात् । रक्तप्रवाहो दृश्यत इति शोणितवर्णं वस्त्वन्तरं (त्वचं) दृष्ट्वा विदूषकः संभ्रान्तो भूत्वा एवमाह ।

**मन्त्री**—वैधेय शस्त्रधाराक्षुण्णं प्रवहति न रक्तमिदम् ।
तव मूढतां धिगेष प्राकारो लोहिनी नाम ॥ ४४ ॥

**कालः**—त्वग्रूप एष द्वितीयः ।

**कर्म**—तथैव ।

**विदूषकः**—अहो पमादो । सुवेदाए उवरि सव्वत्थ गअकण्णा वित्थिण्णा ।
[अहो प्रमादः । श्वेताया उपरि सर्वत्र गजकर्णा विस्तीर्णाः ।]

**कालः**—कर्मन्, श्वेतनाम्नि तृतीयत्वक्प्राकारे चर्मदलं नाम रोगं पृच्छति विदूषकः ।

---

तद्भ्रान्तेरपोहाय मन्त्री वस्तुतत्त्वमाह **वैधेयेति** । वैधेय-हे मूढ । इदं-पुरस्तात् दृश्यमानम् । शस्त्रधाराक्षुण्णं-खड्गादिप्रहरणानां तीक्ष्णकोटिभिः छिन्नावयवेभ्यो विद्रुतमिति भावः । रक्तं न प्रवहति-आयोधने परस्परशस्त्रपातैर्युध्यतां भटानामङ्गेभ्यो रक्तमभिवहतीति न भ्रमितव्यमिति तात्पर्यम । (रक्तं यदिति पाठान्तरम् ।) तव मूढतां धिक्-निन्दनीया तवेयमज्ञतेत्यर्थः । किं तर्हीदं महच्छोणितवर्णं वस्त्विति चेदाह एष इति । एषः-अस्माभिरवलोक्यमानोऽयं वस्तुविशेषः । प्राकारः-शरीराख्यस्य अस्मत्पुरस्य द्वितीयो वरणः । लोहिनी नाम-स च लोहिनीति प्रसिद्धः । द्वितीयायास्त्वचो लोहिनी अथ वा लोहितेति नाम । सा च सुतरां रक्तवर्णा स्यात्, यां दृष्ट्वा शोणितप्रवाह इति बालिशो भ्रान्तोऽभूद्विदूषकः । "द्वितीया लोहिता नाम षोडशभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना" इति सुश्रुतः ॥ ४४ ॥

**त्वगिति** । एष त्वग्रूपः-अयं चर्मात्मकः । द्वितीयः प्राकार इति यावत् । **अहो इति** । प्रमादः-अनर्थ इत्यर्थः । श्वेतायाः-तदाख्यायास्त्वच उपरि । गजकर्णाः-गजकर्णाकाराः पदार्थाः । विस्तीर्णाः-व्याप्ताः । **श्वेतेति** । श्वेतनाम्नि-श्वेताभिधे । तृतीया या त्वक् सैव प्राकारस्तस्मिन् । चर्मदलं नाम रोगं-

**राजा**—क एते सर्वतः श्वेतायाम् ।

**मन्त्री**—देव योधेन तत्रापि नियुक्तेन मया पुरः ।
आम्रपेश्यभिधानेन लेपेनाक्रम्य भूयते ॥ ४९ ॥

**विदूषकः**—वअस्स, पेक्ख एत्थ का वि दुद्धतरंगिणी विअ वहइ । ता अंजलीहिं गेह्णिअ पिबंह । [वयस्य, पश्यात्र कापि दुग्धतरङ्गिणीव वहति । तदञ्जलिभिर्गृहीत्वा पिबामः ।]

**मन्त्री**—धिगौदरिक । सर्वत्राभ्यवहारभ्रान्तिः । भ्रान्त,

---

चर्मदलाख्यं कमपि कुष्ठम् । "चर्माख्यं बहुलं हस्तिचर्मवत्" इति तल्लक्षणम् । "तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्मदलाजगल्लीमषकाधिष्ठाना" इति सुश्रुतः । **क एत इति** । श्वेतायां त्वचि सर्वतः-सर्वत्र छुरिताः क एते पदार्थाः । (क एते संवर्तन्ते इति च पाठः ।)

श्वेताया उपरि विद्यमानं वस्तुस्वरूपमाह **देवेति** । देव-प्रभो । तत्रापि-श्वेतायामपि । मया नियुक्तेन-प्रेरितेन । आम्रपेशी-कोशाम्रस्यापनीतत्वचोऽन्तःस्थितमस्थि; तदभिधानेन लेपेन-आम्रपेशीलेपेन । योधेन-तल्लेपाख्येन वीरेण । पुरः-अस्माकं पुरस्तात् । (पुरा इति पाठे मया पूर्वमेव नियुक्तेनेत्यर्थः ।) आक्रम्य भूयते-चर्मकुष्ठमभिभूय स्थितम् । आम्रपेशीलेपाभिधो मत्प्रयुक्तो योधश्चर्मकुष्ठाख्यं शत्रुभटमायोधने सम्यगभिभवतीति भावः । देवयोधेन इति समस्तपदे राजभटेन इत्यर्थः । "कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः" इति (१-९-२२) भावमिश्रः ॥ ४९ ॥

**वअस्सेति** । दुग्धतरङ्गिणीव-क्षीरनदीव । तत्-तत्रस्थं दुग्धमित्यर्थः । उदरंभरेः विदूषकस्य मुखेन विस्मृतं बुभुक्षापिपासारूपं विषयं प्रमादात् राजानं स्मारयितुम् एष वाक्योपक्रमः । (पिबेति पाठान्तरम् ।) **धिगिति** । उदरे प्रसित

नेयं दुग्धतरङ्गिणी प्रवहति श्वित्रोऽयमिन्दुप्रभः
प्राकारं किल तुर्यतामुपगतं ताम्राख्यमाक्रामति ।
संरम्भो भवतो वृथा स्मरयसि त्वं किं तृषं विस्मृतां
पातुं शक्यत एष किं तव ततो मौढ्यं त्वयाविष्कृतम् ॥४६॥

(इति सभ्रूक्षेपं तर्जयति ।)

---

औदरिकः; अतिमात्रं भोजनासक्त इत्यर्थः; तस्य संबोधनम् औदरिक । "उदराट्ठगाद्यूने" इति उदरशब्दात् ठक् । सर्वत्र-आहारस्यावसरे वानवसरे वा, भोज्ये वाभोज्ये वा सर्वेष्वपि समयेषु सर्वेष्वपि स्थलेषु सर्वेष्वपि वस्तुषु चेत्यर्थः । अभ्यवहारभ्रान्तिः-अशनविषया भ्रान्तिरेव । धिक्-निन्दनीयेयमव्यवस्थिता ते चित्तवृत्तिरिति भावः । एवमेव "सर्वत्रौदरिकस्याभ्यवहार्यमेव विषयः" इति (अङ्क ३) विक्रमोर्वशीये । (औदर्येति पाठान्तरम् ।)

तद्भ्रान्तिमपोहयति नेयमिति । हे भ्रान्त । इयं दुग्धतरङ्गिणी न प्रवहति-नात्र क्षीरप्रवाहवत्या नद्याः प्रवृत्तिः । किन्तु अयम् इन्दुप्रभः-श्वेतिम्ना चन्द्रवद्-दृश्यमान एषः । श्वित्रः-श्वित्राख्यो रोगः । स च तुर्यतामुपगतं-चतुर्थत्वेन विद्यमानम्; चतुर्थमित्येवार्थः । ताम्राख्यं-तन्नामकचतुर्थत्वगात्मकम् । प्राकारं-शरीराख्यस्य पुरस्य तुरीयं वरणम् । आक्रामति-आस्कन्दते । किलेति संभावनायाम् । श्वेतवर्णः श्विताख्यो रोगः चतुर्थत्वचमेवम् अभिभवतीति यावत् । "कुष्ठैकसंभवं श्वित्रं किलासं वारुणं भवेत् । निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंभवम् । वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् । सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु" इति श्वित्रलक्षणं निदाने । भवतः । संरम्भः-आकुलीभावः । वृथा-मूलरहित इत्यर्थः । त्वम् । विस्मृताम् । तृषं-पिपासाम् । (तृषं विस्तृताम् इति पाठान्तरम् ।) जीवस्येति शेषः । किं स्मरयसि-किमर्थं तस्य स्मृतिपथं पुनरानयसि । एषः-दुग्धवद्दृश्यमानोऽयं पदार्थः । किं पातुं शक्यते; नैव शक्यते । ततः-भ्रान्त्युपनतप्रलपनाद्धेतोः । तव मौढ्यं-त्वदीयम् अज्ञत्वमेव । त्वया-त्वयैव न

राजा—क एनमभिसरति ।

मन्त्री—एष मया नियुक्तो महातालेश्वरः ।

कालः—कर्मन्, औषधविशेषोऽयम् ।

विदूषकः—अध वेदिणीरोहिदाणं उवरि के वि उल्लुठअंतो विअ दीसंति ।
[अथ वेदिनीरोहितयोरुपरि केऽप्युल्लुठन्त इव दृश्यन्ते ।]

---

ह्यन्येन । आविष्कृतं-प्रकटितम् । महता प्रयत्नेन मया जीवराजस्य पानभोजनगृध्नुता विस्मारिता, त्वया तु मूढेन सा पुनरपि स्मार्यते; एतादृशानर्थादृते नान्यत् तव प्रलपनस्य फलमस्तीति भावः ॥ ४६ ॥

इतीति । सभ्रूक्षेपं तर्जयति-राजा यथा न जानीयात् तथा भ्रूभङ्गरूपसूचनया तस्य वचनस्यापुनरावर्तनमभिलषन् मन्त्री विदूषकं भर्त्सयतीति भावः ।

क एनमिति । एनं-श्वित्रम् । कः । अभिसरति-अनुसृत्य अभिधावति; हन्तुमिति यावत् । एष इति । मया-मन्त्रिणा । नियुक्तः-प्रयुक्तः । महातालेश्वरः-तन्नामौषधम् । "कुष्ठैकसंभवं श्वित्रम्" इति श्वित्रस्य कुष्ठैककारणत्वेनाभिहितत्वात् कुष्ठरोगहरमिदं महातालेश्वररसाख्यमौषधं श्वित्राभिहननार्थं प्रयुक्तमिति ज्ञेयम् । एष तदौषधयोगः—"तालं ताप्यं शिला सूतं शुद्धं सैन्धवटङ्कणे । समांशं चूर्णयेत् खल्वे सूतात् द्विगुणगन्धकम् । गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम् । मर्द्यं षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे । पुटे पुटेत् द्रवैर्मर्द्यं सर्वमेतत्तु षट्पलम् । द्विपलं मारितं ताम्रं लोहभस्म चतुष्पलम् । जम्बीराम्लेन तत्सर्वं दिनं मर्द्यं पुटेल्लघु । त्रिंशदंशं विषं चास्य क्षिप्त्वा सर्वं विचूर्णयेत् । माहिषाज्येन संमिश्रं निष्कार्धं भक्षयेत् सदा । मध्वाज्यैर्वाकुचीचूर्णं कर्षमात्रं लिहेदनु । सर्वकुष्ठानि हन्त्याशु महातालेश्वरो रसः" इति शार्ङ्गधरः । अध वेदिणीत्ति । वेदिनीरोहितयोरुपरि-वेदिनीरोहिताख्ययोः पञ्चमषष्ठप्राकारयोः

**मन्त्री**—सर्वेऽपि कुष्ठा गलगण्डादयश्च नृत्यन्ति ।

**कर्म**—भगवन्, वेदिनी-रोहिते पञ्चमी-षष्ठ्यौ त्वचौ । तत्र कुष्ठादेरुत्पत्तिः ।

**कालः**—अस्त्येतत ।

पृष्ठे । उल्लुठन्तः-परिभ्रमन्त इव । सर्वेऽपीति । कुष्ठाः सर्वेऽपि-अष्टादश-सङ्ख्याकाः क्षुद्र-महाकुष्ठाः । "वातादयस्त्रयो दुष्टास्त्वग्रक्तं मांसमम्बु च । दूषयन्ति स कुष्ठानां सप्तको द्रव्यसंग्रहः ॥ अतः कुष्ठानि जायन्ते सप्त चैका-दशैव च । कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः । सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकं त्वतः ।" इति कुष्ठनिदानम् । कुष्ठशब्दः पुंनपुंसकयोर्भवति । गलगण्डादयः-गलगण्ड-गण्डमालार्बुदापचीग्रन्थय इत्यर्थः । (१) "निबद्धः श्वयथु-र्यस्य मुष्कवल्लम्बते गले । महान् वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥" (२) "कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु । मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥" (३) "गात्रप्रदेशे क्वचिदेव दोषाः संमूर्च्छिता मांसमसृक् प्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकम् ॥ कुर्वन्ति मांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ।" (४) "ते ग्रन्थयः केचिदवाप्तपाकाः स्रवन्ति नश्यन्ति भवन्ति चान्ये । कालानुबन्धं चिरमादधाति तां चापचीति प्रवदन्ति तद्ज्ञाः ॥" (५) "वाता-दयो मांसमसृक् प्रदुष्टाः संदूष्य मेदश्च तथा सिराश्च । वृत्तोन्नतं विग्रथितं च शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः ॥" इति गलगण्डादीनां क्रमेण लक्षणानि । एते रोगाः नृत्यन्ति-तयोस्त्वचोरुपरि क्रीडनमाचरन्तीव विवर्धन्ते । भगवन्निति । वेदिनी पञ्चमी त्वक् । रोहिता षष्ठी त्वक् । इयं रोहिणीत्यपि व्यवह्रियते । तत्र-तयोस्त्वचोः । कुष्ठादेरुत्पत्तिः । "पञ्चमी वेदिनी नाम व्रीहिपञ्चभाग-प्रमाणा कुष्ठविसर्पाधिष्ठाना । षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुद-

**विदूषकः**—एत्थ उण थूलाणाम्मि सत्तमे पाआरे को वि लोहआर-भत्तिआ विअ पूरिज्जमाणसरीरो दीसइ। [अत्र पुनः स्थूलानाम्नि सप्तमे प्राकारे कोऽपि लोहकारभस्त्रिकेव पूर्यमाणशरीरो दृश्यते।]

**मन्त्री**—स्थूलायां विद्रधिरेष शत्रुमल्लः।

**विदूषकः**—(सभयम्, संस्कृतमाश्रित्य)—

प्राकारसप्तकमपि प्रसभं गृहीत्वा
खेयानि सप्त च विशोष्य तथैव कोशान्।
उल्लुण्ठयिष्यति रिपोर्निवहो भटानां
म्लायंस्त्वमन्ध इव मूढ इव स्थितोऽसि॥ ४७॥

---

श्लीपदगलगण्डाधिष्ठाना" इति सुश्रुतः। एत्थ उणेति। स्थूलेति सप्तमी त्वक्। यामेव मांसधरामाह सुश्रुतः। लोहकारस्य वायुना विस्फूर्जिता भस्त्रिकेव। परिपूर्यमाणशरीरः-बृंहिताङ्गः। स्थूलायां-शरीरस्य सप्तमप्राकारत्वेनाभिधीय-मानायां त्वचि। एष शत्रुमल्लः-शत्रुप्रेरितो युद्धवीरः। विद्रधिः-तदाख्यः शोथ-रोगः। "स्थूला त्वक् सप्तमी ख्याता विद्रध्यादेः स्थितिश्च सा।" इति शार्ङ्गधरः। "सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा भगन्दर-विद्रध्यर्शो-ऽधिष्ठाना" इति च सुश्रुतः। "भुक्तैः पर्युषितात्युष्णरूक्षशुष्कविदाहिभिः। जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः। दुष्टत्वङ्मांसमेदोऽस्थिस्नावासृक्कण्ड-राश्रयः। यः शोफो बहिरन्तर्वा महामूलो महारुजः। वृत्तः स्यादायतो यो वा स्मृतः षोढा स विद्रधिः" इति विद्रधिलक्षणमुक्तम् वाग्भटेन।

आपदासीदतीति भयाभिभूतो विदूषकः प्राह प्राकारेति। रिपोः-राजयक्ष्माख्यशत्रोः। भटानां-युद्धवीराणाम्। निवहः-समूहः। प्राकारसप्तकमपि-सप्तत्वगात्मकान् भासिन्यादीन् सप्त प्राकारानपि। प्रसभं यथा तथा-बलात्कारे-णेत्यर्थः। गृहीत्वा-पूर्वोक्तरीत्या सिध्मपद्मकण्टकादिभिः आक्रम्य। सप्त खेयानि-

**राजा**—(दृष्ट्वा) धिक् प्रमादः । हन्त विज्ञानशर्मन्, आक्रान्तमिवारिभिरान्तरम् ।

**मन्त्री**—देव, धीरो भव । यदि नाहं प्राणिष्यं तदेदमभविष्यत् ।

---

परिखासप्तकं च । सप्तापि रसादिधातवः खेयत्वेनेहाभिधीयन्ते; अस्य चानन्तरं विवरणं दृश्यताम् । विशोष्य-सम्यक् शुष्कीकृत्य; रसादिद्रवहीनानि विधायेति यावत् । तथैव-तेनैव प्रकारेण । कोशान्-धनागाराणि; आमाशय-श्वासाशय-रक्ताशयादयोऽत्र कोशत्वेन निर्दिश्यन्ते, ये किल प्राणाख्यामूल्यद्रविणनिधित्वेन परिगण्यन्ते । उल्लुण्ठयिष्यति-उद्ध्वंसपूर्वकं मोषिष्यति । त्वम् अन्ध इव-सर्वथा वस्तुतत्त्वमपश्यन्निव । मूढ इव च । म्लायन्-विह्वलतामधिगच्छन् । स्थितोऽसि-तूष्णीं तिष्ठसीति यावत् । प्राकारेषु सप्तसु च प्रसभं प्रत्यर्थिभिराक्रान्तेषु, परितः स्थितासु परिखासु च सर्वासु शत्रुप्रतापवशात् शुष्यमाणासु, अन्तर्विद्यमानानां कोशानां चोल्लुण्ठनादिना आपद्यासन्नायाम् अज्ञ इवावसन्नशक्तिः किमेवं निरुद्यम एवात्र निलीय तिष्ठसीति विह्वलमानसो विदूषकः पार्थिवं भ्रान्तमानसम् उद्विग्नं च चिकीर्षति ॥ ४७ ॥

**धिगिति** । प्रमादः-अनवधानसमुपनतोऽनर्थः । (धिगित्यस्य पूर्वं दृष्ट्वेति शब्दः क्वचित् पुस्तके नास्ति ।) आन्तरं-शरीरात्मकस्य नगरस्यान्तरालम् । अरिभिः-व्याधिरूपैः शत्रुभिः । आक्रान्तमिव । (आक्रान्तमेवेति च पाठः ।) कीदृशीमवस्थामवलोक्य शरीराभ्यन्तरं शत्रुभिराक्रान्तमिवेति राज्ञोऽभवद्भीतिरिति वक्ष्यमाणेन विदूषकवचनेन व्यक्तीभविष्यति । **देवेति** । अहं-विज्ञानशर्मा । यदि न प्राणिष्यं-नाजीविष्यं चेत् । तदा इदं-पुराभ्यन्तरस्य शत्रुभिराक्रमणम् । अभविष्यत् । लिङ्निमित्ते भविष्यति क्रियातिपत्तौ लृङ् । मयि जीवति नात्र शत्रुकृतमाक्रमणं कथंचिदपि स्यात्, अतो धीरो भवेति राजानमाश्वासयति मन्त्री । हास्यभयान-

**विदूषकः**—(सकोपोपहासम्) एदं पच्चक्खं खु वट्टइ । तुमं उण अणुमाणेण एदं णत्थित्थि वण्णेसि । ता अच्चरिओ तक्को विण्णाणसम्ममंतिणो । वअस्स, आकण्णेहि मे वअणम् । एसो अमच्चो एव्व सव्वदुवारेसु सत्तुहिं आक्कंतेसु भिक्खुवेसं गेह्निअ पलाइस्सदि । तुह उणो दुल्लहो मोक्खो । ता एहि । सुरंगादुवारेण तुमं णइस्से । (इत्युत्थाय सर्वतो विलोक्य) हद्धी हद्धी । किं करोमि मंदभग्गो । जलं वि कहिं वि ण दीसइ । सत्ता वि जं परिहाओ रित्ताओ विअ दीसंति । (पुनर्दृष्ट्वा) वअस्स, किं एदं इंदजालं विअ दीसइ, जं सत्ता वि परिहाओ दाणिं एव्व सुक्काओ, पुणो वि अपरिमिदरसाओ दीसंति । कहं इमाओ उत्तरिअ गच्छम्हो ।

[एतत् प्रत्यक्षं खलु वर्तते । त्वं पुनरनुमानेनैतन्नास्तीति वर्णयसि । तदाश्चर्यस्तर्को विज्ञानशर्ममन्त्रिणः । वयस्य, आकर्णय मे वचनम् । एष अमात्य एव सर्वद्वारेषु शत्रुभिराक्रान्तेषु भिक्षुवेषं गृहीत्वा पलायिष्यते । तव पुनर्दुर्लभो मोक्षः । तदेहि । सुरङ्गाद्वारेण त्वां नेष्ये । हा धिक् हा धिक् । किं करोमि मन्दभाग्यः । जलमपि कुत्रापि न दृश्यते । सप्तापि यत् परिखा रिक्ता इव दृश्यन्ते । वयस्य, किमेतदिन्द्रजालमिव दृश्यते, यत् सप्तापि परिखा इदानीमेव शुष्काः, पुनरप्यपरिमितरसा दृश्यन्ते । कथमिमा उत्तीर्य गच्छामः ।]

**राजा**—अमात्य, किं श्रुतमेतस्य वचनम् ।

---

कादिरसभेदान् प्रेक्षकेभ्यः प्रचिकटयिषुः मूर्खं विदूषकं वाचालयति कविः **एदमित्यादिना** । एतत्-पुराक्रमणम् । आश्चर्यस्तर्कः-विज्ञानशर्मण ऊहो विस्मयनीयः ; प्रत्यक्षवस्तुनोऽनुमानेन तिरस्करणं सर्वथा विरुद्धमिति कृत्वा तादृशस्तर्क आश्चर्य इत्युपालभते । वयस्येति राजानं प्रति संबोधनम् । अमात्यवचनस्य अविश्वसनीयत्वप्रकल्पनात् मे वचनमाकर्णयेत्याह विदूषकः । मन्त्रिणश्चतुरत्वमालोच्य

**मन्त्री**—एतन्न किञ्चन ततस्तव मास्तु भीतिः
ओजायितं रिपुजनस्य निरीक्ष्य किञ्चित् ।
यत् खेयपूरणविशोषणयोः समर्थं
तन्मूलमेव हि विजृम्भणमप्यरीणाम् ॥ ४८ ॥

---

भिक्षुवेषादिग्रहणेन पलायनमपि संभाव्येतेति सूचयति । सुरङ्गा-भूम्यन्तराले कृतो रहस्यमार्गः; तद्द्वारेण । हा धिक् हा धिगिति विपदमप्रतीक्षितोपनतां कामपि सूचयति । जलमपि कुत्रापि न दृश्यते-शरीरस्थद्रवधातूनां शोषितत्वात् देहाख्ये पुरे न क्वचिदपि सलिलमवलोक्यत इत्युक्तं भवति । (जलमेत्तं वि-जलमात्रमपि इति पाठान्तरम् ।) यत्-यस्मात् । सप्तापि परिखाः-खेयानि । रिक्ताः-शून्याः; शुष्का इति यावत् । अपरिमितरसाः-पूर्वतोऽपि प्रमाणतोऽतिरिक्तद्रवाः । प्राकारसप्तकस्यान्तर्विद्यमाना रसादिधातुरूपपरिखासप्तकस्यापि अगाधत्वप्राप्तया शरीराख्यपुरात् बहिर्गमनमपि पुनर्दुश्शकमिति दृष्ट्वा किं करोमि मन्दभाग्य इति दूयते वराको विदूषकः ।

**एतदिति** । एतत्-विदूषकेन यदभिहितं तदित्यर्थः । न किञ्चन-न किञ्चिदपि भयावहो विषयः; परं त्विदमुपेक्षार्हमिति यावत् । ततः-तस्माद्धेतोः । रिपुजनस्य-पाण्डुप्रभृतिशत्रुयूथस्य । किञ्चित्-स्वल्पम्; केवलं तात्कालिकक्षोभावहमिति भावः । ओजायितं-पराक्रमप्रकटनम्; ओज इत्यदन्त इह प्रयोगः; ओजशब्दात् स्वार्थे आयस्ततः क्तः । निरीक्ष्य-दृष्ट्वा । तव-जीवराजस्य । भीतिः । मास्तु । केवलमिदं विभीषिकेव विह्वलप्रकृतीनाम् आकस्मिकसाध्वसोत्पादनाय कूटप्रबन्धरूपमचिरस्थायि विकृतमवस्थान्तरं तन्नेदमवलोक्य धीरस्त्वादृशो भेतुमर्हतीति भावः । अस्याचिरस्थायित्वमेवाह **यदिति** । हि-हेत्वर्थोऽयम् । रिपूणां-यक्ष्मादिशत्रूणाम् । **खेयानां**-शरीरात्मकपुरस्य परिखात्वेन विद्यमानानां रसादिधातूनाम्, पूरण-विशोषणयोः, समर्थम् । यत्

अपि च,

रिपवो लब्ध्वा मार्गं रसादिपरिखाः प्रकोप्य तन्मूलम् ।
देव भवन्ति यथेष्टं पुरमुल्लुण्ठयितुमपीशानाः ॥ ४९ ॥

कालः—रस-रक्त-मांस-मेदोऽस्थि-मज्ज-शुक्ररूपाः सप्त धातवः परिखात्वेन निरूपिताः ।

---

विजृम्भणं-आटोपः । तदपि । तन्मूलमेव-तद्धेतुकमेव; भयोत्पादनार्थमेव बद्धपरिकरस्य परिपन्थिजनस्य विकटोऽयमाटोपः; तस्माद्विवेकिनोऽत्र विह्लीभावं नावलम्बेरन्निति तात्पर्यम् । यद्वा रिपूणां विजृम्भणमपि-पुराक्रमणविषयकपराक्रमप्रकटनमपि । तन्मूलमेव हि-खेयपूरणविशोषणद्वारैव खलु । प्रकल्पत इति शेषः । प्राकारोन्मूलनानन्तरं परिखानां पूरण-शोषणे बलवद्विधाय, तदनन्तरमेवान्तर्नगरमपि ते स्वाक्रमणायावकाशमासादयेयुरिति शत्रूद्दिष्टं कर्म संसूच्य, तथापि नास्माकमिदं भयावहमिति राज्ञो मनोधैर्यमुत्तेजयति ॥४८॥

इतोऽप्यधिकमपि विद्विषो विजृम्भेरन्, तावता न हानिरस्माकमिति पुनरपि ज्ञापयितुमाह अपि चेति । तेषां विशेषविजृम्भणप्रकारमेव विवृणोति **रिपव इति** । देव-प्रभो । रिपवः । रसादिपरिखाः-रसादिधातव एव खेयानि । प्रकोप्य-संवर्ध्य; अतिमात्रमुच्छूना यथा भवेयुस्तथा कृत्वेत्यर्थः । तन्मूलं-तदेव रसादिपरिखाशोषणमेव मूलं यस्य तम् । मार्गं-अन्तःप्रवेशद्वारम् । लब्ध्वा । रसरक्तादिखेयानां संक्षोभद्वारा पुरप्रवेशावकाशं तमुपलभ्येति भावः । पुरं-अस्मदधिष्ठानभूतमिदं शरीराख्यं नगरम् । यथेष्टं-तेषामिच्छानुरोधं यथा तथा । उल्लुण्ठयितुमपि-प्रजानां धनाद्यपहरणादिद्वारा संक्षोभमुत्पादयितुमपि । ईशाना भवन्ति-शक्तिमन्तो भवन्ति । तादृशमहोपद्रवविधानार्थमेव विद्विषामयं देहधातुसंक्षोभरूपः सुमहानुद्यम इति भावः । (पुरमुल्लुण्ठयितुमीशाना इति पाठान्तरम् ।) ॥ ४९ ॥

**रसरक्तेति** । रसादयः सप्त धातव एव शरीराख्यस्य पुरस्य सप्त परिखा भवन्तीति कालः कर्मणे व्यक्तं ज्ञापयत्यनेन वाक्येन । (सप्त धातव इति क्वचित्

**कर्म**—एषां वृद्धौ श्लेष्मविद्रधिरक्तविसर्पादयो भवन्ति, कार्श्ये तु रौक्ष्य-श्रम-शोषादयः ।

**कालः**—युक्तं भवतोक्तम् ।

**मन्त्री**—एवमेते स्वामिकार्ये बद्धपरिकरा यतन्तां नाम । सन्त्येवैषां प्रतीकारशस्त्राण्यस्मदायत्तानि ।

**विदूषकः**—किं एसा वादाली विअ मह अक्खीहिं आउलेदि । [किमेषा वातालीव ममाक्षिणी आकुलयति ।]

**राजा**—अहो प्रचण्डोऽयमनिलः । तथा हि—

---

पुस्तके नास्ति ।) एषामिति । एषां-रसरक्तादिधातूनाम् । वृद्धौ सत्याम् । श्लेष्मशब्देन श्लेष्मवृद्धिभवा विकारा गृह्यन्ते; "रसोऽपि श्लेष्मवत्" इति वृद्धो रसधातुः वृद्धश्लेष्मदोषजान् विकारान् उत्पादयेदिति वाग्भटोक्तत्वात् । विद्रधि-रक्तविसर्पादयो रक्तस्य वृद्ध्या भवन्ति; तथा च वाग्भटे—"रक्तं विसर्पप्लीहविद्रधीन्" इति; वृद्धं रक्तं विसर्प-प्लीह-विद्रधीन् कुर्वन्तीति तस्यार्थः । कार्श्ये तु-रसादिधातूनां क्षैण्ये तु । रौक्ष्यादयो भवन्ति; "रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता" इति वाग्भटः; रसे क्षीणे रौक्ष्य-श्रमादयो भवन्तीति तद्वाक्यस्यार्थः । युक्तमिति । भवता यदुक्तं तद्युक्तं-शास्त्राभिमतमित्यर्थः । एवमेत इति । एते- रोगरूपा अस्मत्परिपन्थिपरिवाराः । स्वामिकार्ये-तेषां राजकृत्ये । एवं-पूर्वोक्तप्रकारेण । बद्धपरिकराः-सज्जीकृतपरिच्छदाः । यतन्तां नाम-अशेषमपि तेषामन्तिममुद्यमं कुर्वन्तु नाम । एषां-अस्मच्छत्रूणाम्, यद्वा शत्रुभिः क्रियमाणानामुद्यमानाम् । प्रतीकारार्थं-परिहारार्थम्, शस्त्राणि-आयुधानि; यथावत् तदुद्यमविघातकोपयोगीन्युपकरणानीत्यर्थः । अस्मदायत्तानि सन्त्येव-अस्मत्सविधेऽपि सन्ति सन्नद्धान्येव । अतो मा भैषीरितदवलोकयेति नृपहृदयं दृढयति । किमिति । वातालीव-झंझावात इव । तमेव चण्डमारुतात्मकं व्यतिकरमवलोक्य राजापि प्रसभम् अहो इति उद्विग्नतां व्यनक्ति ।

तारा्श्च्यावयितुं घनान् विकिरितुं कृत्वार्कतूलोपमान्
भित्वा पातयितुं भुवि क्षितिभृतां तुङ्गानि शृङ्गाणि च ।
सद्यः शोषयितुं समुद्रमवनीं कर्तुं तु पांस्वात्मना
द्रागुन्मूल्य च भूरुहान् भ्रमयितुं शक्तो भवत्यम्बरे ॥९०॥

---

अनिलस्य प्रचण्डत्वमेव प्रकाशयति तारा इति । प्रचण्डः-अतिबलवान् । अयम् अनिलः-वातः । अत्र यद्यपि बाह्यश्चण्डमारुतो वर्ण्यते तथापि शरीरस्थः प्रबलो वातदोष एव प्रकुपितो विशिष्य विवक्षितः । अम्बरे-आकाशे । ताराः-नक्षत्राणि । च्यावयितुं-नभस्तो भ्रंशयितुम् । तथा घनान्-मेघान् । अर्कतूलोपमान्-अर्काख्यक्षुपस्य पक्वफलान्तरा विद्यमानातिलघुतूलसदृशान् । कृत्वा-सुतरां सूक्ष्मरूपच्छिन्नावयवान् विधायेत्यर्थः । विकिरितुं-विशीर्णान् कर्तुम् । क्षितिभृतां-पर्वतानाम् । तुङ्गानि शृङ्गाणि-उन्नतानि शिखराणि च । भित्वा-पर्वतेभ्यः पृथगुत्पाट्य । भुवि-भूतले । पातयितुम् । समुद्रम् । सद्यः-संप्रत्येव । शोषयितुं-शुष्कीकर्तुम् । अवनीं-भूमिम् । पांस्वात्मना कर्तुं-धूलीकर्तुम् । तुरवधारणे । सर्वात्मना पांसुत्वमापादयितुमित्यर्थः । भूरुहान्-वृक्षान् । द्रागुन्मूल्य-नातिचिरादेव मूलत उद्धिद्य । अम्बरे । भ्रमयितुं-उद्घूर्णितान् कर्तुं च । शक्तो भवति । कुपिताकुपितस्य शरीराशरीरचरस्य वायोः कर्माणि वातकलाकलीयाध्याये चरकेण सन्ति प्रतिपादितानि । तत्र शरीरात् बहिश्चरतः कुपितस्य वायोः कर्माणि चरकोक्तान्यनुरुध्य कविरत्रापि वर्णयति । यथा चरके—"प्रकुपितस्य खल्वस्य लोके चरतः कर्माणीमानि भवन्ति । तद्यथा—शिखरिशिखरावमथनम् । उन्मथनमनोकहानाम् । उत्पीडनं सागराणाम् । आकम्पनं च भूमेः । आधमनमम्बुदानाम् । नीहार-निर्ह्राद-पांसु-सिकता-मत्स्य-भेकोरग-क्षाररुधिराश्माशनि-विसर्गः" इत्येवमादीनि ॥ ९० ॥

**मन्त्री**—अयमेव वृद्धि-शोषहेतुः परिखाणाम्। एनमुपजीव्योत्कुप्यन्ति शुष्यन्ति च सर्वतः परिखाः।

**विदूषकः**—किं मूढो विअ पेक्खसि। करेहि एदाणं पडीआरम्। [किं मूढ इव पश्यसि। कुर्वेतेषां प्रतीकारम्।]

**मन्त्री**—अदृष्ट्वा किमेवं प्रलपसि।

**विदूषकः**—(उद्ग्रीविकया विलोक्य) अच्चरिअं अच्चरिअम्। एत्थ सत्तासत्ति वट्टइ। वड्ढंतेसु सत्तुसु के एदे वीरा रोअउलं पहरंदि। [आश्चर्यमाश्चर्यम्। अत्र शस्त्राशस्त्रि वर्तते। वर्धमानेषु शत्रुषु क एते वीरा रोगकुलं प्रहरन्ति।]

**मन्त्री**—तत्र श्लेष्मप्रभृतीन् सपुत्रांश्चन्द्रप्रभा प्रहरति।

---

**अयमिति**। अयमेव-देहे प्रकुपित एष वायुरेव। परिखाणां-शरीराख्यपुरमभिव्याप्तानां रसरक्तादिद्रवधातुमयखेयानाम्। वृद्धेः शोषस्य च हेतुः। एतस्यैव प्रकारान्तरेण विवरणम एनमुपजीव्येति वाक्यम्। **किं मूढ इति**। मूढ इव-कर्तव्यमजानन् अज्ञ इव। किं पश्यसि तूष्णीं पश्यस्तिष्ठसीत्यर्थः। उपनताया आपदः प्रतीकारकरणाक्षमो विदूषकः स्वमौढ्यं कथंचिन्मन्त्रिण्यारोपयति किं मढ इव पश्यसीत्यनेन। प्रतीकारस्याकरणे स्वस्याप्यपायः समुपनमेदिति भिया कुर्वेताषां प्रतीकारमिति प्रबुद्ध इव मन्त्रिणं प्रबोधयति। **अदृष्ट्वेति**। अदृष्ट्वा-इतः पूर्वमेव यथोचितान् मत्कृतान् प्रतीकारप्रकारान् अनवलोक्येति भावः। एवं प्रलपसि-निरर्थकं वचो विषयमजानन् इत्थं वदसि। **उद्ग्रीविकयेति**। उद्ग्रीविकया-उदग्रीविकया; शरीरमुन्नमय्य ग्रीवां दीर्घीकृत्येत्यर्थः। शस्त्रेण च शस्त्रेण च प्रवृत्तं युद्धं शस्त्राशस्त्रीति व्यतिहारलक्षणबहुव्रीहिः। **तत्रेति**। तत्र-तेषु रोगरूपेषु शत्रुषु। श्लेष्मप्रभृतीन्-वात-पित्त-कफानित्यर्थः। सपुत्रान्-श्लेष्मादिभिर्दोषैरुत्पादिता विसर्पादयो रोगास्तत्पुत्राः; तत्सहितान् दोषानित्यर्थः। चन्द्रप्रभा-तन्नामकमौषधम्। चन्द्रप्रभा गुटिका त्रिदोषाणां तदुपजनितरोगाणां

**विदूषकः**—कधं इत्थिआ वि सूराएदि । [कथं स्त्री अपि शूरायते ।]

**मन्त्री**—रक्तपुत्राणां विसर्प-प्लीहप्रभृतीनाम् अमृतागुग्गुलु-लवणपञ्चकादयः प्रहर्तारः । तथा **मांसपुत्राणां** शाखोटकतैलप्रभृतयः । मेदसः पुत्राणां कफकेसरिप्रभृतयः ।

---

च बहूनामपनोदिनीति शार्ङ्गधरादिभिरभिहितम् । अतिदीर्घः तदौषधयोगस्तदुपयोगश्च शार्ङ्गधरे मध्यमखण्डे सप्तमाध्याये द्रष्टव्यः । चन्द्रप्रभा प्रहरति-तान् रोगान् चन्द्रप्रभागुटिका नाशयति । (श्लेष्मपुत्रान् रक्तपुत्रानिति पाठान्तरम् ।)

**कथमिति** । चन्द्रप्रभाशब्दस्य स्त्रीलिङ्गत्वात् कथं स्त्री अपि शूरवत् पराक्रममाचरतीति सविस्मयोऽयं प्रश्नः । शूरवदाचरति शूरायते । **रक्तपुत्राणामिति** । विसर्पो नाम तीव्रदाहोत्पादकः शारीरव्रणविशेषः । "विविधं सर्पति यतो विसर्पस्तेन स स्मृतः । परिसर्पोऽथवा नाम्ना सर्वतः परिसर्पणात्" इति तस्य सामान्यलक्षणम । निरुक्तिश्च प्लीहाख्य उदरस्यान्तर्वामपार्श्वस्थितो ग्रन्थिरूपावयवो यदि विकृतिमधिगत्य वृद्धिमेति तं प्लीहोदराख्यं रोगं वदन्ति । "विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक् कफश्च । प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति । तद्वामपार्श्वे परिवृद्धिमेति विशेषतः सीदति चातुरोऽत्र । मन्दज्वराग्निः कफपित्तलिङ्गैरुपद्रुतः क्षीणबलोऽतिपाण्डुः" इति प्लीहोदरनिदानम् । प्रभृतय इति रक्तगुल्मविद्रध्यादयः सूच्यन्ते । विसर्प-प्लीहादिरोगा विशिष्य रक्तधातुविकृतिसंभवा इति कृत्वा रक्तपुत्राणामित्युक्तम् । "विसर्पो न ह्यसंसृष्टो रक्तपित्तेन लक्ष्यते" इति, "रक्तं लसीका त्वङ्मांसं दूष्यं दोषास्त्रयो मलाः । विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः" इत्यत्र च रक्तमेव प्रथमोपात्तम् इति च विचार्य विसर्पस्य रक्तपुत्रत्वमुपपादितम् । "प्रदुष्टमत्यर्थमसृक् कफश्च" इति रक्तस्यातिमात्रदोषादेव प्लीहोदरस्य च निष्पत्तिरिति निदानमालोच्यास्यापि रक्तपुत्रत्वं विवक्षितम् । अमृतागुग्गुलुः विसर्पम्, लवणपञ्चकं

**कालः**—कर्मन्, एवं वात-पित्त-कफेषु वात एको रस-रक्त-मांसादि-धातूनां शोषकः पोषकश्च ।

---

प्लीहोदरं च क्रमशो न्नतः । अमृतागुग्गुलुयोगो यथा—"प्रस्थमेकं गुडूच्याश्च सार्धप्रस्थं तु गुग्गुलोः । प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत् ॥ सर्वमेकत्र संक्षिप्य क्वाथयेल्लवणेऽम्भसि । पादशेषं परिस्राव्य कषायं ग्राहयेद्भिषक् ॥ पुनः पचेत् कषायं तु यावत् सान्द्रत्वमाप्नुयात् । दन्तीव्योषविडङ्गानि गुडूची-त्रिफलात्वचः ॥ ततश्चार्धफलं पूतं गृह्णीयात्त्रिवृता सह । तच्चूर्णं क्वाथयित्वाथ कोष्णं पात्रे विनिक्षिपेत् ॥ ततश्चाग्निबलं दृष्ट्वा तस्य मात्रां प्रयोजयेत्" इति सिद्धयोगादिषु । "सौवर्चलं सैन्धवं च बिडमौद्भिदमेव च । सामुद्रेण समायुक्तं ज्ञेयं लवणपञ्चकम् ॥ मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम् । वीर्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्धनम्" इति लवणपञ्चकस्य लक्षणगुणाः । सृष्टविण्मूत्र-मिति स्रंसनगुण उक्तः; स्रंसन-सूक्ष्म-दीपन-तीक्ष्णोष्णवीर्यरूपैर्गुणैर्लवणपञ्चकं प्लीहोदरहरं भवति । मांसपुत्राणां-विशिष्य मांसधातुविकृतिसमारब्धानां विद्रधि-भगन्दरार्शश्शूकदोषादीनाम् । भूर्जपत्रं यस्माद्गृह्यते स शाखोटवृक्षः । तस्य बीजं वातरक्तविद्रधिप्रभृतिरोगेषु चिकित्सकैरुपयुज्यते । तत्कृतं तैलम् । शाखोटक-स्वरससाधितं तैलं नस्यविरेचनादिषूपयुज्यते । अन्यानि च तथाविधान्यौष-धानि मांसदोषजव्याधीनां परिहारायोपयुज्यंत इति भावः । मेदसः पुत्रा मेदो-रोगादयः । कफकेसर्याख्य औषधयोगः कफकुञ्जरनाम्ना प्रसिद्धः । स च योगो यथाः—"रसगन्धौ समांशौ च स्नुह्यर्कपयसोः पलम् । पलं च पञ्चलवणमेकीकृत्यावचूर्णयेत् ॥ आलोड्य चार्कदुग्धे तत् पूरयेच्छङ्खमध्यतः । पिप्पलीभकणाचूर्णं सजलं तत् प्रलेपयेत् ॥ प्रज्वालयेद्याममात्रं सूक्ष्मचूर्णं च कारयेत् । कफमेदोद्भवं रोगं नाशयेत् कफकुंजरः ॥" इति योगरत्ना-करे । **कर्मन्निति** । "दोषधातुमला मूलं सदा देहस्य तं चलः । (चलो वायुः) उत्साहोच्छ्वासनिःश्वासचेष्टावेगप्रवर्तनैः ॥ सम्यग्गत्या च धातूनाम्

**कर्म**—एवमेवैतत्। धातूनां प्रकोपे धातुकार्श्ये च भिषजो वदन्ति 'कटुकादयो मांसादिवृद्धिहेतवः' इति।

"कटुकाद्वर्धते मांसं कषायाच्छोणितं रसः।
लवणाद्वर्धते ह्यस्थि मज्जा त्वम्लात् प्रवर्धते॥
मधुराद्वर्धते शुक्रं तिक्तान्मेदः प्रवर्धते"। इति च।

**विदूषकः**—(परिवृत्यावलोकितकेन) अज्ज इदं होदु जुज्झदंसणम्। पेक्खदु भवं

---

अक्षाणां पाटवेन च। अनुगृह्णात्यविकृतः" इति, "वृद्धस्तु कुरुतेऽनिलः। कार्श्यकार्ष्ण्योष्णकामित्वकम्पानाहशकृद्ग्रहान्। बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः" इति च वाग्भटादिभिरुक्ताः प्राकृताः प्रकोपजाश्च शारीरवायोर्गुणाः 'वात एको रस-रक्त-मांसादीनां धातूनां शोषकः पोषकः' इत्यनेन सूचिता भवन्ति। **एवमेवेति**। धातूनां-रसरक्तमांसमेदोऽस्थिमज्जाशुक्राख्यानां सप्तानां प्राणिशरीरघटकानां पदार्थानाम्। प्रकोपे-अभिवृद्धौ। धातुकार्श्ये-तद्धातूनां क्षये च। भिषजो वदन्ति-धातूनां वृद्धौ क्षये च कटुकादयो रसाः प्रभवन्तीति वैद्या वदन्ति।

पूर्वोक्तमेव विषयं वचनान्तरेण निर्धारयति **कटुकादिति**। कटुकात्-कटुरसात् उपयुक्तात्। मांसं-मांसधातुः। वर्धते। कषायात्-कषायरसात्। रसः-रसाख्यः प्रथमो धातुः, शोणितं-रक्तधातुश्च वर्धेते। लवणात् अस्थि वर्धते। अम्लात् मज्जाख्यः षष्ठो धातुः। प्रवर्धते। मधुरात्-प्रथमरसात्। शुक्रं नामान्तिमो देहधातुः प्रवर्धते। तिक्तात् मेदो नाम स्नेहधातुः प्रवर्धते। इति च भिषजो वदन्तीति पूर्वेणान्वयः।

**अज्ज इदमिति**। एतत् युद्धदर्शनं-रोगाणाम् औषधानां च निर्वर्तमानस्यायोधनस्यावलोकनम्। भवतु-अस्तु नाम; अलं-तद्दर्शनेनेति भावः। पुरः

पुरट्ठिदं अच्चरिअम् । [अथैतद्भवतु युद्धदर्शनम् । पश्यतु भवान् पुरः स्थित-माश्चर्यम् ।]

**राजा**—अमात्य, किमेतत् पश्यसि ।

**मन्त्री**—(विहस्य) पश्याम्येतत् ।

एतत्पङ्गुद्वितयमनिलश्चारयत्याशयेषु
त्रिष्वश्रान्तं जरठगणिका काचिदेषा परस्तात् ।
आजान्वग्रप्रविततकुचा लोभयन्ती प्रसूते
हन्तानर्थाङ्कुरमनुगता सर्वदा देहभाजाम् ॥ ९१ ॥

---

स्थितं-अस्माकं पुरस्तान्निर्वर्तमानम् । आश्चर्य-विस्मयनीयं किमपि वृत्तम् । पश्यतु । **अमात्येति** । (अमात्येति स्थाने आर्येति पाठान्तरम् ।) यत त्वं पश्यसि पुरतः, एतत् किमिति मन्त्रिणं पृच्छति राजा । यद्वा किमेतत् पश्यसि-पुरः स्थितमेतत् किम्; अपि नाम तदेतत् त्वं पश्यसीति चार्थः साधुरेव ।

विषयलाघवं सूचयति विहस्येति । किमेतत् पश्यसीति जीवराजकृत-**प्रश्नस्य उत्तरमाह पश्याम्येतदिति** । किमेतदिति जानामीत्यर्थः ।

यदाश्चर्यकरमित्युक्तं विदूषकादिभिस्तदेव विशदयति **एतदिति** । अनिलः-वातदोषः । एतत पङ्गुद्वितयं—“ पित्तं पङ्गु कफः पङ्गुः ” इत्युक्तरूपौ उभौ पित्त कफाख्यौ वातपरतन्त्रौ दोषौ । त्रिषु आशयेषु-पक्वाशयनाभ्युरस्संज्ञकेषु वाताशय-पित्ताशय कफाशयत्वेन व्यवह्रियमाणेषु आशयेषु । अश्रान्तं-नैरन्तर्येण । चारयति-नयति । “ वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत् ” इत्युक्तरीत्या, वाताहतमेघा इव स्वतन्त्रगतिमता वातदोषेण यत्र यत्र नीयन्ते तत्र तत्र तत्परतन्त्रौ पङ्गुसमानौ पित्त-कफौ धातवश्चापरे चरन्तीति सिद्धान्तः । दोषाणां त्रयाणामपि स्थानात् स्थानान्तरप्राप्तेरत्र सूचितत्वात् सान्निपातिक-विकारोऽद्य प्रस्तूयत इति ज्ञातव्यम् । तदानीमेवापथ्यताप्रसक्त्या पुरुषस्यानर्था-

**कालः**—सम्यगुक्तं मन्त्रिणा, यत् पित्त-कफौ पङ्गू इति भिषक्प्रसिद्धिः। आशयेष्विति कफ-पित्त-वातानामाशया विवक्षिताः। अपथ्यतां जरठ-गणिकेति निरूपयति। अनर्थाङ्कुर इति च तत्प्रभवरोगसमुदायम्।

**कर्म**—साधु निरूपितं भगवता।

**राजा**—किमिदमपथ्यरिभिरेव कृतम्।

**मन्त्री**—कः सन्देहः। श्रूयताम्—

---

गमः संपद्येत। आजान्वग्रप्रविततकुचा-जानुपर्यन्तं लम्बमानस्तनद्वया। परस्तात् अनुगता-सन्निपतितानां दोषाणां पश्चादनुगच्छन्ती। (पुरस्तादिति च पाठः।) एषा-दृश्यमाना। काचित् जरठगणिका-वृद्धवारस्त्री। "अयमतिजरठाः प्रकाम-गुर्वीरलघुविलम्बिपयोधरोपरुद्धाः" इति (४-२९) माघवर्णनमयमनुसरति प्रयोगः। सैव अपथ्यता। अपथ्यताया अत्र वृद्धगणिकात्वविवक्षा। सर्वदा-स्वास्थ्ये चास्वास्थ्ये च सर्वेषु समयेष्वपि। लोभयन्ती-प्रलोभनमापादयन्ती; तेषु तेषु असात्म्येषु पदार्थेषु विषयेषु च बलादनुचिततृष्णोत्पादनेनावर्जयन्तीति यावत्। देहभाजां-प्राणिनाम्। अनर्थाङ्कुरं-रोगरूपानिष्टकन्दलम्। प्रसूते-उत्पादयति। हन्तेति-विषादे। पञ्चमाङ्के "जीवं प्रविश्य तमपथ्येष्वाहार-विहारादिषु नियोजय" इति पाण्डुना अपथ्यतायै कृतं नियोगमेव साद्य कर्मणा निर्वर्तयितुं यतत इति ज्ञातव्यम्॥ ९१॥

सम्यगिति। पूर्वपद्योक्तान् पारिभाषिकान् विषयानेव कालः कर्मणे सुस्पष्टं कथयति सम्यगुक्तमित्यादिभिः। साध्विति। साधु निरूपितं-सुष्ठु पद्यार्थः प्रतिपादितः। (भगवता इति पदं क्वचित् पुस्तके नास्ति।)

पाण्डुः स्वस्य निशम्य मत्सरमुखात्तूलायितं विक्रमं
सेर्ष्यो मामकवाचिकेन हृदये राज्ञा निषिद्धोऽपि सन् ।
प्रज्ञागर्ववशान्मदीयविजये जाताभिलाषोऽब्रवी-
दित्थं सान्त्वमपथ्यतां निजकुले स्नेहप्रकर्षान्विताम् ॥ ९२ ॥

---

पाण्डुरिति । पाण्डुः-यक्ष्ममन्त्री । मत्सरमुखात्-मत्सरोक्तेन विज्ञानशर्मवचनेनेति भावः । स्वस्य-पाण्डोः । विक्रमं-चारप्रेषण पुरनिरोधनादिरूपं पराक्रमम् । तूलायितं-तूलवन्निष्फलत्वमापादितम् । निशम्य-श्रुत्वा । "ततः कामादिषु तत्र तादृशीं दुरवस्थां प्रपन्नेष्वहमेक एव हतभाग्यतया वैरिवशं गतस्तत्कृतमवमानजातमशरणतया सहमानस्तदीयभटैरितस्ततो विकृष्यमाणस्तदुदितवाचिकमपि निशमयन्" इत्यादिकं (दृश्यतां ९ अङ्के ३६ श्लोकानन्तरम्) मत्सरमुखाच्छ्रुत्वेति यावत् । मामकवाचिकेन—"राज्ञः सन्निधिमृच्छ भद्र कथय त्वं पाण्डुं" इति (अङ्क. ९. पद्यं. १९) पद्योक्तेन सन्देशेन । हृदये-स्वमनसि । सेर्ष्यः-असूयायुक्तः सन् । राज्ञा-राजयक्ष्मणा । निषिद्धोऽपि-निवारितोऽपि सन् । प्रज्ञायाः-राज्यतन्त्रनिर्वहणविषयकप्रवीणतायाः, गर्ववशात्-अहङ्कारवशात् । मदीयविजये-स्वकर्तृकमामकजये ; विज्ञानशर्मणोऽपजयोत्पादनविषय इति यावत् । जाताभिलाषः-समुत्पन्नलालसः । निजकुले-यक्ष्मपाण्डुप्रभृतीनां कुटुम्बके वर्गे वा । स्नेहस्य प्रकर्षः-प्रीत्या आधिक्यम्, तेनान्वितां-युक्ताम् । अपथ्यतां-असात्म्येषु (आरोग्याननुकूलेषु) आहारविहारेषु अनुचितां तृष्णाम् ; अपथ्यताख्यां स्वकुलपक्षपातिनीं स्त्रियमिति भावः । इत्थं-वक्ष्यमाणरीत्या । सान्त्वं-तस्या हृदयङ्गमं वचनम् । अब्रवीत्-स्वस्यानुकूल्यं शत्रोरनिष्टं च यथा समुपनमेत् तथा यतितव्यमिति पाण्डुरपथ्यतां प्रति सूनृतेन वचसाकथयदिति भावः ॥ ९२ ॥

**विदूषकः**—कहं संतं उत्तवन्तो पाण्डू अपत्थदम् । [कथं सान्त्वमुक्तवान् पाण्डुरपथ्यताम् ।]

**मन्त्री**—एवम्—

" अप्यस्मत्कुलपक्षपातिनि यथाकामोपभोगप्रदे
किं नात्मप्रभवं कुलं गणयसि प्रक्षीयमाणं शनैः ।
औदासीन्यमिदं कुतस्तव विनोपेक्षां यदि व्यापृता
त्वं नालं बलवानपि प्रभुररिः स्थातुं कुतोऽस्यानुगाः" ॥ ९३ ॥ इति ।

---

कहमिति । पाण्डुः कर्ता । अपथ्यतां प्रति । सान्त्वं-सूनृतवचनम् । उक्तवान् ।

अयीति । अस्मत्कुले-यक्ष्मादीनां वर्गे, पक्षपातिनि-आसक्तिमति । यथाकामोपभोगस्य-यथेष्टसुखानुभवस्य, प्रदे-प्रदात्रि; अस्वस्थावस्थायामपि यथेच्छाहारविहारेषु प्रवृत्त्युत्पादकेति भावः । अयि-अपथ्यते । आत्मप्रभवं-त्वत्तोऽपथ्यताया उत्पन्नम् । कुलं-पाण्डुयक्ष्मादीनां सन्ततिम् । शनैः-क्रमशः । प्रक्षीयमाणं किं न गणयसि ; अस्मदीयानां त्वदुपजीविनां विज्ञानशर्मप्रयुक्तैरौषधादिभिः क्रमेणोपनतां क्षीणावस्थां किं नाम त्वं सांप्रतमपि नावलोकयसीति भावः । तव-अपथ्यतायाः । इदम् औदासीन्यं-एतादृशमस्मत्कुशलविषये नैरपेक्ष्यम् । कुतः-कथमुत्पन्नमित्यर्थः । त्वम् । उपेक्षां विना-औदासीन्यं विहाय । यदि व्यापृता-शत्रोरावर्जनविषये प्रवर्तसे चेत् । बलवानपि-षाड्गुण्यसंपन्नोऽपि । प्रभुः अरिः-नृपात्मकोऽस्मच्छत्रुः । स्थातुं-तव पुरतो धैर्येण वर्तितुम् । नालं-न शक्तो भवति । अस्य-प्रभुरूपस्यारेः । अनुगाः-धारणाभक्तिश्रद्धाप्रभृतयोऽनुचराः । कुतः-स्थातुं न शक्ताः स्युरित्यत्र किमु वक्तव्यम् । स्वेषां नायके जीवराजे त्वत्पुरतः स्थातुमशक्यतया धावमाने तदनुचरा अनुपदमेव हतवीर्या निपतेयुरित्यत्र किमु वक्तव्यमिति भावः । (अप्यस्मत्कुलेति, पथा कामोपभोगेति च पाठस्त्वसाधुः ।) ॥ ९३ ॥

"अतस्त्वां विज्ञापयामि । संप्रति शत्रुपुरं प्रविशन्ती तत्तदभिमतेन तेन तेन रसेनाशयगतानस्मत्कुलकारकान् रसवाहिनीभिर्नाडीभिश्च पोषयन्ती राजानमपि स्ववशं नयन्ती भेदय विज्ञानहतकात्" इत्युपदिश्य मन्दाग्निना सह प्रेषितवान् ।

---

अत इति । अतः-पूर्वपद्योक्ताद्धेतोः । त्वां विज्ञापयामि । शत्रोः पुरं-देहम् । प्रविशन्ती-पथ्येतरेषु विषयेषु चापल्यमुत्पादयितुं जिह्वादिषु समाविशन्ती । तत्तदभिमतेन-तत्तद्व्यक्तिविशेषस्येष्टेन । तेन तेन रसेन-षड्रसेषु यस्य यस्य योऽभिमतस्तेन तेन रसेन । आशयगतान्-वाताद्याशयमधिष्ठितान् । अस्माकं-पाण्ड्वादिरोगाणाम्, कुलस्य कारकान्-उत्पादकान्, वातादिदोषानित्यर्थः । "दोषा एव हि सर्वेषां रोगाणामेककारणम्" इत्येतत्प्रमाणानुरोधेन इदं संभवति । तान् दोषान् रसवाहिनीभिः नाडीभिः-रसवहस्रोतोभिश्च । पोषयन्ती-अपथ्याशनादिभिर्दोषभूयिष्ठैरेव संतर्पयन्ती । राजानं-जीवराजमपि । स्ववशं नयन्ती-अपथ्यसेवनासक्तं कुर्वन्ती । विज्ञानहतकात्-दुष्टाद्विज्ञानशर्मणः । भेदय-तस्मात् परावृत्तचित्तं कुरु; तयोः परस्परं द्वैधीभावमुत्पादय । अस्या अपथ्यताया दौश्शील्यादेव "तदतिशयेन संपादनीयो मम पान-भोजनविधिरिदानीम्" इति (६-३९ पद्यस्यानन्तरम्) बह्वाहाराशनातुरत्वं राज्ञः समुपनतमित्यभिहितम् । "स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च" इति स्रोतसां लक्षणम् । "आहारश्च विहारश्च यः स्याद्दोषगुणैः समः । धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः" इति, "प्राणधातुमलाम्भोऽन्नवाहीन्यहितसेवनात् । तानि दुष्टानि रोगाय विशुद्धानि सुखाय च" इति च स्रोतोदुष्ट्या रोगाभिवृद्धिप्रकारश्च वाग्भटेन प्रत्यपादि । मन्दाग्निः-अग्निमान्द्यरोगः, तेन सह । जाठराग्नेः पाचनशक्तिराहित्यादेष विकारः प्रादुर्भवति । अग्निमान्द्ये सति विदग्धामाजीर्णादयः संभवन्ति; तस्यामवस्थायाम् अपथ्यतापि यदि प्रवर्तते तदा रोगो बहुमुखः पुरुषशरीरे कन्दलितः स्यात् । अतो मन्दाग्निना सह पाण्डुरपथ्यतामपि पुरुषशरीरप्रवेशाय

**विदूषकः**—अच्चरिअं एदाए दूतत्तणं; जाए पंगुणो वि चालिदा। पेक्ख दाणिं वि किं वि मंतअंती चिट्ठदि। सुणाहि दाव तूह्णीओ भविअ। [आश्चर्यमेतस्या दूतत्वम्; यया पङ्गवोऽपि चालिताः। पश्येदानीमपि किमपि मन्त्रयन्ती तिष्ठति। शृणु तावत्तूष्णीको भूत्वा।]

(ततः प्रविशन्त्यपथ्यतया सह मन्दाग्नि-वात-पित्त-कफाः।)

**मन्दाग्निवातपित्तकफाः**—अयि रसवति, किमु वक्तव्यमस्मदीया रोगा इति। यतस्त्वत्सन्ततिः खल्वेते। त्वयैव वशीकृतेऽस्मिन् राजनि एतत्पुरे सुकरस्तेषां प्रवेशः। वयं तु तत्र निमित्तमात्रम्।

**कालः**— कर्मन्, रसवतीत्यपथ्यताया नामान्तरेण भवितव्यम्।

---

चोदयति। **अच्चरिअमिति**। एतस्याः-अपथ्यतायाः। दूतत्वं-दूतकृत्यम्। पङ्गवः-कफपित्तधात्वादयोऽपि। चालिताः-स्वस्वाशयात् आशयान्तरं स्वयमेव गत्वा तत्र तत्र यथा व्याप्ता रोगजनका भवेयुस्तथाविधशक्तिसंपन्नाः कृताः। इदानीमपि-औषधानां रोगैः सहायोधननिर्वर्तनसमयेऽपि। किमपि-जीवराजप्रलोभकं किमपि। मन्त्रयन्ती-स्वजनैः सहालोचयन्ती।

**अयीति**। रसः-आस्वादनरुचिः अस्या अस्तीति रसवती-अपथ्यता; अपथ्यता, रसवती, रुचिमती इति अनर्थान्तराणि नामानि। इममर्थमानन्तरिकाणि च वाक्यानि विशदयेयुः। रोगाः अस्मदीयाः-तव चास्माकं च संबन्धिन इत्येतत् किमु वक्तव्यम्; सम्यक् पूर्वमेव वातादयोऽपथ्यता च रोगाणां समुत्पादका इति ज्ञात एवायं विषय इति भावः। यतो हेतोः। एते-रोगाः। त्वत्सन्ततिः-त्वत्तः समुत्पत्तिमधिगत्य प्रवृत्तिः खल्वेतेषामिति यावत्। अस्मिन् राजनि-जीवराजे। त्वयैव वशीकृते सति। नान्यैर्वशीकर्तुं शक्यत इति सूचयत्येवकारः। एतत्पुरे-अस्मिन् शरीराख्ये नगरे। तेषां-रोगाणाम्। प्रवेशः सुकरः-सुखसाध्यः। तत्र-तथा नगरप्रवेशविषये। वयं तु निमित्तमात्रं-

कर्म—रुचिमतीत्यप्येतस्या नाम ।

विदूषकः—एसा ताडआ विअ भीमणा अणुवट्टदि मम् । [एषा ताटकेव भीषणानुवर्तते माम् ।]

मन्त्री—राजा चाहं च राम-लक्ष्मणाविव वर्तावहे ।

विदूषकः—अहं वि कोसिओ विअ । (अहमपि कौशिक इव ।)

राजा—(विहस्य) तादृक्प्रभावो महर्षिः खलु भवान् ।

विदूषकः—भो वअस्स, एसो अमच्चो एदाए मं बलिं दाऊण अत्ताणं मोएदुं अहिलसंतो विअ दीसइ । दाणिं भवं जेव्व मह सरणम् । [भो वयस्य, एषोऽमात्य एतस्या मां बलिं दत्वा आत्मानं मोचयितुमभिलषन्निव दृश्यते । इदानीं भवानेव मम शरणम् ।]

---

वातादिदोषाणाम् अवस्थानं व्याजमात्रं भवतीति यावत् । अथ रसवतीति रुचिमतीति चापथ्यताया नामान्तरे विद्यत इति काल कर्मभ्यां सूच्यते । एसेति । भीषणा-भयावहा । एषा-अपथ्यता । ताटकेव-ताटकावद्राक्षसीस्वभावा । माम् अनुवर्तत इति प्रकृत्या वीतधैर्यस्य काल्पनिकोऽयं मनोभावः; वस्तुतोऽमुं नैषानुवर्तते । अथवा बह्वशनशीलमिमं विदूषकं प्रकृत्यैव रसवती नूनमनुवर्तत इति च सूचितं भवत्यनेन । (मामिति क्वचित् पुस्तके नास्ति ।) राजेति । यदि ताटका भवत्यपथ्यता, तर्हि राजा चाहं च रामलक्ष्मणाविव वर्तावह इति मन्त्री तस्य धैर्यमुपजनयति । राम-लक्ष्मणौ ताटकामिव आवामिमामपथ्यतां हन्यावह इति भावः । अहंवीति । मन्त्रिणा किञ्चिदिव धैर्यमुत्पाद्योत्तेजितत्वात् कौशिक इवाहमपि वर्त इति विदूषकोऽपि वक्तुमुपचक्रमे । तस्य मनुष्यान्तरोत्पादितं धैर्यं क्षणानुबन्धीति ज्ञापयत्यनुपदमेव भो वअस्सेति । एतस्याः-अपथ्यताराक्षस्याः । बलिं दत्वा-उपहारत्वेन व्यापादनायार्पयित्वा । आत्मानं-

**मन्त्री**—वैधेय, क्षणं तूष्णीं तिष्ठ । शृणुमः शेषमपि वचनमेषाम् ।

**वातादयः**—अयि रुचिमति,

त्वां वीक्ष्य जागरूकां तस्यां तस्यां रुचौ प्रविष्टायाम् ।
स्वत एव भिद्यतेऽसौ विज्ञानादञ्जसा राजा ॥ ९४ ॥

**राजा**—अमात्य,

आलापादेतेषां कुलालदण्डावघट्टनादिव मे ।
हृदयं भ्रमतीदानीं सहसा चक्रमिव किन्न्वेतत् ॥ ९५ ॥

---

मन्त्रिणम् । इदानीं-एतादृशापत्समये । वैधेयेति । हे वैधेय मूर्ख । मदीयमाशय-मुद्यमं चाजानन्नेव मूढस्त्वं किमपि प्रलपसीति ज्ञापयितुं वैधेयेति संबोधनम् । एषां-मन्दाग्निवातादीनाम् । शेषमपि वचनं-उक्तशेषमपि सल्लपनम् ।

वातादीनां सल्लपनशेषमेवाह अयीति । त्वामिति । अयि रुचिमति-अपथ्यते । तस्यां तस्यां रुचौ-मधुराम्ललवणादिरसास्वादे । प्रविष्टायां-शरीरान्तः सम्यक् स्थानमधिगतायाम् । असौ राजा-जीवराजः । त्वां-अपथ्यताम् । जागरूकां-स्वस्यावर्जने कृतावधानाम् । वीक्ष्य-सम्यगालोच्य ; इयमेव मया सेवनीयेति समीक्ष्येति भावः । विज्ञानात्-मन्त्रिणः । स्वत एव-परनिर्बन्धं विनैवेत्यर्थः । अञ्जसा-विनैव विलम्बम् । भिद्यते-तत्सम्बन्धं जहाति । अतोऽस्माकं रोगैः सहोज्जृम्भणकालः संनिकृष्ट एवेति सन्तुष्यन्त्येते मन्दाग्निप्रभृतय इति मन्तव्यम् । (तस्यां तस्यां रुजीति पाठान्तरम् । तस्यां तस्यां रुजि-तस्मिंस्तस्मिन् रोगे । प्रविष्टायां-शरीरमनुप्रविष्टायाम् । इति तस्यार्थः) ॥ ९४ ॥

**आलापादिति** । अमात्य-मन्त्रिन् । इदानीं-संप्रत्येव ; नेतःपूर्वमिति भावः । (अमात्येति संबोधनं क्वचिन्नास्ति ।) कुलालस्य-कुम्भकारस्य, दण्डेन-यष्टिना, अवघट्टनात्-परिवर्तनार्थं प्रहरणादिव स्थितात् । एतेषाम् आलापात् -वातादीनां

**विदूषकः**—अण्णं किम्। दिढं खु गिहीदो सि तुमं एदाए अपत्थ-दापिसाचिआए। अहं उण छवेदो बह्मणो होमित्ति सज्झसेण इमाए विसज्जिदो ह्मि। [अन्यत् किम्। दृढं खलु गृहीतोऽसि त्वमेतया अपथ्यता-पिशाचिकया। अहं पुनः षड्वेदो ब्राह्मणो भवामीति साध्वसेनानया विसर्जितोऽस्मि।]

**मन्त्री**—(विहस्य) षड्वेदा इत्यनया संख्ययैव सूचितं संख्येयवेदविज्ञानम्।

**राजा**—किं विस्मृतं त्वया, यत् प्रागेव मम मनीषितार्थं विदूषकेण बोधितोऽसि।

---

संभाषणात्; संभाषणस्याकर्णनादिति भावः। मे हृदयं-मम मनः। चक्रमिव-कुम्भकारचक्रमिव। सहसा-आकस्मिकतया। भ्रमति-परिभ्राम्यति। किं तु एतत् अवस्थान्तरमद्य कुतः समुत्पन्नमिति संशयानो राजा सचिवं पृच्छति। तेषामालापस्याकर्णनसमनन्तरमेव सन्निपतितदोषवेगाभिपीडितो राजा सुतरा-मुद्भ्रान्तहृदयो विवशः कामपि समधिगतवान् दुरवस्थामिति भावः॥ ९५॥

अण्णं किमिति। अपथ्यतापिशाचिकया दृढं खलु गृहीतोऽसि; तदुप-जनित एवैष विकार इति विदूषकोऽपि विषयं विशदयति। षट् वेदा यस्य सः-अधि-गतषड्वेद इत्यर्थः। वेदाश्चत्वार इति वक्तव्ये षड्वेदा इति वचनं विदूषकस्याज्ञत्वं व्यञ्जयति। साध्वसेन-भीत्या। अधीतवेदं विप्रं पिशाचादयो नोपसर्पन्तीति शास्त्रविदो वदन्ति। षड्वेदा इति। संख्ययैव-षडिति संख्ययैव। संख्येया-संख्यया गणनीया ये वेदाः तेषां विज्ञानं-वेदशास्त्रज्ञानमिति यावत्। किमिति। मम मनीषितार्थं-मदभिलषितविषयार्थम्; मदभिलषितान्नपानादीनां यथेष्टदानेन मत्प्री-णनार्थमिति भावः। विदूषकेण यत् प्रागेव बोधितोऽसि; "बुभुक्खिदो वग्घो विअ भक्खिदुकामो राआ; मा खु णं णिवारेहि" इत्यादिकं पूर्वं (अस्मिन्नेवाङ्के ३६ पद्यस्य प्राक्) विदूषकेण बोधितम्। "अमात्य सज्जीक्रियतामनेनोक्तं सर्वमपि"

मन्त्री—(स्वगतम्) अहो त्रुटितसंघटिताया दास्या दुर्विलसितं यदियन्तं कालं विस्मृतापि बुभुक्षा स्मृता सती राज्ञो हृदयमाकुलयति। (प्रकाशम्) तदप्यग्रे भविष्यति। देवेन तु एतद्वैरिप्रयुक्तमिति निश्चित्य तद्वशे न भवितव्यमिति बहुशः प्रार्थये।

राजा—(सबहुमानम्) तथ्यं पथ्यं चाह भवान्। तदहमवहितोऽस्मि।

विदूषकः—को एसो विज्जुप्पुंजो विअ धगधग्गाअमाणो सव्वदो वि मह अक्खिणी आउलेदि। [क एष विद्युत्पुञ्ज इव धगधगायमानः सर्वतोऽपि ममाक्षिणी आकुलयति।]

मन्त्री—परिवारपरिवृतो ज्वरराज एषः। यमेनमुपरुध्य सर्वेऽपि रोगाः प्रहरन्ति। अत एवायं राजपदभागिति भिषग्व्यवहारः।

---

इत्येतच्च। तमनुरुध्य यदुक्तं मया तदपि। त्वया-मन्त्रिणा। विस्मृतं किम्। अहो इति विस्मये। त्रुटिता चासौ संघटिता च-विच्छेदं प्रापिता पुनः संयुक्ता तस्याः। दास्याः-कुलटाया अपथ्यतायाः, यामेव जरठगणिकेति पूर्वमभिहितवान्। दुर्विलसितं-दुश्चरितम्। यत्-यतः। विस्मृता-अपथ्यताया मध्ये त्रुटितत्वात् राज्ञः स्मृतिपथादपगता। बुभुक्षा-बहुक्षुत्, स्मृता सती-अपथ्यतादीनां पुरतः समागमहेतोः स्मृतिमारूढा सती। राज्ञो हृदयमाकुलयति-तद्धृदयं चक्रारूढमिव क्षोभयति। तदपि-विदूषकोक्तरीत्या भवदभिलषितार्थसाधनमपि। अग्रे भविष्यति इतःपरं करिष्यते। तद्वशे-तस्या बुभुक्षाया वशे। **तथ्यमिति**। एतद्वैरिप्रयुक्तमिति बोधनं तथ्यम्; तद्वशे न भवितव्यमिति बहुशः प्रार्थनं तु पथ्यम्। अवहितोऽस्मि-अन्नपानादिग्रहणविषये सावधानचित्तो भवामि। **को एसो इति**। धगधगायमानः-अग्निप्लुष्टलोहखण्डवत् महोष्णविशिष्टः। **परिवारेति**। ज्वरराज इति राजत्वस्य हेतुमग्रे वक्ष्यति। परिवारपरिवृतः-स्वेदावरोधसंतापाङ्गग्रहणश्रमारतिजृम्भाङ्ग-

कर्म—युक्तमाह मन्त्री । तथाहि—

ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ।
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ २६ ॥
जन्मान्तयोर्मोहमयः संतापात्मापचारजः ।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ २७ ॥

---

मर्दवेपथुप्रभृतिभिः बहुभिरनुचरैः संवृतः । एनं-ज्वरराजम् । उपरुध्य-अनुसृत्य । सर्वेऽपि रोगाः-अपरे व्याधयः सर्वेऽपि । भिषग्व्यवहारप्रकारं वक्ष्यति ।

राजपदभागिति भिषग्व्यवहार इति यन्मन्त्रिणोक्तं तत्सप्रमाणमित्याह युक्तमिति । युक्तत्वमेव प्रमाणवचनप्रदर्शनात् ज्ञापयति ज्वर इत्यादिश्लोकद्वयेन । ज्वर इति सामान्यं रोगनाम । रोगपतिः "ज्वरः प्रधानो रोगाणामुक्तो भगवता पुरा" इत्युक्तत्वात् रोगाणां पतिरित्यभिहितम् । पाप्मा-पापजन्यत्वं ज्वरस्य महर्षिभिः कथितम् । सर्वे रोगाः पापकर्मणः फलभूता विशिष्यैष ज्वरः । मृत्युः-यमस्वरूपत्वं पुराणेषु वैद्यके च ज्वरस्य प्रतिपादितम्; तथाहि—"कालान्तकयमोपमः" इति हरिवंशे, "कालो ह्येष यमश्चैव नियतिर्मृत्युरेव च" इति सुश्रुते च । ओजः-तदाख्यं तेजोधातुम्, अश्नातीति ओजोऽशनः; ज्वरेणाभिद्रुते देहे नश्यत्योजः; अतोऽयं रोग ओजोऽशनः । अन्तं-देहविनाशं जनयतीति अन्तकः । "ज्वरः पाप्मा मृत्युश्चोक्तोऽयमात्मजः" इति चरकः । क्रोधः-रुद्रकोपाग्निसंभूतत्वात् स्वयं क्रोधस्वरूपः । "ज्वरस्तु खलु महेश्वरकोपप्रभवः" इति निदाने चरकः । दक्षाध्वरध्वंसी-दक्षप्रजापतिकृतयागध्वंसायोत्पन्नो रुद्रकोप एव ज्वरः संजात इति प्रसिद्धिः । "स्पृष्ट्वा ललाटे चक्षुर्वै दग्ध्वा तानसुरान् प्रभुः । बाणं क्रोधाग्निसंतप्तमसृजच्छत्रुनाशनम् । तमुवाचेश्वरः क्रोधं ज्वरो लोके भविष्यसि" इति चरकचिकित्सायाम् । रुद्रस्य ऊर्ध्वनयनात्-ललाटनेत्रात, उद्भवः-उत्पत्तिर्यस्य सः ।

कालः—कर्मन्, नानायोनिष्विति सुष्ठूक्तं त्वया ।

पाकलस्तद्यथेभानामभितापो हयेषु च ।
वान्तादानामलर्कः स्यान्मत्स्येष्विन्द्रमदः स्मृतः ॥ ९८ ॥
ओषधीषु तथा ज्योतिश्चूर्णपो धान्यजातिषु ।
जलेषु नीलिका भूमावूषो नृणां ज्वरो मतः ॥ ९९ ॥

---

जन्म चान्तश्च जन्मान्तौ तयोः । मोहमयः-मूर्छात्मकतया जायमान इत्यर्थः । "ज्वरप्रभावो जन्मादौ निधने च महत्तमः" इति, "तस्य प्राणिसपत्नस्य ध्रुवस्य प्रलयोदये" इति च चरकादिषु । संतापात्मा-संतापस्वरूपः । "देहेन्द्रियमनस्तापी" इति चरके । अपचारजः-"मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः । बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः" इत्यभिहितैः मिथ्याहाराद्यपचारैरुत्पन्नः । क्रूरः-लक्षणतः कार्यतश्चोग्रः । विविधैर्नामभिः-पूर्वोक्तैः वक्ष्यमाणैश्च बहुविधैर्नामभिः युक्तः । नानायोनिषु-विविधेषु प्राणिषु । वर्तते । श्लोकद्वयस्येयमानुपूर्वी वाग्भटनिदानस्थानादुद्धृता ॥ ९६, ९७ ॥

**कर्मन्निति** । नानायोनिष्विति । त्वया-कर्मणा । सुष्ठूक्तं-सम्यगभिहितम् । नानायोनिषु । पृथग्विधैर्नामभिर्ज्वरस्योत्पत्तिमेवाह **पाकल इति** । तद्यथेति तान् विशदयति । इभानां-गजानाम् । पाकलः-तन्नामा ज्वरः स्यात् । हयेषु-अश्वेषु । यो ज्वरः संभवति, सोऽभितापः । वान्तं-छर्दितम् अदन्तीति वान्तादाः-श्वानः तेषाम् । अलर्कः-अलर्को नाम ज्वरः स्यात् । मत्स्येषु यो ज्वरः संभवति स इन्द्रमद इति स्मृतः । ओषधीषु-तरुलताप्रतानादिषु । तथा जायमानो ज्वरः ज्योतिर्नाम्ना स्मृतः । धान्यजातिषु-व्रीहिचणकगोधूमादिषु । यो ज्वरः स चूर्णप इत्युच्यते । जलेषु-अप्सु यो विकारः स नीलिका । भूमौ-पृथिव्याम् । यो ज्वरविकारः स ऊषः-ऊषराख्यो भवति । नृणां-मनुष्याणाम् । स एव ज्वरो मतः । "पाकलः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञश्च

राजा—पश्य सखे पश्य,

त्रिकूटाद्रेः कूटैस्त्रिभिरिव शिरोभिः प्रतिभयो
दिशः पश्यन् दृग्भिः शशरुधिरसोदर्यरुचिभिः ।
त्रयाणां पादानां तृणतरुसमुच्छ्रायजयिना-
मयं न्यासैर्भूमिं नमयति गदानामधिपतिः ॥ ६० ॥

---

मानवानां ज्वरो मतः । पक्षिणामभिघातस्तु मत्स्येष्विन्द्रमदो मतः । पक्षपातः पतङ्गानां व्याडेष्वक्षिकसंज्ञितः" इति वैद्यकेऽभिहिता विषया एवात्रोपपादिताः ॥ ५८, ५९ ॥

पश्य सखे पश्येति ज्वरस्य पुराणप्रसिद्धं मूर्तिमत् भीषणं रूपं राजा मन्त्रिणे सोद्वेगं प्रदर्शयति । त्रिकूटाद्रेरिति । त्रिकूटाद्रेः-त्रिकूटाख्यस्य लङ्कास्थितपर्वतस्य । त्रीणि कूटानि-शिखराण्यस्येति तस्येयमन्वर्थसंज्ञा । त्रिभिः कूटैरिव स्थितैः । शिरोभिः-त्रिभिर्मस्तकैः । प्रतिभयः-भयङ्करः । शशरुधिरस्य सोदर्या समानाः, रुचयः-कान्तयः यासां ताभिः । शशरुधिरं प्राण्यन्तररुधिरेभ्योऽधिकतरं वर्णतो रागयुक्तमिति सर्वविदितम् । दृग्भिः-नवभिर्नयनैः । दिशः पश्यन् । तृणतरवः-तालवृक्षाः, तेषां समुच्छ्रायं-औन्नत्यं जयन्तीति तृणतरुसमुच्छ्रायजयिनः-तेषाम् । त्रयाणां पादानाम् । न्यासैः-अङ्घ्रित्रयविक्षेपैः । अयं गदानाम् अधिपतिः-ज्वरराजः । गदायुधवताम् अधिपतिरिति श्लेषार्थश्च तस्य (ज्वरस्य) अतिकायत्वं महाशक्तिमत्त्वं च व्यञ्जयति । अत एव भूमिं नमयति-अतिबलवतः स्वशरीरस्य गुरुत्वेन स्वगमनस्थलं तत्र तत्रावनमयति । रूपतोऽपूर्वमिमं भयावहं महान्तं जन्तुविशेषं पश्येति सविस्मयमेवं राजा वर्णयति स्म । "ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः । भस्मप्रहरणो रौद्रः कालान्तकयमोपमः" इति मूर्तिमत्त्वं ज्वरस्य तत्र तत्र वर्णितमास्ते ॥ ६० ॥

कालः—कर्मन्, पश्यायं यस्मिन्नुदेष्यति तस्य जनस्य,

आलस्यमश्ममयतां पुलकोद्गमं च
गात्रे करोति न रतिं क्वचिदातनोति।
जाताश्रु जृम्भयति दृष्टिविघूर्णमल्प-
प्राणं तमम्बु च पिपासयतेऽनुवेलम् ॥ ६१ ॥

---

आकाशात् इमान् विषयानवलोकयन् कालस्तथाविधाय पुरतः स्वान्तिकस्थाय कर्मणे ज्वरस्य समुद्भवतो विकारान् (प्राग्रूपाभिधान्) प्रसङ्गवशात् प्राह आलस्यमित्यनेन। कर्मन् पश्यायमित्यादिकमत्रान्वेतव्यम्। कर्मन्। यस्मिन्-जने। अयं-ज्वरः। उदेष्यति-उद्भविष्यति। तस्य जनस्य। वक्ष्यमाणान् विकारानुत्पादयतीति वदति। के ते विकारा इत्युक्ते—गात्रे-शरीरे। आलस्यं-तन्द्रा। अश्ममयतां-महतीं गुरुताम्। पुलकोद्गमं रोमहर्षं च। करोति-ज्वरोऽयमुत्पादयति। क्वचित्-कुत्रापि स्थाने कस्मिंश्चिद्विषये वस्तुन्यपि। रतिं-प्रीतिम्। नातनोति। महती चित्तानवस्थितिराविर्भवतीति यावत्। जाताश्रु-अश्रूण्युत्पादयद्यथा तथा। जृम्भयति-जृम्भाम् उत्पादयति। दृष्टिविघूर्णं-नेत्रावघूर्णनम्। अल्पप्राणं-बलहानिम्। इमान् विकारान् पूर्वरूपत्वेनोत्पादयन्, तं-रुग्णम्। अनुवेलं-पदे पदे। अम्बु-जलम्। पिपासयते-पाययतीति हेतुमण्णिच्। "आलस्यं नयने सास्रे जृम्भणं गौरवं क्लमः। ज्वलनातपवाय्वम्बुभक्तद्वेषावनिश्चितौ। अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः। शीलवैकृतमल्पं च ज्वरलक्षणमग्रजम्" इति चरके, "श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः। इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु॥ जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः। अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे" इति रुग्विनिश्चये च ज्वरप्राग्रूपलक्षणानि ॥ ६१ ॥

**कर्म**—एवमेतत् । अपि चानेनाविष्टः—

यद्भक्ष्यमम्लकटुतिक्तमपेक्षते त-
न्न स्वादु खादति न मृर्ष्यते हितोक्तम् ।
जङ्घां विवेष्टयति हुंकृतिमादधाति
बालेषु न क्वचन दर्शयते रुचिं च ॥ ६२ ॥

**विदूषकः**—दिट्ठी वि ण पहुवदि णं पेक्खिदुम् । [दृष्टिरपि न प्रभवत्येनं प्रेक्षितुम् ।]

**मन्त्री**—एष ज्वरोऽपि यक्ष्मराजसखः ।

---

**एवमिति** । एतत् एवम् शास्त्रे पूर्वरूपमस्येवमेव प्रतिपादितमास्त इत्यर्थः । अपि चेति ज्वरस्य पूर्वरूपप्रकारमपरमपि प्रस्तौति ।

**यद्भक्ष्यमिति** । अम्लकटुतिक्तं-अम्लकटुतिक्तरसविशिष्टम् । यत् भक्ष्यं-भक्षणार्हं वस्तु । तत्-तादृशं भक्ष्यम् । अनेन-ज्वरेण आविष्टः । अपेक्षते-अभिलषति । स्वादु-यत् मधुरं द्रव्यम् । न खादति-तन्न भक्षयति । हितोक्तं-पथ्यं वचः, धर्मोपदेशादिकं च । मृर्ष्यते-ईर्ष्यति । मृर्क्ष्यं ईर्ष्यायामिति धातुः । जङ्घां-ऊरोरधोभागम् । विवेष्टयति-पिण्डिकामुद्वेष्टयति । हुंकृतिं-कण्ठकूजनम् । आदधाति करोति । क्वचन-कुत्रापि । बालेषु । रुचिं-प्रीतिं च । न दर्शयते । बालानामवलोकनेऽपि जुगुप्सां सूचयतीति यावत् । "गुरूणां वाक्येष्वभ्यसूया बालेषु प्रद्वेषः स्वधर्मेष्वचिन्ता मधुरेषु भक्ष्येषु प्रद्वेषोऽम्ल-लवण-कटुक-प्रियता चेति ज्वरपूर्वरूपाणि" इति चरकनिदानस्थानवचनमिह प्रमाणतयोपादेयम् ॥ ६२ ॥

**एष इति** । एषः-पुरस्ताद्दृश्यमानः । ज्वरोऽपि । यक्ष्यराजस्य सखा यक्ष्मराजसखः ; राजाहस्सखिभ्यष्टच् इति राजन्शब्दस्य सखिशब्दस्य चादन्तत्वम् । "अंसपार्श्वाभितापश्च संतापः करपादयोः । ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः" इति माधवकरः । "कासो ज्वरो रक्तपित्तं त्रिरूपं

क्रोधनारोचकाध्मानैस्त्रिभिः पुत्रैरुपैधते ।
भार्यया पञ्चविधया ग्रहण्यभिधया सह ॥ ६३ ॥

**विदूषकः**—(अन्यतो विलोक्य सभयकम्पम्) वअस्स, अहं दाणिं ण जीविस्सम्; जदो खु करगहिअखग्ग-खेडअ-सर-कम्मुअ-परिघ-सूल-कुंद-गदा पच्चत्थिराअसेणा अभिवड्ढइ साअरो विअ । [वयस्य, अहमिदानीं

---

राजयक्ष्मणि" इति भोजः । "भक्तद्वेषो ज्वरः श्वासः कासः शोणितदर्शनम्" इति सुश्रुतश्च राजयक्ष्मणि ज्वरस्य प्रधानलक्षणेष्वन्यतमत्वं प्रतिपादयति ।

क्रोधनेति । यक्ष्मराजसख एष ज्वरोऽपि । क्रोधनारोचकाध्मानैः तन्नामभिस्त्रिभिः पुत्रैः । उपैधते-विकारान्तरैः सह विजृम्भते । क्रोधनं-कोपः, अरोचकः-भक्तोपघातः, आध्मानं-कुक्षेरानाहः, तैः; एते त्रयोऽपि पित्तेन कफेन वातेन च क्रमात् प्रवृद्धेन संभवन्ति विकाराः; ज्वरे सति समुत्पन्ने एते विकाराः सर्वसामान्येन समुद्भवन्तीति ज्वरपुत्रत्वमेषामुपपादितम् । "देहेन्द्रियमनस्तापी" इति चरकोक्तं वचनमनुरुध्य ज्वरेण मनस्तापस्य समुद्भवात् क्रोधः संजायते । मिथ्याहारविहाराभ्याम् आमाशयाश्रयैर्दोषैः कोष्ठाग्नेर्बहिर्निरस्तत्वात् भोजने वैरस्यं ततोऽरुचिश्च संभवति । दोषाणाम् आमाशयगतत्वादेव कुक्षावाध्मानमप्युद्भवति । ज्वरारम्भकदोषाणां त्रयाणामेतेषां बलमालोच्य "जृम्भात्यर्थं समीरणात् । पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत्" इत्यपि निदाने प्रोक्तम् । ग्रहण्यभिधया पञ्चविधया भार्यया सह चोपैधते । वात-पित्त-कफ-सन्निपातैश्चतस्रः, संग्रहग्रहणीत्येका; एवं ग्रहणी पञ्चविधा । ज्वरग्रहण्योरामाशयाश्रयदोषसमुद्भवत्वात्, ज्वरातीसारयोरन्योन्योपद्रवत्वात्, अजीर्णोत्पन्नद्रवरूपमलप्रवृत्तिसाधर्म्यात्, ग्रहण्यतिसारयोः परस्परानुबन्धित्वाच्च ज्वरस्य ग्रहणी भार्येति निर्दिश्यते ॥ ६३ ॥

वअस्सेति । करे गृहीतानि खड्गाद्यायुधानि यया सा । प्रत्यर्थिराजस्य-शत्रुनृपस्य सेना । यतः सागर इवाभिवर्धते, अतोऽहमिदानीं न जीविष्य इति

न जीविष्ये; यतः खलु करतुरगाः खेटक-शर-कार्मुक-परिघ-शूल-कुन्त-गदा प्रत्यर्थिराजसेनाभिनर्भति सागर इव।]

**मन्त्री**—(विलोक्य) एते व्रणराजपुत्रा अष्टविधा भगन्दराः। एते च षड्विधा गुदकीला मूलाधिष्ठानमभिव्याप्नुवन्ति। एते च कफसंभवा दश मेहाः पित्तसंभवैः षड्भिर्वातसंभवैश्चतुर्भिश्च सह विंशतिसंख्याका यक्ष्मराजपुत्राः। अपरत्र च त्रयोदश मूत्राघाताः प्रसज्जन्ते। एतान्यपि

---

विदूषको बिभेति। एते व्रणराजपुत्रा इति। व्रणराजः-शारीरव्रणः, तस्य पुत्राः-पुत्रतुल्या इत्यर्थः। भगन्दराः-गुदोत्पन्ना पिडका यदा भिन्ना भवति तदा भगन्दराख्यां सैव लभते; "भगं परिसमन्ताच्च गुदं वस्तिं तथैव च। भगवद्दारयेद्यस्मात्तस्मात् ज्ञेयो भगन्दरः" इति तल्लक्षणव्युत्पत्ती। माधवनिदाने भगन्दरः शतपोनकोष्ट्रग्रीवपरिस्रावीशम्बूकावर्तोन्मार्गीनामभिः पञ्चविध इत्युक्तः। ऋजुः, परिक्षेपी, अर्शोज इति शार्ङ्गधरेणाभिहितास्त्रयः इतरे भगन्दराश्चात्र गृहीता इति मन्तव्यम्। मूलाधिष्ठानं-गुदमार्गः। मूलचक्रमिति च व्यज्यते। गुदकीलाः-अर्शांसि। "पृथग्दोषैः समस्तैश्च शोणितात् सहजानि च। अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये" इति माधवकरः। एते च विंशतिसंख्याका मेहाः यक्ष्मराजपुत्राः। "साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्याः पवनाच्चतुष्कः" इति विंशतिर्मेहा निदाने निर्दिष्टाः। एते च यक्ष्मराजस्य पुत्राः-क्षयहेतव इत्यर्थः। तथा च चरकेण "कफशोणितशुक्राणां मलानां चातिवर्तनम्। कालो भूतोपघातश्च विज्ञेयाः क्षयहेतवः" इति कियन्तश्शिरसीयाध्यायेऽभिहितम्। क्षयो हेतुर्येषां त इति बहुव्रीहिः। मलानामिति मूत्रस्वेदादयो गृह्यन्ते। अपरत्र च-अन्यत्र स्थलेऽपि। त्रयोदश मूत्राघाताः प्रसज्जन्ते-पुराभिघाते सन्नद्धाः सन्ति। वातकुण्डलिका, अष्ठीला, वातवस्तिः, मूत्रातीतः, मूत्रजठरम्, मूत्रोत्सङ्गः, मूत्रक्षयः, मूत्रग्रन्थिः, मूत्रशुक्रम्, उष्णवातः, मूत्रसादः, विड्विघातः, वस्तिकुण्डलिका इति त्रयोदश मूत्राघाताः। मूत्रस्य आघातः-

च वात-पित्त-कफ-संनिपात-क्षत-शुक्र-विड्विघाताश्मरीकृच्छ्राणीत्यष्टौ कृच्छ्राणि चतसृभिरश्मरीभिः सह सञ्जीभवन्ति। एष गुल्मोऽपि शूलमवलम्ब्य विजृम्भते। तथाष्टविधशूलाश्च निरुन्धन्ति।

कालः—कर्मन्, समर्थोऽयं मन्त्री रोगविशेषपरिज्ञाने।

---

विबन्धः; अतिकृच्छ्रेण मूत्रस्य प्रवृत्तिरप्रवृत्तिर्वा भवतीत्यर्थः। "पृथङ्मला स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ। मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात्" इति मूत्रकृच्छ्रलक्षणम्। वातपित्तकफशुक्रैश्चतस्रोऽश्मर्यः संभवन्ति मूत्रमार्गे। "विशोषयेद्बस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा। यदा तदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः" इति निदानेऽश्मर्याः संप्राप्तिः। गुल्मः-कोष्ठान्तर्जायमानो ग्रन्थिरूपो रोगः। "हृन्नाभ्योरन्तरे ग्रन्थिः संचारी यदि वाचलः। वृत्तश्चयापचयवान् स गुल्म इति कीर्तितः" इति तन्निदानम्। "श्वासः शूलं पिपासान्नविद्वेषो ग्रन्थिमूढता" इति गुल्मे शूलस्य मुख्यलक्षणेष्वन्यतमत्वेन निर्दिष्टत्वात् अत्र शूलमवलम्ब्येति विशिष्य शूलमभिहितम्। शूलं नामायुधमवलम्ब्येति च व्यज्यते। विजृम्भते-शूलमप्यवलम्ब्य तीव्रवेदनामुत्पादयन् गुल्माख्यो रिपुयोधः सप्रगल्भं विवर्धत इत्यर्थः। शूलाः-शूलनिखातवत् कुक्षौ वेदनाजनकत्वात् शूल इति संज्ञास्य रोगस्य। "शङ्कुस्फोटनवत् तस्य यस्मात्तीव्रातिवेदना। शूलासक्तस्य भवति तस्माच्छूलमिहोच्यते" इति वृद्धसुश्रुतः। तस्य चाष्टविधत्वं "दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्" इति निदाने प्रोक्तम्। निरुन्धन्ति-प्रतिघ्नन्ति। शूलशब्दः पुंनपुंसकयोः। "अस्त्री शूलं रुगायुधम्" इत्यमरः। कर्मन्निति। रोगविशेषाणां-विशिष्टरोगाणाम्, परिज्ञाने। समर्थोऽयं मन्त्री-न केवलमेष सामान्यतो राज्यनिर्वहणविषय एव समर्थः सचिवः, परं तु भिषगिवाधीतशास्त्रो रोगविशेषविज्ञानेऽपि विचक्षण इति भावः। एष नाटककर्तापि सचिवोऽभूत्; शास्त्रान्तरेष्विव वैद्यतन्त्रेऽपि निपुणोऽभवदिति वस्तुतत्त्वं चानेन सूचितमिति ज्ञेयम्।

**मन्त्री**—तथान्येऽप्यत्र बहवः प्रभवन्ति । ये किल—

मन्दाग्न्युत्थोदरस्थामयसुहृद उदावर्तभेदा अशीति-
वातोत्थाः पित्तजा विंशतियुगगणिता विंशतिः श्लेष्मजाश्च ।
चत्वारोऽक्ष्णोर्वसन्तो नवतिरपि चतुस्सप्ततिर्वक्त्रनिष्ठा
मूर्धस्थाः पङ्क्तिसंख्याः क्रिमिगदनिवहोऽप्यस्ति नैके च शोफाः ॥

तथेति । तथा-पूर्वोक्तप्रकारेण । अत्र-अस्मिन् पुरे । बहवः अन्येऽपि-अपरेऽपि बहुविधा रोगाः । प्रभवन्ति-स्वकीयपराक्रमं दर्शयन्तः प्रगल्भन्ते ।

तेषु बहुषु कांश्चन रोगान् विवृणोति मन्दाग्नीति । ये किल-त एते वक्ष्यमाणा आमया इत्यर्थः । मन्दाग्निः-अग्निमान्द्यम्, तस्मादुत्थाः-समुत्पन्नाः ये उदरस्था आमयाः-उदररोगाः वातोदरपित्तोदरकफोदरसन्निपातोदरप्लीहोदरबद्धोदरक्षतोदरदकोदरभेदेनाष्टौ, तेषां सुहृदः-गुणैः कार्यतश्चानुकूलाः । "रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च" इत्युक्तप्रमाणानुरोधेन अत्रोदराणां मन्दाग्निसमुद्भवत्वमुपपादितम् । "अतिसंचितदोषाणां पापं कर्म च कुर्वताम् । उदराण्युपजायन्ते मन्दाग्नीनां विशेषतः" इति च ग्रन्थान्तरे । उदावर्तभेदाः-त्रयोदशसंख्याका वातादिनिरोधजा कोष्ठाश्रया व्याधयः । उद्भूतेन वेगविधारणेनावृतस्य प्रवृद्धस्य वा वायोर्विमार्गेण आवर्तनम् उदावर्तः । "वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियैः । क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्तसंभवः" इति निदाने । उदररोगे प्रधानलक्षणम् आध्मानम्; उदावर्तेऽपि तत् संभवति; आटोपशूलादिकमपि समानमुभयोरिति कृत्वा उदरामयसुहृद उदावर्ता इत्युक्तम् । वातोत्थाः-वातदोषजा रोगाः । अशीतिः-सर्वाङ्गवातैकाङ्गवातपक्षवधधनुर्वातादिभेदेन अशीतिसंख्याकाः । विंशतियुगगणिताः-चत्वारिंशत्संख्याकाः । पित्तजाः-पित्तदोषजा रोगाः । विंशतिः-श्लेष्मजाः-

कफदोषजा रोगाश्च विंशतिसंख्याकाः। "अशीतिर्वातविकाराश्चत्वारिंशत् पित्तविकारा विंशतिः श्लेष्मविकाराः" इति चरकादिभिरैककण्ठ्येनाभिहिताः। अक्ष्णोः-नेत्रयोः। वसन्तः-स्थिताः। नवतिश्चत्वारश्च-चतुर्नवतिसंख्याकाः। शार्ङ्गधरवचनमत्र प्रमाणम्। तद्यथा—"तथा नेत्रभवाः ख्याताश्चतुर्नवतिरामयाः। तेषु वर्त्मगदाः प्रोक्ताश्चतुर्विंशतिसंज्ञकाः। नेत्रसन्धिसमुद्भूता नव रोगाः प्रकीर्तिताः। तथा शुक्लगता रोगा बुधैः प्रोक्तास्त्रयोदश। तथा कृष्णसमुद्भूताः पञ्च रोगाः प्रकीर्तिताः। काचं तु षड्विधं ज्ञेयं तिमिराणि षडेव च। लिङ्गनाशः सप्तधा स्यादष्टधा दृष्टिजा रुजः। चत्वारश्चाधिमन्थाः स्युरभिष्यन्दचतुष्टयम्। सर्वाक्षिरोगाश्चाष्टौ स्युः" इति नेत्ररोगाश्चतुर्नवतिसंख्याकास्तत्रोक्ताः। वक्त्रनिष्ठाः-आस्यान्तरुत्पद्यमाना रोगाः। चतुस्सप्ततिः। मुखरोगाणां संख्यानिर्धारणेऽपि शार्ङ्गधर एवमाचष्टे—"चतुस्सप्ततिसंख्याका मुखरोगास्तथोदिताः। तेष्वोष्ठरोगा गणिता एकादशमिता बुधैः। दन्तरोगा दशाख्याता दन्तमूले त्रयोदश। तथा जिह्वामयाः षट् स्युरष्टौ तालुगता रुजः। गलरोगास्तथाख्याता अष्टादशमिता बुधैः। मुखान्तस्संभवा रोगा अष्टौ ख्याता महर्षिभिः।" इति। मूर्धस्थाः-शिरोगता रोगाः। पङ्क्तिसंख्याः दशसंख्याकाः। "तथा दश शिरोरोगा वातेनार्धावभेदकः। शिरस्तापश्च वातेन पित्तपीडा तृतीयका। चतुर्थी कफजा पीडा रक्तजा सन्निपातजा। सूर्यावर्ताच्छिरःकम्पात् क्रिमिभिः शङ्खकेन च" इति च दशशिरोरोगाः शार्ङ्गधरेणोक्ताः। क्रिमिगदानां निवहः-क्रिमिरोगा इत्यर्थः। "एकविंशतिभेदेन क्रिमयः स्युर्द्विधा च ते। बाह्यास्तथाभ्यन्तराः स्युः" इति च शार्ङ्गधरे। क्रिमिगदनिवहोऽपि अस्ति-पुरे प्रविष्टो विद्यत इत्यर्थः। नैके च शोफाः-शोथरोगाः नव संख्याकाः। "रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् बहिःशिराः। नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम्। उत्सेधं संहतं शोथं तमाहुर्निचयादतः। सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम्" इति माधवकरः। इत्येवमादयो बहवो रोगा अत्र प्रभवन्तीति पूर्वेणान्वयः। 'एको हि दोषो गुणसन्निपाते निमज्जति' इति नीत्या पित्तजा विं शतिः इत्येष यतिभङ्गदोष एकस्तु सहृदयैः सहनीयः॥ ६४॥

तथा भूतोन्मादा विंशतिः ।

आमवात इति कोऽपि चतुर्धा जायते निखिलरोगनिवासः ।
वातपित्तकफशोणितमद्यक्ष्वेडजा षडुदयन्ति च मूर्छाः ॥ ६९ ॥

---

भूतोन्मादा इति । भूतोन्मादाः-तदाख्यविकाराः । विंशतिः । भूताभिषङ्गोत्पन्नो मनोविकारो भूतोन्मादः । "अमर्त्यवाग्विक्रमवीर्यचेष्टो ज्ञानादिविज्ञानबलादिभिर्यः । उन्मादकालोऽनियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम्" इति तल्लक्षणं निदाने । "भूतोन्मादा विंशतिः स्युः" इति च शार्ङ्गधरः ।

आमवात इति । आमवातः-आमदोषसहकृतो वातदोषजो रोगः । "आहारस्य रसः शेषो यो न पक्वोऽग्निलाघवात् । स मूलं सर्वरोगाणामाम इत्यभिधीयते" इति लक्षणमामदोषस्य । "आममन्नरसं केचित् केचित्तु मलसंचयम् । प्रथमां दोषदुष्टिं च केचिदामं प्रचक्षते" इति चात्र मतान्तराणि । इति कोऽपि-कश्चनरोगः । निखिलरोगाणां निवासः-आकरः । बलवान् रोग इति भावः । सोऽपि समुद्भूत इति यावत् । "वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति । तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते । वातपित्तकफैर्भूयो दूषितः सोऽन्नजो रसः । स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः । जनयत्याशु दौर्बल्यं गौरवं हृदयस्य च । व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः" इति तद्रोगसंप्राप्तिः । "चत्वारश्चामवाताः स्युर्वातपित्तकफैस्त्रिधा । चतुर्थः सन्निपातेन" इति च शार्ङ्गधरः । मूर्छाः षट् । वात पित्तकफैः, शोणितेन, मद्येन, विषेण च षड्विधाः । उदयन्ति-उद्भवन्ति । "करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च । निविशन्ते यदा दोषास्तदा मूर्छन्ति मानवाः ॥ संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः । तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् । मोहो मूर्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥ वातादिभिः शोणितेन मद्येन च विषेण च । षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते" इति तद्विवरणं रुग्विनिश्चये ॥ ६९ ॥

अपि च,

एते षोढा भिन्ना उन्मादाश्च प्रवर्तन्ते ।
अभिवर्तन्ते चामी हृद्रोगाः पञ्चधा भिन्नाः ॥ ६६ ॥

**विदूषकः**—पमादो पमादो । एदेहिं अरिहिं दुवाराइं पाआरा परिखाओ कोसाआराइं अ सव्वं वि अक्कंतम् । किं बहुजप्पिदेण । हिअअं गुम्मं कदुअ अधिट्ठिदम् । तिलप्पमाणो वि देसो अणक्कंतो ण दीसइ ।

---

एत इति । षोढा-षट्प्रकारतया । भिन्नाः । उन्मादाः-तदाख्या मानसिकरोगाश्च । एते प्रवर्तन्ते-अस्मत्पुरत इह पुराभियोगाय समुद्युञ्जते । दोषा विकृता विमार्गगाश्च मनः प्रविश्य मनुष्यं विवशं विभ्रान्तचित्तं च यत्र कुर्वन्ति स रोग उन्मादः । "मदयन्त्युद्धता दोषा यस्मादुन्मार्गमागताः । मानसोऽयमतो व्याधिरुन्माद इति कीर्तितः" इति तन्निरुक्तिर्निदाने । किंच, "उन्मादाः षट् समाख्यातास्त्रिभिर्दोषैस्त्रयश्च ते । सन्निपाताद्विषाज्ज्ञेयः षष्ठो दुःखेन चेतसः" इति तत्संख्याप्रकारश्च शार्ङ्गधरे । अमी हृद्रोगाश्च हृदयाधिष्ठिता व्याधयश्च । पञ्चधा भिन्नाः-पञ्चप्रकारत्वमधिगताः सन्तः । अभिवर्तन्ते-पुरमभिव्याप्य तिष्ठन्ति । "हृदामयः पञ्चविधः प्रदिष्टः । दूषयित्वा रसं दोषा विगुणा हृदयं गताः । हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते" इति निदाने । एवं शत्रुपक्षीयैः प्रहितेन रोगनिवहरूपेण सेनासमूहेन जीवराजराजधान्याः समुपनतामाक्रमणप्रक्रियां प्राज्ञो विज्ञानमन्त्री सम्यगेव ज्ञात्वा तस्य परिहारविधानेऽव्याहितसदुपायो राज्ञे निवेदयन्नासीत् ॥ ६६ ॥

**पमादो इति** । प्रमादः प्रमादः-महत्येषानवधानतेत्यर्थः । द्वाराणि-प्रतीहाराख्याः प्रवेशमार्गाः । प्राकाराः-नगरावरणभित्तयः । परिखाः-खेयानि । कोशागाराणि-धनागाराणि च । शरीरस्य नव द्वाराणि, सप्त त्वचः, रसादि-

(अञ्जलिं बध्वा) वअस्स, अदो वरं णत्थि मे जीविदासा। मम ब्राह्मण्या विहुराए अंधकूवणेत्ताए तुमं एव्व सुमरिअ जोअक्खेमं वहेहि। पढमं एव्व एसो अणत्थो सुणाविदो मि मए। तुमं उण दुम्मंतिणो से वअणविस्संभेण इमं दुरवत्थं पाविदो मि। पेक्ख दाव तस्स फलं एदं संवुत्तम्।

[प्रमादः प्रमादः। एतैररिभिर्द्वाराणि प्राकाराः परिखाः कोशागाराणि च सर्वमप्याक्रान्तम्। किं बहुजल्पितेन। हृदयं गुल्मं कृत्वाधिष्ठितम्। तिलप्रमाणोऽपि देशोऽनाक्रान्तो न दृश्यते। वयस्य, अतःपरं नास्ति मे जीविताशा। मम ब्राह्मण्या विधुराया अन्धकूपनेत्रायास्त्वमेव स्मृत्वा योगक्षेमं वह। प्रथममेव एषोऽनर्थः श्रावितोऽसि मया। त्वं पुनर्दुर्मन्त्रिणोऽस्य वचनविस्रम्भेणेमां दुरवस्थां प्रापितोऽस्मि। पश्य तावत्तस्य फलमिदं संवृत्तम्।]

**राजा**—अमात्य, संवदत्येव विदूषकवचनम्।

---

धातवः, रक्ताशयादयश्चाशयाः क्रमेण शरीरपक्षेऽर्थाः। सर्व-पुरे विद्यमानं सकलमपि स्थलम्। आक्रान्तम्। शत्रुभिरिति शेषः। हृदयं-यत् खलु प्राणायतनेषु मर्मसु प्रधानतमं तत्। गुल्मं कृत्वा-सेनानिवेशयोग्यस्थलत्वेन विधाय। अधिष्ठितं-शत्रुभिः सम्यक् स्थितम्। अनाक्रान्तः-शत्रुभिरनासादितः। नास्ति मे जीविताशा-इतरेषां नृपादीनां जीवितविषये नास्त्यस्य श्रद्धेति सूचितमनेन। मम ब्राह्मण्याः-मत्पत्न्या इत्यर्थः। अन्धकूपनेत्रायाः अन्धकूपः-जलरहितः पुरातनः कूपः, तद्वत् नेत्रे यस्यास्तस्याः। अन्धकूपनेत्रेति तस्या अन्वर्थं नाम च। विधुरायाः-मृते मयि प्रविश्लिष्टायाः; नाथरहिताया इत्यर्थः। योगक्षेमं वह-मन्मरणानन्तरं तस्या रक्षणं त्वदायत्तं भवत्विति यावत्। **अमात्येति**। विदूषकवचनं-विदूषकेन यदभिहितं तत्। संवदत्येव-वस्तुतत्त्वं दृढयत्येव; तदेतदनभिज्ञवचनमिति नास्मिन् विषये वक्तुं शक्यते, किन्तु सन्दर्भेऽस्मिन् संप्रतिपन्नमेव प्रतिभातीति भावः।

त्वद्बुद्धिप्रसरोऽपि धिग्विफलितो निक्षिप्य सर्वामपि
त्वय्येवात्मधुरां मया निवसता संप्राप्तमीदृक् फलम् ।
वैयग्र्यं हृदि सर्वथास्मि गमितो द्वाराणि कोशालयाः
प्राकाराः परिखाश्च हा निखिलमप्याक्रान्तमेवारिभिः ॥ ६७ ॥

---

परितो व्याप्तैः व्याधिभिः उद्भ्रान्तचित्तो जीवराजो विदूषकवचनस्याविसंवादित्वमेव मत्वा तदुपपादयति त्वद्बुद्धिप्रसर इति । अमात्य । त्वद्बुद्धिप्रसरोऽपि-त्वदीयमत्याः प्रवृत्तिरपि; तावकम् अनितरसाधरणं नामानुगुणं मतिकौशलमपीति अपिशब्दार्थः । विफलितः-व्यर्थोऽभूत् । अप्रतीक्षितोपनतदशाविपर्ययात्मकाशाभङ्गवैधुर्यं सूचयति धिगित्यनेन । विश्वस्तजनात् समुपनतं विपरीतफलमेव विशदयति निक्षिप्येति । त्वय्येव-मन्त्रिण्येव । सर्वामपि आत्मधुरां-राजकृत्यनिर्वहणभारम् अशेषमपि । निक्षिप्य-आरोप्य । निवसता-वीतशङ्कं शिवोपासनादिषु चित्तवृत्तिमाधाय कालम् अन्यथा यापयता । मया । ईदृक्-अद्य यदनुभूयते तादृशम् । फलं संप्राप्तम्; त्वयि सर्वात्मना कृतस्य महतो विस्रम्भस्य विपरीतं खलु फलमुपनतमिति यावत् । द्वाराणि-मदीयपुरस्य सर्वाण्यपि द्वाराणि; आस्यादीनि देहस्य नव द्वाराणि च । कोशालयाः-कोशागाराणि; आशयाश्च । प्राकाराः-नगरावरणभित्तयः; सप्त त्वचश्च । परिखाश्च-खेयानि, रसादिधातवश्च । अखिलमपि-पुरे विद्यमानमखिलमपि स्थलम् । अरिभिः आक्रान्तमेव । अतो हेतोः हृदि-मन्मनसि । सर्वथा-सर्वप्रकारेणापि । वैयग्र्यंविह्वलताम् । गमितोऽस्मि । हा इति विषादातिशयं व्यनक्ति । शत्रुसैन्यैः सकलमपि स्थलं संप्रति समभिव्याप्तमिति समालोक्य सर्वधा संभ्रान्तचित्तः किंकर्तव्यतामूढोऽस्मीत्यर्थः ॥ ६७ ॥

एवं स्थिते किमन्यद्ब्रवीमि ।

गात्रं मे परितप्यते पदयुगं शक्नोति न स्पन्दितुं
स्तब्धं चोरुयुगं भुजौ च भजतः कम्पं मुखं शुष्यति ।
नास्त्यक्ष्णोर्विषयग्रहः श्रवणयोरप्येवमेव त्वचोऽ-
प्यन्यत् किं चलतीव हृन्निजपदादाशा भ्रमन्तीव च ॥ ६८ ॥

अपि च,

ननु मे दुःखभागात्मा न धैर्यमवलम्बते ।
काठिन्यमिव मृत्पिण्डो घनवारिसमुत्क्षितः ॥ ६९ ॥

---

स्वशरीरस्य शत्रुभिः समुपनतां कष्टां दशामेव जीवो व्यनक्ति गात्रमिति । मे गात्रं परितप्यते-ज्वरादिना सर्वाङ्गतापः संभूतः । पदयुगं । स्पन्दितुं इतस्ततः संचारं कर्तुम् । न शक्नोति; वातरोगोपद्रुतत्वात् गमनशक्तिरपि क्षीणा । ऊरुयुगं स्तब्धम्; ऊरुस्तम्भादिव्याधिबाधितत्वात् तदवयवद्वयमपि स्तब्धमभूत् । भुजौ च कम्पं भजतः-अपबाहुकविश्वाचीप्रभृतिभी रोगैराक्रान्तत्वात् हस्तावपि वेपथुपीडितौ । मुखं शुष्यति-विविधमुखरोगैरभिभूतमास्यमपि विनष्टद्रवधातुत्वाद्विशुष्यति । अक्ष्णोः श्रवणयोरपि विषयग्रहो नास्ति-नेत्रयोर्दर्शनशक्तिः श्रोत्रयोराकर्णनशक्तिश्च विलुप्ता । त्वचोऽपि एवमेव-त्वचः स्वाभाविकं स्पर्शमज्ञानं च विनष्टमित्यर्थः । हृत्-हृदयावयवः । निजपदात्-स्वाधिष्ठितात् स्थानात् । चलतीव-हृद्रोगस्योद्भूतत्वात् भ्रश्यतीव । आशाश्च-सर्वा दिशश्च । भ्रमन्तीव-मूर्च्छाभ्रमादीनां समुत्पद्यमानत्वात् मण्डलवल्लुठन्तीव । अन्यत् किं-दुरवस्थान्तरं किमितोऽपि विद्यते यन्मयाद्य नानुभूयत इत्यर्थः ॥ ६८ ॥

नन्विति । नन्विति मन्त्रिणं प्रति संबोधनम् । दुःखं भजतीति दुःखभाक्-प्राप्तसंकटः; विविधव्याधिरूपदुःखाभिभूत इति भावः । मे-मम जीवस्य । आत्मा-शरीरमित्यर्थः । "स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना" (रघुवं.

किञ्च मया भवत्संविहितरसगन्धकौषधघटितरसायनप्रत्याशया—

त्वदुपदेशवशंवदचेतसा वपुषि नश्वरके ममतां वृथा ।
विदधता शिवभक्तिरसायनं शिव शिवान्तरितं परमार्थदम् ॥७०॥

---

१-१४) इत्यत्रेव आत्मन्शब्दस्य शरीरार्थे प्रयोगः । यद्वा दुःखभाक्-आधिभिरभिभूतः । मे आत्मा-मनः । आत्मन्शब्दस्य मन इत्यर्थः; "आत्मानमात्मना वेत्सि" (कुमार. २-१०) इत्येवमेव प्रयोगो द्रष्टव्यः । घनस्य-मेघस्य वारिभिः समुत्क्षितः-क्लिन्नः । यद्वा घनवारिभिः-अनल्पाभिरद्भिः, समुत्क्षितः सम्यक्-निषिक्तः । मृत्पिण्डः । काठिन्यं दार्ढ्यमिव । धैर्यं नावलम्बते । समधिकसलिल-सेकेन सुतरामार्द्रीकृतो मृत्पिण्डो यथा न कथंचिदपि दार्ढ्यमधिगच्छेत् तथा दुःखाभिभूत आत्मा च मदीयो मनागपि न धैर्यमवलम्बत इति यावत् ॥ ६९ ॥

न केवलमधैर्यं मामभिभवति किन्तु महाननुतापश्च संतपतीत्याह किञ्चेति । भवत्संविहितानि त्वदुपकल्पितानि यानि, रसाः-पारदादयः, गन्धकः, औषधानि-रसगन्धकादिभिरपरैश्च साधितानि भेषजानि, तैर्घटितानि संपादितानि रसायनानि-जराप्रभृतीनां स्वाभाविकविकाराणामपि निवर्तकौषधानि, तेषां प्रत्याशया-वृथा-कृताकाङ्क्षया । वृथैव भवदीयरसायनेन महदारोग्यम् आयुषो दैर्घ्यं च संपत्स्यत इत्याशंसयेति भावः ।

तादृशप्रत्याशया किं कृतमिति पृष्टे प्रस्तौति त्वदुपदेशेति । तव-विज्ञानमन्त्रिणः, उपदेशः त्वदुपदेशः तस्मिन् वशंवदं-आयत्तम्, चेतः यस्य तेन । सचिवोपदेशायत्तचित्तत्वेन यदुपनतं फलं तदाह वपुषीति । नश्वर एव नश्वरके, स्वार्थे कः । वपुषि-भौतिकशरीरे; अतिनिकृष्टेऽस्मिन् क्षयिष्णुदेह इति यावत् । वृथा-निरर्थकमेव । ममतां-आत्मीयबुद्धिम् । विदधता-कुर्वता । मयेति पूर्ववाक्यादत्रान्वेति । परमः-मुख्यः, अर्थः-प्रयोजनं मोक्षइत्यर्थः, तं ददातीति परमार्थदम् । शिवभक्तिरेव रसायनं-जननमरणादिरूपमहातङ्कप्रदस्य संसृतिसङ्कटस्य सर्वात्मना निवारणामृतम् । अन्तरितं-अपवारितम् । स्वकृतस्य

मन्त्री—सत्यमेतच्छिवभक्तिरसायनं परमार्थदमिति ; सकलैहिकसङ्कटविघटनं च ।

किन्तु,

> पुराभिमानो न वृथा तद्दार्ढ्येन विना कथम् ।
> चित्तस्वास्थ्यं विना तच्च शिवभक्तिर्दृढा कथम् ॥ ७१ ॥

---

निषिद्धकर्मणो निष्कृतिं चिकीर्षुः शिव शिवेति शिवनामानुस्मरणपूर्वकं निर्वेदातिशयं निर्दिशति । रसायनं नाम तत् यज्जराव्याधिविनाशनमौषधम् । तच्च नश्वरस्य नरदेहस्य बलारोग्यप्रदं केवलमैहिकसुखाय प्रकल्पते । शिवभक्तिरूपं रसायनं तु जीवस्यामुष्मिकानन्तानन्दमयाय अमृतत्वाय कल्पते । सत्येवं विषयतत्त्वे वृथैव विज्ञानसचिवोपदेशवशंवदो भूत्वा कापथे प्रवृत्तस्य धिङ्मम प्रत्याशामित्यनुतपन् जीवः "मूढोऽन्यत्र मरीचिकासु पशुवत् प्रत्याशया धावति" इति शान्तिशतकवचनतत्त्वं स्मारयति ॥ ७० ॥

**सत्यमिति** । शिवभक्तिरसायनं परमार्थदमिति यदुक्तं तदेतत् सत्यम् । न केवलं तदामुष्मिकनिःश्रेयससाधकं परं तु सकलानाम् ऐहिकसङ्कटानां-सांसारिकक्लेशानाम्, विघटनं-निराकरणं च । भवतीति शेषः । सत्यां शिवभक्त्यां शरीरचिन्ता तु नावश्यकीति न मन्तव्यमिति पुनरुपदिशति किन्त्विति ।

**पुराभिमान इति** । पुरे शरीरे, अभिमानः-पक्षपातः । न वृथा-न व्यर्थो भवति । पुराभिमानश्च मनश्शान्त्यै सुतरामावश्यक इति कृत्वा पुराभिमानस्यापरिहरणीयत्वमाह तद्दार्ढ्येनेति । तस्य-शरीराख्यस्य पुरस्य दार्ढ्येन विना-आरोग्यसहितदृढशरीरप्राप्तिं विहाय । चित्तस्वास्थ्यं-मनश्शान्तिः । कथं भवेत् । तच्च-चित्तस्वास्थ्यम् । विना । दृढा-अचञ्चला । शिवभक्तिः । कथं-केन प्रकारेण संभवति । अत एव खलु "सततमात्मानमेव गोपयीत" इति श्रुतिः ; "शरीरमाद्यं खलु धर्मसाधनम्" इति महाकविश्च ॥ ७१ ॥

अतो विज्ञापयामि,

कृच्छ्रेऽपि धैर्यग्रहणं राज्ञो विजयसाधनम् ।
इति नीतिविदः प्राहुर्धैर्यमालम्ब्यतां ततः ॥ ७२ ॥

किञ्च तव निदर्शयामि तादृशमितिहासम् । यथा—

---

अतः किं कर्तव्यमित्यत्र सदुपायमावेदयति कृच्छ्रेऽपीति । कृच्छ्रेऽपि-महति सङ्कटे समुपनतेऽपि । धैर्यग्रहणं-शौर्यावष्टम्भः । राज्ञः-राज्यनिर्वहणधुरन्धरस्य नृपस्य । विजयसाधनं-जयप्राप्तिहेतुः । भवतीति । नीतिविदः-राज्यतन्त्रनीत्याद्यभिज्ञाः । प्राहुः-व्यवहरन्ति ।

"कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेर्नाधश्शिखाः क्वापि कदापि यान्ति ॥"
"छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न विश्लथेषु लोकेषु ॥"

इति खलु वदन्ति नीतिविदः । ततः-तस्माद्धेतोः । धैर्यम् आलम्ब्यताम् । इति विज्ञापयामि इत्यन्वेतव्यम् । दुःखेष्वनुद्विग्नमनस्त्वं हि नाम दुर्दमस्य विजयाकाङ्क्षिणो धीरस्य लक्षणम् । 'क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप' इति भगवदुक्तरीत्या संप्रत्यस्मिन् सङ्कटावहे समये संस्तभ्यतामात्मा धैर्यावलम्बनेनेति धीरः समुपदिशति सचिवः ॥ ७२ ॥

**किञ्चेति** । तादृशं-यादृशेन मार्गेण धैर्यमवलम्बनीयं तथाविधम् । इतिहासं-पुरावृत्तम् । तव निदर्शयामि-दृष्टान्तत्वेन दर्शयामि । यथेति तथाविधाः कथाः काञ्चनोदाहरति ।

श्रेयः प्रापदगस्तिना स नहुषः शप्तोऽपि धैर्यग्रहा-
न्न्वालम्ब्य धृतिं शुभं नलहरिश्चन्द्रावपि प्रापतुः ।
कृत्वा छद्म कृतेऽरिणा प्रणयिनीचौर्येऽपि धैर्यं वहन्
बध्वा सेतुमुदन्वदम्भसि न किं रामो विजिग्ये रिपून् ॥७३॥

---

श्रेयः प्रापदिति । सः-अधिगतमहेन्द्रपदत्वेन प्रसिद्धः । नहुषः आयुषः पञ्चसु सुतेषु ज्येष्ठो राजा । अगस्तिना-अगस्त्यमहर्षिणा । "और्वशेयः कुम्भयोनिरगस्तिर्विन्ध्यकूटकः" इति वैजयन्ती । शप्तोऽपि-सर्पो भवेति शापं ग्राहितोऽपि । धैर्यग्रहात् धैर्यस्यावलम्बात् । श्रेयः-शापाद्भूताजगरदेहत्यागपूर्वकदिव्यवपुःप्राप्तिरूपमङ्गलम् । प्रापत्-अवाप्तवान् । तथैव नलः-निषधानां राजा, हरिश्चन्द्रश्च तावपि । धृतिं-धैर्यम् । आलम्ब्य । शुभं-स्वस्वसुकृतोचितं श्रेयः । प्रापतुर्ननु-अधिगतौ खलु । अरिणा-परमविद्वेषिणा रावणेन । छद्म-कैतवम् । कृत्वा । प्रणयिन्याः-प्राणप्रियायाः सीतायाः, चौर्ये । कृतेऽपि । रामो धैर्यं वहन् । "दुष्करं कृतवान् रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति" इति रामस्य स्वप्रियतमाया वियोगेऽपि महाधीरधौरेयत्वं प्राज्ञेन हनुमता खलु प्रशंसितमास्ते । उदन्वतः-महोदधेः, अंभसि-अप्सु । सेतुं-नलसेतुनाम्ना प्रसिद्धाम् । बध्वा । रिपून्-रावणेन्द्रजित्प्रभृतीन् शत्रून् । किं न विजिग्ये । न केवलमतिवल्लभाया भार्यायाः शत्रुकृतापहारजन्यमत्युत्कटं शोकवेगं स विषेहे, परं तु तत्सहनेन सह सागरलङ्घने, देवासुरादीनामपि दुर्गमाया सागरदुर्गमध्यस्थिताया राक्षसराजधान्या अवस्कन्दनपूर्वकं तस्याः संक्षोभणे, महतो राक्षसवरूथिनीसहितस्य रावणस्य मारणे च समुद्यतो मानवान्तरासुलभं महद्धैर्यमवलम्बय जयश्रियमप्यासमाद खल्विति भावः । (१) नहुषो नाम चन्द्रवंशीयो नृपो महतो मखान् यष्ट्वा, तत्फलत्वेन महेन्द्रपदमधिगम्य, स्थानगर्वितो मुनीन् अगस्त्यादीन् स्वशिबिकावहनाय बलान्निरबध्नादिति, तदा-

**विदूषकः**—वअस्स, सुदं किं दाणिं वि एदस्स मंतिणो एदं एव्व वअणम् । संपदं एसो—

---

नीमगस्त्यस्तम् अजगरो भवेति शशापेति, अजगरभावमासाद्य तस्मिन् द्वैतवने कचिद्विलुठमाने युधिष्ठिरस्य सल्लपनसाहाय्येन पुनः स्वं पदमवापेति च तत्कथा । (२) निषधानां राजा नलः स्वयंवरे दमयन्त्या उद्वाहानन्तरं देवैः प्रचोदितेन कलिना प्रतारितो द्यूतक्रीडायामासक्तो भूत्वा राज्यभ्रंशमधिगत्य महिष्या सह महारण्यमगमत् इति, तत्र च दमयन्तीं निद्रान्तीं निस्सहायामेव विसृज्य तत्र तत्र भुवि यथेच्छं संचचारेति, ततः क्रमेण दुःखानि बहूनि अनुभूय दुस्सहानि साहसकृत्यानि च विधायान्ततः स्वदयितया सह राज्यमप्युपलभ्य सुखेन कालं निनायेति च नैषधकथा । (३) सूर्यवंशीयस्त्रिशङ्कुपुत्रो हरिश्चन्द्रः स्वकीयसत्यवचसा महतौदार्येण च सुप्रसिद्धः । वसिष्ठ-विश्वामित्रयोः समुपनते कदाचिद्वाक्कलहे वसिष्ठो हरिश्चन्द्रमेव तथ्यवादिष्वग्रगण्यमगणयत् । ततश्च विश्वामित्रो निष्ठुरतमया परीक्षया नृपस्य तद्गुणं निर्णेतुमारेभे । तीव्रतमायां परीक्षायामपि नैव सत्याद्धैर्याच्च स चचाल । स्वभार्यां बालमपि व्यक्रीणात, अन्ततश्चात्मानम् । अस्य बाले सर्पदंशेन मृते, स्वमहिषी च स्वहस्तेनैव हन्तव्या बभूव । ततो विश्वामित्रो विषयेऽस्य प्रहृष्टो हृतं राज्यं तस्मै पुनः प्रायच्छत् । स त्रिदिवमपि तत्सुकृतवशात् अवापेति च पौराणिकी कथा । अतः समस्तदुर्गतीरुत्तीर्यान्ततः श्रेयःप्राप्तौ धैर्यमेकमेवावलम्ब्य कर्तव्येषु कर्मसु भवता भवितव्यमाहितश्रद्धेनेति दृष्टान्तैरमीभिः उक्तं भवति ॥ ७३ ॥

**वअस्सेति** । वयस्येति राजानं प्रति संबोधनम् । एतस्य मन्त्रिण इति विज्ञानशर्माणं निर्दिश्य सोल्लुण्ठनोक्तिः । इदानीमपि-सर्वेषामस्माकं जीवितसंशयावधिके समुपनतेऽस्मिन अवस्थान्तरेऽपि । इदमेव वचनं-कृच्छ्रेऽपि धैर्यग्रहणमित्यादिशुष्कोपदेशरूपा वाचोयुक्तिः । कुत एवमरमणीयो मन्त्रिविषये तवाभिप्राय एष इति पृष्टे तत्राह संपदं एसो इति ।

अत्ताणं वि ण जाणाइ राअकज्जं कुदो उण ।
उम्मादो उवजावो वा एदस्सिं सत्तुहिं किदो ॥ ७४ ॥

[वयस्य, श्रुतं किमिदानीमप्येतस्य मन्त्रिण इदमेव वचनम् । साम्प्रतमेषः—

आत्मानमपि न जानाति राजकार्यं कुतः पुनः ।
उन्माद उपजापो वा एतस्मिन् शत्रुभिः कृतः ॥ ७४ ॥]

**मन्त्री**—(विहस्य) वैधेय, किं वृथा जल्पसि । देव, अलं धैर्यत्यागेन । एते च मत्संविहिता रसौषधविशेषा भवत्सेवनमेव प्रतीक्षमाणा विपक्षक्षपणाय सज्जीभवन्ति; तानेताननुगृहाण ।

---

**अत्ताणं वीती** । एषः-मन्त्री । साम्प्रतं-अस्माकं दुर्दशा यदा समुपनता तादृशेऽस्मिन् समये । आत्मानमपि न जानाति-कीदृशोऽहमिति स्वयं नावैति; अनिवारणीयस्य सङ्कटस्य महतः समुत्पन्नत्वात् संभ्रान्तमानस एव स्वात्मानमपि सपदि व्यस्मार्षीत्; अतोऽयमनात्मज्ञः संवृत्त इत्यर्थः । पुनः-पुनरपि । राजकार्यं-राज्ञो राज्यस्य च योगक्षेमनिर्वहणात्मकमनितरसाधारणं कर्म । कुतो जानाति; न जानात्येवेत्यर्थः । एवं स्थिते विषये ममैवं प्रतिभातीति विदूषकः स्वाभिप्रायमुत्तरार्धेनाह । एतस्मिन्-मन्त्रिणि । शत्रुभिः । उन्मादः-उन्मादाख्यश्चित्तविकारो वा । उपजापः-अस्मद्विषये मैत्रीविघटनरूपभेदोत्पादनोपदेशो वा । कृतः । नोचेन्नैवमेष प्रलपेदिति भावः । (एष श्लोको निर्णयसागरीयपुस्तकेऽन्यथैव वाक्यत्वेनास्ति मुद्रितः; यथा—संपदं एसो अत्ताणं वि ण जाणादि राजकज्जं कुदो उण उम्मादं वा उवजावं वा सत्तुकिदम्—साम्प्रतमेष आत्मानमपि न जानाति राजकार्यं कुतः पुनरुन्मादं उपजापं वा शत्रुकृतम् । इति । असाधुरेषपाठः) ॥ ७४ ॥

**वैधेयेति** । किं वृथा जल्पसि-निरर्थकं किमर्थं प्रलपसि । मत्संविहिताः-मया सम्यक् सज्जीकृताः । रसानामौषधानि-पारदेन विविधैर्महारसैः साधारण-

(नेपथ्ये) एते वयम्—

शिवभक्तिप्रसादेन लब्धा मन्त्रिवरेण च ।
सम्यक् संविहिताः सर्वे विपक्षान् विजयामहे ॥ ७९ ॥

पुरस्तादचिरादेवास्माभिर्बाध्यमानं यक्ष्माणं सामात्यं सपुत्रकलत्रं ससैन्यं च पश्य ।

---

रसादिभिश्च साधितानि औषधानि, तेषां विशेषाः-असाधारणवीर्यविशिष्टानि भेषजानीति यावत् । भवता सेवनं-त्वत्कृतमुपयोगमेव; भवच्छुश्रूषामेवेति चार्थः । विपक्षाणां-शत्रुभूतानां रोगाणाम्—क्षपणाय नाशनाय । तान्-तथा सकलविपक्षक्षपणक्षमान् । एतान्-इह पुरतः स्वस्वाधिदैवताकारेण समागतान् । अनुगृहाण-स्वीकारेण संभावय ।

"यस्मिन् गुणास्तनुभृतः सदसत्प्रकाराः पात्रीभवन्त्यनुगुणैरधिदैवतैः स्वैः" (सङ्क. १-८) इत्युक्तरीत्या एकत्र जीवादयोऽपरत्र यक्ष्मादयो रोगाश्च सदसत्प्रकाराः शारीरा भावा इव विविधाश्च महान्त औषधविशेषा नाटकेऽस्मिन् पात्रीभवद्भिः स्वैः स्वैरधिदैवतैराविर्भूय नेपथ्य एव वर्तमाना यत् व्यवहरन्ति तदाह—एते वयमित्यादिना ।

**शिवभक्तीति** । शिवभक्त्याः प्रसादेन-शिवभक्त्याख्यदेवताया अनुग्रहेण । लब्धाः-भवदर्थं प्राप्ताः । मन्त्रिवरेण-मेधया श्रद्धया नैपुण्येन च महत्तरेण मन्त्रिणा । सम्यक् संविहिताः-समस्तामयापोहनक्षमतया संस्कारं प्रापिताः । अतिबलवतामपि शत्रूणां निषूदने शिक्षितनैपुण्या इति च ध्वनिः । सर्वे एते वयम्-अशेषाश्च सिद्धौषधविशेषात्मका राजभटा वयम् । विपक्षान्-तव वैरिणो राजयक्ष्मप्रभृतीन् । विजयामहे-अद्य त्वदर्थे विजयोद्यमं वयमेते विधित्सवः समायाता इति भावः ॥ ७९ ॥

**पुरस्तादिति** । भवत्पुरत एव; न हि परोक्षे क्वचिदपि दूरत इति वा ज्ञापनाय पुरस्तादित्युक्तम् । न हि कालान्तरे कदाचित्; अपि तु अद्यैवेति सूचयति-

**राजा**—(सहर्षम्) प्रियं नः प्रियं नः । सर्वे यूयमप्रमत्ता विपक्षक्षपणाय यतध्वम् ।

(ततः प्रविशति यक्ष्मा पाण्डुश्च ।)

**यक्ष्मा**—पाण्डो, क्व पुनरस्मदीया भटाः प्रहारार्थं वर्तन्ते ।

**पाण्डुः**—देव, पश्य । केचिदनुगच्छन्ति, केचित् पुरो गच्छन्ति ।

**कालः**—कर्मन्, यदुक्तं पाण्डुना तत्तथैव । यतः,

"अनेकरोगानुगतो बहुरोगपुरोगमः ।
राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः" ॥ ७६ ॥

---

अचिरादेवेति । अस्माभिः-सिद्धौषधैः । बाध्यमानम्-आयोधने वध्यमानमित्यर्थः । अनन्तरं यक्ष्मणस्तत्पुत्रस्य पाण्डोश्च प्रवेशं सूचयितुं च यक्ष्माणं सामान्यमित्यादिकमभिहितम् । (प्रियं प्रियमित्येव क्वचित् पाठः ।) **पाण्डो इति** । अस्मदीया भटाः-गुल्मप्लीहकुष्ठादयो रोगा इत्यर्थः । प्रहारार्थं-पुरस्य ध्वंसनार्थम् ।

**देवेति** । पश्य-कुतः पृच्छसि ? त्वदन्वक्षमेव विद्यन्ते ते भटाः, त्वमेवावलोकयेत्यर्थः । केचित्-अस्मदीयेषु ज्वरोन्मादकासादिषु रोगरूपेषु भटेषु केचन । अनुगच्छन्ति-तव पश्चादायान्ति । केचित् पुरो गच्छन्ति-तव पुरोभागे यान्ति । आकाशे स्थित्वा सर्वमिदमवलोकयन्तौ कर्मकालौ तदेव पाण्डोः वचनमुपष्टम्भयतः **कर्मन्नित्यादिना** । पाण्डुना यत् केचिदित्यादिना उक्तम्, तत् तथैव तथ्यमित्यर्थः ।

**अनेकेति** । अनेकैः रोगैः-कासातीसारपार्श्वरुक्स्वरभेदज्वरादिभि । अनुगतः-उपद्रवात्मनानुवर्त्यमानः । पुरो गच्छन्तीति पुरोगमाः, बहुरोगाः-

कर्म—जानामि यादृश एष इति ।

"नक्षत्राणां द्विजानां च राजाभूद्यो विधुः पुरा ।
तं यज्जग्राह यक्ष्मासौ राजयक्ष्मा ततः स्मृतः" ॥ ७७ ॥

---

श्वासाङ्गमर्दवम्यग्निमान्द्यपीनसकासादयो विकाराः पुरोगमाः-प्राग्रूपात्मना पूर्वयायिनो यस्य सः । रोगाणां मध्येऽस्यातीव बलवत्तरत्वमालोच्यैव राजयक्ष्मेत्यादिभिश्चतुर्भिरन्वर्थनामभिरेवं व्यवह्रियते । एष चानन्तरिकौ श्लोकौ च अष्टाङ्गहृदयादुद्धृताः । (नि. १) यथा राजा स्वात्मनः पश्चात् पुरस्तादपि बहुभिः परिवारैः परिवृतोऽभिगच्छेत् तद्वदसावपि रोगराजो व्याधिरूपैः परिजनैः परिवृतः समुद्भवतीति भावः ॥ ७६ ॥

कीदृश एष यक्ष्मेति तत्स्वरूपमेव कालेनाभिहितस्य वचनस्य व्याख्यानतया कर्म स्वयमपि विवृणोति—**नक्षत्राणामिति** । यो विधुः- चन्द्रः । पुरा काले । नक्षत्राणाम्-अश्वन्यादिसप्तविंशतितारकाणाम् । द्विजानां-ब्राह्मणानां च । राजाभूत् । अत एव चन्द्रस्य राजत्वप्रसिद्धिः । तं-नक्षत्राणां द्विजानां च राजानं चन्द्रमसम् । असौ-आयोधनार्थमिहागत्य स्थितः । यक्ष्मा-तन्नामा रोगः । यत्-यस्मात् कारणात् । जग्राह-पीडनाय गृहीतवान् । ततः-तस्माद्धेतोः । राजयक्ष्मा स्मृतः-राजयक्ष्मनाम्ना व्यवह्रियते । पुरातने कल्पे चन्द्रः स्वयं रोहिण्यामेवात्यासक्तो भूत्वा श्वशुरं दक्षम् अनृतवादेन वञ्चितवान् । दक्षस्य दुहितॄरपराः तारकाः स चापमानितवान् । ततश्च दक्षः क्रुद्धः क्षयमस्य शापत्वेनादात् । तस्मात् राज्ञो यक्ष्मा राजयक्ष्मेति व्युत्पत्तिरपि भवति । (यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मत इति पाठश्चास्ति) ॥ ७७ ॥

"देहेषु यः क्षयकृतेः क्षयस्तत्संभवाच्च सः ।
रसादिशोषणाच्छोषो रोगराड्रोगरञ्जनात्" ॥ ७८ ॥

**यक्ष्मा**—पाण्डो, प्रबलेषु शत्रुषु साम दान भेदा न प्रसरन्ति । अतोऽन्तिम एव प्रयोगः संप्रतिपत्तव्यः । तदत्र किं विलम्बेन ।

---

**देहेष्विति** । देहेषु क्षयकृतेः-क्षयस्य करणाद्धेतोः । तत्संभवात्-तेभ्यः-क्षीयमाणधातुभ्यः संभवात् । हेतुद्वितयात् । यः क्षयः-क्षयनाम्ना प्रसिद्धः । सः-तादृशो रोगः । रसादीनां रसप्रभृतिधातूनाम् । शोषणात्-क्षपणात् । शोष इति । रोगाणां बहूनाम्, रञ्जनात्-प्रीणनात्, अभिवर्धनादित्यर्थः । रोगाणां राजा रोगराडिति च । पुनः प्रसिद्ध इति भावः । (नक्षत्राणामिति, देहेषु य इति श्लोकद्वयं च वाग्भटेन वक्ष्यमाणरीत्यास्ति पठितम्—नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा । यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ देहौषधक्षयकृतेः क्षयस्तत्संभवाच्च सः । रसादिशोषणाच्छोषो रोगराट् तेषु राजनात् ॥ इति ।) एवं रोगराजत्वेन विद्यमानत्वात् महारोगमिमं यक्ष्माणं 'केचिदनुगच्छन्ति केचित् पुरो गच्छन्ति' इति यदुक्तं पाण्डुना तत् सर्वथा सत्यमेवेति-कालकर्मभ्याम् एवं समर्थितमासीत् ॥ ७८ ॥

**प्रबलेष्विति** । शत्रुषु प्रबलेषु-बलेन महत्तरेषु । साम-प्रियवचनादिकम् । दानं-धनादिसमर्पणम् । भेदः-संहतानां परस्परमनुकूलानां वैरिपक्षजनानाम् अन्योन्यवैषम्योत्पादनेन स्वपक्षे सामर्थ्यतः समावर्जनम् । अथवा तेषां परस्परं द्वेषोत्पादनम् । इति त्रय एते राज्यतन्त्रनिपुणैर्निर्दिष्टा उपायाः । न प्रसरन्ति-अद्य विद्यमानायामवस्थायां न प्रवर्तन्ते ; अस्मत्कार्यनिष्पादनक्षमतया नैव प्रयोक्तुमुचिता इति भावः । अतो हेतोः । अन्तिमः प्रयोग एव दण्डोपाय एव । प्रतिपत्तव्यः-आदरणीयः । गृहीतायुधैरस्माभिरायोधने ते शत्रवो वध्या एव,

शस्त्राशस्त्रि प्रसह्याद्य प्रवृत्ते रणवैशसे ।
अजीवकमरोगं वा पुरमेतद्भविष्यति ॥ ७९ ॥

---

न तु गत्यन्तरमिति भावः । "सामदाने भेददण्डावित्युपायचतुष्टयम्" इति राजनीत्युपायाश्चत्वारः । किं विलम्बेन-दण्डनीतिरेवावशिष्यत इति निर्धारणानन्तरं युद्धमनुपदमारभ्यतां विनैव विलम्बमिति राजयक्ष्मा स्वयमादिशति ।

शस्त्राशस्त्रीति । अद्य-उपायान्तराण्यपोह्य पक्षद्वयेऽपि युद्धाय संनद्धेऽस्मिन् समये । प्रसह्य-बलात्कारेण । (प्रसह्याथेति पाठान्तरम् ।) शस्त्रैश्च शस्त्रैश्च प्रहृत्य प्रवृत्तं युद्धं-शस्त्राशस्त्रीति व्यतिहारलक्षणबहुव्रीहिः ; तद्यथा तथेति क्रियाविशेषणमिदम् । रणवैशसे-युद्धात्मके वधोद्यमे । प्रवृत्ते सति । विशसति-हिनस्तीति विशसो घातुकः ; पचाद्यच् ; विशसस्य कर्म वैशसम्-वधः ; तस्मिन् रणवैशसे । एवं परस्परोपघातहेतुके महति संप्रवृत्ते संग्रामे । एतत् पुरं-जीवस्य निवासस्थलं देहाख्यं पत्तनम् । पुनरित्यवधारणे । अजीवकं-जीवरहितं वा । अरोगं-व्याधिरहितं वा । भविष्यति । यक्ष्मपक्षे सति जिते शरीराख्यं पुरमिदं विशीर्णं सत् अन्ततोऽस्माज्जीवोऽपयास्यति; शरीरं निर्जीवं भवेदित्यर्थः । ततोऽन्यथा जीवे जयमधिगते देहोऽयमपहतरोगः सन् स्वयमारोग्यमनुभविष्यतीति भावः । एष च विषयो वाक्यतोऽर्थतश्च

"किं देवो महामोहः स्वयमेव समराय सन्नह्यति । महदत्याहितम् ।"

"अमुष्मिन् दिवसे श्वो वा नूनं नियतिवैभवात् ।
अमोहमविवेकं वा जगदेतद्भविष्यति ॥"

इत्यभिनिवेशस्य वचनं (सङ्कल्प ८-७) संवदति ॥ ७९ ॥

तदेहि, समरक्षमां भूमिमेव गच्छामः ।

(इति पाण्डुना सह निष्क्रान्तः ।)

**कालः**—कर्मन्, पश्य पश्य विपक्षविजयाय विज्ञानमन्त्रिप्रयुक्तान् भटान् ।

**राजा**—वयस्य, मन्त्रिणा दर्शितेन विक्रमव्यापारेण हृदयं मम निर्वृणोति । यतः—

भूपतिरससिन्दूरज्वराङ्कुशानन्दभैरवैः साकम् ।
चिन्तामणिश्च शत्रून् राजमृगाङ्कश्च जेतुमुद्युङ्क्ते ॥ ८० ॥

---

तदेहीति । तत्-युद्धसन्नद्धत्वात् । समरक्षमां भूमिमेव-युद्धकर्मयोग्यं प्रदेशमेव; रणरङ्गमिति यावत् । कर्मन्निति । विज्ञानमन्त्रिणा प्रयुक्तान्-नियोजितान् । भटान्-विविधौषधरूपान् योधान् । वयस्येति । विक्रमव्यापारेण-स्वस्य निसर्गसिद्धेन पराक्रमकार्येण । निर्वृणोति-निर्वृतिमधिगच्छति । शत्रुहनन-कर्मोद्युक्ततैव निर्वृतेर्हेतुरिति वक्तुं यत इति प्रस्तौति ।

रसौषधरूपभटान् नामतो निर्दिश्य तेषामुद्यममभ्याह भूपतीत्यादिना । चिन्तामणिश्च-आरोग्यचिन्तामणिश्च । राजमृगाङ्कश्च । औषधद्वयमिदम् । भूपतिः, रससिन्दूरः, ज्वराङ्कुशः, आनन्दभैरव इत्येतैभिः औषधैः साकं-एतैः चतुर्भिरौषधान्तरैः सह संभूय; सर्वेऽप्येते मिलित्वेत्यर्थः । शत्रून् जेतुम्-रिपुविजयं कर्तुम् । उद्युङ्क्ते-प्रयतते; एते षडपि औषधानि स्वेषाम् अधिदेवतवेषैरागत्य युद्धे शत्रुविजयाय प्रयतन्त इत्यर्थः । (१) रसभूपतिः—"शुद्धविषसूतगन्धकजयपालत्रिकटुरामठानां तु । चूर्णं सप्तदिनानि क्वाथेनामर्द्य चित्रकस्याथ ॥ मरिचप्रमाणवटिकाः कृत्वा संशोष्य रोगिणे मधुना । कासेन पीडिताय त्रिचतुरगुटिकावधि प्रदद्याच्च ॥ रसभूपतिनामैतच्छ्वासं कासं च भेषजं हरति" इति रसचिन्तामणौ । (२) रससिन्दूरः—"शुद्धसूतं तदर्धं तु शुद्धगन्धकमेव हि । तयोः कज्जलिकां कुर्याद्दिनमेकं विमर्दयेत् ॥ मृत्कर्पटैर्विलिप्तायां कूप्यां कज्जलिकां

पश्य चात्रारोग्यचिन्तामणिमुत्तरेण ।

---

क्षिपेत् । वालुकायन्त्रगां यावत् पचेद्दिनचतुष्टयम् ॥ गृह्णीयादूर्ध्वसंलग्नं सिन्दूरं रसजं शुभम् । ज्वरादीनामयानेष नाशयेदनुपानतः" इति आयुर्वेदप्रकाशे । (३) **ज्वराङ्कुशरसः**—"खण्डितं मृगशृङ्गं च ज्वालामुख्या रसैः समम् । रुद्ध्वा भाण्डे पचेच्चुल्यां यामयुग्मं ततो नयेत् ॥ अष्टांशं त्रिकटुं दद्यान्निष्कमात्रं च भक्षयेत् । नागवल्लीरसैः सार्धं वातपित्तज्वरापहम् ॥ अयं ज्वराङ्कुशो नाम रसः सर्वज्वरापहः" इति शार्ङ्गधरः । (४) **आनन्दभैरवः**—"दरदं वत्सनाभं न मरिचं टङ्कणं कणा । चूर्णयेत् समभागेन रसो ह्यानन्दभैरवः ॥ गुञ्जैकं वा द्विगुञ्जं वा बलं ज्ञात्वा प्रयोजयेत् । मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ॥ चूर्णितं कर्षमात्रं तु त्रिदोषोत्थातिसारजित्" इति च शार्ङ्गधरः । (५) **आरोग्यचिन्तामणिरसः**—"रसगन्धकलोहाभ्रशुल्बभस्मानि साम्यतः । त्रिफला द्विगुणा प्रोक्ता द्विगुणं च शिलाजतु ॥ चतुर्गुणं पुरं शुद्धं चित्रमूलं च तत्समम् । तिक्ता सर्वसमा योज्या सर्वं संचूर्ण्य यत्नतः ॥ निम्बपत्ररसैः सम्यक् मर्दयेद् द्विदिनावधि । ततश्च वटिकाः कार्या बदरीफलमात्रया ॥ मण्डलं सेविता हन्ति त्वग्रोगान् कुष्ठपूर्वकान् । वातपित्तकफोद्भूतान् ज्वरान्नानाप्रकारजान् ॥ आरोग्यवर्धनी नाम्ना चिन्तामणिरियं वटी" इति योगोऽयं रसरत्नसमुच्चये । (६) **राजमृगाङ्कः**—"सूतभस्म त्रयो भागा भागैकं हेमभस्मकम् । मृताभ्रस्य च भागैकं शिलागन्धकतालकम् ॥ प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् । वराटान् पूरयेत्तेन छागीक्षीरेण टङ्कणम् ॥ पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तन्निरोधयेत् । शुष्कं गजपुटे पक्त्वा चूर्णयेत् स्वाङ्गशीतलम् ॥ रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः" इति च रसरत्नसमुच्चये ॥ ८० ॥

**पश्येति** । अत्र-अस्मिन्नेव प्रदेशे यत्र भूपतिप्रभृतयः समासन्नाः । आरोग्यचिन्तामणिमुत्तरेण-पूर्वनिर्दिष्टचिन्तामणिनामकौषधस्योत्तरभागे । 'एनपा

कृतसिद्धरसेश्वरः पुरस्तात् करमालम्ब्य च वातराक्षसस्य ।
समराङ्गणमेति पूर्णचन्द्रोदय एपोऽग्निकुमारदर्शिताध्वा ॥ ८१ ॥

---

द्वितीया' इति द्वितीया । (आरोग्यचिन्तामणेरुत्तरेणेति क्वचित् पाठः ।) पश्य-किं तत्र निर्वर्तत इति सम्यङ्निर्वर्णयेत्यर्थः ॥

अत्र चारोग्यचिन्तामणिमुत्तरेण महाशत्रुनिबर्हणाय समुद्गच्छन्तो मूलबलसमूहा इव सूचितपूर्वेभ्योऽप्यधिकतररसौषधविशेषाः संप्रति बलवद्व्याधिपक्षक्षपणाय बद्धकक्षाः सन्तीति विवृणोति कृतसिद्धेत्यादिना । एष पूर्णचन्द्रोदयः-तदाख्यो रसौषधविशेषः । समराङ्गणम्---युद्धरङ्गम् । एति-सेनापतिरिव समायाति । तस्यागमनप्रकारमेव प्रतिपादयति---पुरस्तादिति । पुरस्तात् स्वस्याग्रभागे । कृतः-निवेशितः, सिद्धरसेश्वरः-तदाख्यं रसौषधं यस्य सः । पूर्णचन्द्रोदयस्य पूर्वभागे सिद्धरसेश्वरो यातीत्यर्थः । वातराक्षसस्य-तदाख्यस्य रसौषधस्य । करम् आलम्ब्य-वीर्यतः समानस्कन्धत्वात् सुहृद इव तस्य हस्तं स्वहस्तेन गृहीत्वा च । अग्निकुमारेण-तन्नाम्ना रसौषधेन । दर्शिताध्वा-इत इतो वीरधौरेय आगम्यतामिति निवेदितमार्गः सन् । समराङ्गणमेति । राजकुमारेण दर्शितमार्गो महाराज इव समायातीति च ध्वनिः । (१) पूर्णचन्द्रोदयरसः---"स्वर्णं सूतं शुद्धमेतद् द्विशाणं युक्तं नागं गन्धकं स्यात् समांशम् । वह्नेस्तोयैस्तच्च पेष्यं प्रयत्नाद्गोलं कृत्वा वेष्टयेत्तं मृदा च ॥ भाण्डं चार्धं पूरयित्वाथ गोलं सामुद्रैश्च छादयेत् त्र्यङ्गुलैर्हि । लिम्पेद्भाण्डं गोमयेनापि सम्यग्वह्निं कृत्वा याममेकं तृणैश्च ॥ पूर्णश्चन्द्रः कीर्तितो यक्ष्मरोगं रोगैरन्यैर्यो रसो नाशयेद्धि । सर्वान् वातान् श्लेष्मरोगान् यथा वै पूर्णश्चन्द्रो नाशयत्यन्धकारम्" इति रसप्रकाशसुधाकरे । अन्यः प्रकारः---"मृतसूताभ्रलोहं वै शिलाजतु विडङ्गकम् । ताप्यं क्षौद्रं घृतं तुल्यमेकीकृत्य विमर्दयेत् । पूर्णचन्द्ररसो नाम्ना माषैकं भक्षयेत् सदा । शाल्मलीपुष्पचूर्णं च क्षौद्रैः कर्षं पिबेदनु । दुर्बलो बलमाप्नोति

प्रतापलङ्केश्वर एष पश्य प्रतापयत्यत्र निजप्रतापात् ।
गदान् धनुर्वातमुखानशेषान् लङ्केशवच्छत्रुभिरप्रसह्यः ॥ ८२ ॥

---

मासैकेन यथा शशी" इति रसरत्नसमुच्चये । (२) **सिद्धरसेश्वरो नाम सिद्धयोगरसः**—"शुद्धं सूतं द्विधा गन्धं कुर्यात् खल्वे तु कज्जलीम् । तयोः समं तीक्ष्णचूर्णं मर्दयेत् कन्यकाद्रवैः ॥ द्वियामान्ते कृतं गोलं ताम्रपात्रे विनिक्षिपेत् । आच्छाद्यैरण्डपत्रेण यामार्धेऽत्युष्णता भवेत् ॥ धान्यराशौ न्यसेत् पश्चादहोरात्रात् समुद्धरेत् । संचूर्ण्य गालयेद्वस्त्रे ततो वारितरं भवेत् ॥ भावयेत् कन्यकाद्रावैः सप्तधा भृङ्गजैस्तथा । काकमाचीकुरण्टोत्थद्रवैर्मुण्ड्या पुनर्नवैः ॥ सहदेव्यमृतानीलीनिर्गुण्डीचित्रजैस्तथा । सप्तधा तु पृथग्द्रावैर्भाव्यं शोष्यं तथातपे ॥ सिद्धयोगो ह्ययं ख्यातो रसः सिद्धमुखागतः । अनुभूतो मया सत्यं सर्वरोगगणापहः" इति शार्ङ्गधरः । (३) **वातराक्षसः**—"मृतं सूतं तथा गन्धं कान्तं चाभ्रकमेव च । ताम्रभस्मकृतं सम्यङ्मर्दयित्वा समांशकम् ॥ पुनर्नवागुडूच्यग्निसुरसात्त्र्यूषणं तथा । एतेषां स्वरसेनैव भावयेत्त्रिदिनं पृथक् ॥ दत्वा लघुपुट सम्यक् स्वाङ्गशीतं समुद्धरेत् । वातराक्षसनामायं वातरोगे प्रयोजयेत्" इति रससारसङ्ग्रहे । (४) **अग्निकुमाररसः**—"पारदं च विषं गन्धं टङ्कणं समभागतः । मरिचादष्टभागाः स्युर्द्वौ द्वौ शङ्खवराटयोः ॥ पक्वजम्बीरजैर्गाढं रसैः सप्त विभावयेत् । गुञ्जाद्वयमितो देयो रसो ह्यग्निकुमारकः ॥ समीरणसमुद्भूतमजीर्णं च विषूचिकाम् । क्षणेन क्षपयत्येव कफरोगनिकृन्तनः" इति रसेन्द्रचिन्तामणौ । एतेन विविधानि चैतान्यौषधानि शरीराख्यस्य पुरस्य रोगरूपशत्रुभ्यो रक्षणाय परस्परमानुकूल्येन गुणान् दर्शयन्तीत्युक्तं भवति ॥ ८१ ॥

**प्रतापेति** । अत्र पश्य वयस्येति विदूषकं संबोधयति । (पश्येति स्थाने यश्चेति पाठान्तरम् ।) लङ्केशवत्-रावण इव । शत्रुभिः-रावणवैरिणां सैन्यैः ; अन्यत्र यक्ष्मपक्षीयैः । अप्रसह्यः-अप्रधृष्यः ; परिपन्थिजनानिवार्यवीर्यसंपन्न इत्यर्थः । अत्र रामेतरशत्रुभिरेव रावणस्य अप्रधृष्यत्वं मन्तव्यम् । एष प्रतापलङ्केश्वरः-तन्नामक-

वसन्तकुसुमाकरः सरभसं विधत्ते रणं
सुवर्णरसभूपतिर्वशयते रुजां मण्डलम् ।
प्रसह्य बडवानलाभिधमिदं च चूर्णं जवा-
द्विशोषयति सर्वतः प्रबलमग्निमान्द्यार्णवम् ॥ ८३ ॥

---

मौषधम्; प्रतापयुक्तो रावणश्च । अरिभिरप्रधृष्यत्वादेवास्येदमन्वर्थं नाम । निजप्रतापात्-स्वकीयेन निरवधिकवीर्येण । धनुर्वातमुखान्-धनुर्वातस्तु धनुस्तम्भापरनामा वातरोगान्तर्गतापतानकाख्यामयेष्वन्यतमः, तत्प्रभृतीन् गदान् अशेषान्-समस्तान् वातरोगानपि । प्रतापयति-क्लेशयति; स्ववीर्येण तान् निरस्यतीति यावत् । "धनुस्तुल्यं नमेद्गात्रं स धनुस्स्तम्भसंज्ञितः । विवर्णबद्धवदनः स्रस्ताङ्गो नष्टचेतनः । प्रस्विद्यंश्च धनुस्तम्भी दशरात्रं न जीवति" इति निदाने धनुस्स्तम्भलक्षणम् । प्रतापलङ्केश्वररसः—"एकेन्दुचन्द्रानलवार्धिदन्तीकलैकभागं क्रमशो विमिश्रम् । सूताभ्रगन्धोषणलोहशङ्खवन्योत्पलाभस्मविषं च पिष्टम् ॥ प्रसूतिवातेऽनिलदन्तबन्धे सार्द्राम्भसो वल्लममुष्य लिह्यात् । वातामयेऽनेकविधेऽर्शसि स्यात् पुरामृतार्द्रात्रिफलायुतोऽयम् । प्रतापलङ्केश्वरनामधेयो रसो धनुर्वातमुखान् हरेद्धि" इति योगरत्नाकरे ॥ ८२ ॥

वसन्तेति । वसन्तकुसुमाकराख्यो रसौषधविशेषः । सरभसं-ससंरम्भं यथा तथा । रणं विधत्ते-युध्यति । सुवर्णरसभूपतिर्नामौषधमपि । रुजां मण्डलं-व्याधीनां समूहम् । वशयते-स्ववीर्येण नियमयति; व्याधीन् निर्वीर्यान् कृत्वा शमयतीत्यर्थः । इदं-पुरो दृश्यमानम् । बडवानलाभिधं चूर्णं च । प्रबलं-अत्युत्कटम् । अग्निमान्द्यार्णवं-मन्दाग्निरूपं दुस्तरं समुद्रम् । जवात्-अतिवेगतः । प्रसह्य-बलादाक्रम्य । सर्वतः-निश्शेषतः । विशोषयति । बडबानलो यथा सागरं शोषयितुं प्रभवति तथा तन्नाम्ना व्यवह्रियमाणं चूर्णमपीदं प्रबलमग्निमान्द्यं समन्ताच्छमयतीति भावः । चूर्णत्वात् औषधमिदम् आर्द्रतायाः संशोषणे प्रकृत्यैव प्रभवतीति च तात्पर्यम् । (अग्निमान्द्यारुचिम् इति पाठस्तु न साधीयान् ।) जाठराग्नौ मन्दी-

सुदर्शनं चक्रमिवामरारीन् सुदर्शनं चूर्णमिदं रणाग्रे ।
निहन्ति जीर्णज्वरमाशु पित्तजन्या रुजश्चूर्णयति प्रसह्य ॥८४॥

---

भूते नैवाहारे भवत्यभिलाषः ; यत्र अरुचिश्च जायते ; तदग्निमान्द्यम् । (१) वसन्तकुसुमाकरः—"द्वौ भागौ हेमभूतेश्च गगनं चापि तत्समम् । लोहभस्मत्रिभागं स्याच्चत्वारो रसभस्मतः ॥ वङ्गभस्म त्रिभागं स्यात् सर्वमेकत्र मर्दयेत् । प्रवालं मौक्तिकं चैव रससाम्येन दापयेत् ॥ भावना गव्यदुग्धेन रसैर्घृष्टाटरूषकैः । हरिद्रावारिणा चैव मोचकन्दरसेन च ॥ शतपत्ररसेनापि मालत्याः स्वरसेन च । पश्चान्मृगमदैश्चन्द्रतुलसीरसभावितः ॥ कुसुमाकर इत्येष वसन्तपदपूर्वकः । गुञ्जाद्वयं ददीतास्य मधुना सर्वमेहनुत् ॥ सिताचन्दनसंयुक्तश्चाम्लपित्तादिरोगजित्" इति शार्ङ्गधरादयः । (२) सुवर्णभूपतिरसः—"शुद्धं सूतं समं गन्धं मृतं शुल्वं तयोः समम् । अभ्रलौहकयोर्भस्म कान्तभस्म सुवर्णजम् ॥ रजतं च विषं सम्यक् पृथक् सूतसमं भवेत् । हंसपादीरसैर्मर्द्य दिनमेकं वटीकृतम् ॥ काचकूप्यां विनिक्षिप्य मृदा संलेपयेद्बहिः । शुष्कां तां वालुकायन्त्रे शनैर्मृद्वग्निना पचेत् ॥ चतुर्गुञ्जामितं देयं पिप्पल्यार्द्रद्रवेण तु । क्षयं त्रिदोषजं हन्ति सन्निपातांस्त्रयोदश ॥ यथा सूर्योदये नश्येत्तमः सर्वगतं तथा । सर्वरोगविनाशाय भवति स्वर्णभूपतिः" इति रसपारिजाते । (३) बडबानलचूर्णम्—"सैन्धवं पिप्पलीमूलं पिप्पलीचव्यचित्रकम् । शुण्ठी हरीतकी चेति क्रमवृद्ध्या विचूर्णयेत् ॥ बडबानलनामैतच्चूर्णं स्यादग्निदीपनम्" इति च शार्ङ्गधरः ॥ ८३ ॥

**सुदर्शनमिति** । सुदर्शनं चक्रं-विष्णुचक्रम् । रणाग्रे-युद्धरङ्गस्य पूर्वभागे । अमरारीन्-देवशत्रून् असुरानिव । इदं-पुरो दृश्यमानम् । सुदर्शनं चूर्णं-तदाख्यमौषधम् । रणाग्रे-रोगाणामौषधानां च प्रवर्तमानस्य युद्धस्याग्रभूमौ । जीर्णज्वरं-पुराणज्वरम् । आशु-तरसा । निहन्ति-विनाशयति । तथा पित्तजन्या रुजश्च पित्तप्रकोपजान् ज्वरान् अन्यान् पित्तरोगांश्च । प्रसह्य-बलादासाद्य । चूर्णयति-व्यापादयति । **जीर्णज्वरो नाम**—"त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः । प्लीहाग्नि-

प्रबलानिलसंकुलितं गदगहनं दुरवगाढमन्येन ।
हन्ति धुरि तीक्ष्णसारो वातकुठारः समूलमुन्मूल्य ॥ ८९ ॥

---

सादौ कुरुते स जीर्णज्वर उच्यते" इति । सुदर्शनचूर्णम् —"त्रिफला रजनीयुग्मं कण्टकारीयुगं शठी । त्रिकटु ग्रन्थिकं मूर्वा गुडूची धन्वयासकः ॥ कटुका पर्पटो मुस्ता त्रायमाणा च वालकम् । निम्बः पुष्करमूलं च मधुयष्टी च वत्सकम् ॥ यवानीन्द्रयवौ भार्ङ्गी शिग्रुबीजं सुराष्ट्रजा । वचा त्वक् पद्मकोशीरं चन्दनातिविषाबलाः ॥ शालिपर्णी पृश्निपर्णी विडङ्गं तगरं तथा । चित्रको देवकाष्ठं च चव्यं पत्रं पटोलजम् ॥ जीवकर्षभकौ चैव लवङ्गं वंशलोचना । पुण्डरीकं च काकोली पत्रजं जातिपत्रकम् ॥ तालीसपत्रं च तथा समभागानि चूर्णयेत् । सर्वचूर्णस्य चार्धांशं कैरातं निक्षिपेत् सुधीः ॥ एतत् सुदर्शनं नाम चूर्णं दोषत्रयापहम् । ज्वरांश्च निखिलान् हन्यात नात्र कार्या विचारणा ॥ सुदर्शनं यथा चक्रं दानवानां विनाशनम् । तद्वज्ज्वराणां सर्वेषामिदं चूर्णं प्रणाशनम्" इति शार्ङ्गधरादयः ॥ ८४ ॥

**प्रबलानिलेति** । तीक्ष्णसारः-व्याधिनिबर्हणविषये तीव्रवीर्यविशिष्टः; कुठाराख्यायुधपक्षे निशितधाराविशिष्टाग्रभागवान् । वातकुठारः-तदाख्यं वातहरमौषधम्; कुठाराख्यमायुधं च । प्रबलानिलेन-महता वातव्याधिना; अन्यत्र वात्यया; संकुलितं-सुतरां बाधितम्; अन्यत्र वात्ययाधूतम् । अन्येन-औषधान्तरेण, आयुधान्तरेण च । दुरवगाढं-दुष्परिहार्यम्, अन्यत्र दुष्प्रवेशम् । गदगहनं-वातजव्याधिनिकरम्; महारण्यं च । धुरि-अत्रैवास्माकमग्रतः । समूलं-सनिदानम्, आमूलाच्च । उन्मूल्य-आहत्य । हन्ति-क्षिणोति, उच्छिनत्ति च । प्रबलवात्यया संकुलितं जनैर्दुर्गमं द्रुमगहनं निशितः कुठार इव वातकुठाराख्यं तीक्ष्णवीर्यविशिष्टमौषधं वातदोषोत्पन्नान् संख्यया क्रौर्येण च महतो रोगान् मूलत उद्वासयतीत्युक्तं भवति । **वातकुठाररसः**—"रसभागो भवेदेको गन्धको

असकृत् स्खलतः किञ्चिद्गतिमान्द्यविधायिनः ।
प्रमेहान्माद्यतो हन्ति मेहकुञ्जरकेसरी ॥ ८६ ॥

गतिमन्थरताधायिवर्ष्मवैपुल्यशालिनः ।
सर्वान् वातगजान् हन्ति वातविध्वंसनो हरिः ॥ ८७ ॥

---

द्विगुणो मतः । त्रिभागा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः ॥ गुग्गुलुः पञ्चभागः स्यादेरण्डस्नेहमर्दितः । क्षिप्त्वात्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥ गुटिकां कर्षमात्रां तु भक्षयेत् प्रातरेव हि । नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥ अभ्यज्यैरण्डतैलेन स्वेदयेत् पृष्ठदेशकम् । विरेके तेन संजाते स्निग्धमुष्णं च भोजयेत् ॥ निर्वाते सेवयेद्वातकुठारं तीक्ष्णवीर्यकम् " इति रसराजसुन्दरे ॥ ८९ ॥

**असकृदिति** । मेहकुञ्जरकेसरी-प्रमेहगजकेसरीनामौषधम् । माद्यतः-मदं प्राप्तवतः; कालेन प्राप्तबलानित्यर्थः । अत एव असकृत् स्खलतः-पदे पदे मद-वशात् इतस्ततः पततः । किञ्चित् गतिमान्द्यं---गमनाशक्तिं विदधतीति गति-मान्द्यविधायिनः । प्रमेहान्-विंशतिविधान् मेहरोगान् । हन्ति-नाशयति । प्रमेह-सामान्यस्य पुरुषाकारत्वमुपकल्प्य, तस्याभिवृद्धत्वात् प्रमत्तत्वमपि प्रकल्प्य, स्खलनगतिमान्द्याख्ये मदमत्तस्यानुरूपे लक्षणे निरूपिते स्तः; न त्वेते सामान्यतः प्रमेहलक्षणे । अस्य रोगस्य च लक्षणादिकं द्वितीयाङ्के प्रस्तावा-ख्यामिति पद्यस्य व्याख्याने दृश्यताम् । **प्रमेहगजकेसरी** यथा—"चाण्डाली-राक्षसीपुष्परसमध्वाज्यटङ्कणम् । रसं समांशोपरसं समं हेम्ना विमर्दितम् ॥ समांशं पूतिलोहं वा मूषायां विपचेद्दिनम् । प्रमेहगजसिंहोऽयं माषद्वयमितो हरेत् ॥ मेहान् . . . . " इति रसरत्नसमुच्चये ॥ ८६ ॥

**गतिमन्थरेति** । गतिमन्थरताधायि-गमनमान्द्यजनकं च तत् वर्ष्मवैपुल्यं चेति विशेषणोभयपदकर्मधारयः; वर्ष्मवैपुल्यं-शरीरस्थौल्यम्, तेन शालिनः,

**विदूषकः**—देव, अचेतणा वि एदे चिंतामणिप्पहुदिणो संपदं संपहारं कुणंति त्ति अच्चरिअम्। ता इंदजालं विअ एदं मे पडिभादि।
[देव, अचेतना अप्येते चिन्तामणिप्रभृतयः सांप्रतं संप्रहारं कुर्वन्तीत्याश्चर्यम्। तदिन्द्रजालमिवैतन्मे प्रतिभाति।]

**राजा**—धिङ्मूर्ख। अनभिज्ञोऽसि शास्त्रतत्त्वस्य। अचिन्त्यो हि मणिमन्त्रौषधानां प्रभावः। अभिमानिदेवताश्चैषां सचेतनाः श्रूयन्ते। (कर्णं दत्त्वा) मन्त्रिन्, कोऽयं कलकलाविर्भावः।

---

वातरोगाणां गजत्वोत्प्रेक्षाविधानात् तदानुरूप्यप्रकल्पनार्थं गतिमन्थरता वर्ष्मवैपुल्यं च वर्णिते; वर्ष्मवैपुल्यमिति सर्वाङ्गवातः, गतिमन्थरतेति सर्वावयवस्वतन्त्रताहीनत्वं च सूचितं भवति। तथाविधान् सर्वान् वातगजान्-अशीतिसंख्याकान् वातरोगाख्यान् गजान्। वातविध्वंसनो हरिः-वातविध्वंसनाख्यौषधरूपः सिंहः। हन्ति। वातविध्वंसनरसो यथा—"मृतमभ्रकसत्त्वं हि कांस्यं शुल्वं च माक्षिकम्। गन्धकं तालकं सर्वं भागोत्तरविवर्धितम॥ कज्जलीकृत्य तत सर्वं वातारिस्नेहसंयुतम्। मर्दयेत् सप्त दिवसान् गोलीकृत्य च यत्नतः॥ निम्बुद्रवेण संपिष्टं तालकल्केन लेपयेत्। अर्धाङ्गुलदलं चैव परिशोष्य प्रयत्नतः॥ प्रपचेद्वालुकायन्त्रे यामानां द्वादशावधि। दशमूलकषायेण भावयित्वा तदौषधम्॥ स्थूलकोलास्थितुलितां कुर्याच्चापि वटीं ततः। हन्यादशीतिधा भिन्नान् वातरोगानशेषतः॥ श्रीमता नन्दिना प्रोक्तो वातविध्वंसनो रसः" इति रसरत्नाकरे॥ ८७॥

**देवेति**। अचेतना अपि-चैतन्यरहिता अपि। चिन्तामणिप्रभृतय एते औषधविशेषाः। संप्रहारं-युद्धम्। कुर्वन्ति। अचेतनान्यौषधानि कथमस्मदाशयानुरोधेन सविवेकमस्मच्छत्रुभिः संप्रति युद्धमाचरन्तीति स्वकीयमाश्चर्यं वितर्कं च प्रकाशयति विदूषकः। इन्द्रजालं-मायाविद्या। **धिङ्मूर्खेति**। शास्त्रतत्त्वस्य-शास्त्रयाथार्थ्यस्य। मणीनां-नवरत्नानाम्, मन्त्राणां-गायत्र्यादीनां, औषधानां-जीवकाद्योषधीनां च।

मन्त्री—पश्यतु देवः—

शस्त्राशस्त्रि गदागदि प्रथमतो निर्वर्तिते संयुगे
मुष्टीमुष्टि तलातलि प्रववृते पश्चादिदं भीषणम् ।
जित्वारीनिह देव तावकभटैरापूर्यते काहली
शङ्खः संप्रति शब्द्यते दृढतरं संताड्यते दुन्दुभिः ॥ ८८ ॥

---

प्रभावः-महिमा । अचिन्त्यः-अनिर्वर्णनीयः खलु । किं च एषा-औषधानाम् । अभिमानिदेवता:-अधिदैवतानि । सचेतना:-चैतन्यविशिष्टा एव । "यस्मिन् गुणास्तनुभृतः सदसत्प्रकाराः पात्रीभवन्त्यनुगुणैरधिदैवतैः स्वैः" (सङ्कल्प. १-८) इत्युक्तरीत्या प्रबलौषध्यादिभिर्निर्मितान्यौषधान्यत्र स्वानुगुणानामधिदैवतानां रूपाण्यादाय सचेतनत्वमप्यधिगत्य स्वामिकार्यं निर्वर्तयन्तीति भावः। ओषधीनाम् तदधिदैवतद्वारा चैतन्यमन्तरस्तीत्यभिप्रेत्यैव "ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः । ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः" (कल्प. १) इति चरकादिषु ऋषिभिः भूतसङ्घैः सचेतनैः सह मानवानां परिरक्षणे समानशक्तिमत्त्वमोषधीनामपि निर्दिष्टमास्ते ।

**शस्त्राशस्त्रीति** । देव-प्रभो । तावकभटैः-औषधाधिदेवतारूपैः त्वदीयैर्योधैः । प्रथमतः-युद्धारम्भसमये । शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तं शस्त्राशस्त्रि यथा तथा । तथा गदागदि च । संयुगे-युद्धे । निर्वर्तिते-आचरिते सति । पश्चात् -तादृशैः आयुधैरायोधनानन्तरम् । मुष्टिभिश्च मुष्टिभिश्च प्रहृत्येदं प्रवृत्तं युद्धं मुष्टीमुष्टि । तथा तलातलि-अन्योन्यहस्ततलप्रहारकर्मरूपं च । भीषणम् इदं युद्धं प्रववृते-प्रवृत्तमभूत् । प्रथमतो गृहीतकृपाणगदाद्यायुधैर्युद्धमाचरितम्, ततस्तान्यायुधानि व्युदस्य अतिसन्निकृष्टा भूत्वा पारस्परिकैर्हस्तैरेव द्वन्द्वयुद्धाय योधा

अपि च,

आस्फालयन्ति दृढमूरुयुगं कराग्रैः
कुर्वन्ति कुण्ठितघनारवमट्टहासम् ।
जीवोऽयमस्मदधिपो जितवानमित्रा-
नित्युद्धतं युधि भटास्तव पर्यटन्ति ॥ ८९ ॥

---

आरेभिरे ; पश्यतां जनानां तदेतदतिभयङ्करं भवतीति भावः । इह-अस्मिन् युद्धे । अरीन्-बहुविधव्याधिरूपान् रिपून् । जित्वा । तावकभटैः । काहली-नादोत्पादनायोपयुज्यमाना बृहती नलिका । आपूर्यते-शब्देन समन्तात् पूर्यते । संप्रति शङ्खः शब्द्यते-शङ्खनादश्च क्रियते । दुन्दुभिः-भेरी च । दृढतरं-अतिबलवद्यथा तथा । संताड्यते । एतानि च घोषणानि जीवराजपक्षीयाणां समुपनतं जयं सूचयन्ति । अस्मत्प्रमोदावहं विजयाडम्बरं पश्यतु देव इति मन्त्री राज्ञे सोत्साहं निवेदयति ॥ ८८ ॥

आनन्दोपजनितमस्मदीयानामाडम्बरान्तरमपि पश्येत्याह अपि चेति । **आस्फालयन्तीति** । तव-जीवराजस्य । भटाः । अस्मदधिपः-अस्माकं राजा । अयं जीवः । युधि-युद्धे । अमित्रान्-शत्रून् । जितवान् इति उदीरयन्त इति यावत् । कराग्रैः-हस्ततलैः । ऊरुयुगम् । दृढं-बलात् । आस्फालयन्ति-उच्चैश्शब्दं यथा समुद्भवेत् तथा ताडयन्ति । कुण्ठितः-मन्दीकृतः, घनारवः-मेघस्तनितम् येन तम् ; घनगर्जितादपि गम्भीरतरमित्यर्थः । अट्टहासं-महाहासम् । (मन्दहास-मिति न समुचितः पाठः ।) कुर्वन्ति । उद्धतं-दर्पोत्कटं यथा तथा । पर्यटन्ति-परितो विचरन्ति । जीवराजपक्षे प्रथमस्मिन्नेवाहवे प्रकृष्टमुपस्थितं विजयं निरीक्ष्य तदीयवीरभटाः सर्वेऽपि पूरोत्पीडं समुद्भवन्तं संमोदभरं मनसि धर्तुमपारयन्तः कुतूहलवशंगताः 'जितं जीवराजेन' इत्यादिकमुक्त्वा, कोलाहलमेवमाचरन्तीति उक्तं भवति ॥ ८९ ॥

विदूषकः—कहं एत्थ एव्व भग्गमणोरहदाए परुण्णो विअ जक्खराओ लक्खीअदि । [कथमत्रैव भग्नमनोरथतया प्ररुदित इव यक्ष्मराजो लक्ष्यते ।]

राजा—वयस्य, सम्यङ्निरूपितं भवता ।

गण्डस्थलप्रसृमराश्रु करं करेण
निष्पीडयन् कटकटाकृतदन्तपङ्क्तिः ।
यक्ष्मा ललाटघटितभ्रुकुटिः किलाय-
मन्तःस्पृशं रुषमभीक्ष्णमभिव्यनक्ति ॥ ९० ॥

---

**कहमिति** । अत्रैव-अस्मिन् युद्धारम्भ एव । भग्नमनोरथतया-युद्धे विजयमधिगमिष्यामीति महाभिलाषस्य विहततया ; मन्त्रिप्रयुक्तैर्महौषधैर्बहूनां यक्ष्मपक्षीयाणां रोगाणामभिहतत्वात् यक्ष्मा संप्रति युद्धे यतो भग्नाशः संवृत्तस्तस्माद्धेतोरित्यर्थः । प्ररुदितः-न केवलं विषण्णः किन्तु विशिष्य रोदितुमप्यारब्ध इत्यर्थः । **वयस्येति** । सम्यक् निरूपितं-निपुणां सुसूक्ष्मं च निरीक्षितम् ।

निरूपितप्रकारमेव राजा च तं निर्वर्णयति **गण्डस्थलेति** । अयं यक्ष्मा किल । गण्डस्थले-कपोलतले, प्रसृमराणि-व्याप्नुवन्ति, अश्रूणि यथा तथा । करेण करं निष्पीडयन्-उद्वेगवशात् हस्तेन हस्तं विमर्दयन् । कटकटाकृता-कटकटेति शब्दायमाना, दन्तपङ्क्तिः येन सः । ललाटे घटिता भ्रुकुटिः भ्रुवोर्वक्रीकरणपूर्वकनिटालतलाकुञ्चनं येन तथा भूतः सन् । अन्तः-मनः, स्पृशतीति अन्तःस्पृशं-मनस्युत्पन्नाम् । रुषं-क्रोधम् । अभीक्ष्णं-शश्वत् । अभिव्यनक्ति-आविष्करोति । अन्तरास्य यक्ष्मणः समुद्भूतं क्रोधवेगं वाचं विनैव गण्डस्थलेत्यादिभिः अभिहितानि लक्षणानि लक्षयन्तीति यावत् ॥ ९० ॥

**मन्त्री**—न केवलं रूपं शुचं च ।

**विदूषकः**—एसो सोएण विलवंतो विअ दीसइ । [एष शोकेन विलपन्निव दृश्यते ।]

**मन्त्री**—शृणुमस्तर्हि विलापमेतस्य । विषूचीमत्सरावप्येनमनुवर्तेते ।

(ततः प्रविशति विषूचिमत्सराभ्यां सहितो यक्ष्मा ।)

**यक्ष्मा**—हन्त कथं तादृशानामपि मत्सैन्यानामीदृशी दुरवस्था । आश्चर्यमाश्चर्यम् ।

जीवस्य ध्वजिनीचरानतिबलान् शक्नोति कः शासितुं
दुर्वारैर्युधि पातितानि मम यैः सर्वाणि सैन्यानि च ।
पाण्डुर्मे सचिवः परैरवधि वा भीतः पलायिष्ट वा
नो जाने मम जीवतो बत हताः पुत्रास्तथा बान्धवाः ॥९१॥

---

न केवलमिति । शुचं च-अन्तःस्पृशं शुचम्-दुःखमपि गण्डस्थलप्रसृमराश्रुप्रभृतिभिर्विकारैः यक्ष्मा व्यनक्तीत्यर्थः । न केवलं रूपं शुचमपि अन्तःस्पृशम् अभिव्यनक्तीत्येतत् विदूषकमुखेन समर्थयति एसो इति । विलपन्निव-परिदेवनं कुर्वन्निव । **हन्तेति** । तादृशानां-तथा बलिष्ठानाम् । मत्सैन्यानां यक्ष्मराजस्यानीकिनीभूतानां व्याधिसमूहानाम् । ईदृशी दुरवस्था-विनाशरूपा दुःखावस्था ।

यक्ष्मणो विलपनप्रकारमेव विशदयति**जीवस्येति** । जीवस्य-जीवराजस्य । अतिबलान्-बलेन गरिष्ठान् । ध्वजिनीचरान्-सैन्यान् ; सेनायां समवेतानित्यर्थः । शासितुं-दण्डयितुम् । कः शक्नोति । न कोऽपि प्रभवतीत्यर्थः । तत्र हेतुमाह यैरिति । दुर्वारैः-दुर्धर्षणैः । यैः-जीवस्य ध्वजिनीचरैः । मम-यक्ष्मणः । सर्वाणि च सैन्यानि-बलानि । सेनासमुदायवाचके सैन्यशब्दस्य नपुंसकत्वम् । "सेनायां समवेता ये सैन्यास्ते" इति, "वरूथिनी बलं सैन्यम्" इति चोभयत्रामरः । युधि-अस्मिन् युद्धे । पातितानि-हतानि । अतस्ते बलवत्तराः दुर्धर्षाश्चेत्यनेन युद्धेना-

(सशोकावेगम्)

भो भोः सुताः क्वनु गताः स्थ विना भवद्भि-
जीर्णाटवीव जगती परिदृश्यते मे ।
आक्रम्यते च तमसा हरिदन्तरालं
शोकाग्निसंवलितमुत्तपते वपुश्च ॥ ९२ ॥ (इति मूर्छति ।)

---

वगतमित्यर्थः । मे सचिवः-प्रधानमन्त्री । पाण्डुः । परैः-शत्रुभिः । अवधि-मारितो वा । अथवा भीतः सन् । पलायिष्ट-कान्दिशीकोऽभवद्वा । नो जाने-अनयोः कतरदवस्थान्तरमस्योपनतमिति नाहमद्य ज्ञातुं प्रभवामि । मम जीवतः सतः । पुत्राः-मत्सुताः । तथा बान्धवाः-अन्येऽपि बन्धुवर्गाः । हताः-युद्धे विनाशिताः । बतेति तीव्रं खेदं व्यनक्ति । विज्ञानमन्त्रिणो महतो मन्त्रबलस्य, जीवराजस्य रसौषधरूप-सेनाबलस्य च पुरतो राजयक्ष्मा न क्षमः स्थातुमिति यक्ष्मणो वचनमिदम् "वयं तु रामस्याग्रतः स्थातुमपि न शक्ताः । यतः—अस्माकमपि लोके द्वावप्रकम्प्यौ महाबलौ । राजा वानरवीराणां रामश्च क्षत्रियान्तकः । तयोरपि रामो विजेता ।" इति महावीरचरिते (अङ्क. ६.) रावणाय माल्यवता सविवेकमभिहितं स्वशत्रुशक्तिप्रशंसावाक्यं भावतोऽनुकरोति ॥ ९१ ॥

सशोकावेगं विलपति **भो भोः** इति । भो भोः सुताः-हे ज्वरादयः पुत्राः । क्वनु गताः स्थ-मम दृक्पथमात्यन्तिकतया परित्यज्य कुत्र वा यूयमद्य याताः । भवद्भिः विना । जगती-पृथिवी । जीर्णाटवीव-तृणलतावृक्षादिरहितं जीवराशि-विहीनं शून्यारण्यमिव । मे-मम यक्ष्मणः, न त्वन्येषाम् । परिदृश्यते । हरिदन्तरालं-दिक्चक्रवालम् । तमसा-अन्धकारेण । आक्रम्यते च । न केवल-मवनीतलमखिलं शून्यारण्यमिवालोक्यते, परं तु समन्ततो दिशश्च गाढान्ध-कारेणाभिव्याप्ता इव मे प्रतिभान्तीति भावः । "अद्य लोकास्त्रयः कृत्स्ना पृथिवी च सकानना । एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ।" इतीन्द्रजिद्वधेन विलपतो रावणस्य वचनमनुस्मारयति यक्ष्मविलापोऽयम् । (रामायणे, ६-९३-११)

**मत्सरः**—देव, समाश्वसिहि समाश्वसिहि ।

**यक्ष्मा**—(समाश्वस्य)

हे वत्सा वदनाम्बुजानि मुदितो द्रक्ष्यामि केषामहं
केषां माक्षिकमाक्षिपन्ति वचनान्याकर्णयिष्ये मुदा ।
मर्त्यानां तनुषु प्रविष्टमचिरान्मां वर्धयिष्यन्ति के
यूयं यत् समरे परैरतिबलैर्नामावशेषीकृताः ॥ ९३ ॥

---

मे वपुश्च । शोकाग्निना । संवलितं-सर्वतश्चाक्रान्तं सत् । उत्तप्तं-उल्काभिः प्लुष्यमाणमिव तापमधिगच्छति । इति वदन्नेव मूर्छति । "सर्वः कान्तमात्मीयं पश्यति" इति न्यायेन "काकस्यापि स्वीयः पोतः कनकपोत एव" इति लौकिकव्यवहाररीत्या च रोगराजस्यापत्यभूताः कासज्वरकामलादयो रोगा मृधे मृता इति दुर्भरं दुःखमुद्भूतं शरीरमनसोः सन्तापमुत्पाद्य तत् यक्ष्माणं वीतचैतन्यमतनोदिति भावः ॥ ९२ ॥

**हे वत्सा इति** । मत्सरकृतसमाश्वासनानन्तरं मूर्छामपास्य स्वयमधिगतज्ञप्तिः पुनः परिदेवते हे वत्सा इत्याक्रन्दनेन । अहम् । केषां वदनाम्बुजानि-पुत्रेभ्यो ऋते परेषां केषां कान्तानि मुखकमलानि । मुदितो द्रक्ष्यामि; सप्रेमातिशयं ससन्तोषं चेतःपरं प्रेक्षिष्ये । केषाम् । माक्षिकं-मकरन्दम् । आक्षिपन्ति-स्वमाधुर्येण निराकुर्वन्ति; क्षौद्रादपि स्वादुतराणीति यावत् । वचनानि-भाषणानि । मुदा-सप्रमोदम् । आकर्णयिष्ये इतःपरं श्रोष्यामि । मर्त्यानां-मनुष्याणाम् । तनुषु-देहेषु । प्रविष्टं मां-मानवशरीरान्तरा स्थानमधिगतं यक्ष्माणम् । के ज्वरादीन् युष्मान् विहायापरे के वा । अचिरात्-विनैव विलम्बम् । वर्धयिष्यन्ति इतःपरं पोषयिष्यन्ति । कासज्वरादयो विकारा यदि देहे न भवन्ति तर्हि पुष्टैर्देहधातुभिर्यक्ष्मणो नैव शरीरे क्वचिदप्याश्रयो दीयेत, निराश्रयत्वात् निस्सहायत्वाच्च यक्ष्मा विह्वलीभूतो विनाशमधिगच्छेदिति च विमृश्य

कालः—पुत्रप्रविलयाद्दुःखं न सोढुं शक्यते जनैः ।
वसिष्ठोऽपि महान् येन ववाञ्छ पतनं भृगोः ॥ ९४ ॥

---

विलपत्येवम् । कुत एवं विलपत्यचेत्यस्य हेतुमाह यूयमिति । यत्-यस्माद्धेतोः । यूयं-मत्सुता ज्वरादयो भवन्तः । अतिबलैः-अस्मत्तोऽपि बलवत्तरैः । परैः-वैरिभिः । समरे-युद्धे । नामावशेषीकृताः-हता इत्यर्थः ॥ ९३ ॥

पुत्रशोकस्य सर्वत्र दुस्सहत्वं सामान्यन्यायेन कालो व्यनक्ति पुत्रेति । जनैः । पुत्रस्य प्रविलयात्-मरणात् । दुःखम् । सोढुं न शक्यते । पुत्रस्यैकस्य मरणमपि मनःक्लेशं दुस्सहमुत्पादयति; अयं यक्ष्मा तु बहुपुत्रनाशे क्लिश्यत्येवमित्यत्र किमाश्चर्यमिति सूचयति । न केवलं पामरानेव मानवान् पुत्रशोकः क्लेशयति, किन्तु महात्मनो ब्रह्मविदो महर्षींश्चेति सोपपत्तिकं निर्दिशति वसिष्ठ इति । महान् वसिष्ठोऽपि-'वसिष्ठोऽपि महातेजाः' इति विश्वामित्रोऽपि श्रीमद्रामायणे यं बहुमंस्त तत्तादृशो योगसिद्धज्ञानः सरस्वतीवल्लभपुत्रो महात्मा ब्रह्मर्षिरपि । येन- पुत्रशोकेन । भृगोः-पर्वतावटप्रदेशात्; मेरुकूटादित्यर्थः । पतनं ववाञ्छ-निपत्य मर्तुमियेष । अतः पुत्रशोको नितरां दुस्सह इति निरूपितः । पुरा वसिष्ठस्य ज्येष्ठः पुत्रः शक्तिः कल्माषपादाख्यं राजानं नरमांसादो भवेति शशाप । स च शक्तिं तस्यानुजांश्च प्रथममभक्षयत् । पुत्राणां मरणेन शोकसंतप्तो वसिष्ठः पर्वतशिखरान्निपत्य प्राणान् परित्यक्तुमयततेति पौराणिकी कथा । महभारतात्तस्याश्च कथायाः स एष संग्रहः—"कल्माषपाद इत्येवं लोके राजा बभूव ह । स कदाचिद्वनं राजा मृगयार्थं ययौ पुरात् ॥ स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् । तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ॥ शक्तिं नाम महभागं वसिष्ठकुलवर्धनम् । अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ॥ ऋषिस्तु नापचक्राम तस्मिन् धर्मपथे स्थितः । जघान कशया मोहात्तदा राक्षसवन्मुनिम ॥ तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्छितः । हंसि राक्षसवद्यस्माद्राजापशद तापसम् ॥ तस्मात् त्वमद्यप्रभृति पुरुषादो भविष्यसि । ततः

तदिमं पुत्रशोकसंतप्तं यक्ष्माणमवेक्षितुं न शक्नोमि ।

**कर्म**—अहमप्येवमेव ।

(इत्युभौ निष्क्रामतः ।)

**मत्सरः**—देवालं शोकेन द्विषि जीवति न खलु धर्मोऽयम् ।
यावच्छक्ति ततोऽरीन् हत्वा शोचन्ति नैव तान् वीराः ॥९५॥

---

स नृपतिश्रेष्ठो रक्षसापहतेन्द्रियः ॥ उवाच शक्तिं तं दृष्ट्वा न चिरादिव भारत । यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया ॥ तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं पुरुषानहम् । एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयोज्य च ॥ शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम् । स तान् शक्त्यवरान् पुत्रान् वसिष्ठस्य महात्मनः ॥ भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव । वसिष्ठो घातितान् श्रुत्वा पुत्रान् शोकाभिपीडितः ॥ चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः । स मेरुकूटादात्मानं मुमोच भगवानृषिः ॥ न ममार यदा विप्रः कथंचित् संशितव्रतः । जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति" इति । (आदि. अ. १९३) ॥ ९४ ॥

**तदिति** । तत्-वसिष्ठादिभिरपि महातपोधनैः पुत्रशोकस्यासहनत्वाद्धेतोः । पुत्रशोकेन संतप्तं दुर्विषहतया क्लिश्यन्तम् । यक्ष्माणम् इमम् अवेक्षितुं न शक्नोमि । लक्ष्मणेन हतस्य स्वपुत्रस्येन्द्रजितः शोकेन विलपन्तीं मन्दोदरीं रामरावणयुद्धावलोकनार्थं वियति विमानस्थिते हेमाङ्गदाख्ये विद्याधरे तस्या अवस्थानिरूपणपूर्वकं सति निर्वर्णयति, रत्नचूडो नामापरो विद्याधरोऽपि "तनूजस्य शुचा विचेष्टमानाम् अरातिगृहिणीमपि नैवमुपक्रोष्टुमर्हसि" इति पुत्रशोकेन सकरुणं संतप्यमाने शत्रावपि विवेकिना नूनमुपक्रोशादपि अनुक्रोश एव दर्शनीय इति धर्मं बोधयति (मुरारि. अङ्क. ६.) । अहमपीत्युक्त्वा कर्मकालावुभावपि पुत्रशोकार्दितं यक्ष्माणं द्रष्टुमक्षमौ निर्गच्छतः ।

**देवेति** । देव-प्रभो । अलं शोकेन-परिदेवनमेवं नातिमात्रं कुरुष्व । द्विषि-शत्रौ । जीवति सति । अयं एष शोकरूपो विषयः । न धर्मः खलु-

अत इदानीं पुनरानीय परेषां परिभवम्, अरिहतानामस्मदीया-
नामानृण्यमृच्छतु भवान्।

**विषूची**—दाणिं खु एव्व दिट्ठा राअकुमारा कहिं गदा तुह्मे।
धज्जइ हिअअं सोओ अग्गी विअ सुक्कतिणजालम् ॥ ९६ ॥

[इदानीं खल्वेव दृष्टा राजकुमाराः कुत्र गता यूयम्।
दहति हृदयं शोकोऽग्निरिव शुष्कतृणजालम् ॥]

---

कार्पण्यं नाम जीवच्छत्रूणां पुरतः शूराणां नैव समुचितमित्यर्थः। ततः-हृदयदौर्बल्यस्य क्षुद्रत्वात्। तान्-ये त्वत्पुत्रादीन् अवधिषुस्तान्। अरीन्। यावच्छक्ति-अस्मद्बलमशेषमप्युपयुज्येत्यर्थः। हत्वा। वीराः-त्वादृशाः पौरुषवन्तः। नैव शोचन्ति-'सुख-दुःखे समे कृत्वा लाभालाभौ जयाजयौ' इति निर्धार्य ये युद्धं यावच्छक्ति क्लैब्यमपहायाचरन्ति ते नैव मनःक्लेशमधिगच्छन्तीति भावः ॥ (अरीन् हन्याः इति पाठान्तरम्।) ॥ ९९ ॥

**अत इति**। अतः-पूर्वोक्तकारणात्। इदानीं पुनः-अद्य तावत्; अधुना किं कर्तव्यमित्युक्ते। परेषां-अस्मत्परिपन्थिनाम्। परिभवं-निकृतिम्। आनीय-उत्पाद्य। (परेषामिति पदं क्वचित् पुस्तके नास्ति।) भवान्। अरिहतानां-शत्रुनिषूदितानां। अस्मदीयानां-अस्मद्योधानाम् आत्मजादि बन्धूनां च। आनृण्यं-अनृणत्वम्। ऋच्छतु-अधिगच्छतु। "कृते च प्रतिकर्तव्यम्" इति न्यायेनास्माकं ये ह्यकुर्वन्नपकारं तेषां तादृशमेवापकारं यावच्छक्ति विधायास्मदर्थं मृतानामास्माकीनानां विषये कार्तज्ञ्यमावह त्वमिति यक्ष्माणं संधुक्षयति मत्सरः, य एव खलु मत्सरस्य स्वाभाविको गुणः।

**दाणिमिति**। हे राजकुमाराः-यक्ष्मराजपुत्राः। इदानीमेव दृष्टाः खलु यूयं-अद्यैव युद्धारम्भात् पूर्वमेव मत्पुरतो यूयमतिष्ठत खलु! एतत्क्षण एव कुत्र गताः-क्व वा यूयमदर्शनं गताः। अग्निः। शुष्कतृणजालमिव। शोकः युष्मद्विनाशजनितं

**यक्ष्मा**—

गण्डद्वयेऽपि गलितैर्नयनाम्बुपूरैरामृष्टपत्त्रलतमाकुलकेशपाशम् ।
पाणिद्वयप्रहतपाटलबाहुमध्यमस्या वपुर्मम शुचं द्विगुणीकरोति ॥९७॥

**मत्सरः**—राजन्, धैर्यमवलम्ब्यताम् । कृतं शोकेन । सन्ति हि कतिपये देवपादमूलोपजीविनः सैन्याः केनापि दुरपनेयप्रवृत्तयः ।

**यक्ष्मा**—ततः किम् ।

---

दुःखम् । हृदयं-मदीयं मनः । दहति । अतिदारुणं शोकावेगं न सोढुं प्रभवामीत्यर्थः ॥ ९६ ॥

**गण्डद्वयेऽपीति** । शोकार्तायाः स्वपत्न्या विषूच्यादुरवस्थां दृष्ट्वा पुनर्यक्ष्मा तस्या निर्वर्णनपुरस्सरं शोचत्येवम् । गण्डद्वयेऽपि विषूच्याः कपोलयोरुभयोरपि । गलितैः-धारया स्रवद्भिः । नयनाम्बुपूरैः-रोदनोत्पन्नैः अश्रुजलप्रवाहैः । आमृष्टाः-प्रक्षालिताः, पत्त्रलताः-तमालपत्त्ररसकृताश्चित्ररेखा यस्य तत् । आकुलः-दुःखसंरम्भप्रचलितमस्तकत्वात् इतस्ततो लोलः, केशपाशः कचकलापो यस्य तत् । पाणिद्वयेन प्रहतं अभिहतम्, अत एव पाटलं अरुणवर्णम्, बाहुमध्यं-वक्षस्स्थलं यस्य तत् । अस्या वपुः विषूच्याः शरीरम् । मम । शुचं-दुःखम् । द्विगुणीकरोति । मत्प्रियाया अस्या विषूच्या रोदनोपजनिताश्रुपूराप्लावितं वदनम्, दुस्सहदुःखवेगोद्भ्रमन्मस्तकादितस्ततः समाकुलैः कचकलापैरावृतं शिरः, शोकावेगोत्क्षिप्ताभ्यां हस्ताभ्यामाहन्यमानत्वादारक्ततामधिगतं वक्षस्स्थलं चावलोक्य पुत्रशोकजं स्वकीयं दुःखं पुनरुक्ततामद्याधिगतमित्युक्तं भवति ॥ ९७ ॥

**राजन्निति** । धैर्यम् अवलम्ब्यताम् द्विषि जीवति मनसि शोकस्य स्थानदानं नोपपन्नमित्युक्तेऽपि, शोको द्विगुणितो भवतीति यदुच्यते तन्न समीचीनम्, अतो मनसि धैर्यं कुर्विति प्रोत्साहयति । कृतं शोकेन-अलं दुःखेन । कथं

**मत्सरः**—ततश्च तत्प्रयोगेण कुण्ठितशक्तिर्भविष्यति विज्ञानमन्त्रिहतकः। तथा च वैरनिर्यातनं कर्तुमुचितमिति प्रतिभाति।

**यक्ष्मा**—कथमिव।

**मत्सरः**—(कर्णे) एवमिव।

**यक्ष्मा**—(सविमर्शम्) अवन्ध्योऽयं प्रयत्नः। तदर्थमेव शत्रून्मूलनाय गच्छामः।

(इति विषूचीमत्सराभ्यां सह निष्क्रान्तः।)

---

धैर्यमवलम्ब्येतेति पृष्टे, अस्त्याश्वासनस्य किमपि मूलमिति ज्ञापयति सन्तीति। देवस्य-भवतः, पादमूले उपजीविनः-आश्रिताः-त्वत्सेवैकपरायणाः। केनापि-केनचिदपि वैरिणा केनापि हेतुना च। दुरपनेया-दुर्निवारा, प्रवृत्तिः-उद्यमः येषां ते; केनचिदपि शत्रुणा दुर्निवारवीर्यसंपन्नाः; उपजापादिनापि केनचन अनिवार्यमनोवृत्तयश्चेति भावः। तादृशाः सैन्याः कतिपये सन्ति हि-अद्यापि विद्यन्ते खलु। (संप्रति हीति च पाठः।) अतो नेदं ते शोकस्थानमिति यावत्। **तत इति**। ततः किं-कतिपयसैन्यसद्भावेन किमागतमस्माकमित्यर्थः। **ततश्चेति**। ततश्च-कतिपयसैन्यसद्भावेन हेतुना। तेषां-सैन्यानाम्, प्रयोगेण-पुरावस्कन्दनाय प्रवर्तनेन। विज्ञानमन्त्रिहतकः। कुण्ठितशक्तिः-अपहतबलः। भविष्यति। तथा च-तादृशशत्रुहननप्रकारेण। वैरनिर्यातनं-द्वेषप्रतीकारम्। विज्ञानमन्त्रिणः कुण्ठितशक्तित्वकरणेन केवलं कथं नाम वैरनिर्यातनं सिध्यतीति संशयितो यक्ष्मा पृच्छति **कथमिवेति**। तस्य च समुत्पन्नं संशमपनेतुं **कर्णे एवमिवेति** कमप्युपायम् उपांशु मत्सर उपदिशति। (यक्ष्मा—कथमिव। मत्सरः—कर्णे एवमिव। इति प्रश्नोत्तरद्वयमपि निर्णयसागरीयकोशे नास्ति। एवं चेत्, विना प्रश्नोत्तराभ्यामेताभ्याम् आनन्तरिकं "मत्सरेण कर्णेऽस्मज्जयार्थं किमप्युपदिष्टो यक्ष्मा" इति वाक्यं नोपपद्यते।) **सविमर्शमिति**। अयं प्रयत्नः-मत्सरेण रहस्युपदिष्टोपायनिर्वर्तनरूपोद्यमः। अवन्ध्यः-

**मन्त्री**—मत्सरेण कर्णेऽस्मज्जयार्थं किमप्युपदिष्टो यक्ष्मा निष्क्रान्तः। तत् वयमपि तदिङ्गितानुमितं पर्यालोच्य तत्प्रतिविधानाय व्याप्रियमाणा इष्टं साधयामः।

(इति निष्क्रान्ताः सर्वे।)

इति षष्ठोऽङ्कः।

---

सफल एव स्यादित्यर्थः। मत्सरेणेति। अस्मज्जयार्थं-जीवराजपक्षस्य विजयार्थम्। मत्सरेण। कर्णे यक्ष्मा किमप्युपदिष्टः-मत्सरः कर्णे किमप्युपायं तस्मा उपादिशदित्यर्थः। तत् -यक्ष्मादिभिस्तथास्मदपकारकरणायोपजातत्वाद्धेतोः। तेषां शत्रूणाम्, इङ्गितेन-हृद्गतेन भावेन, अनुमितं-ऊहितं कार्यम्। पर्यालोच्य-सम्यक् परिशील्य। तेषां-यक्ष्मादिभिः करिष्यमाणास्मद्विजयोद्यमानाम्, प्रतिविधानाय-प्रतीकारकरणाय। व्याप्रियमाणाः समुचितमुद्यमं कुर्वाणाः। इष्टं व्याधिनिषूदनपूर्वकं श्रेयस्संपादनकर्म। साधयामः-निर्वर्तयामः। अत्र चोत्तराङ्कारम्भे कथासंघटनार्थम् अङ्कास्यं नामार्थोपक्षेपकं प्रस्तुतमासीत् 'तत्प्रतिविधानाय व्याप्रियमाणाः' इत्यादिभिः। उत्तराङ्के च मन्त्रिकृतोद्यमबलेनैव रणाम्बुधिरुत्तीर्ण इति पूर्वाङ्कान्तसूचितोऽर्थ एव विव्रियते। "अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना" इति तल्लक्षणम्।

इति वैद्यरत्नबिरुदाङ्कितेन, आयुर्वेदभूषण-आयुर्वेदाचार्याद्युपाधिभाजा मेल्पाक्कम् पण्डित दुरैस्वाम्ययङ्गारमहोदयेन मूलग्रन्थस्य समग्रस्य संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायां

**षष्ठोऽङ्कः।**

## सप्तमोऽङ्कः

(ततः प्रविशति जीवराजो विज्ञानमन्त्री च ।)

**जीवराजः**—(सहर्षम्)

मन्त्रिंस्त्वदीयमतिकौशलनौबलेन
तीर्णो रणाम्बुधिरभूदतिदुस्तरोऽपि ।
यस्मिन् भयङ्करगतिर्ज्वरपाण्डुमुख्यो
रोगव्रजः किल तिमिङ्गिलतामयासीत् ॥ १ ॥

---

**ततः प्रविशतीति** । पूर्वाङ्कान्तोक्तरीत्या राजा मन्त्री चावशिष्टशत्रुविजयोद्युक्तौ प्रविशतः ।

प्रायः सफलमनोरथत्वात् सहर्षं राजा मन्त्रिणे निर्वृत्तान् वृत्तान्तान् निर्वर्णयन्नाह । **मन्त्रिन्निति** । मन्त्रिन् । यस्मिन्-युद्धाख्ये महार्णवे । भयङ्करगतिः - पूर्वरूपरूपसंप्राप्त्युपशयानुपशयोपद्रवादिरूपप्राणभयोपजनकप्रवृत्तिविशेषविशिष्टः; अन्यत्र तिमिङ्गिलपक्षे, नौकादिभिः संचरतां सांयात्रिकादीनां भयोत्पादकगमनशीलः । ज्वरपाण्डू नाम रोगौ मुख्यौ यस्मिन् सः । रोगाणां कामलाकासश्वासातीसारादीनां व्रजः-समूहः । तिमिङ्गिलतां-तन्नामकमहाक्रूरजलजन्त्वात्मताम् । अयासीत् किल । यस्मिन् महाहवाख्ये महोदधौ मादृशानां मानवानां सुतरां भयावहा ज्वरादयो व्याधिसमूहास्तिमिङ्गिलादिक्रूरयादांसीव सर्वतः सञ्चरन्तः सुबहुसङ्कटमापादयन्त आसन् खलु । तादृशो रणाम्बुधिः । अतिदुस्तरोऽपि-तथाविधदुष्टजन्तुजालनिचितत्वात् नितरां तरितुमशक्योऽपि सन् । त्वदीयमतिरेव नौः-यानपात्रम्, मत्याः कौशलमेव नौकाया बलम्, तेन त्वदीयमतिकौशल-

किं ब्रवीमि संकुलयुद्धेऽस्मदीयानां तदीयेषु प्रवृत्तमोजायितम् ।

एकत्र मण्डभेदो गुटिकाभेदः परत्र मन्दाग्निम् ।
निखिलामयजननकरं निजघान प्रथममिदमहमदर्शम् ॥ २ ॥

---

बलेन । तीर्णोऽभूत् । अत एवास्य सहपत्वम् । एतच्च पूर्वाङ्कान्तोक्तस्य विषयस्यानुगतत्वात् अङ्कावतरणं नाम नाटकाङ्गम् । निर्वहणसन्धिश्चेत आरभ्यते ॥१॥

**किं ब्रवीमीति** । संकुलयुद्धे-संक्षोभजनके तुमुलेऽस्मिन् संग्रामे । अस्मदीयानां-अस्मत्पक्षीयाणामौषधादीनाम् । तदीयेषु-अस्मत्प्रतिपन्थिसैन्येषु । प्रवृत्तम् । ओजायितं-शौर्यप्रकटनम् । किं ब्रवीमि-किमिति विवृणुयाम ; परस्परं व्याकुलोत्पादनरीत्या निर्वर्तमानेऽपि युद्धे मामकाः स्वकीयं निरुपमं शौर्यं प्रयोज्य शत्रून् विस्मयावहरीत्या निषूदयन्ति ; तेषां प्रधने स्वप्रतापप्रकटनस्य प्रवृत्तिप्रकारं न विशदयितुमपि शक्नोमीति भावः ।

तत्प्रकारमेव कथंचिद्विवृणोति **एकत्रेत्यादिना** । निखिलामयानां-ज्वरातिसारशूलामवातादिरूपाणां सर्वेषामपि रोगाणाम् , जननकरं-उत्पादकम् , निदानमिति यावत् । मन्दाग्निं-अग्निमान्द्यं नाम व्याधिम् । "रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि" इति च निदाने रोगसमूहस्याग्निमान्द्यं मूलं भवतीति माधवकरादयः प्राहुः । एकत्र-एकस्मिन् पार्श्वे । मण्डभेदः-वाट्यमण्डलाजमण्डादिभेदभिन्नः सुलघुर्जीर्यमाणो द्रवाहारविशेषः । परत्र-अन्यस्मिन् पार्श्वे । गुटिकाभेदः-मोदकात्मना कृतो विविधौषधविशेषः ; बाहुशालगुडमरिचादिगुटिकासंजीवनीगुटिकादिभेदेनाग्निमान्द्ये प्रयोजनीया गुटिका बहुविधाः सन्ति । निजघानननाश । इदं-एतत् कर्म । अहं प्रथमम् अदर्शम्-विविधैर्मण्डैः विविधाभिर्गुटिकाभिश्च मन्दाग्नेरभिहननं यदाचरितं तदेव मद्दृष्टिपथमादावागतमिति भावः । **(१) मण्डपाकः**—"जले चतुर्दशगुणे तण्डुलानां चतुष्पलम् । विपचेत् स्रावयेन्मण्डं सभक्तो मधुरो लघुः ॥ नीरे चतुर्दशगुणे सिद्धो मण्डस्त्वसिक्थकः । शुण्ठीसैन्धवसंयुक्तः पाचनो दीपनः परः" इति । (२) **गुटिका**—

अथ गुडूच्यादिपञ्चभद्रकषायौ निकषा यत्नवन्ताववलोक्य पलायन्त पित्तसमीरज्वराः। तदनन्तरं जगदन्तरप्रसिद्धः स्वयमनश्वरसारो यक्ष्मपरि-

---

"वटकाश्चाथ कथ्यन्ते तन्नाम गुटिका वटी। मोदको वटिका पिण्डी गुडो वर्तिस्तथोच्यते॥ लेहवत् साध्यते वह्नौ गुडो वा शर्कराथवा। गुग्गुलुर्वा क्षिपेत्तत्र चूर्णं तन्निर्मिता वटी॥ कुर्यादवह्निसिद्धेन क्वचिद्गुग्गुलुना वटिम्। द्रवेण मधुना वापि गुटिका कारयेद्बुधः" इति गुटिकासामान्यलक्षणं शार्ङ्गधरे॥ २॥

अन्यानपि स्वदृष्टान् विषयानाह **अथेत्यादिना**। अथ मन्दाग्निहननानन्तरम्। पित्तसमीरजाः-पित्तेन वातेन वातपित्ताभ्यां च समुत्पन्नास्त्रयोऽपि ज्वरा इत्यर्थः। निकषा-स्वेषां समीपे। यत्नवन्तौ-तादृशरोगनिषूदने समुद्युक्तौ। गुडूच्यादिश्च पञ्चभद्रं च गुडूचीपञ्चभद्रे, तयोः कषायौ क्वाथौ। अवलोक्य, पलायन्त-कान्दिशीका बभूवुः। (१) **गुडूच्यादिक्वाथः**—"गुडूचीधान्यकारिष्टरक्तचन्दनपद्मकैः। गुडूच्यादिगणक्वाथः सर्वज्वरहरः स्मृतः" इति। गुडूच्यादिकषायस्यापरो योगः—"गुडूचीधान्यमुस्ताभिश्चन्दनोशीरनागरैः। कृतं क्वाथं पिबेत् क्षौद्रसितायुक्तं ज्वरातुरः॥ तृतीयज्वरनाशाय तृष्णादाहनिवृत्तये" इति। (२) **पञ्चभद्रक्वाथः**—"पर्पटाब्दामृताविश्वकैरातैः साधितं जलम्। पञ्चभद्रमिदं ज्ञेयं वातपित्तज्वरापहम्" इति सर्वे शार्ङ्गधरसंहितायाम्। **तदनन्तरमिति**। वातपित्तज्वरादीनां विनिपातादनन्तरम्। जगदन्तरप्रसिद्धः—जगति सर्वत्र वैद्यविदुषां विदित इत्यर्थः। स्वयम् अनश्वरसारः-स्वभावत एवानिवार्यवीर्यः। यक्ष्मणः परिक्षपणे-हनने, दक्षिणः-शक्तः सन्नपि। त्रैलोक्यचिन्तामणिः-तन्नामकं महौषधम्। संनिपातेन साकं ज्वराणाम् अष्टविधानां-सह सन्निपातेनाष्टविधानां

क्षपणदक्षिणः सन्नपि संननाह स्वयं त्रैलोक्यचिन्तामणिर्विनिपाताय संनिपातेन साकमष्टविधानामपि ज्वराणाम् ।

ज्वराणामित्यर्थः । विनिपाताय-विनाशाय । सन्ननाह-सन्नद्ध आसीत् । यक्ष्मणः प्रतिपन्थिनायकस्यैव विनाशने विशिष्टशक्तियुक्तमपि स्वयमेवेदं रसौषधं ससंनिपातस्य ज्वरसंघातस्य घातायैव प्रथमं प्रसभं प्रयतत इति भावः । वातज्वरः, पित्तज्वरः, श्लेष्मज्वरः, वातपित्तज्वरः, वातकफज्वरः, पित्तकफज्वरः, आगन्तुकज्वरः, सन्निपातज्वर इति सोऽष्टधा । "ज्वरोऽष्टधा पृथक् द्वन्द्वसंघातागन्तुजः स्मृतः" इति निदाने । "मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता" इति सन्निपातज्वरस्य दुश्चिकित्स्यत्वमालोच्य सन्निपातेन साकमिति तस्य सर्वज्वरविशिष्टत्वं संसूचितम् । त्रैलोक्यचिन्तामणिरसः "रसं वज्रं हेमतारं ताम्रं तीक्ष्णाभ्रकं मृतम् । गन्धकं मौक्तिकं शङ्खं प्रवालं तालकं शिला ॥ शोधितं च समं सर्वं सप्ताहं भावयेदनु । चित्रमूलकषायेण भानुदुग्धैर्दिनत्रयम् ॥ निर्गुण्डीसूरणद्रावैर्वज्रिदुग्धैर्दिनत्रयम् । अनेन पूरयेत् सम्यक् पीतवर्णान् वराटकान् ॥ टङ्कणं रविदुग्धेन पिष्ट्वा तेषां मुखं क्षिपेत् । रुद्ध्वा भाण्डे पुटेत् पश्चात् स्वाङ्गशीतं विचूर्णयेत् ॥ चूर्णतुल्यं मृतं सूतं वैक्रान्तं सूतपादकम् । शिग्रुमूलद्रवैः सर्वं सप्तवारं विभावयेत् ॥ चित्रमूलकषायेण भावनाश्चैकविंशतिः । आर्द्रकस्य रसेनैव भावनाः सप्त कारयेत् ॥ सूक्ष्मचूर्णं ततः कृत्वा चूर्णपादांशटङ्कणम् । टङ्कणांशं वत्सनाभं तत्समं मरिचं क्षिपेत् ॥ चतुर्गुञ्जामितं खादेत् कणाक्षौद्रं लिहेदनु । क्षौद्रैर्वा चार्द्रकद्रावैः शुण्ठ्या वाथ गुडैर्युतम् ॥ वातं विद्रधिपाण्डुशूलग्रहणीरक्तातिसारान् महायक्ष्मप्लीहजलोदराश्मरितृषाशोकान् हलीमं तथा । लूताकृच्छ्रभगन्दरान् ज्वरगणं चार्शांसि कुष्ठं जयेत् साध्यासाध्यरुजो निहन्ति च रसस्त्रैलोक्यचिन्तामणिः" इति योगरत्नाकरे ।

स्थावरजङ्गमगरले ज्वरमामोत्थं व्रणोपजातं च ।
आरोग्यपूर्वचिन्तामणिरपि निघ्नन्मया रणे दृष्टः ॥ ३ ॥

---

स्थावरेति । आरोग्यपूर्वचिन्तामणिरपि-आरोग्यचिन्तामणिर्नामौषधमपि । रणे रोगसमुदाय-भेषजसमूहाभ्यां निर्वर्त्यमानेऽस्मिन् युद्धे । स्थावरगरलं-ओषधिवर्गादिसम्बन्धिविषम्, जङ्गमगरलं-प्राणिसम्बन्धिविषं च ते । आमोत्थं ज्वरं-आमज्वरं नाम रोगम् । व्रणोपजातं-दुष्टव्रणजसमुद्भूतं ज्वरं च । निघ्नन्-मारयन् । मया दृष्टः-प्रत्यक्षतो मयावलोकितः । एकेनैवौषधेनानेन दशविधेषु स्थावरविषेषु, षोडशविधेषु जङ्गमविषेषु, आमज्वरे, व्रणोत्थे च ज्वरे रणभुवि हन्यमानेषु साक्षादहं तद्व्यतिकरमपश्यमिति महता सन्तोषेण मन्त्रिणे महाराजः प्राह । स्थावरं मूलाद्यात्मकं दशविधं विषम्; "मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" इति सुश्रुतेनोक्तम् । रसोपरसपाषाणादिसम्बन्धीनि विषाणि धातुविषाणि; तान्यपि स्थावरविषेऽन्तर्भवन्ति । सर्पादीनां विषाणि जङ्गमविषाणि; तानि च "दृष्टि-निःश्वास-दंष्ट्रा-नख-मूत्र-पुरीष-शुक्रारा-लाला-स्पर्श-मुखदंश-पर्दित-गुदास्थि-पित्त-शूक-शवभेदात् षोडश" भवन्ति । "लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः । तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥ क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः । आमज्वरस्य लिङ्गानि" इति रुग्विनिश्चये आमज्वरलक्षणम् । **आरोग्यचिन्तामणिः**—पूर्वस्मिन् अङ्के भूपतिरससिन्दूरेति श्लोकस्य (श्लोक ८०) व्याख्यानेऽस्यौषधस्य दृश्यतां विवरणम् । चिन्तामणिरसस्य योगान्तरमपि विद्यते; यथा भैषज्यरत्नावल्याम्:—रसविषगन्धकटङ्कणताम्रयवक्षारकं च सव्योषम् । दन्तीफलद्वयं च क्षौद्रं दत्वा शतं वारान् ॥ संमर्द्य रक्तिमित्या वटिकाः कार्या भिषग्वरैः सम्यक् । शुण्ठीपिष्टेन समं खादेदेकां च वा द्वित्राः ॥ संप्राश्य नारिकेलीजलमनुपेयं प्रयुञ्जीत । भेदानन्तरमेव प्रक्षालितभक्तमथ तक्रम् ॥ सैन्धवजीरकसहितं तक्रं पाने प्रयोक्तव्यम् । प्रशमयति सन्निपातज्वरं तथामज्वरं

ततः सर्वज्वरानपि निगृहीतवन्तं ज्वराङ्कुशमुत्तरेण गुल्मार्शस्संग्रहग्रहणीर्विपाटितवतो ग्रहणीकपाटस्य पूर्वभागे—

---

च विषमं च ॥ प्लीहानं चाश्मानं श्वासं कासं निगम्य वेगांश्च । चिन्तामणी रसोऽयं सकलारोग्याय भैरवप्रोक्तः " इति ॥ ३ ॥

तत इति । सर्वज्वरानपि-वातादिभिः समुत्पन्नान् अष्टप्रकारानपि ज्वरान् । निगृहीतवन्तं-निषूदितवन्तम् । ज्वराङ्कुशं नामौषधम् । मया दृष्टमिति पूर्वेणान्वयः । अङ्कुशशब्दः पुंनपुंसकयोः । ज्वराङ्कुशरसः - " खण्डितं मृगशृङ्गं च ज्वालामुख्या रसैः समम् । रुध्वा भाण्डे पचेच्चुल्यां यामयुग्मं ततो नयेत् ॥ अष्टांशं त्रिकटुं दद्यान्निष्कमात्रं च भक्षयेत् । नागवल्लीरसैः सार्धं वातपित्तज्वरापहम् ॥ अयं ज्वराङ्कुशो नाम रसः सर्वज्वरापहः " इति शार्ङ्गधरः । पुनः तं ज्वराङ्कुशमुत्तरेण-ज्वराङ्कुशस्योत्तरभाग इत्यर्थः ; 'एनपा द्वितीया' इति द्वितीयान्तत्वम् । गुल्मम् , अर्शः, संग्रहग्रहणीम् इति रोगान् । विपाटितवतः-निहतवतः । ग्रहणीकपाटस्य-तन्नाम्न औषधस्य । पूर्वभागे । युद्धमाचरतो ज्वराङ्कुशस्योत्तर भागे, तथा युध्यतो ग्रहणीकपाटस्य पूर्वभागे च वक्ष्यमाणं बलवदायोधनोद्युक्तम् औषधमप्यद्राक्षमिति संबन्धः । अर्शसो गुल्मस्य च लक्षणादिविवरणं द्वितीयाङ्के व्याख्याने (१७, २३ पद्ययोः) द्रष्टव्यम् । संग्रहग्रहणी नाम— " अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा । द्रवं शीतं घनं स्निग्धं सकटीवेदनं शकृत । आमं बहु सपैच्छिल्यं सशब्दं मन्दवेदनम् । पक्षान्मासाद्दशाहाद्वा नित्यं वाप्यथ मुञ्चति ॥ दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा । दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी ॥ सा भवेदामवातेन संग्रहग्रहणीमता " इति वर्ण्यते रुग्विनिश्चये । ग्रहणीकपाटरसः—" रसेन्द्रगन्धातिविषाभयाभ्रं क्षारत्रयं मोचरसो वचा च । जया च जम्बीररसेन पिष्टं पिण्डीकृतं स्याद्ग्रहणीकपाटः " इति योगरत्नाकरे ।

या पञ्चामृतपर्पटी ग्रहणिकायक्ष्मातिसारज्वर-
स्त्रीरुक्पाण्डुगराम्लपित्तगुदजक्षुन्मान्द्यविध्वंसिनी ।
तामद्राक्षमहं रणे स्त्रियमपि व्यातन्वतीं पौरुषं
चामुण्डामिव चण्डमुण्डसमरप्रक्रान्तदोर्विक्रमाम् ॥ ४ ॥

---

**या पञ्चामृतेति** । या पञ्चामृतपर्पटी ज्वराङ्कुशमुत्तरेण ग्रहणीकपाटस्य पूर्वभागे च ग्रहण्यादिरोगाणां विध्वंसिनी आसीत् तामप्यहम् अद्राक्षमित्यन्वयः । पञ्चामृतपर्पटी नाम या-यदौषधम् । ग्रहणिका-वातग्रहणी, पित्तग्रहणी, कफ-ग्रहणी, सन्निपातग्रहणी, संग्रहग्रहणीति पञ्चविधोऽयं रोगः; यक्ष्मा-राजयक्ष्मा; अतिसारः-वातपित्तकफसन्निपातशोकामाख्यैर्हेतुभिः व्याधिरेष षोढा भवति; ज्वरः-अष्टविधः पूर्वमपि निर्दिष्टः; स्त्रीरुक्-असृग्दरयोनिव्यापन्मूढगर्भाद्यात्मको बहु-विधः स्त्रीरोगः; पाण्डुगदः-पाण्डुरोगः; स च वातजः, पित्तजः, श्लेष्मजः, सन्निपातजः, मृत्तिकाज इति पञ्चविधः; गरं-पूर्वोक्तं विषम्; अम्लपित्तगदः-उदरे उरसि गले च दाहजनको रोगविशेषः; गुदजानि-अर्शांसि; क्षुन्मान्द्यं-अग्निमान्द्यम्; इत्येतेषां विध्वंसिनी-विनाशिनी । तां-तादृशशक्तिसंपन्नाम् । स्त्रियमपि-जातिस्वभावानुगुण्येन स्वयमबलामपि; पर्पटीशब्दस्य स्त्रीलिङ्गत्वमभि-प्रेत्य तस्यौषधस्य स्त्रीत्वारोपः क्रियते । सत्यपि स्त्रीत्वे तया प्रदर्शितं पौरुष-मसाधारणं दृष्टान्तमुखेन दृढयति चामुण्डामिवेति । चण्डमुण्डाभ्यां-तदाख्याभ्यां प्रचण्डभीमपराक्रमवद्भ्याम् असुराभ्याम्, यः समरः-युद्धम्, तस्मिन् प्रक्रान्तः-प्रकटितः, दोर्विक्रमः-बहुभुजबलशक्तिः यया ताम् । चामुण्डामिव-चण्डिकानाम्नीं बहुविधदेवताशक्तिरूपावयवां देवीं कालिकामिव । रणे-आयोधने । पौरुषं-पराक्रमम् । पुरुषत्वमपीति विरोधाभासश्च । व्यातन्वतीं-विशिष्य प्रकटयन्तीम् । अहम् अद्राक्षम् । यथा चामुण्डी नाम कालिकादेवी चण्डमुण्डधूम्रलोचन-रक्तबीजाख्यान् अनेकानसुरान् स्वयमेकैव समरे पुरा सपदि व्यापादयामास, तथैवैषा पञ्चामृतपर्पट्यपि ग्रहणीप्रभृतीन् परमदुर्जयानामयान् स्वयमेकैव समराङ्गणे

पश्चाद्भागे तस्याः—

अरुचिप्लीहवमिज्वरकासार्शःश्वासशूलानाम् ।
सूक्ष्मैलादिमचूर्णं निरवर्णयमाशु युधि निहन्तारम् ॥ ९ ॥

---

स्थित्वा सांप्रतमस्मत्पुरत एवाहनदिति भावः। चण्डिकानाम्न्या चामुण्ड्या चण्डमुण्डादीनां संहारं प्रति पूर्वं प्रथमाङ्कव्याख्यायां (४४, ४९ पद्ययोरन्तरा) विवरणं द्रष्टव्यम्। ग्रहण्यादीनां लक्षणानि पूर्वमेव विवृतानि। **अम्लपित्तस्य** निदानम्—"विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम्। पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्तः॥ अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः। हृत्कण्ठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक्" इति। **पञ्चामृतपर्पटीरसः**—"लोहाभ्रार्करसं समं द्विगुणितं गन्धं पचेत् कोलिकाकाष्ठाग्नौ मृदुले निधाय सकलं लोहस्य पात्रे भिषक्। सर्वं गोमयमण्डले विनिहिते रम्भादले विन्यसेत्तस्योर्ध्वं कदलीदलं द्रुततरं सम्यक् पिधानार्थकम्॥ स्यात् पञ्चामृतपर्पटी ग्रहणिकायक्ष्मातिसारज्वरस्त्रीरुक्पाण्डुगराम्लपित्तगुदजक्षुन्मान्द्यविध्वंसिनी" इति योगरत्नाकरादिषु। या पञ्चामृतपर्पटीति पद्यस्यास्य पूर्वार्धं वैद्यकग्रन्थादेवोपात्तमिति पूर्वोक्तप्रमाणेनैव सम्यक् ज्ञायते। (अतः पाण्डुगदाम्लेति, गदरुक्क्षुन्मान्द्येति च पाठभेदस्त्वसाधुः।) ॥ ४ ॥

**पश्चाद्भाग इति।** तस्याः-पञ्चामृतपर्पट्याः। पश्चाद्भागे पश्चिमप्रदेशे पृष्ठतो वा।

तत्पश्चाद्भागे किं विद्यत इत्येतदेव विवृणोति **अरुचीति।** अरुचिः-अरोचकः, अन्नेऽनभिलाष इत्यर्थः; भक्तोपघातमिति चाभिधीयते; "वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः। अरोचकाः स्युः" इति तद्रोगस्य हेतुवैविध्यमुक्तम्। प्लीहा-प्लीहामय उदररोगेष्वन्यतमः, यस्य च विषयो द्वितीयाङ्कव्याख्यायां (श्लो. २३) निरूपितः। वमिः-छर्दिः; वमनमित्यर्थः; "अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति। अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः॥

तदनु जलजाक्ष इव दनुजलोकस्य सिद्धयोगः शूकदोषस्य, गोक्षुरकादिचूर्णमिश्रितपयःपानविधिः पुंस्त्वदोषस्य, त्रिविक्रमरसो मूत्रकृच्छ्रा-

---

श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः। नार्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः॥ बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्। छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः॥ निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावितः" इति छर्देर्निदाननिरुक्ती। तथा ज्वरः। कासार्शसोरपि विवरणं द्वितीयाङ्कव्याख्याने कृतम्। श्वासः-"यदा स्रोतांसि संरुध्य मारुतः कफपूर्वकः। विष्वग् व्रजति संरुद्धस्तदा श्वासान् करोति सः। महोर्ध्वच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा। भिद्यते स महाव्याधिः श्वास एको विशेषतः" इति निदाने माधवकरः। शूलः-कुक्षिशूलाख्यो व्याधिः; परिणामशूलान्नद्रवशूलादिभेदेन स विविधो भवति। एवम् अरोचकादीनां रोगाणाम् आशु-युधि-रणाङ्गणे। निहन्तारं सूक्ष्मैलादिमचूर्णं-तन्नामकमौषधम्। निरवर्णयम्-अद्राक्षम्। **सूक्ष्मैलादिचूर्णम्**—"सूक्ष्मैला पिप्पलीमूलं चव्यचित्रकनागरम्। मरिचं दीप्यकं चैव वृक्षाम्लं चाम्लवेतसम्॥ अजमोदाजगन्धा च कपित्थं चार्धकार्षिकम्। अत्यन्तपरिशुद्धायाः शर्करायाश्चतुष्पलम्॥ चूर्णं सेव्यमिदं कर्षं परमं रुचिवर्धनम्। प्लीहकासावथार्शांसि श्वासं शूलं वमिं ज्वरम्॥ निहन्ति दीपयत्यग्निं बलवर्णकरं परम्। वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम्" इति गदनिग्रहे॥ ५॥

**तदन्विति**। अस्मिंश्च गद्ये विविधानां रोगाणां निवारणोपयोगीनि विविधान्यौषधानि संगृह्यन्ते। दनुजलोकस्य-मधुकैटभप्रभृत्यसुरसमूहस्य। विजयमहोत्सवेन-जयोपजनितप्रमोदप्रकटनार्थं क्रियमाणेन महतोत्सवेन। जलजाक्ष इव-महाविष्णुरिव। शूकदोषादीनां रोगगणानां विजयेन सिद्धयोगादयो भेषजसमूहाः समस्तजनैरप्यस्तूयन्तेत्यन्वयः। जलजाक्ष इव दनुजलोकस्येत्युपमानं वक्ष्यमाणं रोगौषधयुग्मं प्रत्येकशोऽनुबध्नाति। सिद्धयोगः-तन्नामकमौषधम्। शूकदोषस्य-

श्मर्याः, विष्यन्दनतैलयोगो भगंदरस्य, लङ्केश्वरः कुष्ठस्य, नित्योदितरसो मूलानाम् , विद्याधररसो गुल्मानाम् , त्रिनेत्ररसः शूलानाम् ,

---

शेफसि समुद्भवतोऽष्टादशसङ्ख्याकस्य विकारसमुदायस्य । निहन्तीति शेषः । (सिद्धवसन्तः शुक्रदोषस्येति पाठान्तरम् ।) गोक्षुरकादिचूर्णेन मिश्रितस्य पयसः-क्षीरस्य पानविधिः । पुंस्त्वदोषस्य-षण्डत्वादिरोगस्य, शुक्रदोषोत्पन्नस्य रोग-समूहस्य वा । एवमुत्तरत्रापि ज्ञेयम् । शूकदोषः —“ अक्रमाच्छेफसो वृद्धिं योऽभि-वाञ्छति मूढधीः । व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ” इति । पुंस्त्वदोषाश्च प्रायः शुक्रदोषजाः । “ वात-पित्त-श्लेष्म-कुणप-ग्रन्थि-पूति-पूय-क्षीण-मूत्र-पुरीषरेतसः पुरुषाः प्रजोत्पादने न समर्था भवन्ति ” इति, “ आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा । सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसंज्ञितः ” इति च पुंस्त्वदोषाः शारीरे संगृहीताः । मूत्रकृच्छ्रम् —“ व्याया-मतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात् । आनूपमांसाध्यशनादजीर्णात्स्युर्मूत्र-कृच्छ्राणि नृणां तथाष्टौ ॥ पृथङ्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ । मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात् ” इति तन्निदानम् । भगन्दरः—“ गुदस्य द्व्यङ्गुले देशे पार्श्वतः पिडकार्तिकृत् । भिन्ना भगन्दरो ज्ञेयः ” इति तल्लक्षणम् । मूलानां-अर्शसाम् । अर्शांसि—“ अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये । दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ” इति । गुल्मः—“ दुष्टा वातदयोऽत्यर्थं मिथ्याहारविहारतः । कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्तर्गन्थिरूपिणम् ॥ तस्य पञ्चविधं स्थानं पार्श्वहृन्नाभिवस्तयः । हृन्नाभ्यो-रन्तरे ग्रन्थिः संचारी यदि वाचलः । वृत्तश्चयोपचयवान् स गुल्म इति कीर्तितः ” इति । शूलानि—“ बलासः प्रच्युतस्स्थानात् पित्तेन सह मूर्छितः । वायुमादाय कुरुते शूलं जीर्यति भोजने । कुक्षौ जठरपार्श्वेषु नाभौ वस्तौ स्तनान्तरे । पृष्ठमूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः । भुक्तमात्रेऽथवा वान्ते

महावह्निरस उदररोगाणाम्, गिरिकर्ण्यादिविधिर्गुञ्जातैललेपश्च शिरोरोगस्य, चन्द्रोदयवर्तिश्चक्षूरोगस्य, सौभाञ्जनादिपक्वतैलनिषेकः कर्ण-

---

जीर्णेऽन्ने च प्रशाम्यति । तत्परीणामजं शूलं दुर्विज्ञेयं महागदम् ॥ तमाहू रसवाहानां स्रोतसां दुष्टिहेतुकम् । केचिदन्नद्रवं प्राहुरन्ये तत्पक्तिदोषतः ॥ पक्तिशूलं वदन्त्येके केचिदन्नविदाहजम्" इति भोजादयः । **उदररोगाः**- वात-पित्त-कफ-सन्निपातैश्चत्वारः, प्लीहोदर-यकृदुदर-बद्धोदर-क्षतोदर-जलोदराणीति पञ्च च । "रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि च । अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसंचयात् ॥ रुध्वा स्वेदाम्बुवाहीनि दोषाः स्रोतांसि संचिताः । प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥ आध्मानं गमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता । शोथः सदनमङ्गानां संगो वातपुरीषयोः ॥ दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि" इति तेषां सामान्यनिदानम् । **शिरोरोगाः**—शिरस्समाश्रित्य जायमाना व्याधयः; तन्निदानं च—"शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः । सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा । सूर्यावर्तानन्तवातार्धावभेदशङ्खकैः" इत्युक्तम् । **चक्षूरोगस्य**-नेत्ररोगसमुच्चयस्य—"नव सन्ध्याश्रयास्तेषु वर्त्मजास्त्वेकविंशतिः । शुक्लभागे दशैकश्च चत्वारः कृष्णभागजाः ॥ सर्वाश्रयाः सप्तदश दृष्टिजा द्वादशैव तु । द्वौ च बाह्याश्रयावन्यावनिमित्तनिमित्तजौ ॥ षट्सप्ततिर्नेत्ररोगाः संग्रहेण प्रकीर्तिताः" इति तत्सङ्ख्या निदाने । **कर्णरोगाः**—कर्णशूलकर्णनाद-बाधिर्यक्ष्वेलस्रावादयो विविधाः । ते च कर्णस्यान्तर्भागं पाल्यादिकं चाश्रिता उद्भवन्ति । **कृत्या**-आभिचारिकी क्रिया, उन्मादविषज्वराः पूर्वनिर्दिष्टा रोगाः, सर्वग्रहाः-स्कन्दापस्मारादयः समस्ता ग्रहाः । "रोगकृत्याग्रहादीनां निरासः शान्तिरीरिता" इति कृत्याग्रहादीनां शान्तिकर्मविधौ षट्कर्मदीपिकायां बालपीडककृत्याग्रहादयो निर्दिष्टाः । **ग्रहाविष्टलक्षणम्** "क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदिति । नखैर्दन्तैर्दारयति धात्रीमात्मानमेव वा ॥ ऊर्ध्वं निरीक्षते दन्तान्

रोगाणाम्, सिद्धार्थत्रिफलौषधयोगविशेषपानविधिः कृत्योन्मादविषज्वरसर्वग्रहाणाम्, मधुसर्पिर्युतचूर्णविशेषलेहनविधिः पाण्डु-हृद्रोगभगन्द-

---

खादेत् कूजति जृम्भते। भ्रुवौ क्षिपति दन्तौष्ठं फेनं वमति चासकृत् ॥ क्षामोऽति निशि जागर्ति शूनाक्षो भिन्नविट्स्वरः। मांसशोणितगन्धिश्च न चाश्नाति यथापुरा ॥ सामान्यं ग्रहजुष्टानां लक्षणं समुदाहृतम्" इति निदाने माधवकरः। एवं शूकदोषप्रभृतिप्रमेहान्तानां रोगाणाम्। विजयमहोत्सवेन-समस्तामयविजयोत्पन्नसन्तोषातिशयेन। समुत्सारिताः-निरस्ताः, सर्वरोगखेदाः-समस्तव्याधिजनितविविधक्लेशाः यैस्ते; एतच्च पदं सिद्धयोगप्रभृतिमेहकुञ्जरकेसरिपर्यन्तानाम् औषधनामसूचकानां पदानां विशेषणम्। अत एव सिद्धयोगादय औषधयोगाः सर्वेऽपि समस्तजनैरपि-नीरोगतामधिगतैरशेषैरपि मानवैः। अस्तूयन्त-प्राशंस्यन्त। (समरजनैरप्यस्तूयन्तेति पाठे युद्धकर्मणि समुद्यतैरपि जनैरित्यर्थः।) सुमहतां बहूनां व्याधीनां नातिचिरादेव नाशितत्वात् महावीर्यवतां सिद्धौषधानां महिमा महाजनैः आरोग्यानुभवप्रमुदितैः सुतरामभिनन्दित इति भावः। (१) सिद्धयोगरसः-"शुद्धं सूतं द्विधा गन्धं कुर्यात् खल्वेन कज्जलीम्। तयोः समं तीक्ष्णचूर्णं मर्दयेत् कन्यकाद्रवैः ॥ द्वियामान्ते कृतं गोलं ताम्रपात्रे विनिक्षिपेत्। आच्छाद्यैरण्डपत्रेण यामार्धेऽत्युष्णता भवेत् ॥ धान्यराशौ न्यसेत् पश्चादहोरात्रात् समुद्धरेत्। संचूर्ण्य गालयेद्वस्त्रे ध्रुवं वारितरं भवेत् ॥ भावयेत् कन्यकाद्रावैः सप्तधा भृङ्गजैस्तथा। काकमाचीकुरण्टोत्थद्रवैर्मुण्ड्या पुनर्नवैः ॥ सहदेव्यमृतानीलीनिर्गुण्डीचित्रजैस्तथा। सप्तधा तु पृथक् द्रावैर्भाव्यं शोष्यं तथातपे ॥ सिद्धयोगो ह्ययं ख्यातः सिद्धानां च मुखागतः" इति शार्ङ्गधरः। (२) गोक्षुरादिचूर्णम्—"गोक्षुरकः क्षुरकः शतमूली वानरिनागबलातिबला च। चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति" इति चक्रदत्तः। (३) त्रिविक्रमरसः—"मृतताम्रमजाक्षीरे पाच्यं तुल्ये गते द्रवे। तत्ताम्रं शुद्धसूतं च गन्धकं

च समं ततः ॥ निर्गुण्डुयत्थद्रवैर्मर्द्यं दिनं तद्गोलमन्धयेत् । यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम् ॥ बीजपूरस्य मूलं तु सजलं चानुपाययेत् । रस-स्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत्" इति रसचिन्तामणौ । (४) **विष्य-न्दनतैलम्**—"चित्रकार्कौ त्रिवृत्पाठे मलफूहयमारकौ । सुधां वचां लाङ्गलकीं हरितालं सुवर्चिकाम् ॥ ज्योतिष्मतीं च संहृत्य तैलं क्षीरे विपाचयेत् । एतद्वि-ष्यन्दनं नाम तैलं युज्याद्भगन्दरे ॥ शोधनं रोपणं चैव सावर्ण्यकरणं परम्" इति भैषज्यरत्नावल्याम् । (५) **लघुलङ्केश्वरः**—"सूताभ्रशुल्बानि च मारि-तानि सगन्धकं तालशिला द्रवौ च । विषाम्लवेतौ च समं समस्तं दिनत्रयं चाम्लरसैर्विपेष्यम् ॥ समाक्षिकेणैव मृतेन कुर्याद्वटीं द्विगुञ्जां च शतारुहन्त्रीम् । लङ्केश्वराख्यस्तु रसः प्रसिद्धो निहन्ति कुष्ठान् विविधान् लघुः सः" इति रसकामधेनौ । (६) **नित्योदितरसः**—"मृतसूताभ्रलोहार्कविषं गन्धं भवेत् समम् । सर्वतुल्यं च भल्लातफलमेकत्र चूर्णयेत् ॥ द्रवैः सूरणकन्दोत्थैः खल्वे मर्द्यं दिनद्वयम् । लिहेदाज्ये माषमात्रं रसो नित्योदितोऽर्शसि" इति रसमञ्जर्याम् । (७) **विद्याधररसः**—"पारदं गन्धकं तालं ताप्यं स्वर्णं मन-श्शिलाम् । कृष्णाक्वाथैः स्नुहीक्षीरैर्दिनैकं मर्दयेद्दृढम् ॥ निष्कार्धं श्लैष्मिकं गुल्मं हन्ति विद्याधरो रसः" इति भैषज्यरत्नावल्याम् । (८) **त्रिनेत्र-रसः**—"रसताम्रगन्धकानां द्विगुणान्तरवर्धितांशानाम् । दृढखल्वमर्दितानां पुट-पाकानां निषेवितं भस्म ॥ गुञ्जाप्रमाणमार्द्रकसिन्धूद्भवचूर्णसंयुक्तम् । सैरण्डतैलमा-क्षिकमथवा तद्धिङ्गुदुग्धकोपेतम् ॥ शमयति शूलमशेषं तत्तद्रसभावितं बहुशः । उपचूर्णैरनुपानैस्तैस्तैः सहितं कफानिलार्तिहरम् । सघृतमधु पक्तिशूलं शमयति नाम्ना त्रिनेत्ररसः" इति रससारसंग्रहे । (९) **महावह्निरसः**—"चतुस्सूतस्य गन्धाष्टौ रजनी त्रिफला निशा । प्रत्येकं च द्विभागं स्यात् त्रिवृज्जैपालचित्रकम् ॥ प्रत्येकं च त्रिभागं स्यात् त्र्यूषणं दन्तिजीरके । प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ॥ जयन्तीस्नुक्पयोभृङ्गवह्निवातारितैलकैः । एकैकस्मिन् क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् । महावह्निरसो नाम निष्कमुष्णजलैः पिबेत् ॥ विरेचनं भवेत्तेन तक्रभक्तं ससैन्धवम् । सर्वोदरहरः प्रोक्तो मूढवातहरः परः" इति

रशोफकुष्ठोदरार्शसाम्, मेहकुञ्जरकेसरी प्रमेहाणां च विजयमहोत्सवेन समुत्सारितसर्वरोगखेदाः समस्तजनैरप्यस्तूयन्त। ततः किमवशिष्यते कार्यमस्माकम्।

---

शार्ङ्गधरः। (१०) गिरिकर्ण्यादिविधिः—"मूलं तु गिरिकर्ण्यास्तु शुण्ठीक्वाथेन पेषयेत्। सकुङ्कुमं सहारिद्रं तेनाथ क्वथितेन च। लेपः शिरसि कर्तव्यः शिरोरोगप्रशान्तये" इति वैद्यचिन्तामणौ। (११) गुञ्जातैलम्—"गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन च। कण्डूदारुणहृत्कुष्ठकपालव्याधिनाशनम्" इति गदनिग्रहे। (१२) चन्द्रोदयवर्तिः—"शङ्खनाभिर्विभीतस्य मज्जा पथ्या मनःशिला। पिप्पली मरिचं कुष्ठं वचा चेति समांशकम्॥ छागीक्षीरेण संपेष्य वर्तिं कृत्वा यवोन्मिताम्। हरेणुमात्रां संघृष्य जलैः कुर्यात्तथाञ्जनम्॥ तिमिरं मांसवृद्धिं च काचं पटलमर्बुदम्। रात्र्यान्ध्यं वार्षिकं पुष्पं वर्तिश्चन्द्रोदयो जयेत्" इति शार्ङ्गधरः। (१३) सौभाञ्जनादितैलम्—"सौभाञ्जनस्य निर्यासस्तिलतैलेन पाचितः। सरामठः कर्णरोगशान्तये कर्णपूरकः" इति भैषज्यरत्नावल्याम्। (सौवीरादिपक्वतैलनिषेक इति पाठान्तरम्।) (१४) सिद्धार्थादिविधिः—"सिद्धार्थको हिङ्गु वचाकरञ्जौ देवदारु च। मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम्॥ समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्। बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम्॥ नस्यमालेपनं चैव स्नानमुद्वर्तनं तथा। अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः" इति चक्रदत्तः। (१५) चूर्णविशेष इति नवायसचूर्णम् उक्तं भवति; मधुसर्पिर्भ्यां युतः चूर्णविशेषः तस्य लेहनविधिः-आस्वादनक्रमः। नवायचूर्णम्—"त्र्यूषणत्रिफलामुस्तविडङ्गदहनाः समाः। नवायसरजोभागस्तच्चूर्णं मधुसर्पिषा॥ भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शश्शमनं परम्" इति गदनिग्रहे। (१६) मेहकुञ्जरकेसरी—"रसगन्धायसाभ्राणि नागवङ्गौ सुवर्णकम्। वज्रकं मौक्तिकं सर्वमेकीकृत्य विचूर्णयेत्॥ शतावरीरसेनैव गोलीं कृत्वातपे न्यसेत्। बुद्ध्वा शुष्कं तमुद्धृत्य शरावे सुदृढे क्षिपेत्॥ सन्धिलेपं

मन्त्री—स्वामिन्, श्रूयताम् ।

जन्यार्णवोऽरिजनितः सुमहानिदानीं
तीर्णोऽप्यतीर्ण इति निश्चिनुते मनो मे ।
यन्मत्सरेण रणमुव्युपदिष्टकार्यः
कर्णे स तत्परमितो विदधीत यक्ष्मा ॥ ६ ॥

---

मृदा कृत्वा गर्ते तं गोमयाग्निना। पुटेद्यामचतुस्सङ्ख्यं स्वाङ्गशीतं तमुद्धरेत् ॥ श्लक्ष्णखल्वे मृदित्वा तं खादेद्वल्लद्वयं नरः ॥ अष्टादश प्रमेहांश्च जयेन्मासोपयोगतः ॥ अग्नेर्बलं वितनुते मेहकुञ्जरकेसरी'' इति योगरत्नाकरे ॥ तत इति । ततः-एवं रोगाणामशेषाणामपि संहारानन्तरम् । अस्माकं-विज्ञानशर्मप्रभृतीनां जीवराजपक्षनिष्ठानाम् । किं कार्यम् अवशिष्यते-कर्तव्यत्वेन सांप्रतमवशिष्टं कर्म किमास्ते; न कोऽपि शत्रुरितःपरं निजबलनिबर्हणशक्तोऽवशिष्ट इति जीवराजोऽभिप्रैति ।

न ह्येतावतैव विजयेन निरपाया वयमिति निश्चेतुं शक्यत इति संशयाविष्टं स्वाशयं मन्त्री व्यञ्जयति **स्वामिन्निति** । श्रूयतां-किं कष्टमद्याप्यस्तीति व्यक्तीकरोम्याकर्ण्यताम् ।

**जन्यार्णव इति** । अरिजनितः-शत्रुभिरुत्पादितः । "अस्मादृशेषु बलशालिषु—" इति, "कोपाध्मातककुत्स्थपुङ्गव—" इति, "गृह्णीयाम व्यथयितुमरेस्तत्पुरं—" इत्येवमादिभिस्तर्जनवचनैः संनिपात-कुष्ठादिभिः संधुक्षितेन पाण्डुना तत्सहचरैश्च साक्रोशमिदं युद्धमारब्धमिति द्वितीयाङ्कस्थविषयैर्ज्ञायेत । सुमहान्-अपार इव पारवारः स्वयं दुस्तरत्वात् सुतरां विशङ्कटः । जन्यं-युद्धमेव अर्णवः-सागरः । "युद्धमायोधनं जन्यम्" इत्यमरः । इदानीं-अस्मिन् समये । तीर्णोऽपि युद्धस्यान्तः समधिगत इव द्योतमानोऽपीत्यर्थः । मे मनः । अतीर्ण इति निश्चिनुते-न ह्यद्यापि युद्धमवसितमित्येव मच्चित्तं निर्धारयतीति यावत् । स्वनिर्णयस्योपपत्तिमाहोत्तरार्धेन यन्मत्सरेणेति । सः-अस्मत्परमशत्रुत्वेन तथा

**राजा**—विज्ञानसचिव यथार्थनामधेय, मत्सरेण यक्ष्मणः कर्णे किमुक्तं भवेत्। यक्ष्मा च तदाकर्ण्य किं विदध्यात्। तद्विधानेन चास्माकमुत्तिष्ठेत कीदृशमत्याहितम्।

**मन्त्री**—(क्षणं विचिन्त्य) किमन्यत्। ब्रवीमि। केचिदसाध्यरोगा यक्ष्माणमुपासते। तैरस्मान् बाधितुं यक्ष्माणं प्रति मत्सरेण सङ्केतितमिति शङ्के।

---

प्रसिद्धः। यक्ष्मा। रणभुवि-युद्धरङ्गे। मत्सरेण-यक्ष्मप्रणिधिना। यत्-यं रहस्यविषयमुद्दिश्य। कर्णे-यक्ष्मणः श्रोत्रान्तिके। उपदिष्टकार्यैः जीवपक्षविजयोपायकार्यमुद्दिश्योपजापितः। तत्-तथा मत्सरोपदिष्टं विषयम्। इतः परम् विदधीत-कुर्वीत। पूर्वाङ्कावसाने मत्सरेण यक्ष्मणः 'कर्णे एवमिव' इति रहसि य उपजापोऽस्मन्निषूदनोपायमधिकृत्य कृतः, तं कर्मणैवेतःपरं निर्वर्तयितुं यक्ष्मा यतेतेति भावः। अतो मन्त्री मनुते न जन्यार्णवः सांप्रतमपि समभवदुत्तीर्ण इति॥ ६॥

**विज्ञानसचिवेति।** विज्ञानसचिव यथार्थनामधेय-विषयतत्त्वानामतिगूढानामपि अवबोधने वैचक्षण्यविशिष्टत्वात् विज्ञानमन्त्रीति नामास्य नूनमन्वर्थमिति संप्रति राजावगत्य सप्रमोदं तत्संबोधनं सविशेषणमुपयुङ्क्ते। किं रहस्यमुक्तं भवेत्। तत्-मत्सरोक्तं रहस्यम्। किम् अत्याहितं-कीदृशभयावहा व्यापत्। **क्षणं विचिन्त्येति**-मत्सरमन्त्रितस्य छलस्य प्रकारः कीदृशः स्यादिति निपुणमालोच्य। किमन्यत्-मया सुसूक्ष्मं यद्विचार्यते ततोऽन्यत् किं वा भवितुमर्हतीति तात्पर्यम्। ब्रवीमि-मत्सरेण यत् स्वयुक्त्या स्यादालोचितं तदहं वदामि श्रूयतामिति भावः। केचित् असाध्यरोगाः-विषूचिप्रभृतयः। यक्ष्माणम् उपासते-सादरमुपसेवन्ते। तैः-तादृशैः सविस्रम्भं स्वात्मानमनुसरद्भी रोगैः। अस्मान्-अस्मत्पुरमिति यावत्। बाधितुं-उपहन्तुम्। मत्सरेण सङ्केतितं-कपटप्रबन्धः कृतः। इति शङ्के। अनेन च मन्त्रिवितर्केण पूर्वाङ्कावसाने "राजन्,

**राजा**—(सवितर्कम्) एवमेवास्मासु यक्ष्मा यदि वक्रं विधिमुपक्रंस्यते तत्र कमुपायं पश्यति भवान् ।

**मन्त्री**—'भक्ताय मया कदाचिद्भवते दर्शिष्यते साम्बः ।
इति भगवत्या मह्यं जातुचिदावेदितं भक्त्या' ॥ ७ ॥

---

धैर्यमवलम्ब्यताम् । कृतं शोकेन । सन्ति हि कतिपये देवपादमूलोपजीविनः सैन्याः केनापि दुरपनेयप्रवृत्तयः" इति, "तत्प्रयोगेण कुण्ठितशक्तिर्भविष्यति विज्ञानमन्त्रिहतकः" इति च मत्सरेणोपदिष्टं रहस्यं स्वमतिमहिम्ना विज्ञानशर्मणा समालोच्याविष्कृतमत्र । **सवितर्कमिति** । सवितर्कं-सविमर्शम् । यक्ष्मा अस्मासु एवमेव-भवत्सूचितप्रकारेणैव । वक्रं विधिं-अनार्जवेण पथा किमपि पापकृत्यम् । यदि उपक्रंस्यते-कर्तुमुद्योक्ष्यते चेत् । तत्र-तद्विषये । कमुपायं-तस्य छलकृत्यस्य कीदृशं परिहरणप्रकारम् । भवान् पश्यति-त्वमालोचयसि । अपिनाम शत्रुकृतकूटप्रबन्धस्य कोऽपि निर्मूलनोपायस्त्वयाप्यद्यालोचित इति जीवः सौत्सुक्यं मन्त्रिणं पृच्छति ।

प्रतिपक्षप्रयत्नप्रतिहनने सदुपायं समयनियतमुपदिशति **भक्तायेति** । भक्ताय-शिवभक्ताय । भवते-तुभ्यम् । मया-शिवभक्त्या; कर्तृपदमिदम् । कदाचित्-आवश्यकेऽवसरे समुपनते । साम्बः-शिवया सहितः शिवः । दर्शिष्यते-तव संभवतः सङ्कटस्य निवर्तनाय प्रत्यक्षीकरिष्यते । इति-एवमुक्तरीत्या । भगवत्या-महाप्रभावसंपन्नया । भक्त्या-शिवभक्त्या । जातुचित्-पूर्वं कदाचित् शिवभक्त्या-माहितादरेण जीवेन भगवति समुपास्यमाने परमेश्वरे । मह्यं-जीवराजाय । आवेदितं-शिवभक्त्या सादरमभिहितम् । शिवसेवाप्रीतया शिवभक्त्या जीवराजस्य समुपनतात् सङ्कटात् तस्य परित्राणविषये सानुग्रहं यत् प्रतिश्रुतं जीवराजाय, तद्वचनमेवात्र सचिवस्तस्मै श्लोकेनानेन ज्ञापयति । अत्र च "देव, भवान्मामनुस्मृत्य बलवदुत्कण्ठितः प्रकृतकार्यविमुखः संवृत्त इति श्रुत्वा तत्रभवन्तं सान्त्वयितुमागतास्मि । संप्रति विज्ञानमन्त्रिमतानुसारेणैव प्रकृतशत्रुविजयाय व्याप्रियस्व ।

इति कदाचित् कथान्तरे देवेनैव मां प्रति प्रागुक्तम् । तदिदानीं तामेव भगवतीं भक्तिं हृदि दृढमवलम्ब्य भगवतः परमेश्वरस्य दर्शनार्थं संनिधानानुग्रहः प्रार्थ्यताम् । तत एवासाध्यरोगाभिभवः सुलभः प्रतिभाति ।

राजा—यद्येवम्, अनुध्याय विन्ध्यादिविबुधवृन्दनिषेवणम् . करोमि मनसा शरणं भुजङ्गाभरणम् । (इत्यनुध्यायति ।)

---

तदनन्तरम्—"निर्जितनिखिलविपक्षं नीरुजपुरमुस्थमपगतातङ्कम् । अहमागत्य विधास्ये परमानन्दाब्धिमाप्तकामं त्वाम्" इति भक्त्या चतुर्थाङ्के यदावेदितं जीवाय (पुटः २१४) तदेव ज्ञापितमिति ज्ञातव्यम् । (अयं च श्लोकः 'भक्ताय भवते कदापि मया दर्शयिष्यते साम्बः' इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या इति कदाचित् कथान्तरे—इति विषमया भावरहितया वाक्यरीत्या निर्णयसागरीये कोशे मुद्रितोऽस्ति) ॥ ७ ॥

**इतीति**। इति-पूर्वश्लोकोक्तरीत्या । कदाचित् कथान्तरे-पूर्वं कदाचित् राजामात्ययोः संवृत्तस्य सल्लापस्य मध्ये । देवेनैव-प्रभुणा भवतैव । मां प्रति प्रागुक्तम्। 'निर्जितनिखिलविपक्षं' इत्यादिरीत्या पूर्वश्लोकव्याख्यासूचितो विषयो मह्यं त्वयैव पूर्वमभिहितः । तत्-तस्माद्धेतोः । तामेव भगवतीं भक्तिं हृदि दृढमवलम्ब्य-अनन्यवृत्तिना मनसा शिवे परमां भक्तिं विधायेत्यर्थः । भगवतः परमेश्वरस्य दर्शनार्थं-परमशिवं साक्षात्कर्तुम्। संनिधानानुग्रहः-यथा शिवस्य साक्षाद्दर्शनं स्यात् तथा तस्य संनिधानप्राप्तये भक्त्यानुग्रहः कार्य इति । प्रार्थ्यतां-शिवभक्त्याः प्रार्थना क्रियताम् । तत एव-तदीश्वरसन्निधानादेव । (भगवद्दर्शनार्थं सन्निधानानुग्रह इति, पाठान्तरम् । भगवतः स्वात्मनो दर्शनार्थमिति च क्वाचित्कः पाठः ।) **यद्येवमिति** । यद्येवं-एवंयदि अवश्यकर्तव्यं भवति । तर्हीति शेषः । विन्ध्यादिभिः-

**मन्त्री**—आश्चर्यमाश्चर्यम् । भक्तवत्सलता भगवतश्चन्द्रचूडस्य परां कोटिमवलम्बते । यदनुध्यानमात्रमनुतिष्ठति स्वामिनि तदाविर्भावसूचनमेतदालक्ष्यते । यत्किल,

शैलस्थूलशिरोभिरुग्रभुजगप्रायश्रवोभूषणै-
र्जानुस्पर्शिबृहत्पिचण्डचटुलैस्तालद्रुदीर्घाङ्घ्रिभिः ।
प्रावृण्णैशतमिस्रनीलतनुभिर्भस्मत्रिपुण्ड्राङ्कितैः
शूलोद्भासिभुजैः समावृतमिदं भूतैरभूद्भूतलम् ॥ ८ ॥

---

चतुर्मुखप्रभृतिभिः, विबुधैः-देवैः, कृतं निषेवणं-भजनं यस्य तं शिवम् । अनुध्याय-उपास्य । ततः । भुजङ्गाभरणं-शिरोमणिगणविराजमानमहानागभोगैरारचितसर्वाङ्गालङ्करणं भगवन्तं शङ्करम् । मनसा शरणं करोमि-तदेकशरणो भूत्वा ध्यायामि । (मनसा शरणं शङ्करम् इति पाठान्तरम् ।) आश्चर्यमिति । भगवतश्चन्द्रशेखरस्य परां कोटिमारूढं भक्तवात्सल्यं सपदि विभाव्य विज्ञानमन्त्री विस्मितमना आश्चर्यमाश्चर्यमिति सोत्सुकं स्वसंतोषं दर्शयति । यत्-यतः । स्वामिनि-जीवराजे । अनुध्यानमात्रं-केवलं मनसानुस्मरणमेव । अनुतिष्ठति-कुर्वति सति । तस्य-परमेश्वरस्य, आविर्भावस्य-पुरतः प्रादुर्भावस्य, सूचनम् । एतत्-वक्ष्यमाणरीतिको विशेषः । आलक्ष्यते-पुरो दृश्यते । यत्किलेति तमेव विशेषं विवृणोति ।

**शैलस्थूलेति** । इदं-अस्मत्पुरतो विद्यमानम् । भूतलं-भूप्रदेशः । भूतैः-रुद्रानुचरैः देवयोनिविशेषैः । समावृतं-समन्ततो व्याप्तम् । भूता नाम सर्वदा परमेश्वरस्य सहस्रशः केचनानुचराः सन्ति, ये च गणा इति प्रमथगणा इति च व्यवह्रियन्ते । "आकाशमार्गे गच्छन्तमनुगच्छन्ति नित्यशः । ध्यानस्थं परिचर्यन्ति सलिलादिभिरीश्वरम् ॥ नानाशस्त्रधराः शम्भोर्गणास्तु प्रमथाः

स्मृताः। ते च ख्याताः शङ्करस्य भूताः शम्भुगणा इति'' इति महाभारते। (१-११७-१२) सर्वदा समाश्रितभूतगणोऽयमिति कृत्वा भूतेश इति भूतपतिरिति चैष व्यवह्रियते। भूतपतित्वं भूतैरनवरतमनुगम्यमानत्वं चास्य ''स्त्रीसंनिकर्षं परिहर्तुमिच्छन् अन्तर्दधे भूतपतिः सभूतः'' इति कुमारसंभवे (३-८४), ''तद्भूतनाथानुगः'' इति रघुवंशे च (२-५८) विद्यते निर्दिष्टम्। ''यत्र धूमस्तत्राग्निः'' इति न्यायेन, यत्र भूतगणास्तत्र शिवस्यापि सान्निध्यमद्धा भवतीति मत्वा शिवस्याविर्भावसूचकमेतदालक्ष्यत इति पूर्ववाक्ये सूचितम्। यतो भूतैरिदमावृतं स्थलं ततो भूतेशस्याविर्भावश्चात्र यत्सत्यं संभवत्येवेति निर्धार्यैवं मन्त्री राज्ञे निवेदितवान्। भूतानां स्वरूपाणि निरूपयत्यवशिष्टः पद्यभागः। शैलवत् स्थूलानि शिरांसि येषां तैः। उग्राणि-विषोद्वमनदुर्विषहस्वरूपत्वात् उद्वेजकानि, भुजगप्रायाणि-सर्पमयानि, श्रवसां भूषणानि-कर्णाभरणानि येषां तैः। जानू स्पृशन्तीति जानुस्पर्शीनि, जानुपर्यन्तं लम्बमानानीत्यर्थः, अत एव बृहन्ति-स्थूलानि यानि पिचण्डानि-उदराणि तैश्चटुलाः-प्रकम्पमानाः तैः; स्थूलशिरस्कत्वात् लम्बोदरत्वाच्च स्थैर्यमवलम्ब्य स्थातुमशक्ता इति भावः। तालद्रवः-तालवृक्षाः, तद्वत् दीर्घा अङ्घ्रयः येषां तैः। निशायां भवं नैशम्, तमिस्रं-अन्धतमसम्, प्रावृषः-वर्षाकालस्य नैशतमिस्रं प्रावृण्णैशतमिस्रम्, तादृशतमिस्रमिव नीला-अतिकृष्णवर्णा, तनुः-शरीरं येषा तैः। भस्मत्रिपुण्ड्रैः-रेखात्रयात्मना भस्मकृतैः पुण्ड्रैः, अङ्कितैः-लाञ्छितललाटाद्यवयवैः। शूलैः-तन्नामकायुधैः उद्भासिताः-विलसमाना भुजा येषां तैः। एतादृशैर्घोररूपैर्दुर्दर्शनैः सर्वदा शर्वानुगामिभिर्भूतगणैरेष देशः संप्रति सर्वतोऽभिव्याप्त इति तात्पर्यम्। एष च भूतानां वर्णनप्रकारः—

''एतत्पूतनचक्रमक्रमकृतग्रासार्धमुक्तैर्वृका-
नुत्पुष्णत्परितो नृमांसविघसैराघर्घरं क्रन्दतः।
खर्जूरद्रुमदघ्नजङ्घमसितत्वङ्नद्धविष्वक्तत-
स्नायुग्रन्थिघनास्थिपञ्जरजरत्कङ्कालमालोक्यते॥'' (५-१४)

इति मालतीमाधवे विद्यमानं पूतनाख्यपिशाचानां वर्णनमनुरुणद्धि॥ ८॥

**राजा**—(ध्यानाद्विरम्य कर्णं दत्वा) अहो भाग्यप्रकर्षो जीवलोकस्य । यतः—

जय विश्वपते जयेन्दुमौले जय शम्भो जय शङ्करेति शंसन् ।
परितः श्रुतिगोचरो जनानां कलुषं लुम्पति काहलीनिनादः ॥९॥

**मन्त्री**—(सहर्षम्) राजन्, फलितस्ते मनोरथः । पश्य पश्य ।

---

**अहो इति** । अहो इति परमेश्वराविर्भावोत्पन्नं राज्ञो विस्मयं हर्षं च द्योतयति । जीवलोकस्य-प्राणिसमूहस्य भूलोकस्य वा । भाग्यप्रकर्षः-श्रेयसामुपचयः । जीवलोकः कृतार्थोऽभूदित्यर्थः । यत इति तत्कारणं प्रस्तौति । वक्ष्यमाणः शुभावहः काहलीनिनाद एव ध्यानविरतेः कारणं भवति ।

**जयेति** । परितः-अस्य प्रदेशस्य समन्तात् । श्रुतिगोचरः-प्राणिनां श्रवणपथविषयीभूतः; सर्वैः श्रूयमाण इत्यर्थः । काहलीनिनादः-तन्नामकसुदीर्घवाद्योद्भूतध्वनिः । परमेश्वरादीनां प्रस्थानावसरे तादृशानां वाद्यानामुद्घोषणं समुदाचारसिद्धम् । विश्वपते जय । इन्दुमौले-चन्द्रशेखर जय । शम्भो जय । शङ्कर जय । इति शंसन्, सा च काहली जय विश्वपते इत्यादिरूपेण यथा मङ्गलावहान् शब्दानुत्पादयेत् निनादं करोति तथा हन्यत इति भावः । एवं परमेश्वरस्य शुभनामानि जयशब्दोच्चारणपुरस्सरं शंसन् काहलीनिनादो यः समुद्भूतः सः । जनानां कलुषं-पापम् । लुम्पति-निवारयति । अनेन जीवलोकस्य सर्वथा व्यथाहेतोः व्याधिसमूहरूपस्य किल्बिषस्योत्सारणमपि सूचितं भवति ॥ ९ ॥

**राजन्निति** । ते मनोरथः-व्याधिसमूहरूपदुष्टपरिपन्थिसार्थस्य विजयेन सह प्रमथाधिपस्य साक्षात्कारप्राप्तिरूपः परमाभिलाषः । पश्य पश्येत्याम्रेडनम् ईक्षणगोचरीभूतस्येशानस्यावलोकने महान्तमादरातिशयं सूचयति ।

आरूढः स्फाटिकक्ष्माधरनिभवृषभं सार्धमद्रीन्द्रपुत्र्या
वीतावष्टम्भमकुम्भोदरकरयुगलोदस्तमुक्तातपत्रः ।
गायद्गन्धर्वनृत्यत्सुरयुवतिपुरोभागघुष्यन्मृदङ्गो
गङ्गाभृत्युत्तमाङ्गे शशिशकलधरः शङ्करः सन्निधत्ते ॥ १० ॥

---

सन्निहितं शङ्करं यथावद्वर्णयति आरूढ इति । स्फाटिकश्चासौ क्ष्माधरश्च स्फाटिकक्ष्माधरः-स्फटिकशिलामयपर्वतः, तन्निभश्चासौ वृषभश्च तम्; महान्तं स्वच्छश्वेतवृषभमिति यावत् । अद्रीन्द्रः-हिमालयः, तस्य पुत्र्या-पार्वत्या सार्धम् । आरूढः । वीतावष्टम्भं यथा तथा-औद्धत्यं विना, अतिलाघवेनेत्यर्थः; कुम्भोदरकरयुगलोदस्तं-कुम्भोदराख्यस्य प्रमथगणान्तर्गतभूतविशेषस्य हस्तद्वयेनोद्धृतम्, मुक्तातपत्रं-मुक्ताफलैर्निर्मितम् अलङ्कृतं वा छत्रं यस्य सः । गायन्तश्च ते गन्धर्वाश्च गायद्गन्धर्वाः; नृत्यन्त्यश्च ताः सुरयुवतयः-अप्सरसश्च नृत्यत्सुरयुवतयः; गायद्गन्धर्वाः नृत्यत्सुरयुवतयो यस्य पुरोभागे स गायद्गन्धर्व-नृत्यत्सुरयुवतिपुरोभागः; घुष्यन्-ताड्यमानो मृदङ्गो यस्य सः; गायद्गन्धर्वनृत्यत्सुरयुवतिपुरोभागश्चासौ घुष्यन्मृदङ्गश्चेति तथोक्तः । (नृत्यत्सुरगणिकपुरोभागेति पाठो न सङ्गतः ।) गङ्गां बिभर्तीति गङ्गाभृत्, तस्मिन् गङ्गाभृति-धृतगङ्गासरितीत्यर्थः । उत्तमाङ्गे-शिरसि । शशिशकलं-चन्द्रकलाम्, धत्त इति शशिशकलधरः । शङ्करः-परमेश्वरः । सन्निधत्ते-निकषास्माकमाविर्भवति । परमेश्वरः पार्श्वोपविष्टपार्वत्या साकम् अत्यच्छधवलक्षं महोक्षमधिरूढः, कुम्भोदराख्यपारिषदकरपरिगृहीतमुक्तातपत्रपरिष्कृतमूर्धभागः, आत्मनः पुरस्तात् सप्रमोदं गायद्भिर्गन्धर्वैः, नृत्यन्तीभिर्देवाङ्गनाभिः, अपरैश्चाहतमृदङ्गादिवाद्यैरनुचरैः सादरं सानन्दं च पुरस्कृतः, गङ्गातरङ्गोपवीज्यमाने स्वोत्तमाङ्गे चारुतमां चन्द्रकलां च समुद्वहन् सार्वाङ्गीणैः साम्बशिवलक्षणैः शोभमानो भक्तानुग्रहायात्रैव स्वयमाविरासीदिति भावः ॥ १० ॥

अपि च,

मौलिन्यस्ताञ्जलीनां दरमुकुलितदृङ्निर्यदानन्दबाष्प-
क्लिद्यद्गण्डस्थलानामविरलपुलकालङ्कृतस्वाकृतीनाम् ।
वेदान्तप्रायभूरिस्तुतिमुखरमुखाम्भोजभाजामृषीणां
पङ्क्त्या पाश्चात्यभागो झटिति निबिडितो दृश्यतामस्य शम्भोः ॥

राजा—मन्त्रिन्, इतःपरं प्रणिपातादिना भगवन्तं प्रसाद्य स्वाभीष्टमर्थं प्रार्थयिष्ये ।

---

मौलिन्यस्तेति । अपि च दृश्यताम् एष च भगवतो महिमाविशेषः; कः स इति चेत्—मौलिन्यस्ताञ्जलीनां-शिरस्सु बद्धहस्ताञ्जलिपुटानाम् । दरमुकुलितेभ्यः-ईषदाकुञ्चितेभ्यः, दृग्भ्यः-नेत्राञ्चलेभ्यः, निर्यद्भिः-स्रवद्भिः, आनन्दबाष्पैः-परमेश्वरावलोकनजनितपरमानन्दोत्थिताश्रुजालैः, क्लिद्यन्ति-आर्द्रीकृतानि, गण्डस्थलानि कपोलप्रदेशाः येषां तेषाम् । अविरलैः-अतिनिबिडैः, सर्वत्राङ्कुरा इवोत्थितैरिति यावत्, पुलकैः-रोमाञ्चैः, अलङ्कृताः-भगवद्ध्यानानन्दस्य परमाशासनीयस्य सूचकत्वात् भूषणैर्भूषिता इव द्योतमाना इति भावः, स्वेषां-मुनीनाम्, आकृतयः-तनवो येषां तेषाम् । वेदान्तप्रायाः-औपनिषदसूक्तिस्वरूपाः या भूरिस्तुतयः-निरवधिकस्तोत्राणि, ताभिः मुखराणि-शब्दायमानानि मुखाम्बुजानि भजन्तीति भाजाम्; वेदान्तार्थप्रतिपादकैः पावनैः स्तवैः प्रणिपततामित्यर्थः । ऋषीणां-तत्काले सरभसमुपासनार्थमुपनतानां मुनीनाम् । पङ्क्त्या-गोष्ठ्या । अस्य-अस्मत्पुरत इहाविर्भूतस्य । शम्भोः-परमेश्वरस्य । पाश्चात्यभागः-पश्चिमो भूदेशः । झटिति-सहसा । निबिडितः-सान्द्रमभिव्याप्तः । दृश्यतां-भवतो भागधेयवशात् भगवतः सान्निध्यं मुदा मुनिवरैरपि साम्प्रतमनुभूयते, भवता तदप्यवलोक्यतामिति भावः ॥ ११ ॥

मन्त्रिन्निति । प्रणिपातादिना-प्रणामादिना; आदिशब्देन स्तुत्यर्चनादयो गृह्यन्ते । प्रसाद्य-प्रीणयित्वा । स्वाभीष्टमर्थं-देहस्य नीरोगतापादनादिद्वारा त्रैवर्गिकादि-

मन्त्री—अनितरसाधारणमेतस्य भक्ताभीप्सितप्रदानचातुर्यम् । यः प्रसादितवते पार्थाय पाशुपतमस्त्रं प्रतिपादितवान् । येन च निखिलक्षत्रियकुलजिघांसवे भार्गवाय प्रसादीकृतः परशुः ।

---

श्रेयस्साधनात्मकमात्मीयं मनोरथरूपप्रयोजनम् । अनितरेति । एतस्य-परमेश्वरस्य । भक्तानाम् अभीप्सितस्य-अभिलषितार्थस्य, प्रदाने चातुर्यं सामर्थ्यम् । अनितरसाधारणं-अन्यादृशम् । तस्यौदार्यस्यान्यादृशत्वमेव दृष्टान्तैर्दर्शयति य इति । यः-पशुपतिः । प्रसादितवते-आत्मानमनुग्राहयितुं संतोषितवते । पार्थाय-अर्जुनाय । पाशुपतमस्त्रं-तदाख्यं बलवच्छत्रुनिबर्हणोपयोगि शिवदेवताकं मन्त्ररूपमुपकरणम् । प्रतिपादितवान्-अर्पितवान् । दृष्टान्तान्तरमाह येन चेति । येन-शिवेन च । निखिलक्षत्रियाणां कुलस्य-हैहयाधिपादीनाम् अशेषाणामपि क्षत्रियाणां परम्परायाः, जिघांसवे-हन्तुमुद्युक्तवते । (जिघृक्षवे इति पाठस्तु न संगतः ।) भार्गवाय परशुरामाय । परशुः-कुठाराख्यमायुधम् । प्रसादीकृतः-सानुग्रहमर्पितः । (१) परमेश्वरप्रसादात् पार्थेन पाशुपतास्त्रस्यावाप्तिश्च "ततः पाशुपतं दिव्यमवाप्य पुनरीश्वरात् । संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत" इति महाभारते (द्रोण. ८१-२२) भवत्यभिहिता । इममेव विषयं प्रधानतो विस्तरतश्च प्रतिपिपादयिषुः

"आस्तिक्यशुद्धमवतः प्रियधर्म धर्मं धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
संप्राप्नुयां विजयमीश यया समृद्ध्या तां भूतनाथ विभुतां वितराहवेषु ॥
इति निगदितवन्तं सूनुमुच्चैर्मघोनः प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।
ज्वलदनलपरीतं रौद्रमस्त्रं दधानं धनुरुपपदमस्मै वेदमभ्यादिदेश"

इति भारविरपि किरातार्जुनीये व्याचष्टे । (२) परमेश्वरोपासनया भार्गवो रामः परशुमस्त्राणि चान्यानि तस्मादवापेति, क्षितिमपि त्रिस्सप्तकृत्वः स्वयमक्षत्रामकरोदिति च महाभारते—" सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणम् । सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ॥ रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् । तोषयित्वा स

**राजा**—उपपन्नमिदम्। एवमपरिमितानि महान्त्याश्चर्यचरितानि देवस्य। यच्च कपिलमुनिकोपानलभस्मीकृतप्रपितामहसङ्घसमुत्तारणकृतप्रयत्नभगीरथप्रसादितायाः सुरापगाया भुवमवतरन्त्या गर्वभञ्जनं नाम मृत्युञ्जयस्य चरितं तदपि परमाद्भुतमेव।

---

ईशानं पर्वते गन्धमादने॥ अस्त्राणि वरयामास परशुं चातितेजसम्। स तेनाकुण्ठधारेण ज्वलितानलवर्चसा॥ कुठारेणाप्रमेयेण लोकेष्वप्रतिमोऽभवत्'' इति च (शान्ति. अ. १२) अभिहितमास्ते। उपपन्नमिति। उपपन्नमिदं-यत् त्वयोक्तं तद्युक्तमेव। देवस्य-महादेवस्य। प्रथमाङ्के त्रिपुरान्तकस्य प्रभावप्रकटनात्मके एवमेव ४२ पद्ये, तदनन्तरं विद्यमाने 'एवमपरिमितान्याश्चर्यचरितानि देवस्य' इत्यादि वाक्ये च विषयतादात्म्यमवलोक्यताम्। कपिलमुनेः-अधोभुवने तपसि स्थितवतस्तदाख्यस्य नारायणांश भूतस्य महर्षेः, कोपानलेन-अस्मत्पितुः सगरस्य याज्ञिकतुरगापहर्तायमेव मुनिरिति स्वस्य निकृतिं कृतवत्सु सगरात्मजेषु संजातेन क्रोधाग्निना, भस्मीकृताः प्रपितामहसङ्घाः-अंशुमतः पितामहाः षष्टिसहस्रसंख्याकाः सागराः, तेषां समुत्तारणाय-पापनिवारणपूर्वकं नाकलोकप्रापणाय, कृतप्रयत्नेन भगीरथेन प्रसादितायाः।

" सर्वे सपर्वतामुर्वीं खनन्तः सगरात्मजाः।
चक्रुर्जर्झरितध्वान्तं नागलोकं नखांशुभिः॥
त एते तपसा दीप्ते तमः-स्तोमप्रमाथिनि।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम् "

इति (चम्पूरामायणस्था १-७०) कथात्रानुसन्धेया। (कोपानलेति शब्दः क्वचित् पुस्तके नास्ति।) सुरापगायाः-देवगङ्गायाः। भुवमवतरन्त्याः-गगनात् पर्वतराजशिखरे निपतन्त्याः। गर्वभञ्जनं नाम मृत्युञ्जयस्य चरितं-गङ्गापगागर्वनिर्वापणाख्या परमेश्वरकथा। यत्-रामायणादिषु प्रसिद्धमास्ते। तदपि परमाद्भुतमेव-श्रोतॄणाम्

**मन्त्री**— जगत्प्रसिद्धमेवेदम् । तथाहि—

वेगाकृष्टोडुचक्रानुकरणनिपुणश्वेतडिण्डीरखण्डा-
श्लिष्टोर्मीनिर्मितोर्वीवलयविलयनाशङ्कसातङ्कदेवा ।
विभ्रश्यन्त्यभ्रगङ्गा विबुधजनभुवः सर्वदुर्वारगर्वा
निर्विण्णा धूर्जटीयोद्भटघटितजटाजूटगर्भे निलिल्ये ॥ १२ ॥

---

आश्चर्यावहमेव भवति । जगत्प्रसिद्धं तदेव परमेश्वरस्यापदानं तथाहीति साभ्युपगमं मन्त्री विवृणोति ।

**वेगाकृष्टेति** । वेगेन-अतितरसा, आकृष्टस्य-अपहृतस्य, उडुचक्रस्य-नक्षत्रसमूहस्य, अनुकरणे-तद्वत्प्रतिभासने, निपुणैः-स्वेषां रूपैर्यथावन्नक्षत्रमण्डलस्य विसंवादं सर्वात्मनाचरद्भिरित्यर्थः; श्वेतडिण्डीरखण्डैः-पाण्डुरफेनशकलैः, आश्लिष्टाभिः-व्यापृताभिः, ऊर्मीभिः-महावीचिभिः, निर्मितस्य-निर्वर्तितस्य, उर्वीवलयविलयनस्य-भूमण्डलाप्लावनस्य; जगत्यकाण्डोत्पन्नैकोदकात्मकमहाप्रलयरूपावस्थाविशेषस्येति यावत्; आशाङ्का-वितर्को येषां ते, अत एव सातङ्काः-व्यथाविशिष्टाः; आशङ्क-सातङ्कशब्दौ देवशब्दस्य विशेषणीभवतः; विलयनाशङ्काश्च सातङ्काश्च देवाः यया सा । गङ्गाया अकाण्डोत्पन्नं प्रबलप्रवाहप्रक्षोभं प्रसमीक्ष्य विबुधा अपि महाप्रलयो महीविलयनाय किमाविरभूदिति सुतरामुद्विग्नमानसा अभूवन्निवेति भावः । विबुधजनानां-गीर्वाणगणानाम्, भूः-देशः, स्वर्ग इत्यर्थः, तस्याः; गगनमार्गादिति यावत् । विभ्रश्यन्ती-निपतन्ती । (विभ्रम्याकाशगङ्गेति पाठान्तरम् । विधिभुवनभुव इति पाठो न समञ्जसः ।) अभ्रगङ्गा-आकाशगङ्गा । या सर्वदुर्वारगर्वा-अपरैरनिवारणीयदर्पविशिष्टा । अभूदिति शेषः । तथा दर्पोद्धता देवगङ्गा । धूर्जटीयस्य-शम्भुसम्बन्धिनः, उद्भटघटितजटाजूटस्य-सप्रगल्भम् उद्ग्रथितस्य महाजटानां कलापस्य, गर्भे-महाकुहररूपे मध्यभागे । निर्विण्णा-भग्नगर्वत्वात् अवसन्नवीर्यत्वाच्च सुतरामुद्विग्ना उपरतगर्वा च सती, निलिल्ये-लीना बभूव । एष च

किञ्च, अध्वरविधावपराधिनो दक्षप्रजापतेः शिक्षणावसरे रोषसंधुक्षितेन भगवता विष्टपगुरुणा शिपिविष्टेन सृष्टः स्वांशभूतः प्रभूतकोपविधूत-विनयमुद्रो वीरभद्र एव किं किं न कृतवान्। तथा हि—

---

कथासंग्रहो यथा रामायणे—"तदा सातिमहद्रूपं कृत्वा वेगं च दुस्सहम्। आकाशादपतद्राम शिवे शिवशिरस्युत॥ अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा। विशाम्यहं हि पातालं स्रोतसा गृह्य शङ्करम्॥ ज्ञात्वावलेपनं तस्या क्रुद्धस्तु भगवान् हरः। तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा॥ सा तस्य पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि। हिमवत्प्रतिमे राम जटामण्डलगह्वरे॥ सा कथञ्चिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता। नैव निर्गमनं लेभे जटामण्डलमोहिता" इति। किञ्च—शब्दसरण्या चार्थभङ्ग्या च

"अथ वीचीचयच्छन्नदिगन्तगगनान्तरा।
शशाङ्कशङ्खसंभिन्नतारामौक्तिकदन्तुरा॥
तरङ्गाकृष्टमार्ताण्डतुरङ्गायासितारुणा।
फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा॥
आवर्तगर्तसंभ्रान्तविमानप्लवविप्लवा।
नीलजीमूतशैवालकृतलेखा हरित्तटा॥
अवलेपभराक्रान्ता सुरलोकतरङ्गिणी।
पपात पार्वतीकान्तजटाकान्तारगह्वरे॥
अलब्धनिर्गमा शम्भोः कपर्दादमरापगा।
दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम्" इति

गङ्गागर्वभङ्गाख्यस्य गङ्गाधराख्यानस्य वर्णनं चम्पूरामायणकृतं प्रायोऽनुसृत्य पद्यमिदं पठितमिति प्रतिभाति॥ १२॥

तस्यापदानान्तरमप्युदाहरति **किञ्चेति**। अध्वरविधौ-दक्षप्रजापतिकृत-वाजपेयाख्ययज्ञकर्मणि। अपराधिनः-जामातरि (स्वसुतास्वन्यतमायाः सत्या भर्तरि)

शूलाग्रक्षतदक्षकण्ठरुधिरैः शोणे रणप्राङ्गणे
कीर्णो दन्तगणश्चपेटदलितादर्कस्य वक्त्रान्तरात् ।
वीरश्रीकरपीडनोत्सवविधावेतस्य वैश्वानर-
प्रक्षिप्तोज्ज्वललाजविभ्रमकरो नालोकि लोकेन किम् ॥ १३ ॥

---

शिवे द्वेषात्तमध्वरायानाहूय विहितागसः दक्षप्रजापतेः शिक्षणावसरे । रोष-संधुक्षितेन स्वतिरस्कारजनितेन क्रोधेन, स्वभार्यायाः सत्या योगाग्निप्रवेशस्य दक्षोऽयं हेतुरभूदिति कोपेन च प्रचोदितेन; हेतुद्वयजनितमहाक्रोधोज्जृम्भितेनेति यावत् । विष्टपगुरुणा-चराचरगुरुणा । शिपिविष्टेन-शिवेन । "कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम्" इति श्रीभागवतेऽस्ति चराचरगुरुत्वविशेषणं प्रयुक्तमीश्वरस्य (४-२-२) । सृष्टः-स्वस्य क्रोधाग्नेरुत्पादितः । स्वांशभूतः-रुद्रांशसंभूतः । (रोषसंधुक्षितेन नीललोहितेन विसृष्टः स्वांशभूत इति पाठान्तरम् ।) प्रभूतकोपेन-निरवधिकेनानिवार्यप्रवृत्तिमता क्रोधेन, विधूता परास्ता, विनयमुद्रा-सौशील्यलक्षणं येन सः । दक्षकृतमहापराधसमुद्भूतेन क्रोधेन दूरापनीतशालीनतादिगुण इत्यर्थः । वीरभद्र एव-तदाख्यः प्रधानो गणाधिनाथ एव । किं किं न कृतवान् । वीरभद्रो बहूनि रणवीरोचितानि कार्याण्यकरोदेवेति प्रतिपादयितुं तथाहीत्याह—

**शूलाग्रेति** । शूलाग्रेण-त्रिशूलाख्यस्यायुधविशेषस्यस्य कोटिभागेन, क्षतस्य-विद्धस्य, दक्षकण्ठस्य-दक्षप्रजापतिकन्धरस्य, रुधिरैः रक्तैः । शोणे-अतीव रक्तवर्णे । रणप्राङ्गणे-युद्धरङ्गे । अर्कस्य-सूर्यस्य । चपेटदलितात्-वीरभद्रस्य हस्ततलप्रहारेण शकलितात् । वक्त्रान्तरात्-आस्यस्यान्तर्भागात् । कीर्णः-समन्ताद्विशीर्णः । दन्त-गणः-सूर्यस्य दशनानां निकरः । दक्षाभियोगाय प्रसभं प्रवृत्ते रुद्रांशसंभूते वीरभद्रे, तत्र सत्राय समुपागतानां दिवौकसां वीरभद्रस्य च निर्वर्तमाने तुमुले परस्परायोधने, दक्षे च तदा वीरभद्रेण शूलाग्रक्षते, तदङ्गान्निस्सृतेनासृक्पूरेण तद्रणाङ्गणं रक्तवर्णमभूदिति, तस्मिंश्च व्यतिकरे प्रमथाधिपमनाहूयैवाध्वरप्रवर्तन-मनुज्ञातवत्स्वन्यतमस्य वीरभद्रकरतलेन कपोले प्रहतस्य तपनस्य मुखात्

प्रच्युतास्तद्दन्ता विशीर्णाश्चाभवन्निति भावः। एतस्य-वीरभद्रस्य। वीरश्रियः-शौर्यलक्ष्म्याः, युद्धविजयाधिगतजयलक्ष्मया इत्यर्थः, करपीडनं-पाणिग्रहणम्, तदाख्य उत्सवविधौ, वीरश्रीनामककामिन्या वीरभद्रेण समुपनते विवाहकर्मणीति भावः। वैश्वानरे-उद्वाहार्थं प्रज्वलिते वह्नौ, प्रक्षिप्तानां-हुतानाम्, उज्ज्वललाजानां धावल्यभासुराणां भर्जितहोमतण्डुलानाम्, विभ्रमं करोतीति विभ्रमकरः-भ्रान्तिजनकः; अयं दन्तगण इत्यस्य विशेषणम्। एष व्यतिकरश्च लोकेन-जनेन। किं नालोकि-अपि नाम न दृष्टः; सम्यक् आलोकित एवेत्यर्थः। शोणितसेकशोणवर्णे रणाङ्गणे विकीर्णा विवस्वतो धवला दन्ताः वीरभद्रस्य वीरश्रीविवाहोत्सवावसरे ज्वलति वह्नौ हूयमानं श्वेतं लाजाञ्जलिमनुकुर्वन्तीति तात्पर्यम्। पुरा किल हिमवतः पृष्ठे दक्षप्रजापतिर्यज्ञं महान्तमाहरत्। इन्द्रेण सहिताः सर्वे यज्ञभागिनो देवा मुनयश्च दक्षेणामन्त्रिताः। चर्मधारी भस्मरूषितः पन्नगभूषितः श्मशानवासी विषमलोचनो भूतसंवृतो धूर्जटिश्चैष इति मत्वा परमेश्वरं स्वजामातरमपि स नाह्वयत्। स्वपतिः-स्वपित्रा सुतरामवमानित इति दक्षसुता सती सुदूरं विमनायमानमानसा योगाग्निना स्वात्मानमदहत्। दक्षकृतामवज्ञां स्वपत्नीविनाशजं दुःखं चासहमानः शिवः परां कोटिमारूढः क्रोधस्य। तदानीं तच्छरीरात् तत्क्रोधप्रतिरूपको वीरभद्र इति रौद्रः पुरुषः समुदभवत्। स च दक्षं दक्षयज्ञं च ध्वंसयामासेति महाभारतादिषु (शान्ति. अ. २९०) प्रसिद्धा कथा। कथामिमामनुसृत्यैव

"अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे"

इति कालिदासोऽपि कुमारसंभवे प्राह। "ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम्। ददर्श देहे हतकल्मषा सती सद्यः प्रजज्वाल समाधिनाग्निना" इति, "पूष्णश्चापातयद्दन्तान् कलिङ्गस्य यथा बलः। शप्यमाने गरिमणि योऽहसद्दर्शयन् दतः" इति च सत्या योगाग्निना देहत्यागम्, वीरभद्रेण दिनमणेर्दशनपातनमप्यधिकृत्य श्रीभागवते (४-९) दृश्यमानं प्रमाणम्। यज्ञभागग्रहणं नाम देवगणेषु प्रथितानां सर्वेषामपि आविष्णोः प्रभावस्य प्रति-

राजा—किमिति वर्ण्यतामयमाश्चर्यचर्यो भगवान् ।

क्रोधारूढभ्रुकुटिरलिके क्रूरखड्गप्रहार-
च्छिन्नग्रीवत्रिदशनिकरच्छन्नसङ्ग्रामभूमिः ।
शक्रश्रीदद्रुहिणशरणालाभविद्राणविद्या-
दानोन्निद्रः प्रणतजनताभद्रदो वीरभद्रः ॥ १४ ॥

---

पत्तये प्रधानं प्रत्यभिज्ञानमिति वैदिकानां निर्णयः । परमेश्वरस्यापि तद्वैशिष्ट्यं समुत्पन्नमिति कालिदासोऽपि "यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया । उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम्" इति प्रशंसते । (कुमार. ६. ७२) ॥ १३ ॥

किमितीति । अयं-वीरभद्रः । आश्चर्यचर्यः-अद्भुतकार्यकर्ता । भगवान् । किमिति वर्ण्यतां-केन प्रकारेण वर्णनं क्रियेत । अनन्तप्रभावस्यास्य वर्णनं समग्रतो नैव सुलभमिति भावः ।

तस्यानितरसाधारणं विक्रममेव वर्णयति क्रोधारूढेति । अलिके ललाटतटे । क्रोधेन-स्वस्यावज्ञां विधाय दक्षेणारब्धेऽध्वरकर्मणि आहितासक्तिमत्सु आदितेयेषु समुद्भूतकोपेन, आरूढा-उपर्युच्छ्रिता, भ्रुकुटिः-भ्रुवोः कुटिलीकरणं यस्य सः । अत एव क्रूरखड्गस्य-अतितीक्ष्णकरवालस्य, प्रहारेण छिन्ना ग्रीवा येषां तेषाम्, तादृशानां त्रिदशानां-देवानाम्, निकरः-समूहः, तेन छन्ना-निरन्तरमावृता, सङ्ग्रामभूमिः-दक्षाध्वरध्वंसाय प्रवृत्तयुद्धाङ्गणं येन सः । क्रोधोद्धतवीरभद्रविच्छिन्नविविधविबुधानामसुभिर्विरहितानामङ्गैरभिव्याप्तमायोधनाङ्गणमित्यर्थः । शक्रः-इन्द्रः, श्रीदः-कुबेरः, द्रुहिणः-ब्रह्मा एतेभ्यः शरणालाभेन-रक्षणस्याप्राप्त्या, विद्राणं-पलायनम्, सैव विद्या-पलायनविधानमित्यर्थः, तस्य दाने उन्निद्रः-उद्युक्तः; एतत्प्रतिपन्थिनाम् अनेन समुपजनिते भये नान्यत्र शरणमुपलभ्यत इति भावः । (शक्रश्रीशेति पाठान्तरम् ।) तादृशोऽपि वीरभद्रः । प्रणतजनतायाः-शरणमुपगतस्य जनसमूहस्य, भद्रदः-श्रेयःप्रदः । भवतीति शेषः । अत्र च रुद्रेण ध्वस्तस्य

कः पुनरस्य स्वरूपं तत्त्वतः शक्नोत्यवधारयितुम् । यदन्तर्वाणयः सर्वेऽपि स्वच्छन्दानुरोधात् कलयन्ति स्वरूपमेतस्य । तथाहि—

---

दक्षस्य दक्षाध्वरस्य देवगणस्य च पश्चात् परमेश्वरकृतं परित्राणनं निर्दिष्टं भवति । सा च कथा—"अथ देवगणाः सर्वे रुद्रानीकैः पराजिताः । संछिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या भयाकुलाः ॥ स्वयंभुवे नमस्कृत्य कार्त्स्न्येनैतन्न्यवेदयन् । तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसि । पुंसि क्षेमाय सा भूयान्न प्रायेण बुभूषताम् ॥ आशासाना जीवितमध्वरस्य लोकस्सपालः कुपिते न यस्मिन् । तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः ॥ स इत्थमादिश्य सुरानजस्तैः समन्वितः पितृभिः सप्रजेशैः । ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ तस्मिन् महायोगमये मुमुक्षुशरणे सुराः । ददृशुर्देवमासीनं त्यक्तामर्षं पुरान्तकम् ॥ तथापरे सिद्धगणा महर्षिभिर्ये वै समन्तादनुनीललोहितम् । नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः ॥ जाने त्वामीश विश्वस्य जगतो योनिबीजयोः । शक्तेश्शिवस्य च परं यत्तद्ब्रह्म निरन्तरम् ॥ कुर्वध्वरस्योद्धरणं हतस्य भोस्त्वया समाप्तस्य मनोः प्रजापतेः । न यत्र भागं तव भागिनो ददुः कुयज्वनो येन मखो निनीयते ॥ इत्यजेनानुनीतेन भवेन परितुष्यता । अभ्यधायि महाबाहो प्रसह्य श्रूयतामिति ॥ नाघं प्रजेश बालानां वर्णये नानुचिन्तये । देवमायाभिभूतानां दण्डस्तत्र धृतो मया ॥ प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः । पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् ॥ देवाः प्रकृतसर्वाङ्गा ये म उच्छेषणं ददुः । बाहुभ्यामश्विनोः पूष्णो हस्ताभ्यां कृतबाहवः" इत्यादिभिर्विस्तरेण श्रीभागवते (४ स्कन्धे, ६. ७.) द्रष्टव्या ॥ १४ ॥

कः पुनरिति । अस्य-वीरभद्रात्मकस्य रुद्रस्य । स्वरूपम् । तत्त्वतः-याथार्थ्येन । अवधारयितुं-ज्ञातुम् । कः शक्नोति । यत्-यस्माद्धेतोः । सर्वेऽपि अन्तर्वाणयः-तत्त्वविदः शास्त्रज्ञाः । स्वच्छन्दानुरोधात्-स्वेच्छयेत्यर्थः । एतस्य स्वरूपं कलयन्ति-येन येन यथा ध्यायते तत्तद्रूपेण तं वर्णयन्ति । "अन्तर्वाणिः शास्त्रवित् स्यात्" इति वैजयन्ती ।

कर्तारं कतिचित् किलानुमिमते कार्यैर्यमुर्व्यादिभिः
केऽप्याहुः पुरुषस्य यस्य पुरतः सृज्यं प्रकृत्या जगत् ।
क्लेशैः कर्मभिराशयैश्च सकलैरस्पृष्टरूपोऽखिल-
प्रज्ञोऽनादिगुरुः स ईश्वर इति व्याख्यन्ति केचित्तु यम् ॥ १९ ॥

---

तत्त्वज्ञानां विविधानाशयानेव विशदयति कर्तारमिति । कतिचित्-केचन शास्त्रज्ञाः । यं-परमेश्वरम् । कार्यैः-कार्यत्वेन जगत्युपलभ्यमानैः । उर्व्यादिभिः-पृथिव्यादिभिः पञ्चभिर्भूतैः । कर्तारं-तेषां भूतानां कारणभूतम् । अनुमिमते-अनुमानेन शंसन्ति । किलेति प्रसिद्धौ । कारणं विना कार्याणामसंभवात् । त्वमेव लोककर्ता, त्वत्तो लोका उद्भवन्तीति तात्पर्यम् । "जगद्योनिरयोनिस्त्वम्" इति कालिदासः (कु. २. ९.); "यतो वा इमानि भूतानि जायन्ते" इति श्रुतिप्रमाणं च । (कार्यार्थिमुर्व्यादिभिरिति निर्णयसागरीयः पाठस्त्वसङ्गतः ।) केऽपि-अन्ये केचन । यस्य पुरुषस्य-महेशस्य । पुरतः-अग्रे; तदिच्छानुरोधेनेति तात्पर्यम् । प्रकृत्या-त्रिगुणात्मकया प्रधानाख्यया च मायया । जगत्-भुवनम् । सृज्यं-स्रष्टव्यम् । इति चाहुः-व्यवहरन्ति । प्रधानम्, अव्यक्तम् इत्यादिनामविशिष्टा मूलप्रकृतिरेषा शिवशक्तिरिति, तमाश्रित्य जगत्सृष्टिमाचरतीति च तत्त्वज्ञा आमनन्ति । "प्रधानं प्रकृतिः शक्तिर्नित्या चाविकृतिस्तथा । एतानि तस्या नामानि शिवमाश्रित्य या स्थिता" इति, "अचेतनापि चैतन्ययोगेन परमात्मनः । अकरोद्विश्वमखिलं पुरतो नाटकाकृति" इति च शार्ङ्गधरः स्वसंहितायाः पूर्वखण्डे । "केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः । एतदेव प्रजासृष्टिं करोतीश्वरचोदितम्" इति च मात्स्ये (अ. ३) । "मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्" इति गीता (९-१०) । "केचिदेकं वदन्त्येतद्ब्रह्म लोकप्रवर्तकम् । केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वकम्" इति महाभारतीयः (मोक्षधर्मे) आशयभेदश्च सूचितः । "क्रियाशक्तिं केचिद्दनुजमथनीं हेतिमपरे मनस्तत्त्वं चान्ये मधुविजयिनस्त्वामभिदधुः" इति सङ्कल्पं प्रति सङ्कल्पसूर्योदये पुरुषकृतमभिवर्णनमेष स्मारयति उल्लेखः ।

अपि च,

श्रुतमिति निगमान्तेष्वेकमेवाद्वितीयं
निरवधि परिपूर्णं ब्रह्म सच्चित्सुखाय ।
विलसति किल यस्मिन् विश्वमेतत्तमिस्त्रे
स्रजि फणिवद्बोधादित्थमाहुः किलान्ये ॥ १६ ॥

---

केचित्तु-अपरे तु केचन ज्ञातारः । स ईश्वरः । सकलैः । क्लेशैः-कायिकैर्मानसिकैश्च दुःखैः, आध्यात्मिकादिभिर्दुःखैश्च ; अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेश इति पञ्चभिः क्लेशैर्वा । "क्लेशेषु पञ्चसु गतेषु" इति प्रबोधचन्द्रोदये। (६-१) कर्मभिः-जन्ममरणादिहेतुभूतैः कायवाङ्मनोभिः कृतैः पुण्यपापरूपैः कर्मभिः । आशयैश्च-इच्छाभिश्च । अस्पृष्टं-अनाक्रान्तं रूपं-स्वरूपं यस्य सः । रजस्तमोभ्यामाविर्भूतैः क्लेशकर्मादिभिरनासक्त इत्यर्थः । "स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्" (कुमा. २-५८) इति, "न च मां तानि कर्माणि निबध्नन्ति" (गीता ९-९) इति, "असङ्गो ह्ययं पुरुषः" इति च श्रुत्यादयः । अखिलप्रज्ञः-सर्वज्ञः । "कृशानुरेताः सर्वज्ञो धूर्जटिः" इति तस्य सर्वज्ञ इति नाम प्रकृतिसिद्धम् । अनादिगुरुः-चराचराणां पुराणगुरुः । इति च यं-ईश्वरम् । व्याख्यन्ति-विविधैः प्रकारैर्व्याचक्षते । अतः स्वरूपमस्य यस्तत्त्वतोऽवधारयितुं शक्नोति स दुर्लभ इति पूर्ववाक्येन योजनीयम् ॥ १९ ॥

**श्रुतमिति** । एकमेव । तथा अद्वितीयं-न विद्यते द्वितीयं यस्य । एकत्वस्य निराबाधतास्थापनाय अद्वितीयमिति विशेषणम् । निरवधि-अनन्तम् । परिपूर्णं-अखण्डम् ; देशकालाद्यपरिच्छिन्नमित्यर्थः । सत्-सत्यम् । चित्-ज्ञानात्मकम् । ब्रह्म-पूर्वोक्तगुणैरन्वितं ब्रह्माख्यं तत्त्वम् । सुखाय-शाश्वतानन्दाय मोक्षात्मकाय । भवतीति शेषः । इति-पूर्वोक्तप्रकारेण । निगमान्तेषु-वेदान्तेषु । श्रुतं-ब्रह्मविद्यासक्तचित्तानां सतां गोचरत्वेन पठितमास्त इत्यर्थः । "एकमेवाद्वितीयं ब्रह्म", "सत्यं ज्ञानमनन्तमानन्दं ब्रह्म" इत्यादिकं श्रुतिवाक्यमिह प्रमाणम् ।

**मन्त्री**—तत्तादृशमेनमवाङ्मनसगोचरमहिमानं पङ्कजासनपाकशासनप्रभृतयो देवाः प्रणमन्ति भगवन्तम् । अतः सेवावसरं प्रतिपाल्य क्षणमात्रम् ।

**राजा**—सम्यङ्निरूपितममात्येन ।

---

"एकमेव सदा ब्रह्म सत्यमन्यद्विकल्पितम्" इति कृष्णमिश्रादयः । यस्मिन्-ब्रह्मणि । एतत् विश्वं-एतद्दृश्यमानं जगत् । अबोधात् अज्ञानात् , अविद्यायाः प्रसंगादित्यर्थः । तमिस्रे-अन्धकारे । स्रजि-पुष्पमालायाम् । फणिवत्-सर्पज्ञानवत् । विलसति किल-भ्रमवशात् प्रतिभाति खलु । इत्थं-एवं प्रकारेणापि । अन्ये किलाहुः-अपरे शास्त्रज्ञा वदन्ति नाम । "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानम्" इति तैत्तिरीयारण्यके पठ्यमानरीत्या तस्मिन् सर्वमिदं जगत्प्रोतमिव प्रतिभाति । किन्त्वद्वैतिनामाशयानुरोधेन तदविद्यानिष्पन्नं मिथ्याज्ञानमिति ज्ञेयम् । पुष्पस्रजि तमसि स्थितायां पन्नगज्ञानवत् भ्रान्तिमूलकमिति चाभिधीयते । अस्य चाशयस्य "एको देवो बहुधा निविष्टः," "एकं सन्तं बहुधा कल्पयन्ति", "एकस्तथा सर्वभूतान्तरात्मा" इत्यादिश्रुतीः प्रमाणयन्ति । मतमिदमेव कृष्णमिश्रश्च साधु निरूपयत्येवम्—

अम्भश्शीतकरान्तरिक्षनगरस्वप्नेन्द्रजालादिवत्
कार्यं मेयमसत्यमेतदुदयध्वंसादियुक्तं जगत् ।
शुक्तौ रूप्यमिव स्रजीव भुजगः स्वात्मावबोधे हरा-
वज्ञाते प्रभवत्यथास्तमयते तत्त्वावबोधोदयात् ॥ इति ।

भक्त्या प्रसेदुषः परमेश्वरस्य प्रत्यक्षीकरणोपनतं परमानन्दमेवं जीवराजस्तत्सचिवश्च पारस्परिकेन वाक्प्रसङ्गेन सप्रमोदमाविरकुरुताम् ॥ १६ ॥

**तत्तादृशमिति** । तत्तादृशं-पूर्वोक्तप्रकारादिगुणविशिष्टम् । अत एव अवाङ्मनसगोचरमहिमानं-वाक् च मनश्च वाङ्मनसे, तयोः गोचरो वाङ्मनसगोचरः, स न भवतीति अवाङ्मनसगोचरः, अवाङ्मनसगोचरो महिमा यस्य तम् ।

नमदमरसहस्रमौलिमालापरिगलितैर्भुवि पारिजातपुष्पैः ।
अलिकुलमनवाप्तदिव्यगन्धग्रहणकुतूहलि कृष्यते समन्तात् ॥ १७ ॥

मन्त्री—अवसरोऽयमखिलसुरासुरगुरोः सरोरुहाकरसंवेशविद्यादेशिककलाशेखरस्य सेवनाय देवस्य । अत एव—

---

वाङ्मनसेति अचतुरेत्यादिना अच्प्रत्ययान्तो निपातः । एनं भगवन्तं-परमेश्वरम् । पङ्कजासनपाकशासनप्रभृतयः-ब्रह्मेन्द्रादयः । देवाः प्रणमन्ति । अतः-ब्रह्मेन्द्रादिकृतेश्वरसेवाया अवकाशदानस्यावश्यकत्वात् । सेवावसरं-अस्मदपेक्षितेश्वरभजनस्यावकाशम् । क्षणमात्रं प्रतिपालय । सम्यगिति । अमात्येन सम्यङ्-निरूपितं-त्वया यथावदालक्षितम् ।

मन्त्रिनिरूपितमेव विषयं यथावद्वर्णयति नमदमरेति । भुवि-भूतले । नमत्-प्रणामं कुर्वत्, यत् अमरसहस्रं-सहस्रसङ्ख्याको देवगणः, तस्य मौलिमालाभ्यः-शिरसि धृतपुष्पस्रग्भ्यः, परिगलितैः-परिच्युतैः; भुवि परिगलितैरित्यन्वेतव्यम् । पारिजातपुष्पैः-तदाख्यदेवतरुकुसुमैः । अनवाप्तस्य-भ्रमरकुलेनानासादितस्य, दिव्यगन्धस्य-देवतरुसुमनःपरिमलस्य, कुतूहलमस्यास्तीति कुतूहलि, दिव्यगन्धस्य ग्रहणे कुतूहलि-दिव्यपुष्पपरिमलानुभवोत्सुकमिति यावत् । अलिकुलं-मधुकरनिकुरुम्बम् । समन्तात्-सर्वेभ्योऽपि सन्निकृष्टप्रदेशेभ्यः । कृष्यते-बलादावर्ज्यते । अत्र सन्निहितस्य भगवतो भूतेशस्य चरणयोः प्रसभं प्रणमतां प्रजापतिप्रमुखानां दिवौकसां सुबहूनामुत्तमाङ्गेषु धृताभ्यः कुसुमस्रग्भ्यः स्वयं परिच्युतानां दिव्यपुष्पाणां दुर्लभस्य सौरभ्यस्यास्वादनाय तत्कुसुमनिकरावर्जिता मधुकरव्राताः समन्ततः समायान्तीति वर्णनमुखेन मन्त्रिनिरूपितं देवगणकृतं भगवत्सेवौत्सुक्यं महाराजो विशिष्य न्यरूपयत् ॥ १७ ॥

**अवसर इति** । अखिलसुरासुरगुरोः-अशेषाणां आदित्यानां दैत्यानां च आचार्यस्थानीयस्य । सरोरुहाकराणां-पद्माकराणाम्, कुशेशयकुलानामिति यावत्; संवेशः-निद्रा, मुकुलीभाव इत्यर्थः; संवेशविद्या-निमीलनकला, तस्यां देशिकस्य-

संभ्रान्तनन्दिकरघूर्णितवेत्रपात-
भीतापगत्वरगणव्रजवर्जितेन ।
एतेन कीर्णकुसुमेन पथा महेशं
सेवस्व भक्तिमददुर्लभसंनिधानम् ॥ १८ ॥

---

इन्दोः, कला-नीरजानां निमीलनकर्तुश्चन्द्रस्य कलेत्यर्थः ; सा शेखरः-शिरोभूषणं यस्य तस्य ; चन्द्रशेखरस्येत्यर्थः । "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि" इत्यमरः । सेवनाय-नमस्कारादिना पुरस्काराय । देवस्य-प्रभोस्तव । अयमवसरः-एष एव समुचितः सन्दर्भः । अत एव-एतस्मादेव हेतोरिति वक्ष्यमाणपद्येनान्वयः ।

संभ्रान्तेति । संभ्रान्तस्य-इतस्ततः ससंभ्रमं गतागतं कुर्वाणस्य, नन्देः-नन्दिकेश्वराख्यस्य शिवानुचराध्यक्षस्य, करेण घूर्णितस्य-सत्वरं हस्तेन प्रचालितस्य, वेत्रस्य पातात्-वेत्रदण्डपातोपनतप्रहारादित्यर्थः ; भीतानाम् अतएव अपगत्वराणां-अपक्रमणशीलानाम्, गणानां-प्रमथगणाह्वयरुद्रानुचराणाम्, व्रजेन वर्जितेन-परित्यक्तेन । नन्दिकेश्वरहस्तधृतवेत्रपातभीत्या दूरापसृतप्रमथगणेनेत्यर्थः । "गत्वरश्च" इति क्वरबन्तनिपातात् अपगत्वराणामित्यत्र गत्वरेति रूपम् । कीर्णकुसुमेन-सेवोपनतसुरासुरमुकुटेभ्यः पतितैः अपरैरर्हणार्थं प्रक्षिप्तैश्च कुसुमनिकरैराकीर्णेन । एतेन पथा-पुरतो दृश्यमानेन मार्गेण । भक्तिमतां-भवादृशानाम् अकृत्रिमभक्तिसंपन्नानाम्, अदुर्लभं-सुलभम्, संनिधानं-संनिकर्षे दर्शनदानं यस्य तम् ; भवादृशभक्तिमतां सुलभमित्यर्थः । महेशं-परमेश्वरम् । सेवस्व-प्रणामादिभिर्भज । परमेश्वरसेवाया अवकाशस्य दिष्ट्योपलब्धत्वात् अद्यैवोपसृत्योपचर्यतामेष भवतेति सप्रमोदं सचिवः प्रेरयति राजानम् ॥ १८ ॥

(ततः प्रविशति यथानिर्दिष्टः परमेश्वर्या सह परमेश्वरः ।)

**परमेश्वरः**—अयि गिरीन्द्रसुते,

अनितरसाधारणया भक्त्या जीवस्य मामनुस्मरतः ।
सपदि मयास्य पुरस्तात् संनिहितं सपरिवारेण ॥ १९ ॥

**देवी**—देव, तुरिअं तुह आगमणं एव्व दंसेदि अणण्णतुल्लं भत्तवच्छलत्तणम् ।
[देव, त्वरितं तवागमनमेव दर्शयत्यनन्यतुल्यं भक्तवात्सल्यम् ।]

**राजा**—(मन्त्रिणा सह त्वरितमुपसृत्य)

---

ततः प्रविशतीति । यथानिर्दिष्टः-संभ्रान्तेतिपद्यप्रतिपादितप्रकारमनतिक्रम्य विलोक्यमानः । परमेश्वर्या सह-पार्वत्या साकम् ।

अनितरेति । अयि गिरीन्द्रसुते-पार्वति । अनितरसाधारणया-अनितरसामान्यया । भक्त्या । मां-परमेश्वरम् । अनुस्मरतः-अनुपदं ध्यायतः । अस्य जीवस्य-जीवराजस्य । पुरस्तात्-अन्वक्षम् । सपरिवारेण मया-प्रमथगणादिपरिवारसहितेन मया । सपदि-आकस्मिकतयेत्यर्थः । संनिहितं-तदनुग्रहार्थम् उपस्थितम् । अस्य जीवस्य प्रबलया भक्त्या समावर्जितेन मया प्रसन्नेन स यत्रास्ते तत्र स्वयं सत्वरं सन्निहितव्यमासीदिति भावः ॥ १९ ॥

देवेति । तव । त्वरितम् आगमनमेव-अविलम्बितोपस्थितिरेव । तव भक्तवात्सल्यं-भक्तविषयकं त्वदीयं प्रेमातिशयम् । अनन्यतुल्यं-अनितरसाधारणम् । दर्शयति-प्रकाशयति । जीवस्य त्वयि यथा भक्तिरनितरसाधारणा तथा तवापि तस्मिन् अनितरसामान्यं वात्सल्यं च विद्यत इति विस्पष्टं ज्ञायत इति भावः । (अणण्णतुल्लं भत्तिमत्तणम्-अनन्यतुल्यं भक्तिमत्वम् इति पाठान्तरम् ।)

मन्त्रिणेति । त्वरितम् उपसृत्य-ससंभ्रमं मन्त्रिणा सह परमेश्वरसविधमधिगत्य ।

विधिहरिविषमेक्षणात्मकः सन् सृजति बिभर्ति निहन्ति यो जगन्ति ।
तमहममलमेकमेव सच्चित्सुखवपुषं परमेश्वरं नतोऽस्मि ॥ २० ॥

(इति मन्त्रिणा सह प्रणमति )

**परमेश्वरः**—वत्स, मन्त्रिणा सममभिमतेन युज्यस्व ।

**जीवः**—(मन्त्रिणा सहोत्तिष्ठन्, शिरस्यञ्जलिं बध्वा)

---

विधिहरीति । यः-शिवः । विधिहरिविषमेक्षणात्मकः—ब्रह्मविष्णुत्रिनेत्राख्यमूर्तित्रयरूपः सन् । जगन्ति-भुवनानि । सृजति-स्वयं परमेष्ठित्वेन तिष्ठन् उत्पादयति । बिभर्ति-विष्ण्वात्मकः सन् तान् लोकान् पालयति । निहन्ति-रुद्ररूपमवाप्य संहरति च । तं-सकलचराचरात्मकलोकसृष्टिस्थितिसंहारकर्मणामद्वितीयहेतुभूतं तथाविधम् । अमलं-दोषरहितम् । एकमेव-मूर्तित्रयात्मना भिन्नत्वेनापाततोऽवगम्यमानमपि वस्तुतोऽद्वितीयस्वरूपम् । सच्चित्सुखवपुषं-ज्ञानानन्दात्मकम् । परमेश्वरम् । नतोऽस्मि-प्रणमामि । दृश्यतां कुमारसंभवे—

"नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥"
"तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥"
"एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ"

इत्यादिभिः कालिदासो मूर्तित्रयस्वरूपं स्तवरूपेण तत्र तत्र वर्णयति ॥ २० ॥

वत्सेति । मन्त्रिणा समं-त्वत्सचिवेन विज्ञानशर्मणा सह । अभिमतेन युज्यस्व-अभिलषितेन मनोरथेन संयोगं प्राप्नुहि; तव च मन्त्रिणश्च मनोरथपूर्तिर्भूयादित्यर्थः ।

(१) जय जय जगदीश देवासुरावध्यतादर्पवेगोद्धृतत्वत्पदाङ्गुष्ठनिष्पीडनस्तब्धकैलासमूलार्तदोर्विंशतिप्रस्तुतस्तोत्रपुष्यद्दयारक्षितोन्मुक्त-लङ्कापते निष्प्रपञ्चाकृते। (२) अनुपमितगृहीततारुण्यलक्ष्मीनिरीक्षोन्मिषद्दारुकारण्यनारीव्रतभ्रंशकुप्यन्मुनीन्द्राभिचारोत्थितं तुङ्गनादं कुरङ्गं

---

जय जयेति। त्रिभिर्दण्डकैः परमेश्वरमभिष्टौति। (१) जगदीश। देवासुरैः अवध्यतायाः-आत्मनो हननाशक्यतया, देवानां दानवानां च हस्तात् स्वस्यापजयो मरणं वा न कथंचिदपि स्यादिति धैर्येणेति यावत्; तज्जातो यो दर्पवेगः-अवलेपातिशयः, तेन उद्धृतस्य-विंशत्या भुजैरुत्थापितस्य, ततश्च त्वत्पादाङ्गुष्ठनिष्पीडनेन-परमेश्वरचरणाङ्गुष्ठकृतबलवन्मर्दनेन, स्तब्धस्य-उद्धर्तुमशक्यत्वात् निश्चलतां प्राप्तस्य च, कैलासस्य, मूले-अधोभागे, आर्ताः-पीडिताः, दोर्विंशतिः- विंशतिसंख्याका बाहवः यस्य सः; (इदं लङ्कापति-शब्दस्य विशेषणम्) तेन हेतुना प्रस्तुतं-रावणारब्धं स्तोत्रं यस्मै सः; (एतत् परमेश्वरविशेषणम्) तेन हेतुना पुष्यद्दयया-अभिवृद्धया तावकानुकम्पया, रक्षितश्चासौ उन्मुक्तश्च रक्षितोन्मुक्तः; बाहूनां भङ्गभयाद्रक्षितः पर्वतमूलपीडनाद्विमुक्तश्च, लङ्कापतिः-रावणो येन सः; तस्य संबोधनम्। निष्प्रपञ्चाकृते-अविस्तृतात्मरूपिन्; अणुस्वरूपिन्नित्यर्थः; यद्वा केवलनिर्गुणात्मक। (प्रथम-द्वितीयदण्डकयोर्मध्ये वक्ष्यमाणं दण्डकान्तरमपि क्वचिद्दृश्यते—
" जननमरणलाभपौनःपुनीदीनतद्भञ्जनारब्धघोरव्रतप्रीणितत्वत्कठोरश्रवःप्रार्थनाजातकोपोत्थशापामिषाशीभवत्तापसत्राणकृद्रामरूपग्रह स्वेषु सानुग्रह।" इति।)

(२) अनुपमितेति। अनुपमितं-उपमानरहितं यथा तथा, गृहीता-महादेवेनोपात्ता, या तारुण्यलक्ष्मीः-यौवनसंपत्, तस्या निरीक्षया मुनिभार्याभिः कृतेनावलोकनेन, उन्मिषत्-झटिति समुत्पन्नः, यो दारुकारण्यनारीव्रतभ्रंशः-दारुकवनावस्थितमुनिपत्नीनां समुपनतः पातिव्रत्यभङ्गः, तेन कुप्यतां-प्राप्तक्रोधानाम्, मुनीन्द्राणां-महर्षीणाम्, अभिचारेण-अहितोत्पादकेन आथर्वणकर्मणा,

ज्वलज्ज्वालमग्निं कराभ्यां वहन् दृश्यसे सद्भिरामृश्यसे । (३) कलश-भवमहर्षिवातापिनिर्वापणे दक्षिणोर्वीभरापोहने विन्ध्यसंस्तम्भने सिन्धु-नाथाम्बुनिःशेषपाने च शक्तिप्रदायिस्वपादाम्बुजध्यानमाहात्म्य शम्भो नमस्ते नमस्ते पुनस्ते नमः ॥ २१ ॥

---

उत्थितं-उत्पन्नम । तुङ्गनादं-कर्णकठोरनिनादं कुर्वाणम । कुरङ्गं-हरिणम् । ज्वलज्ज्वालं-ज्वलन्तीभिर्वह्नीभिर्ज्वालाभिरन्वितम । अग्निं-तन्महर्षिकृताभिचारिकं वह्निं च । कराभ्यां वहन्-एकेन हस्तेन कुरङ्गम अपरेणाग्निं च धारयन् । दृश्यसे । दारुकारण्ये कदाचिदद्भुतं सकलस्त्रीकुलावर्जकरूपसंपन्नस्य तरुणस्य रूपं गृहीत्वा शिवोऽयं व्यचरदिति, तदवलोकनेन मुनिपत्नयश्च संमोहिता इति, तेन च तत्रस्था महर्षयः प्राप्तकोपाः कुचेष्टितस्य यूनस्तस्य संतर्जनाय भयङ्करनादमाचरन्तं मृगम् अतिमहान्तमग्निं आभिचारिकैः प्रयोगैश्चोदपादयन्निति, तौ द्वावपि हेलयैव महा-देवः कराभ्यामादाय विहरन्नासीदिति च किमप्यैतिहासिकं वृत्तम । एवं प्रकारेण सद्भिः-ज्ञानिभिः । आमृश्यसे-निदिध्यासनादिभिरवलोक्यसे ।

(३) **कलशभवेति** । कलशभवमहर्षेः-अगस्त्यस्य, वातापिनिर्वापणे-वाता-पिनाम्नो दैत्यस्य स्वकुक्षौ जरणेन विनाशने; कलशसंभवकृतेल्वलवातापिध्वंसन-विषय इत्यर्थः । दक्षिणोर्व्याः-आर्यावर्तस्य दक्षिणभागस्थदेशस्य, भारापोहने दुष्ट-जननिरासने; अनार्यभूयिष्ठस्य दक्षिणापथस्य दुष्टजनशिक्षणपूर्वकं शिष्टजनक्षेमनिर्व-र्तनकर्मणीति तात्पर्यम् । विन्ध्यसंस्तम्भने-सूर्यगतिनिरोधमाचरितवतो विन्ध्यगि-रेरभिवृद्धिनिरोधने । सिन्धुनाथस्य-सागरस्य, अम्बूनां-अपाम् , निश्शेषपाने च । शक्तिप्रदायि सामर्थ्योत्पादकम , यत् स्वपादाम्बुजध्यानमाहात्म्यं-भवदीयपादार-विन्दयोरुपासनोत्पन्नः प्रभावः यस्य सः, तत्सम्बुद्धिः । तव पादपद्मयोर्ध्यानस्य महिम्नैव महर्षिरगस्त्योऽपि तत्तादृशानामपदानानामपि नूनमभूत् पात्रमिति भावः । शम्भो । ते नमः पुनः पुनश्च नमस्करोमि । (एतेषु दण्डकेषु निर्णयसागरमुद्रितपुस्त-करीत्या बहवः सापभ्रंशाः पाठभेदा दृश्यन्ते येषामिह दुश्शकं सूचनम् ।) शोधन-

प्रसूनशरदाहिने प्रबलकालकूटाशिने
कृतान्तपरिपन्थिने त्रिपुरगर्वनिर्वासिने ।
जटापटलयन्त्रितामरतरङ्गिणीस्रोतसे
प्रपन्नभयहारिणे प्रमथनाथ तुभ्यं नमः ॥ २२ ॥

---

विषये मया आदृतेऽपि सुमहत्युद्यमे नाहमेतेषां दण्डकानां शोधनेन तृप्तः । जनन-मरणेति दण्डकमपि प्रायः कविकृतमेव स्यात्, दण्डकानामपि चतुष्पादत्वात् ॥२१॥

पुनः पद्येन भक्त्युन्मेषहृद्येन भगवन्तं स्तौति प्रसूनेति । हे प्रमथनाथ-प्रमथ-गणाधिप परमेश्वर । दहतीति दाही, प्रसूनशरस्य-मन्मथस्य दाही, तस्मै; दग्ध-मन्मथायेत्यर्थः । साक्षात् परमेश्वरस्याप्यात्मनो योगनिष्ठायाः सधाष्टर्यं प्रत्यूहस्या-चरितत्वात्, पुष्पबाणत्वमप्यनादृत्य विरूपाक्षः कामं तं निर्दयं ददाहेति भावः ।

"तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥
क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार"

इत्येतत्कथावर्णनमत्रानुसंधेयम् । प्रबलस्य-सकललोकदहनप्रवृत्तत्वादतिक्रूरस्य, कालकूटस्य-तदाख्यस्य महाविषस्य, अशिने-भक्षकाय । (दृश्यतां प्रथमाङ्के ४१ श्लोकः तद्व्याख्यानं च ।) कृतान्तस्य-यमस्य, परिपन्थिने-शत्रवे । (प्र. अङ्के. ४० पद्यं दृश्यताम् ।) त्रिपुरगर्वस्य त्रिपुरासुरदर्पस्य, निर्वासिने विनाशकाय । (प्र. अङ्क. ४२ पद्यं तद्व्याख्यानं च विलोक्यताम् ।) जटानां पटलेन-जटाजूटसमूहेन, यन्त्रितानि-इतस्ततश्चलितुमप्यशक्यतया सम्यङ्निरुद्धानि, अमरतरङ्गिण्याः-देव-गङ्गायाः स्रोतांसि-प्रवाहाः येन तस्मै । (दृश्यतामस्य अङ्कस्य १२ पद्यं तद्व्याख्यानं च ।) प्रपन्नस्य-शरणागतस्य, भयहारिणे-सकलापायनिवारकाय । (शरणागतानां स्वेन त्रातानां च मार्कण्डेयादीनां कथासन्दर्भोऽत्रानुसन्धेयः ।) एवं मदनदहनगरला-

निष्क्रियस्यापि देवस्य जगत्सृष्ट्यादिकर्मसु ।
प्रवृत्तिं कुर्वतीं देवीं प्रपद्ये भक्तवत्सलाम् ॥ २३ ॥

---

चमन-दण्डधरदण्डन त्रिपुरहनन-गङ्गागर्वभञ्जन-प्रपन्नपालनादिभिः अपदानैः प्रथितप्रभावाय । तुभ्यं-परमेश्वराय भवते । नमः । प्रपन्नपरित्राणनशक्तस्त्वमिति भावः ।

"प्रशस्तगुणसिन्धवे प्रपदनस्पृशां बन्धवे
स्वतोऽपहतपाप्मने सकलदेहिनामात्मने ।
नमः कमलवासिनीनयनसौख्यसंदायिने
तमश्शमविधायिने तरणिमण्डलस्थायिने"

इति विश्वगुणादर्शे विद्यमानं विष्णुस्तवपरम् आरम्भपदेष्वनन्यतमं साधु पद्यमिदमनुकरोति शैल्या । दिष्टान्तावधिसमस्तसंकटस्यापि निकृन्तनेन निश्शेषमपि दौस्थ्यमपोह्य शरणागतस्य परित्राणने कृतपरिकरबन्धेन भवता भवत्पादसेवामाचरन् शरणमुपगतो जीवोऽहमपि रोगसमूहोपनतभयात् परित्रातव्य इति, श्रेयसां वितरणेन नितरामनुग्राह्य इति चाभ्यर्थयते राजा परमेश्वरमिति पद्यस्यास्य फलितो भावः ॥ २२ ॥

**निष्क्रियस्येति** । निष्क्रियस्यापि-स्वभावतः क्रियारहितस्यापि । देवस्य-भगवतः परब्रह्मणः; अत्र परमेश्वरस्येति तात्पर्यम् । जगतः-चराचरात्मकस्य भुवनस्य, सृष्ट्यादिषु सर्गस्थितिप्रलयाख्येषु, कर्मसु-व्यापारेषु । प्रवृत्तिं-उद्यमम् । कुर्वतीम्; जगतः सृष्ट्यादिकर्मसु प्रोत्साहमातन्वतीमिति भावः । अत एव भक्तवत्सलां-जननमरणादिक्लेशं चिरायानुभवत्सु भक्तजनेषु स्वयं वात्सल्यविशिष्टामिति भावः । देवीं-परमेश्वरीम् । प्रपद्ये-शरणमधिगच्छामि । निष्क्रियं-निर्गता क्रिया यस्येति ब्रह्म निर्दिश्यते । "निष्क्रियं निर्गुणं शान्तं निरपेक्षं निरञ्जनम्" इति ब्रह्मणः स्वरूपं सूत्रभाष्येऽस्ति निरूपितम् । "शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं द्वैतध्वान्तमपास्य यान्ति कृतिनः" इति कृष्णमिश्रोऽपि ब्रह्मणोऽक्रियत्वादिकम्

श्री—णाह, इमस्स मणोरहं पुच्छिअ झत्ति तं णिव्वत्तेहि। [नाथ, अस्य मनोरथं पृष्ट्वा झटिति तं निर्वर्तय।]

**रमेश्वरः**—प्रिये, किमत्र प्रष्टव्यम्। विदितमेव यक्ष्मराजः कैश्चिद्-साध्यरोगैः सहानुगतो विकुर्वाणो निर्मूलं छेत्तव्य इत्येतस्य मनोरथ इति। तत एतस्मै योगसिद्धिमुपदिश्य निर्जितनिखिलरोगं ब्रह्मरन्ध्र-स्थितचन्द्रमण्डलनिष्यन्दमानामृताप्लुतशरीरं निजानन्दानुभवतुच्छीकृ-ताखिलप्राकृतसुखान्तरं सफलमनोरथमेनं कृतार्थयिष्यामि।

---

अभिधाय, "यस्माद्विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते भासा यस्य जगद्वि-भाति" इति सृष्टि-स्थिति-संहाराद्यधिकाराश्च तस्यैवेति तेनैव पद्येन वर्णयति। कल्पान्ते करणकलेवरादिरहितान् अचेतनानिव विचेष्टमानान् जीवान् शक्तिरूपा देवी दृष्ट्वा वात्सल्येन कारुण्येन च सपदि तेषां करणग्रामोत्पादनपूर्वकमुत्तारणाय भगवन्तं स्वयमुत्तेजयतीति तत्त्वमनेन निर्दिष्टं भवति। "अचिदविशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा। करणकलेबरयोगं वितरसि वृषशैलनाथकरुणे त्वम्" इति (श्रीवेङ्कटनाथस्य दयाशतकीयस्य) श्लोकस्य रहस्यमिह व्यज्यते॥ २३॥

**णाहेति**। अस्य-जीवस्य। झटिति विलम्बं विनैव। निर्वर्तय-साधय।

**प्रिये किमिति**। अत्र-जीवमनोरथविषये। कैश्चित् असाध्यरोगैः सह—पूर्वाङ्के (९७ पद्यस्यानन्तरम्) "कृतं शोकेन। सन्ति हि कतिपये केनापि दुरपनेयप्रवृत्तयो देवपादमूलोपजीविनः सैन्याः" इति वाक्येन सूचितैर्दुष्परिहार्यै-र्व्याधिभिः साकमित्यर्थः। अनुगतः-रोगराडेष बहुभिर्बलवद्भिश्च व्याधिभिरनुसृतः सुबहुरोगपुरस्कृतश्चेति पूर्वमेव क्वचिन्निर्दिष्टरीत्या बलवत्सहायसंपन्नः। अत एव विकुर्वाणः-हृष्टमानसः; एतादृशबलसंपन्नं मां वराक एष विज्ञानशर्मा न कथं चिदपि जेतुं प्रभवेदिति दर्पदूषितचित्त इति भावः। "हर्षमाणो विकुर्वाणः" इत्यमरः। विपूर्वात् कृधातोः शानच। तस्मादेव मत्सरकृतकर्णजापः 'अव-

**देवी**—(सहर्षम्) सरिसं खु एदं तुम्हकेरम्म भत्तवच्छलस्स । [सदृशं खल्वेतद्युष्मादृशस्य भक्तवत्सलस्य ।]

**परमेश्वरः**—वत्स जीव, योगसिद्धिमुपदिशामि ते ।

**राजा**—भगवन्, को नाम योगः, कीदृशी वा तस्य सिद्धिः ।

---

न्ध्योऽयं प्रयत्नः । तदर्थमेव शत्रून्मूलनाय गच्छामः' इति पूर्वाङ्कान्ते यक्ष्मा हृष्टमना बभाषे । विकुर्वाण इत्यस्य अनुचराणाम् आमयान्तराणां साहाय्यबलेन शरीरस्य विकारमुत्पादयन्निति चान्योऽर्थः । तथा हतस्य यक्ष्मणः सकुटुम्बमित्रस्य निरवशेषनिर्मूलनमेव जीवराजाभिलषितमिति विदितचरमेव मर्मेति पशुपतिः परमेश्वर्यै विशदयति वियषम् । ततो हेतोः । एतस्मै-जीवराजाय । योगस्य-वक्ष्यमाणप्रकारस्य निदिध्यासनस्य, सिद्धि-सकलनिर्वहणप्रकारम् । ब्रह्मणः-परमात्मनः, रन्ध्रं-तदधिष्ठानभूतं बिलम्; यद्वा ब्रह्मप्राप्तये रन्ध्रम्; प्राणोत्क्रमणकाले योगिनां रन्ध्रेणानेन ब्रह्मसान्निध्यप्राप्तिर्भवतीति ब्रह्मरन्ध्रम् इति नाम; तत्र स्थितात् चन्द्रमण्डलात्, निष्यन्दमानेन योगबलेन प्रस्रवता, अमृतेन आप्लुतं-स्नापितम्, शरीरं यस्य तम्; सुषुम्नाकाण्डस्योर्ध्वं मूर्ध्नोऽन्तरा सहस्रदलपद्मवद्दृश्यमानस्य कुण्डलिनीमण्डलाख्यस्य योगशास्त्रप्रसिद्धस्यावयवस्य मध्यभागो ब्रह्मरन्ध्रमिति व्यवह्रियते । तत्र चास्ति चन्द्रमाः स्वांशेन सन्निहित इति, निदिध्यासनाद्यभ्यासोपजनितसुधाधारानिष्यन्देन स चन्द्रमाः शरीरं योगिन आप्लावयतीति, तेन च स नीरोगो भूत्वान्ततो भगवत्सायुज्यमप्यधिगच्छतीति च योगशास्त्रव्यवहारः । तथा च

"ब्रह्मरन्ध्रसरसीरुहान्तरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरमण्डलाश्रितं द्वादशार्णसरसीरुहं भजे" इति

पादुकापञ्चकाख्ये योगग्रन्थे च, "तत्कर्णिकायां देवेशि ब्रह्मरन्ध्रे स्थितं महः । सूर्यस्य मण्डलं तत्र चन्द्रमण्डलमेव च । तत्सोममण्डलाद्वायुः सुधाधारां

परमेश्वरः—वत्स, श्रूयताम् । योगश्चित्तवृत्तिनिरोधः । चित्तं नामान्तःकरणम् । यच्चक्षुरादिकरणद्वारा बहिर्निर्गच्छद्विषयाकारेण परिणमति । यत्तादात्म्यापन्नो द्रष्टापि तद्रूपाकार एव परिभाव्यते । तदुक्तम्—

"ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च ।
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि" इति ।

---

निषिञ्चति" इति कङ्कालमालिनीतन्त्रे च तत्तत्त्वविवरणं दृश्यते । "ब्रह्मद्वारं तदास्ये प्रविलसति सुधाधारगम्यप्रदेशं ग्रन्थिस्थानं तदेतद्वदनमिति सुषुम्नाख्यनाड्यालपन्ति" इति षट्चक्रनिरूपणे, "मूलाधारस्थशिवशक्त्या परमशिवशक्तिसामरस्येन निस्सरत्यमृतधारा" इति तद्व्याख्याने च विवृतो विषयश्च तत्त्वमिदं पुनर्विशदयति । निजस्य-ब्रह्मरूपस्य स्वात्मनः, आनन्दानुभवः-आत्मतत्त्वावबोधजनितपरमानन्दस्य स्वयमनुभवः, तेन तुच्छीकृतानि-अतीव लघूकृतानि-अखिलानि प्राकृतसुखान्तराणि-अशेषाणि चान्यानि लौकिकसौख्यानि येन तम् । स्वात्मानन्दानुभवजन्ये सुखे समुपनते लौकिकान्यशेषाण्यपि सुखानि सुतरां फल्गूनीति जीवः स्वयमेव निश्चेष्यतीति भावः । अत एव सफलमनोरथंनीरोगतानिष्पादनेन त्रैवर्गिकसिद्धिः, आत्मतत्त्वावबोधनेन समुपनतश्वःश्रेयससिद्धिश्च यथेप्सितं युगपदधिगतेति समालोच्य सफलमनोरथत्वं तस्य भवेदिति भावः । वत्सेत्यादिभिः भक्तवत्सलः स्वयं जीवाय योगसिद्धिमुपदिशतीत्याह ।

**वत्सेति** । श्रूयतां-योगः कीदृशः तत्सिद्धिश्च कीदृशीति विवृणोमि सावहिति आकर्ण्यताम् । योगो नाम चित्तवृत्तिनिरोधः ; इदं च पतञ्जलिभाषितम् । चित्तं नाम अन्तःकरणम् ; ज्ञानसाधनम् अन्तरिन्द्रियम् ; चित्ताख्यस्य अन्तरिन्द्रियस्य, वृत्तिःबहिर्व्यापारेषु प्रवृत्तिः, तस्या निरोधः-विषयेभ्यः समाहरणम् ; तादृशं कर्मैव योगः । अन्तःकरणस्यैकाग्रतया ध्याने प्रवृत्तिरिति यावत् । तदेव पुनर्विवृणोति **यच्चक्षुरादीति** । यत्-चित्तम् । चक्षुरादिकरणद्वारा नेत्रश्रोत्रादिबाह्येन्द्रियमार्गेण । बहिःशरीराद्बहिः । निर्गच्छत्-प्रवर्तमानं सत् । विषयाकारेण-शब्दस्पर्शरूपादिविषया-

"ध्यायतीव लेलायतीव" इति श्रुतिः। तस्य वृत्तयो नाम कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्याद्याः श्रुतीरिता आन्तराः; बाह्याश्च शब्दस्पर्शादिविषयग्राहिण्यः।

---

त्मना। परिणमति; बाह्येन्द्रियद्वारा विषयेषु मनसा सम्बन्धमनुभूयमानेषु तदन्तः-करणस्य विषयाणां च नैव भेदोऽवगन्तुं शक्यत इत्यभिप्रेत्य विषयविषयिणोरिहा-भेदाध्यवसायः कल्पितः। "मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धस्य विषयासङ्गि मुक्तेर्निर्विषयं तथा। विषयेभ्यः समाहृत्य विज्ञानात्मा मतो मुने। चिन्तयेन्मुक्तये तेन ब्रह्मभूयं परेश्वरम्" इति, "आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः। तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते" इति च वह्निपुराणादिषु योगस्य स्वरूपमाख्यातम्। एकान्ततो ब्रह्मणि मनसः स्थिरा प्रवृत्तिर्योगः। "अविचलितमनोभिः साधकैर्मृग्यमाणः" इति, "यास्वन्तःकरणस्य बाह्यकरण-व्यापाररोधीक्षणात्" इति च बाह्यविषयेभ्यश्चित्तवृत्तिनिरोधात्मकं निदिध्यासनकर्म भवभूतिनापि (माल. ९–१८) वर्णितमास्ते। यत्तादात्म्येनेति। यत्-येन हेतुना। तादात्म्यापन्नः-तादृशविषयात्मतां प्राप्तः। द्रष्टापि-अवलोकनकर्मकर्ता पुरुषश्च। तद्रूपं-तादृशविषयरूपम् आकारः-स्वरूपं यस्य सः। परिभाव्यते-विलोक्यते। न केवलं मनः, परं तु तदधिष्ठानभूतः पुरुषश्च विषयतादात्म्यमभिप्रपन्न इव विभाव्यत इति भावः।

तस्य प्रमाणं प्रतिपादयति ध्यायन्त्यामिति वचनेन। ध्यायन्त्यां-बुद्धौ ध्यानकर्माचरन्त्याम्। आत्मा-जीवात्मा। ध्यायतीव-अन्तः निश्चलतया ध्यानकर्म स्वयमाचरतीवास्ते। चलन्त्यां-ध्यानान्निवृत्त्य बाह्यविषयेषु प्रवृत्तायां सत्याम्। चलतीव-आत्मापि बहिर्विषयेषु धावन् गच्छतीव च परिभाव्यते। अतो हेतोः बुद्धिस्थे-चैतन्याधारभूतबुद्धीन्द्रियमाश्रित्य विद्यमाने। ध्यानचलने निदिध्या-सनविषयानुधावनात्मके द्वे कर्मणी। बुद्धिसाक्षिणि-जीवात्मरूपे पुरुषे। कल्प्येते-आरोप्येते। इदं च वचनं श्रुतिमूलकमेवेति निरूपयति ध्यायतीवेति।

सत्त्वरजस्तमोरूपगुणत्रयात्मिकानां च तासां दैवासुरसम्पद्रूपत्वेन द्वेधा विभाग उक्तो गीतायाम्। "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।

---

ध्यायतीव लेलयतीवेति द्वितयमपीदं कर्म आत्मकर्तृकम्। तस्य-अन्तः-करणस्य बुद्धीन्द्रियस्य वा। आन्तरा वृत्तयो नाम। कामः-इच्छा। सङ्कल्पः-मनोव्यापारः, इतिकर्तव्यतानिश्चयो वा। विचिकित्सा-संशयः। श्रद्धा-धर्मकार्येषु संप्रत्ययः; शुभेषु कार्येषु सादरा प्रवृत्तिरिति भावः; "प्रत्ययो धर्मकार्येषु महान् श्रद्धेत्युदाहृता" इति स्मृतिः। अश्रद्धा-अनादरः। धृतिः-धैर्यम्। ह्रीः-लज्जा। इत्याद्याः-आदिशब्देन क्रोधेर्ष्यादयश्च गृह्यन्ते। श्रुतीरिताः-लेलयतीवेत्यादिभिः वेदेषु प्रतिपादिताः। बाह्याश्च तस्य बुद्धीन्द्रियस्य वृत्तयः। शब्दस्पर्शरूपरसगन्धाख्यान् विषयान् गृह्णन्तीति विषयग्राहिण्यः। शब्दस्पर्श रूपादयो ये विषया बहिरिन्द्रियाणां श्रोत्रत्वक्चक्षुरादीनां गोचरास्ते बाह्या वृत्तय इत्यर्थः। "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा" इति मुण्डकोपनिषदो वचनमनुसृत्य जीवात्म-प्राण-चित्तानां सन्निपतितानि लक्षण-कर्मादीनि कविनात्र संगृहीतानीति ज्ञातव्यम्।

जीवराजाय परमेश्वरो योगसिद्धिप्रकारं समुपदिशन्, तासां चित्त-वृत्तीनां भगवद्गीताभिहितं द्वैविध्यं गुणभेदेन विशदयति **सत्त्वेति**। सत्त्व-रजस्तमसां रूपं यस्य तत्; गुणानां त्रयं गुणत्रयम्; सत्त्वरजस्तमोरूपं च तत् गुणत्रयं च सत्त्वरजस्तमोरूपगुणत्रयम्; तदात्मिकानां-तत्स्वरूपाणाम्। तासां-चित्तवृत्तीनाम्। देवानामियं दैवी, असुराणामियम् आसुरी; तयोः संपत्; तद्रूपस्य भावः; दैवासुरसम्पदोः रूपत्वेन; दैवसम्पत् आसुरसम्पत् इत्या-कारत्वेन। **अभयमिति**। अभयं-भयराहित्यम्; आश्रितानां भयात् त्राणनमित्यर्थः। सत्त्वसंशुद्धिः-मनश्शुद्धिः; सत्त्वाधिष्ठानस्यान्तःकरणस्य सर्वदोषनिवृत्तिरिहाभि-प्रेता। ज्ञानयोगव्यवस्थितिः-प्रकृतिवियुक्तात्मस्वरूपविवेकनिष्ठा। दानं-धनादिकस्य

दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्" इत्यादिर्दैवी संपत्। "दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च" इत्यादिरासुरी संपत्। तत्र दैवी संपत् सात्त्विकी। आसुरी तु रजस्तमःप्रधाना। "दैवी संपद्विमोक्षाय निबन्धायासुरी मता।" तासां सर्वासामान्तरीणां बाह्यानां च चित्तवृत्तीनां

---

पात्रे प्रतिपादनम्। दमः-मनसो विषयेभ्यो निवर्तनम्। यज्ञः-ब्रह्मयज्ञादिः। स्वाध्यायः-वेदशास्त्राद्यभ्यासनिष्ठा। तपः-कृच्छ्रचान्द्रायणादिव्रतानुष्ठानम्। आर्जवं-मनोवाक्कायवृत्तीनामेकनिष्ठता परम्। इत्यादिः-आदिशब्देन "अहिंसा सत्यमक्रोधस्त्यागश्शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्। तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता" इत्येतेऽप्यवशिष्टा गीतानिर्दिष्टा गुणा गृह्यन्ते। एतद्गुणानां समृद्धिः या सा दैवी-देवसम्बन्धिनी। संपत् इति व्यवह्रियत इति भावः। दम्भ इति। दम्भः-स्वात्मनो गुणाभासस्य महिमाभासस्य वा ख्यापनोद्देशेन क्रियमाणं कर्म अभिधीयमानं वचनं वा। दर्पः-विद्याधनादिनिमित्त उत्सेकः। अतिमानः-आत्मनः पूज्यतातिशयभावना। क्रोधः-कोपः। पारुष्यं-परेषामुद्वेगावहरूपो गुणः। इत्यादिः-अत्र चादिशब्देन अज्ञानं चोक्तावशिष्टं गृह्यते। "अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम्" इति च गीतावचनम्। एतेषां सद्गर्हितानां दुर्गुणानां समृद्धिः। आसुरी-असुरसम्बन्धिनी। सम्पत् भवति। तत्र दैवीति। तत्र तयोर्दैवासुरसम्पदोः मध्ये, दैवी सम्पत् सात्त्विकी-सत्त्वगुणप्रचुरा सद्भिराद्रियमाणा च। आसुरी तु सम्पत् रजःप्रधाना तमःप्रधाना च; अतः सद्भिर्गर्ह्यमाणा। अनयोः सदसदात्मिकयोः सम्पदोर्गीतोक्तं फलमाह दैवीति। दैवी सम्पत् या, सा विमोक्षाय रोगेभ्यः संसारबन्धनाच्च विशिष्य मुक्तये भवति। आसुरी सम्पत्तु। निबन्धाय-रोगैः संसृत्या च नियतबन्धनाय। मता अभिप्रेता। योगस्वरूपं निगमयति तासामिति। आन्तरीणां बाह्यानां च सर्वासां तासां पूर्वनिर्दिष्टानाम्। चित्तवृत्तीनां-दैवीनामासुरीणां चान्तःकरणप्रवृत्तीनाम्। निरोधो नाम-निरोधप्रकारः कीदृश इति पृष्टे।

निरोधो नाम स्वस्वविषयेभ्यः प्रतिनिवर्त्य क्वचित् सगुणे निर्गुणे वा वस्तुनि चित्तस्य समवस्थापनम् ।

तच्च दृढतरवैराग्यसत्कारनिरन्तरसेवाभ्यासबलेन लभ्यते । तदुक्तम्—

"असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय

---

स्वस्वविषयेभ्यः-तत्तदुचितेभ्यः इन्द्रियार्थेभ्यः । प्रतिनिवर्त्य-मनः समाकृष्य । सगुणे-ज्ञानशक्तिसौन्दार्यादिकल्याणगुणयुक्ते । निर्गुणे वा-हेयगुणरहिते वा । क्वचित् वस्तुनि-यस्मिन् कस्मिंश्चन शुभाश्रयभूते शिवतत्त्वरूपे विष्णुतत्त्वरूपे वा परब्रह्मणि । चित्तस्य-पूर्वोक्तलक्षणस्य अन्तःकरणस्य । समवस्थापनं-एकाग्रतया सम्यङ्निवेशनम ; निदिध्यासननिर्वहणमिति यावत् ।

तच्चेति । तच्च चित्तस्य शुभाश्रयवस्तुनि समवस्थापनं च । दृढतरेण-सुतरां निश्चलेन, वैराग्यस्य-दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासजाततृष्णाराहित्यस्य, सत्कारार्थं सभक्त्युन्मेषेण पूजनार्थम्, निरन्तरसेवाभ्यासस्य च बलेन; उत्कटवैराग्यस्य पूजापुरस्सरभगवत्सेवायाश्च अनुवृत्तिप्राबल्येनेति भावः । लभ्यते-तादृशचित्तवृत्तेर्ब्रह्मणि स्थापनम् उपलभ्यते । (निरन्तरसेवनाभ्यासबलेन लभ्यते इति पाठस्तु न साधुः ।) तस्य प्रमाणमवतारयति तदुक्तमित्यनेन । **असंशयमिति** गीतावचनम् । महाबाहो हे पराक्रमशालिन् अर्जुन । मनः मानवानामन्तःकरणम् । चलं-अतितरलस्वभावम् । अत एव दुर्निग्रहं तस्य विषयप्रवृत्तेर्निग्रहो न सुखसाध्य इत्यर्थः । मनो दुर्निग्रहं चलमित्येतत् असंशयम् नास्त्यत्र किञ्चिदपि संशयस्थानमिति भावः । तु-किन्तु; न तत् सर्वथा भवत्यसाध्यमिति सूचयति तुशब्दः । कौन्तेय-अर्जुन । अभ्यासेन-आत्मनि आभिमुख्यकरणात्मकेन महतोद्यमेन । वैराग्येण-आत्मव्यतिरिक्तेषु भावेषु सर्वेष्वपि दोषाकरत्वदर्शनजनितवैतृष्ण्येन च । गृह्यते-कथंचिन्निगृह्यते । इति एवं भगवतोक्तमित्यर्थः । अत एवानन्तरमपि "असंयतात्मना योगो दुष्प्राप इति

वैराग्येण च गृह्यते" इति । एतादृशयोगस्य सिद्धिर्नाम ध्येयवस्तु-साक्षात्काररूपावस्थितिः ।

**मन्त्री**—भगवन्,

एवंभूताः क इव घटते चित्तवृत्तीर्निरोद्धुं
वैराग्येणाभ्यसनविधिना स्याच्चिरात्तन्निरोधः ।
जेयः शीघ्रं रिपुरपरथा न स्थितिर्नः पुरेऽतो
योगे सिद्धिर्भवति च यथानुग्रहस्ते तथास्तु ॥ २४ ॥

---

मे मतिः" इति विषयेभ्यो मनोनियमनं विना योगो न सिद्ध्यतीति गीतायां भगवान् स्वयमाचचक्षे । 'को नाम योगः' इत्येनन साधु समाधाय, 'कीदृशी तस्य सिद्धिः' इति जीवकृतप्रश्नं च समाधत्ते एतादृशेति । एतादृश योगस्य-निर्दिष्टपूर्वलक्षणयुक्तस्य समाधेः । सिद्धिर्नाम कीदृशीति पृष्टे तत् समाधत्ते । ध्येयं-ध्यानयोग्यम्, यत् वस्तु-शुभाश्रयब्रह्मरूपं तत्त्वम्, तस्य साक्षात्काररूपा-प्रत्यक्षीकरणात्मिका, अवस्थितिः-भगवत्साक्षात्कारफलप्रदाऽव्यवस्थानं । एवं भक्त-वत्सलो भगवान् भवो योगस्वरूपम्, तत्सिद्धिप्रकारं च मुमुक्षवे जीवस्योज्जीवना योपदिदेश ।

शिवोपदिष्टयोगसाधनस्य दुस्साधतां मन्त्री महेश्वराय निवेद्य, शत्रु-निरसनायोपायान्तरस्योपदेशमभ्यर्थयते एवंभूता इति । भगवन्-परमेश्वर । एवं-भूताः-पूर्वनिर्दिष्टरूपाः काम-सङ्कल्प-विचिकित्सा-दम्भ-दर्पादिरूपेणाज्ञानसिद्धाः । चित्तवृत्तीः-मनसो दुर्निग्रहान् गतिविशेषान् । निरोद्धुम् बलान्नियन्तुम् । क इव घटते-को नाम प्रभवति । नैष योगः संप्रति सुलभोऽस्माकम् । अत एव खलु—

"अपि च प्रभूतमदमेदुरात्मनो विषयाटवीषु विविधासु धावतः ।
स्वबलेन हन्त मनसो निवर्तनं बिसतन्तुनेव सुरदन्तियन्त्रणम् "

राजा—भगवन्,

स्मृतिस्ते सकलाभीष्टं दत्ते किमुत दर्शनम् ।
तत् प्राप्तममितैः पुण्यैः सद्यः सिद्धिं ददातु मे ॥ २५ ॥

---

इति श्रीकवितार्किकसिंहश्च चित्तवृत्तिनिरोधस्य सुदुष्करत्वं निरूपितवान् । (एवं भूत इति क इत्यस्य विशेषणत्वेन पाठान्तरमप्यस्ति ।) तन्निरोधः तस्य मनसो विषयप्रवृत्तिभ्यो विनिवर्तनपूर्वकं ध्याने नियमनम् । वैराग्येण । अभ्यसनविधिना-विषयेभ्यो मनो निवर्त्य समाधिनिर्वर्तनाभ्यासकर्मणा च । चिरात्-अतिदीर्घेण कालेन । स्यात्-योगसिद्धिः संभवेत् । किन्तु समुपनतं नः सङ्कटं न तादृश विलम्बक्षममिति निवेदयति जेय इति । रिपुः-अस्मच्छत्रुर्यक्ष्मा । शीघ्रं जेयः-विनैव विलम्बं जेतव्यो भवति । अपरथा-तथा त्वरितमेव न चेत् स जीयत इत्यर्थः । नः जीवराजसम्बन्धिनामस्माकम् । पुरे-देहाख्ये नगरे । स्थितिः न-अत्र नास्माकं स्थितिर्भविष्यति । शरीराद्वयं निष्कासिता भवेमेति यावत् । अतो हेतोः । योगे यथा सिद्धिर्भवति-अचिरादेव यथा योगसिद्धिः संभवेत् । तथा ते-भवतः । अनुग्रहश्च अस्तु-अद्यैव यथानितरसुलभस्य भवद्दर्शनस्य दानेन वयमनुगृहीतास्तथा योगसिद्धिप्रदानेनापि अद्यैव वयमनुग्राह्याः, नो चेत् दुर्जयैरतितीव्रप्रवृत्तिमद्भिररिभिः पुरमिदमभिहन्येत, वयमपि निराधारत्वात् त्रिवर्गस्यापवर्गस्य वा साधने हतोद्यमा भवेमेति भावः । (सिद्धिर्लघु च भवितानुग्रह इति च पाठः ।) ॥ २४ ॥

योगसिद्धिप्राप्तेर्दुर्घटत्वमवगत्य स्वयमेव परमेश्वरं तत्फलावाप्त्यनुग्रहाय प्रार्थयते **स्मृतिरिति** । हे भगवन्-परमेश्वर । ते-तव । स्मृतिः-स्मरणमपि । सकलाभीष्टं-सकलमपि मनोरथम् । दत्ते । दर्शनं-तव प्रत्यक्षीकरणम् । किमुत-मदभीप्सितं सर्वथा प्रयच्छेद्भवद्दर्शनमित्यत्र कः सन्देह इत्यर्थः । अमितैः-अपरिच्छेद्यप्रमाणैः । पुण्यैः । प्राप्तं-मयाधिगतम् । तत्-तादृशं भवद्दर्शनमेव । मे-भवदनुग्रहपात्रस्य मम । सिद्धिं-योगसिद्धिम् । सद्यः-अद्यैवेत्यर्थः । ददातु ।

**देवी**—(सदयम्) देव, संकप्पादो जेव्व से जोअसिद्धी होदुत्ति अणुगेह्णीअदु एसो । [देव, सङ्कल्पादेवास्य योगसिद्धिर्भवत्वित्यनुगृह्यतामेषः ।]

**परमेश्वरः**—वत्स, देव्यैवानुगृहीतोऽसि । सङ्कल्पादेव तेऽखिलयोगसिद्धिर्भवतु ।

**मन्त्री**—राजन्, भगवत्या भगवता च सङ्कल्पादेवाखिलयोगसिद्धिरनुगृहीता । तत् सर्वथा कृतार्थाः स्मः ।

---

"निर्जितनिखिलविपक्षं नीरुजपुरमुस्थमपहतातङ्कम् । अहमागत्य विधास्ये परमानन्दाब्धिमाप्तकामं त्वाम्" इति चतुर्थाङ्केऽभिहितरीत्या समभिवृद्धस्वविषयकभक्तिप्रभावसंधुक्षितः परमेश्वरः स्वयमेव जीवस्य पुरस्तात् तदनुग्रहायाविर्भूत इत्यवधार्य, सर्वधात्मानं विजयिनं सिद्धसकलमनोरथान्तरं च स एव साम्प्रतमेव विदधात्विति प्रास्तावकाशेन प्राथ्यते जीवेन ॥ २९ ॥

सदयमिति । देवी-परमेश्वरी स्वयं दयारूपिणी । "प्रवहन्ती तु दया तव परिहृतनीचोच्चवस्तुवैषम्या" इति पूर्वोक्तरीत्या (४—२२) निरुपाधिकवत्सलाया ईश्वर्याः दयनीये जीवे तत्प्रपदनानन्तरमेव नीचोच्चवैषम्यरहितः स्वयमनुग्रहः समुत्पन्न इति सूचयतीदं सदयमिति पदम् । सङ्कल्पादेव-आशासनपूर्वकं मानसिकोद्देशादेव । "सङ्कल्पो मानसं कर्म" इत्यमरः । "सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः । व्रता नियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः" इति योगव्रतादीनां सिद्धिः सङ्कल्पादेव संभवतीति एकादशीतत्त्वादयो ग्रन्थाः । वत्सेति । देव्यैव-परमेश्वर्यैव । मद्देव्या अनुग्रहे त्वयि प्रवृत्ते नाहमन्यथा कर्तुं प्रभवामीति सूचयत्येवकारः । (देव्यैवमनुगृहीतोऽसि इति पाठान्तरम् ।) अखिलयोगसिद्धिः-योगस्य यथावन्निर्वर्तितस्य या या सिद्धिः-फलम् लोके समुद्भवति सा सर्वापि निश्शेषतया ते देव्या अनुग्रहबलादपि भव-

राजा—(सप्रणामम्) अनुगृहीता एव वयम् । यतः—

या प्रत्यक्षपदार्थमात्रविषया सा योगसंस्कारतः
संस्कारान् प्रतिबध्नतीतरकृतान् धीः क्वापि मे जृम्भते ।
सूक्ष्मं यत्तु विदूरमव्यवहितं सर्वान् विशेषान् स्फुटं
पश्याम्येष यथावदद्य परमार्थोद्भूतया प्रज्ञया ॥ २६ ॥

---

त्वित्यर्थः । (अखिलेति पदं क्वचित्पुस्तके नास्ति ।) अनुगृहीता इति । वयम् अनुगृहीता एव-पार्वतीपरमेश्वराभ्यां वयं सर्वथापि संप्रत्यनुगृहीता इति सम्यगवगम्यत इति निरूपयति यत इत्यनेन । (अनुगृहीतैवेयम् इति पाठे-इयं-मे बुद्धिः । अनुगृहीता च भवतीत्यर्थः । स तु न समीचीनः पाठः ।)

या प्रत्यक्षेति । यतः क्वापि धीरपूर्वा मे जृम्भते, यतश्च परमार्थप्रज्ञया विस्पष्टं विश्वं पश्यामि, अतो वयमनुगृहीता एवेति पूर्ववाक्येन संबन्धः । या-मे धीः; धीशब्देन स्वपत्नी बुद्धिर्गृह्यते । प्रत्यक्षपदार्थाः-चक्षुःश्रोत्रादि-पञ्चेन्द्रियगोचराणि वस्तूनि, तन्मात्रं विषया यस्याः सा; कालेनैतावता च स्थूलानां पाञ्चभौतिकानां द्रव्याणाम् अवगमशक्तिमात्रविशिष्टा बुद्धिरासीदिति भावः । अद्य तु सा धीः । योगसंस्कारतः-निदिध्यासनादिजनितपरिष्क्रियाविशेषेण । इतरकृतान्-प्रमाणान्तरसाधितान् । संस्कारान्-परिचयान् । प्रतिबध्नती रुन्धती । "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" इति पातञ्जलसूत्रम् । क्वापि-वाग्विभवातिवृत्तप्रभावा । मे-मम । जृम्भते-समेधते । योगसंस्कारोपपन्नं दिव्यज्ञान-स्वरूपमेवाह सूक्ष्ममिति । अद्य-भवदनुग्रहप्राप्त्यनन्तरमेव संप्रति । परमार्थोद्भूतया-तत्त्वतः समुत्पन्नया । प्रज्ञया-असाधारणदिव्यज्ञानेन । यत् सूक्ष्मं वस्तु तदपि । विदूरं—विशिष्य दवीयसि स्थितमपि; यद्वा विदूरं यथा तथा-अतिसमीपे स्थितवदेवेत्यर्थः । तथा अव्यवहितं-पदार्थान्तरानाच्छादितं यथा तथा च । स्फुटं-अति स्पष्टं यथा तथा च । सर्वान् विशेषान्-तत्सूक्ष्मवस्तुनि

आश्चर्योऽयं भगवत्प्रसादमहिमा ।

**परमेश्वरः**—देवि, एवं संप्रज्ञातसमाधिरेतस्य प्रादुर्भूतः : यत एवं सालम्बनामनुभवति ऋतंभरां नाम प्रज्ञाम् । अतःपरं निर्बीजयोगसंज्ञं संप्रज्ञातसमाधिमस्यानुगृह्णामि ।

**देवी**—अणुगेह्णीअदु अत्तमणिव्विसेसो एसो । [अनुगृह्यतामात्मनिर्विशेष एषः ।]

**राजा**—(सहर्षोल्लासरोमाञ्चम्) आश्चर्यमाश्चर्यम् ।

---

संनिविष्टान् अवयवादिभेदानपि । एषः-जीवोऽहम् । पश्यामि-भ्रान्तिहीनेन परमनिर्मलेन ज्ञानेन वस्तुतत्त्वं संप्रति सम्यक् प्रत्यक्षीकरोमीत्यर्थः ॥२६॥

**आश्चर्य इति** । अयं-भगवत्प्रसादमहिमा-परमेश्वरस्यानुग्रहेण समुत्पन्नः प्रभाव एषः । आश्चर्यः-अनुपदमेव परमार्थज्ञानस्य समुत्पादितत्वात् नूनमद्भुतावहः । **देवीति** । एतस्य-जीवस्य । एवं-या प्रत्यक्षेति पद्योक्तप्रकारेण । संप्रज्ञातसमाधिः-समस्तसूक्ष्मविषयाणाम् अतिदवीयसां च विषयाणाम् अन्वक्षीकरणरूपा ज्ञाननिष्ठा । प्रादुर्भूतः-जातः । यतो हेतोः । एवं-पूर्वोक्तप्रकारेण सालम्बनां संघटितपराग्वृत्तित्वचिन्तनात्मकाम् । ऋतंभरां नाम प्रज्ञां-तदाख्यं योगजन्यं सत्यज्ञानम् ; ऋतं नाम सत्यम्, तत् भरति-बिभर्तीति ऋतंभरा । 'ऋतंभरा तत्र प्रज्ञा' इति च पतञ्जलिः । "ऋतंभरादयश्च देव्यः" इति प्रबोधचन्द्रोदयेऽपि यदुक्तं तत् जीवस्याद्वैतज्ञानोदयाय ऋतंभरादिप्रज्ञाबलसाहाय्यमेव प्रधानमभूदिति ज्ञापयति । अनुभवति ऋतंभराप्राप्त्युत्पन्नसत्यज्ञानजन्यमानन्दमनुभवति । (य एवमालम्बनामनुभवति ऋतंभरामिति पाठो न सम्यक् ।) अतःपरं-ऋतंभराज्ञानोत्पत्त्यनन्तरम् । निर्बीजयोगसंज्ञं-विघटिताशेषपराग्वृत्तित्वचिन्तनात्मकम् । असंप्रज्ञातसमाधिं-प्रत्यगात्मैक्यानुभवानुसंधानम् । **अणुगेह्णीअदु इति** । एषः-जीवः । आत्मनिर्विशेषः-आत्मनः-परमेश्वराद्भवतः, निर्विशेषः-अनुग्रहैकपात्रीभूतत्वात् ब्रह्मैक्यज्ञानस्याद्य समुद्भूतत्वाच्चात्मनिर्विशेष इति समुचितमुक्तम् । **सहर्षेति** ।

भगवन् करुणासमित्समिद्धे दृढनिर्बीजसमाधियोगवह्नौ ।
प्रविलापितसर्वचित्तवृत्तिः परमानन्दघनोऽस्मि नित्यतृप्तः ॥ २७ ॥

**परमेश्वरः**—देवि, झटिति विघटिताखिलपराग्वृत्तिः प्रत्यगात्मैक्यानुभवरूपोऽसंप्रज्ञातसमाधिराविर्भूतो वत्सस्य । यत एवमनुभूतमर्थमनुवदति ।

---

आत्मज्ञानस्य ब्रह्मानन्दसहचरितस्य प्रादुर्भूतत्वात् हर्षोल्लासरोमाञ्चाश्चर्याणामप्यनुपदमेवानुभवः सूचितः ।

ब्रह्मानन्दानुभवप्रकारमेव वर्णयति **भगवन्निति** । भगवन्-परमेश्वर । करुणा-भवद्दयैव, समिधः-इन्धनानि, ताभिः समिद्धे-उद्दीपिते । दृढः-अप्रकम्प्यः, निर्बीजसमाधिरूपः-असंप्रज्ञातसमाध्यात्मको योग एव वह्निः-त्रेताग्निः तस्मिन् । प्रविलापिताः-हुताः, लयं गमिता इत्यर्थः, सर्वाः चित्तवृत्तयः-अन्तःकरणप्रवृत्तयः येन सः । अहमिति शेषः । नित्यतृप्तः-नैरन्तर्येण सन्तुष्टः । परमानन्दघनः-केवलानन्दमयोऽस्मि । स्वान्ते विधूतसमस्तबाह्यवृत्तिप्रसरे सर्वात्मना शान्तिमधिगते ज्ञानानन्दमयत्वं जीवस्य जीवन्मुक्तिदशायां यदाविर्भवति तदेवानितरसाधरणमवस्थान्तरमत्र सूचितं भवति । अनेन प्रत्यग्ब्रह्मणोरैक्यलक्षणा फलप्राप्तिरभिहिता भवति ॥ २७ ॥

**झटितीति** । झटिति-मदनुग्रहोत्तरक्षण एव । विशेषेण घटिता-निर्वर्तिता, अखिलपराग्वृत्तिः-परमात्माभिमुखसमस्तोद्यमः यस्य सः; यद्वा निवृत्ताशेषलौकिकविषयप्रवृत्तिः । तथा प्रत्यगात्मनोः-जीवात्मपरमात्मनोः, ऐक्यानुभवरूपः-तादात्म्यतानुसन्धानात्मकः । असंप्रज्ञातसमाधिः-निर्बीजसमाधिः । वत्सस्य-अस्मद्वात्सल्यभाजनस्यास्य जीवस्य । आविर्भूतः-जीवन्मुक्तदशाविशेषोऽधिगत इति यावत् । अनुभूतमर्थं-ब्रह्मानन्दानुभवाख्यं निःश्रेयसम् ।

**देवी**—देव, किदत्थो खु एसो जो एवंविधस्स देवाणुग्गहस्स भाअणं जादो। [देव, कृतार्थः खल्वेष य एवंविधस्य देवानुग्रहस्य भाजनं जातः।]

**परमेश्वरः**—संप्रत्येनं व्युत्थाप्य प्रकृतकार्यप्रवणं करोमि। (जीवं प्रति) वत्स, अन्यदपि किञ्चिदनुशासनीयोऽसि।

**राजा**—(व्युत्थाय) भगवन्, अवहितोऽस्मि।

**परमेश्वरः**—

प्राचीनः सचिवः प्रियस्तव सुहृद्यो ज्ञानशर्मा मुनि-
स्तोमस्यापि सुदुर्लभः स भवता मान्यः सदाहं यथा।
श्रेयस्संघटनाय हन्त भवतः सत्यं स एवार्हति
प्रेयस्त्वैहिकमातनोतु सततं विज्ञानशर्मापि ते ॥२८॥

---

देवेति। देवानुग्रहस्य-भवदीयप्रसादस्य। यो भाजनं जातः-पात्रीभूतः। स एष जीवः कृतार्थः-सफलमनोरथः संवृत्तः। संप्रतीति। एनं-जीवम्। व्युत्थाप्य-समाधिसंस्थातः प्रतिबोध्य। प्रकृतकार्ये-संप्रति साधनीये कर्मण्यैहिके, प्रवणं व्यग्रचित्तम्। अन्यदपि किञ्चित्-आध्यात्मिकधर्मानुष्ठानादपरमपि किमपि धर्मकर्म। तद्विषय इति यावत्। अनुशासनीयोऽसि-बोधितव्योऽसि। भगवन्निति। अवहितोऽस्मि-भवदुपदिश्यमाने विषये दत्तावधानो भवामि।

ऐहिकामुष्मिकश्रेयस्करं तमेव विषयं परमेश्वरः प्रस्तौति प्राचीन इति। तव प्राचीनः सचिवः-विज्ञानशर्मणोऽपि पूर्वं साहाय्यमाचरन् समीचीनोऽमात्यः। प्रियः सुहृत्; न केवलं मन्त्र्यन्तरवत् राज्यकार्यनिर्वर्तनार्थमेव नियमितोऽधिकारी परं तु परमं ते मित्रं त्वदीयाशेषश्रेयोऽभिलाषी चेति भावः। यो ज्ञानशर्मा विद्यते सः। मुनिस्तोमस्यापि-महर्षिसमुदायस्यापि। सुदुर्लभः-तस्य

शश्वद्ज्ञानादभिन्नः सन् विज्ञानमपि मानय ।
एवं सति घटेयातां भुक्तिमुक्ती करे तव ॥ २९ ॥

**राज-मन्त्रिणौ**—(साष्टाङ्गं प्रणम्योत्थाय) अनुगृहीतौ स्वः ।

---

साहाय्यं महर्षिकुलस्यापि सुतरां दुरवापमित्यर्थः। (मुनिः सोऽन्यस्यापि सुदुर्लभ इति पाठे—मुनिसदृशः स ज्ञानशर्मा नृपान्तरस्य सुतरां दुर्लभो मन्त्रीत्यर्थः।) अत एव अहं यथा भवता स च मान्यः-यथा भक्तिविस्रम्भपूर्वकं मां मानयसि तथा सोऽपि त्वया संभावनीयः। महान् स मन्त्री मध्ये काले सुदूरं विस्मृतकल्पोऽपि तमिममितःपरं वा साधु संभाव्य तत्साहाय्यमधिगच्छेत्युपदिशति। इतः किमेष मे करिष्यतीति प्रश्ने सति तत्राह श्रेय इति। हन्तेति स्वहर्षं सूचयति। स एव-नान्य इति भावः। भवतः श्रेयस्संघटनाय-निःश्रेयसरूपामुष्मिकार्थसंपादनाय। सत्यं अर्हति-विनैव संशयं स एव तव निःश्रेयससाधनायोपयोगी भविष्यति। तु-किंतु। विज्ञानशर्मापि। ते-तव। ऐहिकं प्रेयः-एहिकश्रेयस्करं कर्म। सततं-यावज्जीवम्। आतनोतु-इह लोके स्वबुद्धिबलेन कुर्वन्नस्तु। ज्ञानविज्ञानयोः विषये समदृष्टिर्भवेति भावः॥ २८॥

ज्ञानविज्ञानयोः संभावनाया आवश्यकतां दृढयति शश्वदिति। ज्ञानात्-ज्ञानशर्माख्यमन्त्रिणः। अभिन्नः सन्-तत्संबन्धादनपगच्छन्नेव सन्। शश्वत्-आवश्यकेषु तेषु तेषु समयेषु। विज्ञानमपि-विज्ञानशर्माणमपि। मानय-मन्त्रालोचनादिविधानेन तदनुसरणपूर्वकं पुरस्कुरु। एवं सति-उभयोरप्यनयोर्यथोचितं संमानने कृते। भुक्तिमुक्ती-ऐहिकं सुखम् आमुष्मिकं मोक्षरूपं महच्छ्रेयश्च। तव करे घटेयातां-तव हस्तगते स्याताम्। उभावप्येतौ तव त्रैवर्गिकम् आपवर्गिकं च श्रेयस्संपादनक्षमाविति भावः। एवमाश्चर्यकराणां भगवदनुग्रहोपात्तपरमश्रेयसां प्रतीतेः उपगूहनं नाम निर्वहणसन्ध्यङ्गमुक्तम्॥ २९॥

**देवी**—सुमरणमेत्तसंणिहिदं णाणसम्माणं सइवं विण्णाणेण समं मुत्तविरोहं करिअ दुवे वि मंतिणो रण्णो हत्थे समप्पअंतेण भअवदा बहुलीकिदं भत्तवच्छलत्तणम् । [स्मरणमात्रसंनिहितं ज्ञानशर्माणं सचिवं विज्ञानेन समं मुक्तविरोधं कृत्वा द्वावपि मन्त्रिणौ राज्ञो हस्ते समर्पयता भगवता बहुलीकृतं भक्तवत्सलत्वम् ।]

(नेपथ्ये)

जीवे शिवप्रापितयोगसिद्धौ कल्ये जनान्त्येन समं समेत्य ।
पापो विषूच्या सह राजयक्ष्मा गदैरमाद्यैः सह नाशमेति ॥ ३० ॥

---

सुमरणंति । स्मरणमात्रसंनिहितं परमेश्वरकृतस्मृत्यनन्तरक्षणोपस्थितम् । ज्ञानशर्माणं नाम सचिवं विज्ञानेन समं मुक्तविरोधं कृत्वा-परस्परवैषम्यमपहाय यथा जीवराजस्य हिते निरुपरोधं सानुकूल्यं च द्वावपि कार्याणि कुर्वातां तथा विधाय । भक्तवत्सलत्वं बहुलीकृतं-भक्ते जीवे विद्यमानः प्रेमातिशयः सुतरामुपचितः । "विज्ञानमन्त्रिमन्त्र्यर्थिनिर्भरसक्तद्विभूतनिजशक्तिः । स ज्ञानशर्ममन्त्री तिष्ठति केवलमसौ स्वरूपेण" इति, "विज्ञानोऽयं यद्यपि स्वामिभक्तस्तत्राप्यस्यासन्निधाने विविक्ते । भेद्यो राज्ञस्तस्य तैस्तैरुपायैः शक्यः कर्तुं ज्ञानशर्मोपजापैः" इति च द्वितीयाङ्के (३७, ४० श्लो) ज्ञान-विज्ञानशर्मणोः समकालसमदेशावस्थानस्य च परस्परानुकूल्यस्य च दुर्घटत्वं सम्यक् सूचितमास्ते । जीवराजे वात्सल्यातिशयेन स च सङ्कटः पशुपतिना संप्रति परिहृतः । 'सतां सद्भिः सङ्गः' इति न्यायेन साधुद्वयस्य सौहृदोत्पादनम्, ज्ञानविज्ञानयोः समवेतसाहाय्येन जीवस्य लोकद्वयेऽपि श्रेयस्साधनरूपप्रयोजनमिति फलद्वयमीश्वरेणानुगृहीतं युगपत् ।

जीव इति । नेपथ्यप्रदेशात् एषा वार्ता कालस्य मुखादुदेति । जीवे-जीवराजे । शिवाभ्यां प्रापिता योगसिद्धिः-निर्बीजयोगफलं यस्य तस्मिन् सति । पार्वतीपरमेश्वरयोरनुग्रहवशात् कालेनैतावता निर्वर्तितस्य समाधिकर्मणः समुचिते फले जीवेन समधिगते सतीति भावः । कल्ये-प्रत्यूषे । (काल इति पाठो

ईशानस्य निदेशात् प्राप्ता साप्यत्र शाङ्करी भक्तिः ।
चत्वारोऽपि पुमर्थाः पुंभिर्यस्याः प्रसादतो लभ्याः ॥ ३१ ॥

**मन्त्री**—(आकर्ण्य) प्रियं नः प्रियम् । भगवान् काल एव एवं नः प्रियमाचष्टे ।

---

न साधुः ।) जनानाम् आन्ध्येन समं-दर्शनाशक्त्या सह । तमोवत्-नैशं तिमिरमिव । प्रभाते यथा ध्वान्तमखिलं स्वतः प्रविलीयते तथेत्यर्थः । पापः-दुरात्मा पापकर्मभिः समुद्भूतो वा । राजयक्ष्मा । विषूच्या स्वभार्यया सह । असाध्यैः गदैः सह-अपरैः स्वानुचरैर्दुरुपशमैर्व्याधिभिः साकम् । नाशमेति । व्युष्टा तमस्विनी नष्टाश्च जीवशत्रवः सपदीति कालपुरुष एवं ख्यापयति ॥ ३० ॥

अनिष्टनिवृत्तिपूर्वकम् इष्टप्राप्तिरपि घटत इति सूचयति **ईशानस्येति** । ईशानस्य-शिवस्य । निदेशात्-नियोगात् । सा शाङ्करी भक्तिः—"तामद्वैतां स्वरूपेण" (१ ४८) इति "दृङ्मात्रदर्शितनिजप्रथितप्रभावा" (४-१४) इति, "हृदयानन्दविधात्री" (४-१६) इति च पूर्वं बहुधा ख्यापितप्रभावा शिवभक्तिरपि । अत्र प्राप्ता-जीवसमीपमागता । यस्याः प्रसादतः-अनुग्रहात् । पुंभिः-सत्कर्मप्रवृत्तैः पुरुषैः । चत्वारोऽपि-धर्मार्थकाममोक्षाख्याः । पुमर्थाः-पुरुषार्थाः । लभ्याः-अस्याः शिवभक्त्याः कृपयैव त्रैवर्गिकमापवर्गिकं च श्रेयः सकलमपि प्राप्तुं प्रभवन्ति मानवा इत्यर्थः । "शक्यं तत् खलु पुण्डरीकनगरं" इति पद्ये (१-४७) मुखसन्धौ मनोरथबीजावापसमये यत् सूचितं तदिह निर्वहणसन्धौ फलत्वेनोपनतमिति कविना निर्दिष्टम् । जीवस्यापवर्गप्रापणविषये शिवभक्त्याः "सत्यज्ञाननिधिः" इति पद्ये चतुर्थाङ्के (श्लो. १९) यदौत्सुक्यं व्यग्रता च कविना प्रादर्शि, तादृशाभिमतार्थस्य फलेग्रहित्वमत्र संदर्शितमिति च ज्ञातव्यम् ॥ ३१ ॥

**प्रियमिति** । कालोऽस्माकमनुकूलः संपन्नः; अतः साक्षात् कालपुरुषः स्वयमेवं प्रियं नः प्राहेति मन्त्री ज्ञापयति । (काले एष एव इति पाठान्तरम् ।)

**राजा**—(सहर्षोल्लासम्)

> मूर्धन्यमण्डलनिकेतसुधांशुबिम्ब-
> 
> निःष्यन्दशीतलसुधाप्लुतिनिर्वृताङ्गः ।
> 
> मेघावृतिव्यपगमे गगनं यथाच्छं
> 
> चैतन्यमावरणवर्जितमस्मि तद्वत् ॥ ३२ ॥

राजा स्वात्मनो हर्षातिशयं जीवन्मुक्तिदशायां समुपनतां निर्वृतिं चाह **मूर्धन्येति**। मूर्ध्नि भवं मूर्धन्यं-ब्रह्मरन्ध्रमित्यर्थः; तस्य मण्डलं-सहस्रदलपद्म-पत्राकारं स्थलम्; तदेव निकेतः-वासस्थानं यस्य तस्य, सुधांशोः बिम्बात् निष्यन्दः-स्रवः, तेन शीतला-अत्यन्तशिशिरा, या सुधा अमृतधारा, तस्याः प्लुत्या-सेकेन, निर्वृतानि-अनुभूतनिस्समाभ्यधिकसुखानि अङ्गानि यस्य सः। पूर्वमस्मिन्नेवाङ्के परमेश्वरेण "ब्रह्मरन्ध्रस्थितचन्द्रमण्डलनिःष्यन्दमानामृताप्लुत-शरीरम्" इति यत् सानुग्रहमाशासितं तदद्य तथैव फलात्मना परिणतमिति विशदीकृतम्। मेघावृतिव्यपगमे-मेघरूपाच्छादने सत्यपगते। गगनं-आकाशम्। यथा अच्छं-प्रसन्नम्। विलोक्यत इति शेषः। तद्वत् अहमपि। आवरणवर्जितं-मायोपजनिताविद्यारूपावरणेन विरहितम्। अतिस्वच्छस्वरूपम्। चैतन्यं-केवल-ज्ञानात्मकम्। अस्मि। केवलं चिदानन्दस्वरूपमधिगत्य, तत्त्वमस्यादिवेदान्तवाक्यानां अद्वैतिनां व्याख्यानरीत्या प्रतीक्ष्यमाणं ब्रह्मभूयं गतोऽस्मीति भावः।

> "शान्तं ज्योतिः कथमनुदितानन्दनित्यप्रकाशं
> 
> विश्वोत्पत्तौ व्रजति विकृतिं निष्कलं निर्मलं च ।
> 
> तद्वन्नीलोत्पलदलरुचामम्बुवाहावलीनां
> 
> प्रादुर्भावे भवति नभसः कीदृशो वा विकारः"

इति जीवात्मनो मायाप्रसङ्गेन प्रसज्यमानो विकारलेपः प्रबोधचन्द्रोदये (६-२३) निषेधपूर्वकमस्ति यो निर्वर्णितः, स एव जीवेनानुभूतचरः कोऽपि दोषः परमशिव-पराहतश्चासीत् इत्यत्र वर्णितः ॥ ३२ ॥

**मन्त्री**—एवमेवायं जीवो राजा भगवतोः प्रसादान्नीरोगो नित्यमुक्तो निराबाधो बहुकालं जीयादिति प्रार्थये ।

**परमेश्वरः**—तथैवास्तु ।

**देवी**—तह होदु । (तथा भवतु ।)

**राजा**—(सहर्षविस्मयं मन्त्रिणं प्रति)

मन्त्रिन् जन्मैव दोषः प्रथममथ तदप्याधिभिर्व्याधिभिश्चे-
ज्जुष्टं कष्टं बतातः किमधिकमपि तु त्वन्मतेर्वैभवेन ।
देव्या भक्त्याः प्रसादात् परमशिवमहं वीक्ष्य कृच्छ्राणि तीर्णः
सर्वाणि द्राक् तदत्यद्भुतमिह शुभदं संविधानं तवेदम् ॥ ३२ ॥

---

एवमेवेति । भगवतोः-पार्वतीपरमेश्वरयोः । प्रसादात्-अनुग्रहात् । नीरोगः-सकलामयनिर्मुक्तः । नित्यमुक्तः-जीवन्मुक्तो भूत्वा । निराबाधः-वैर्यन्तरदुः-खान्तरादिसङ्कटरहितः सन् । बहुकालं जीयात्-रसायनादिसेवाकारणात् च्यवनादय इव दीर्घायुषा सुखं जीवत्विति यावत् । भवद्भ्यामेष राजा सांप्रतमनुगृहीतव्य इति मन्त्री प्रार्थयते ; तदानीमेव खलु त्रैवर्णिकश्रेयसि विहितलक्ष्यस्य विज्ञानशर्मणोऽस्य मनोरथः सेत्स्यति । **तथैवेति** । पूर्वमेव "निर्जितनिखिलविपक्षं . . . . सफलमनोरथमेनं कृतार्थयिष्यामि" इत्यादिभिः स्वयमेवाविष्कृतानुग्रहस्य परमेश्वरस्य सचिवप्रार्थनेयमतितरां प्रमोदवहा, स्वाभिलषितार्थस्य निर्वहणाय पाणिच्युतफलस्य पयसि पतनमिव सुतरामनुकूला चाभवदिति यावत् ।

श्वःश्रेयसस्य स्वोपलब्धस्य विज्ञानशर्मव्यवसायहेतुकत्वात् कार्तज्ञ्यं मन्त्रिणि राजा सूचयति **मन्त्रिन्निति** । मन्त्रिन्-विज्ञानशर्मसचिव । जन्मैव-मनुष्यत्वेन जननमेव । प्रथमं-सर्वेषामपि गर्ह्यविषयाणामादौ । दोषः-दुर्गुणयुक्तम् ; निन्द्यमिति यावत् । अथ-कर्मवशाज्जन्माधिगमानन्तरम् । तदपि-जन्माधिगतं शरीरमपीत्यर्थः । आधिभिः-मानसीभिर्व्यथाभिः । व्याधिभिश्च-शारीरैरामयैश्च । जुष्टं चेत्-अभिभूतं

मन्त्री—राजन्,

बहुजन्मार्जितैः पुण्यैस्तावकैरेव तोषितः ।
सर्वाभीष्टं ददातीशः संविधानं किमत्र मे ॥ ३४ ॥

---

यदि भवति । अतः-एतादृशाद्दौस्थ्यादपि । अधिकमपि कष्टं किं किं दौस्थ्यान्तरमितोऽप्यधिकतरमपि विद्यते । एकत्र व्याधिभिर्बहुभिरङ्गे, अपरत्र विविधैराधिभिरन्तरङ्गे च सर्वदा पीड्यमाने ततोऽपि नान्या यातना भुवि तीव्रतरा स्यादिति स्वयमनुभवतो ज्ञात्वा, तत्कष्टस्य स्मरणमपि भयावहमिति निर्देष्टुं बतेति शब्दः प्रयुक्तः । अपि तु-किन्तु; दुस्तरत्वे मय्यपि तस्य सांसारिकदौस्थ्यसागरस्येति सूचयति अपि तु इति । त्वन्मतैर्वैभवेन-त्वदीयधिषणाकौशलबलेन । (त्वन्मतिप्राभवेन इति पाठान्तरम् ।) देव्याः-महाप्रभावशालिन्याः । भक्त्याः-शिवभक्त्याः । प्रसादात्-अनुग्रहादपि । अहम् । परमशिवं वीक्ष्य-प्रत्यक्षीकृत्य । सर्वाणि कृच्छ्राणि-समस्तान्यपि आधिव्याधिरूपाणि महादुःखानि । द्राक्-तीर्णः-अतित्वरितमेव उत्तीर्णः । इह-अस्मिन् सन्दर्भे । तदिदं-तदेतत्सकलमपि । तव-विज्ञानशर्मणः । शुभं-अन्ततः श्रेयस्करम् । संविधानं कार्यनिर्वहणपरिपाटी । सश्रद्धं सनिपुणं च त्वदुद्यमासादितसंविधानक्रम एव झटिति श्रेय एतावद्दुदपादयदस्माकमिति सकौतुकमाह राजा ॥ ३३ ॥

बहुजन्मेति । बहुजन्मार्जितैः-'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते' इति प्रमाणानुरोधेन अतीतैर्जन्मसहस्रैरुपचितैः तावकैः पुण्यैः-त्वदुद्यमेन त्वयैव निर्वर्तितैः सुकृतविशेषैः; नान्यदीयैरिति एवकारार्थः । तोषितः-तृप्तिं प्रापितः । ईशः-परमेश्वरः । (तावकैरेष इति पाठे, एष पुरतोऽस्माकमाविर्भूत ईश इत्यर्थः ।) सर्वाभीष्टं-सकलमपीप्सितम् अर्थम् । ददाति । अत्र त्वदुपात्तश्रेयोविषये । मे संविधानं किम् । त्वत्कृतैः सुकृतैः त्वदुपासनाबलेन च सन्तुष्टः परमेश्वरः श्वःश्रेयसमिदं ते प्रादात्, अहं त्वकिञ्चित्करोऽस्मिन् विषय इति सचिवोत्तमः स्वस्य नैच्यानुसन्धानं निरभिमानितां चावेदयत्येवम् ॥ ३४ ॥

परमेश्वरः—वत्स, किमतःपरमन्यत्तव प्रियं कुर्मः ।

राजा—देवदेव भगवन्, सर्वमपि प्रियमाचरितमेव ।

सर्वेऽपि मे प्रशमिता रिपवः पुरेऽभू-
दारोग्यमैक्षिषि भवन्तमुमासहायम् ।
योगं ततस्त्वदुपदिष्टमवाप्य जीव-
न्मुक्तोऽस्मि ते करुणया किमतः प्रियं मे ॥ ३९ ॥

---

वत्सेति । अतःपरं-नीरोगतानिष्पादनपूर्वकं जीवन्मुक्तिप्रदानादधिकम् । अन्यत् प्रियं किं कुर्मः-न किमप्यतः परं श्रेयो विद्यतेऽवशिष्टमित्यर्थः । अनेन च "वरप्रदानसंप्राप्तिः काव्यसंहार उच्यते" इति काव्यसंहारलक्षणमङ्गमिहोपक्षिप्तम् । (किमतः परमपि प्रियं तव कुर्म इति पाठान्तरम् ।)

मनोरथपूर्तिम् अन्ततोऽयमाचष्टे राजा **सर्वेऽपीति**। मे पुरे-शरीराख्ये मम नगरे। सर्वेऽपि रिपवः-आधिव्याधिप्रभृतयः सर्वेऽपि शत्रवः । प्रशमिताः-अपहताः। किञ्च, पुरे शरीरे। आरोग्यं-नीरोगता च। अभूत्। दुष्टनिग्रहपूर्वकं शिष्टपरिपालनमिव सुबहुलरोगप्रशमनपूर्वकम् अरोगतास्थापनमपि शरीरे भवत्कृपया सम्पादितमिति भावः। उमासहायं-परमेश्वर्या सहितम । भवन्तं-परमशिवमपि । ऐक्षिषि-साक्षादकार्षम् । ततः-त्वदुपात्तमनोरथपूर्त्यनन्तरम् । त्वदुपदिष्टम् । योगं-समाधिक्रमं च, ज्ञानयोगं वा । अवाप्य । ते करुणया-योगसिद्धिप्रापकार्थं प्रवृत्तया भवदीयानुकम्पया । जीवन्मुक्तोऽस्मि-जीवन्मुक्तिदशामपि प्राप्तवानस्मि । अतः-इतोऽधिकम् । मे-जीवस्य मम । किं प्रियं-प्रियान्तरं किमस्ति; न किमप्यवशिष्यत इत्यर्थः । (प्रियं नः इति पाठान्तरम् ) ॥ ३९ ॥

तथापीदमस्तु भरतवाक्यम् ।

पर्जन्यः समयेऽभिवर्षतु फलत्विच्छानुरूपं मही
प्रौढामात्यनिरूपिते पथि महीपालाः पदं तन्वताम् ।
कर्णालङ्कृतये भवन्तु विदुषां कान्ताः कवीनां गिरो
भूयादस्य कवेश्चिरायुररुजो भक्तिश्च शर्वे दृढा ॥ ३८ ॥

(इति निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ।

श्रीमद्भारद्वाजकुलजलधिकौस्तुभस्य श्रीनरसिंहरायमन्त्रिवरनन्दनस्य श्रीमदानन्दरायमखिनः कृतिषु जीवानन्दनं नाम नाटकं समाप्तम् ।

---

**तथापीति** । तथापि-एवं जीवस्य मे सत्स्वपि परिपूर्णेषु मनोरथेष्वित्यर्थः । इदं-वक्ष्यमाणरूपम् । भरतवाक्यं-भरत इति नाट्याध्यक्षः, तस्य वाक्यं तदाशंसोक्तिः । अस्तु-तदाशंसितं फलमपि संपन्नं भवत्विति यावत् ।

शुभशंसनं नाम नाटकान्तिमाङ्गं भरतस्याशंसनमेनाभिधीयते **पर्जन्य इति** । पर्जन्यः-मेघः । समये-यथाकालम् । अभिवर्षतु अभितो जनपदेषु आपः सिञ्चतु । मही-भूमिः । इच्छानुरूपं-प्रजानाम् अभीप्सितानुकूलं यथा तथा । फलतु-जनैराकाङ्क्षितानि आवश्यकानि धान्यानि सस्यानि फलानि च विशिष्योत्पादयत्वित्यर्थः । (फलं वाञ्छानुरूपं महीम् इत्यसाधुः पाठः ।) महीपालाः-राजानः । प्रौढामात्यनिरूपिते-प्रज्ञाधिकेन प्रधानमन्त्रिणा निर्दिष्टे । पथि-नीतिमार्गे । पदं तन्वतां-चरन्तु ; अभिज्ञस्य प्रशस्तानुभवशालिनः प्रधानसचिवस्य साधूपदेशाननुरुध्य राज्यकार्यनिर्वहणं नृपाः समाचरन्त्विति भावः । कवीनां-सुकवीनाम् । कान्ताः-शब्दतोऽर्थतश्च सरसाः । गिरः-वाचः । विदुषां-

सहृदयानाम् । कर्णालङ्कृतये-श्रोत्रतर्पणाय । भवन्तु । सुकवीनां सरसा एतन्नाटकादिरूपा वाचः सुधियो व्यपगतेर्ष्याः सादरमाकर्ण्य सानुमोदनं प्रमोदं च प्रकटयन्त्विवति भावः । अस्य कवेः-आनन्दरायमखिनः । अरुजः-अपगतव्याधेः सतः; नीरोगदृढशरीरस्येत्यर्थः । चिरायुः-दीर्घं जीवितम् । भूयात् इति शिवमभ्यर्थयते । शैवी-शिवसंबन्धिनी । भक्तिश्च अस्य कवेः । दृढा-निश्चला । भूयात् । "अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः । यज्ञाद्भवति पर्जन्यः" इति जगतः क्षेमं पर्जन्यायत्तमिति गीतोक्तस्य प्रमाणस्य प्रस्तावाय प्रथमपदत्वेन नाटकस्यान्तिमश्लोके पर्जन्यपदं प्रयुक्तम् । एष कविः स्वकीयस्य विद्यापरिणयनाटकस्यापि भरतवाक्यात्मकेऽन्तिमपद्ये तदिदं गीतावचनमनुस्मारयन्नेव "पर्जन्यान्नमखक्रमेण जगतश्चक्रं तदावर्तताम्" इति नाटकमुपसंहरति । 'पर्जन्यादन्नसम्भवः' इत्यस्य व्याख्याने "जगच्चक्रप्रवृत्तिहेतुः" इति यदस्ति श्रीशङ्करभाष्यवचनं तदप्यनेन कविना "जगतश्चक्रं तदावर्तताम्" इत्युपात्तम् । अतश्च मन्महे, दृढयत्यस्मदाशयं यदेष कविरुभयोरपि स्वनाटकयोरुपसंहारे गीताचार्यमुखादुद्गतेन भाषितेनान्तिमं स्वकीयं शुभशंसनमाशासितवानिति ॥ ३८ ॥

इति वैद्यरत्नबिरुदाङ्कितेन आयुर्वेदभूषण-आयुर्वेदाचार्याद्युपाधिभाजा मेल्पाक्कं पण्डित दुरैस्वाम्ययय्यङ्गार्महोदयेन जीवानन्दनमूलग्रन्थस्य समग्रस्य च संशोधनपूर्वकं विरचितायां **नन्दिन्याख्यायां** व्याख्यायाम्

**सप्तमोऽङ्कः ।**

# BIBLIOGRAPHY

## APPENDIX I

## । अनुबन्धः प्रथमः ।

*Medical Works and authors cited in the commentary Nandini.*

नन्दिनीव्याख्यायामुपात्तानां वैद्यकग्रंथानां ग्रंथकर्तृणां च नामानि ।

(ग्रंथादिनाम्नामनन्तरं दत्ताः संख्या ग्रन्थस्यास्य पुटाङ्कान् निर्दिशन्ति ।)

# BIBLIOGRAPHY

## APPENDIX II

## । अनुबन्धो द्वितीयः ।

### *Non-Medical Books and Authors*

### वैद्येतरग्रंथा ग्रंथकर्तारश्च ।

## APPENDIX III

## । अनुबन्धस्तृतीयः ।

*Diseases etc. referred to in the text and the commentary*

मूलकोशे व्याख्याने च निर्दिष्टा विविधा रोगादयः ।

APPENDIX IV

# । अनुबन्धश्चतुर्थः ।

*Medicines etc. cited in the text and in the commentary*

जीवानन्दने नन्दिनीव्याख्याने च निर्दिष्टानि औषधानि ।

# । मुद्रणदोषशोधनम् ।

## ERRATA

(एते मुद्रणदोषाः ग्रन्थस्य पठनात् पूर्वं समीकरणीया इत्यभ्यर्थ्यते ।)

| अंशः | शुद्धः | पुटः | पंक्तिः |
|---|---|---|---|
| आसदिति | आसीदिति | ४ | २६ |
| व्यञ्जनयावर्णः | व्यञ्जनयोर्वर्णः | १९ | १० |
| वार्णितम् । | वर्णितम् | ४९ | १६ |
| स्वल्योद्दिष्टः | स्वल्पोद्दिष्टः | ६२ | २० |
| व्यवहित | अव्यवहित | ६८ | २३ |
| मस्त्क | मस्तक | ६९ | २ |
| सव | सर्वे | ८३ | ३ |
| करिष्यध्वं | करिष्यध्वे | ८९ | १४ |
| वंत्क्त्रो | वक्त्रो | ९५ | ४ |
| मूछन्तश्च | मूर्छन्तश्च | ९७ | ८ |
| श्वयमुः | श्वयथुः | १०२ | ७ |
| प्रषितो | प्रेषितो | १०४ | ६ |
| निगमार्थनां | निगमार्थानां | १०५ | १७ |
| मासादितुं | मासादयितुं | १२१ | १६ |
| इत्वरी | इत्वरीः | १३९ | १४ |
| धनागरस्य | धनागारस्य | १३९ | १९ |

| अंशः | शुद्धः | पृष्ठः | पंक्तिः |
|---|---|---|---|
| वर्त्माद्यश्रया | वर्त्माद्याश्रया | १४४ | १३ |
| प्रयोक्त्तुं | प्रयोक्तुं | १५५ | २ |
| कलङ्केन | कलङ्केन | १५६ | ६ |
| सूदः | सूदाध्यक्षः | १८३ | २४ |
| पौरागव | पौरागवं | १८४ | १६ |
| स्तातुमिति | स्नातुमिति | १९७ | १९ |
| प्रसूनोत्कर: | प्रसूनोत्करः | २२२ | ४ |
| तादीनामौषधि | दीनामौषधि | २३३ | ३ |
| वशद्याच्च | वेशद्याच्च | २३३ | १७ |
| अष्टङ्ग | अष्टाङ्ग | २३७ | २२ |
| पट् | षट् | २४५ | ४ |
| प्रणिधित्वेत | प्रणिधित्वेन | २४६ | १३ |
| इद | इदं | २५९ | ८ |
| स्वैरव | स्वैरेव | २८६ | १ |
| बुभुषुः | बुभूषुः | ३०७ | १८ |
| देहाभि मानेन | देहाभिमानेन | ३२० | २० |
| कौमें | कौमें | ३३४ | २१ |
| पुष्टैर्दह | पुष्टैर्देह | ४१२ | २२ |
| नारायणांश भूतस्य | नारायणांशभूतस्य | ४४३ | १२ |

Rs. A.

13. RUKMIṆI KALYĀṆA MAHĀ KĀVYA by Rajacūḍāmaṇi Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... 2 0

1933—14. UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library ... 5 0

1936—15. TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library

Is'a to Aitareya, Vol. I ... 4 8

Chāndogya and Bṛhadāraṇyaka, Vol. II ... 6 0

Vols. I and 2 Boards ... 9 8

1937—16. MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... 2 0

1938—17. SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... 3 0

18. PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... 3 0

19. BHAVASAÑKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinatha—with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... 2 4

20. YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, and Paṇḍit S. Subrahmanya Sastri ... 5 0

21. * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga,

Part 1. Nature—From Macrocosm to Microcosm ... 2 8

Part 2. Man—From Atom to Man ... 2 8

Part 3. God—From Humanity to Divinity ... 2 8

Part 4. Some Practical Applications ... 2 8

1939—22. ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... 6 0

1940—23. THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... 3 0

1941—24. SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... 5 0

25. BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... 4 0

** Published under the auspices of the Adyar Library Association.*

Rs. A.

26. SĀMAVEDA-SAṂHITĀ—With the Commentaries of Mādhava and Bharatasvamin. Edited *by* Prof. C. Kunhan Raja ... 6 0

27. RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V Rangaswami Aiyangar ... 3 8

28. VARIVASYARAHASYAM of Bhāsurānandanātha (2nd Edition) *by* Paṇḍit S. Subrahmanya Sastri (with English Translation) ... 2 8

29. VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar, and A. N. Krishna Aiyangar ... 15 0

30. SAṂGĪTARATNĀKARA—With the Commentaries of Catura Kallinatha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol. I. (Adhyāya 1) ... 9 0

1942—31. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 1 ... 5 0

32. ALAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... 3 8

33 SOME CONCEPTS OF ALAṄKĀRA S'ĀSTRA *by* V. Raghavan, University of Madras ... 4 0

34. VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... 2 12

35. A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma Vol. I—Vedic ... 15 0

36. S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... 4 8

37. CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... 6 0

38 CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... 4 8

1943—39. PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... 10 0

40. VĀDĀVALĪ OF JAYATĪRTHA with English translation and Notes *by* P. Nagaraja Rao ... 4 0

41. SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... 2 12

| | | Rs. | A. |
|---|---|---|---|
| 42 | UṢĀNIRUDDHA of Rāma Pāṇivada. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinatha and Siṁhabhupala. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyayas 2 4) ... | 9 | 0 |
| 44. | ĀS'VALAYANAGṚHYASŪTRA With the Commentaries of Devasvamin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyaya 1) ... | 6 | 4 |
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANATHA ḌIṆḌIMA Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| 50. | THE ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| 51. | SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA Vol. I. Chapter I. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| 52. | VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanacarya—Translated into English *by* Svami Ravi Tirtha. (Vol. I—Books i and ii) ... | 4 | 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāma Pāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma. ... | 4 | 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary. ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya. ... | 1 | 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |

Rs. A.

59. JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary. ... 20 0

## PAMPHLETS

### 1939

A VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... 0 3

### 1940

THE RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma. 0 4

### 1942

THE ṢAṬPAÑCĀS'IKĀ, a Silpas'āstra manual. (Reprinted from the Adyar Library Bulletin, February 1942). Edited *by* K. Madhava Krishna Sarma ... 0 5

THE PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma. ... 0 6

A List of Manuscripts (Reprinted from the Adyar Library Bulletin, Oct., 1942) ... 1 0

THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... 0 6

### 1943

VIS'EṢĀMṚTA of Tryambaka Mis'ra. An orthographical lexicon. Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... 0 12

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, Oct. 1940, May and October, 1943) ... 0 12

### 1946

DHARMACAURYARASĀYANAM—Edited by H. G. Narahari, (Reprinted from the Adyar Library Bulletin, October and December 1946) .. 1 12

## IN THE PRESS

CATURDAS'ALAKSAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

ṚGVEDAVYĀKHYA of Mādhava, Vol. II, edited by Dr. C. Kunhan Raja

HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā by A. Srinivasaraghava Aiyangar.

SĀLISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—by Paṇḍit N. Aiyaswami Sastri.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, by Paṇḍit V. Krishnamacharya, Vol. VI—Chandas, Kos'a and Vyākaraṇa

SAṀGĪTARATNĀKARA, English Translation—Vol. II, by Prof. C. Kunhan Raja.

SAṀKALPASŪRYODAYA OF S'RĪ VEṄKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvali. Edited by Paṇḍit V. Krishnamacharya

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited by Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja. Edited by Prof. C. Kunhan Raja.

GAUTAMASMṚTI—Edited by A. N. Krishna Aiyangar

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries—Edited by Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries by Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries by Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited by Paṇḍit N. Santanam Aiyar.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, by H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English by T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

TEN MAJOR UPANIṢADS—English Translation by T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

---

*Agents for our publications:*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, S. India**